'सा होवाच यदूर्ध्वं याज्ञवल्क्य . . यद्भूतञ्च भवच्च यद्भविष्यच्च इत्याचक्षते, आकाश एव तदोतञ्च प्रोतञ्च इति कस्मिन्नु खल्वाकाशः ओतश्च प्रोतश्चेति । स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु . . ' । 'यो वा एतदक्षरं गार्गि . . ' इत्यादिः श्रूयते ।

अत्र संशयः किमेतदक्षरं प्रधानं जीवो वा परमात्मा ? इति । प्रधानमिति । कुतः ? 'अक्षरात्परतः परः' इत्यादिषु प्रधाने अक्षरशब्दप्रयोगात्, अस्थूलत्वादीनां तत्र समन्वयात् । इति प्राप्ते उच्यते — अक्षरं परं ब्रह्म । कुतः ? अम्बरान्तधृतेः इति । आकाशशब्दनिर्दिष्टं न वायुमदम्बरम्, तस्य त्रैकाल्यवर्ति विकारजाताधारत्वा-भावात्, तस्यापि विकारान्तर्भावात् । अतः अत्र आकाशशब्दनिर्दिष्टं भूतसूक्ष्मं प्रधान मिति । तस्याप्याधारभूतं किमिति पृच्छ्यते 'कस्मिन्नु खल्वाकाशः ओतश्च प्रोतश्च' इति । अतः तदाधारतया निर्दिश्यमानं अक्षरं न प्रधानं भवितुमर्हति, किन्तु पर-मात्मैव । अश्नुते न क्षरतीति वा अवयवार्थपौष्कल्यस्य ब्रह्मण्येव सम्भवात् यथोक्त एवार्थः ।

अत एव अस्थूलादिपदानामपि न पर्युदासः तत्रैव 'नञिव युक्तं अन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति न्यायेन तद्भिन्नतत्सदृशार्थोपस्थितेः, किन्तु स्थूलत्वादिनिषेधपर-मिति बोध्यम् ।

अक्षरं तु परं ब्रह्म ह्यव्याकृतधृतेरिह ।
ओतत्वेन च सर्वस्य प्रोतत्वेनाक्षरे श्रुतेः ॥
(ब्र. प. मा. 74)

**अक्षरयाथात्म्यम्** — 1. विविक्तात्मस्वरूपम् ।

'ऐश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनाम्' (गी. सं. 12)

2. कैवल्यम् । अक्षरशब्दितप्रत्यगात्मयाथात्म्यं कैवल्यम् । (न्या. सि. टी. 169)

**अक्षरयाथात्म्यविदः** — परमात्मशरीरभूतस्वात्मोपासकाः ।

आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च साधारणीं अर्चिरादिगतिमाह । (गी. भा. 8. 23) आत्मयाथात्म्याक्षरयाथात्म्यशब्दयोश्च अत्र न भिन्नार्थत्वम् । तस्योपासने किंचिदस्ति विशेषः । अक्षरयाथात्म्यविदः परमात्मशरीरभूतस्वात्मोपासकाः

ज्ञानिनस्तु स्वात्मशरीरकपरमात्मोपासका इति अयमेवविशेषः 'तद्य इत्थं विदुर्ये चेमेऽरण्ये' इति विभागनिर्देशाभिप्रेत इति भाष्यादिषूक्तः। सारे तु उभयेऽपि हि परिपूर्णं ब्रह्मोपासते मुखभेदेन; स्वात्मशरीरकं ब्रह्म केचन, ब्रह्मात्मकस्वात्मानमितरे' इति। अत एव, सप्तमे प्रक्रान्तो जिज्ञासुः परमात्मप्राप्तिकामज्ञानिव्यतिरिक्तत्वात् अब्रह्मात्मकस्वात्मानुसन्धायी इति न भ्रमितव्यम्। तस्य चोदारकोटिमात्रे निवेशः स्वात्मानुभवविलम्बविमुखज्ञानिव्यतिरेकात्। अर्चिरादिगतिनिषेधस्तु ब्रह्मात्मकत्वानुसन्धानरहितस्वात्मोपासनविषयः। इदमपि भाष्यादिषु व्यक्तमेवोक्तम्॥ (ता. चं 8-23)

**अक्षरविद्या** — अक्षरशब्दवाच्यपरमात्मनः, तत्तद्गुणविशिष्टतया उपासनमक्षरविद्येत्युच्यते। एतत्प्रतिपादकत्वादेव 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णं अचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुं. उ. 1-1-5) 'स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु अह्रस्वं अदीर्घं अलोहितं अस्नेहं अच्छायं' (बृ. उ. 5-8-7) इत्यादि बृहदारण्यकोपनिषच्चाक्षरविद्येति निरुच्यते। एवमेव सर्वत्र। 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति सूत्रोक्तन्यायेन 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इत्युक्तरीत्या मोक्षरूपफलस्य, परिपश्यन्तीत्यत्र 'विधिस्तु धारणेऽपूर्वत्वात्' इत्युक्तन्यायेन, परिपश्येयुरिति विधेराश्रयणीयतया, क्वचित् विधिवाक्याभावेऽपि तत्र तत्र तात्पर्यानुसारेण विधिवाक्यस्य कल्प्यमानतया च चोदनायाः, अक्षरविद्येति नामधेयस्य च एकत्वात् विद्याया एकत्वमिति सर्वत्र बोध्यम्। इयं च अदृश्यत्वाधिकरणे अक्षराधिकरणे च प्रतिपादिता॥

**अक्षरसत्** (स. ना. 480) — नित्यनिरुपाधिकसद्भावसाद्गुण्याभ्यां सत्। अस्य च विशेषणमक्षरमिति भावः। (वि. स. भा. 436) अपक्षयविनाशादिवर्जितोऽक्षर उच्यते। (वि. स. नि. 436) मूले तु 'सत् अक्षरं' इत्यानुपूर्वी॥

**अक्षरसमुद्भवं ब्रह्म** — जीवाधिष्ठितशरीरम्।

'ब्रह्माक्षरसमुद्भवम्' (गी. 3-15) अत्र च ब्रह्मशब्दनिर्दिष्टं प्रकृतिपरिणामरूपं शरीरम्। 'तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते' इति हि ब्रह्मशब्देन प्रकृतिः निर्दिष्टा। अक्षरशब्दनिर्दिष्टः जीवात्मा, अन्नपानादिना तृप्ताक्षरशब्दवाच्यजीवाधिष्ठितं शरीरं कर्मणे प्रभवतीति कर्मसाधनभूतं शरीरं अक्षरसमुद्भवम्। (गी. भा.) जीवस्य च अक्षरशब्दवाच्यत्वं 'क्षरं प्रधानममृताक्षरं हरः', 'कूटस्थोऽक्षरः' इत्यादिसिद्धम्।

अयमत्राभिप्रायः — न तावदिह शरीरमात्रमक्षरजन्यतया निर्दिष्टं, किन्तु 'कर्मब्रह्मोद्भवम्' इत्यनेन कर्मसाधनभूतं, तत्साधनत्वञ्च शरीरस्य प्रत्यगात्माधिष्ठितस्यैव, तस्य चाधिष्ठातृत्वशक्तिरन्नपानादिजनिततृप्तिनिबन्धना। एवञ्च सति कर्मसाधनत्वविशिष्टं शरीरं प्रत्यगात्माधिष्ठानहेतुकत्वादक्षरसमुद्भवमिति युक्तमेव ॥ (ता. चं.)

**अक्षरसाम्येन निर्ब्रूयात्** — अक्षरैकदेशप्रत्यभिज्ञादिना अर्थविवरणप्रदर्शनन्यायविशेषः।

यथा अथ कस्मादुच्यते भगवान् महेश्वरः? यस्मात्, भक्त्या ज्ञानेन, भजति अनुगृह्णाति च इति भगः; वाचं संसृजति विसृजति च इति वान्। यः भगवान् सर्वान् परित्यज्य आत्मज्ञानेन योगैश्वर्येण महति महीयते, तस्मादुच्यते भगवान् महेश्वरः इति अथर्वशिरोपनिषत्। (मी. को.)

एवमेव

देवानुग्रहधारित्वात् शिष्यानुग्रहकारणात्।
करुणामयरूपत्वात् देशिकः कथ्यते बुधैः ॥

इत्यादौ देशिकपदनिर्वचनम् ॥

**अक्षरादिशब्दाः** — अक्षरपुरुषब्रह्मशब्दाः नारायणपराः।

अक्षरादिशब्दाश्च नारायणपरा एवेति 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यां इति मुण्डकोपनिषदादिषु स्पष्टम्। स्थानप्रमाणात् अक्षरादिशब्दा एकार्थका एव। पुरुषशब्दस्य तु पुरुषसूक्ताद्यनुसारेण नारायणपरत्वमविगीतम्। भगवतोऽन्यत्र मुख्यतया अक्षरपुरुषब्रह्मशब्दप्रयोगाभावाच्च। अत एव हरिवंशे पौष्करप्रादुर्भावे, वेदान्तेषु अक्षरब्रह्मशब्दाभ्यां नारायण एव अभिधीयते इति एतदभिप्रायेणोक्तम् ॥

(वे. मं. दी. 95)

**अक्षराधिकरणम्** — (अधि. सं. 1-3-3)

१ अक्षरमम्बरान्तधृतेः। २ सा च प्रशासनात्। ३ अन्यभावव्यावृत्तेश्च।

इत्यक्षरपदोपक्रान्तं सूत्रत्रिकं एवमुच्यते। 'एतद्वै तदक्षरं गार्गि' इत्यादिवाक्ये अक्षरशब्दस्य प्रधाने जीवे च प्रयोगदर्शनात् अक्षरशब्दवाच्यः तयोरन्यतरः इत्याशङ्क्य, कालत्रयवर्तिविकाराश्रयस्य आकाशशब्दवाच्यस्य प्रधानस्याप्याधारतया निर्दिष्टोऽक्षरः परमात्मेति सिद्धान्तितमनेन।

अव्याकृतं चेतन एव वापि स्यादक्षरं चास्पदं अम्बरस्य ।
कार्यास्पदत्वादचिदाश्रयत्वात् इत्यप्यसत् तस्य धृतेः प्रशास्तेः ॥
(न्या. क. सं. 1-31)

**अक्षितः** — अक्षयः ।

सुमेधा अमृतोऽक्षितः । (तै. शि. 10) षड्भावविकारशून्य इत्यर्थः । (रं. भा.) 'क्षि'क्षये इत्यस्माद्धातोः भावे क्तप्रत्यये क्षितं क्षयः, तच्छून्यः इति यावत् । 'निष्ठायामण्यदर्थे' (पा. सू. 6-4-60) इति सूत्रेण अत्र दीर्घाभावः । अत एव क्षीणः इत्यादाविव नत्वञ्च न भवति ॥

**अक्षितिः** — अक्षयः पुरुषः ।

'कस्मात् तानि न क्षीयन्ते अद्यमानानि सर्वदेति पुरुषो वा अक्षितिः सहीदमन्नं पुनः पुनर्जनयते' (बृ. उ. 3-5-2) यस्मात् अक्षयः पुरुषः परमात्मा प्रत्यहमन्नानि पुनः पुनः प्राणिकर्मानुसारेण जनयति, तस्माद्धेतोः अहरहरद्यमानान्यपि अन्नानि न क्षीयन्ते, [ स्रष्टुः पुरुषस्याक्षयत्वादेव अद्यमानान्नस्यापि अक्षयत्वमिति निरुक्तेः । न विद्यते क्षितिः – क्षयः इति व्युत्पत्तेः अक्षितिपदं परमात्मपरमिति भावः । ] अत्र अक्षितिशब्दार्थः (पुरुषो वा) पुरुष एव – परमात्मैवेत्यर्थः । तस्यैव पुरुषशब्द-मुख्यार्थत्वात् ॥ (रं. भा.)

**अक्षिपुरुषः** — 1. परमात्मा ।

'य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच, एतदमृतमभयम्, एतद्ब्रह्मेति' (छां. उ. 4-15-1) इति श्रुतेः । योगिभिः यः अक्ष्यन्तर्वर्ती पुरुषो दृश्यते, अयमेवात्मा नियन्तेत्यर्थः । (रं. भा.)

अन्तरक्षिविद्यापि भगवत्परा । यथा छान्दोग्ये 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामे'ति । अत्र पुरुषो नारायणः । तत्रैव पुरुषशब्दप्रयोगस्य बहुशः दर्शितत्वात् । किञ्च बृहदारण्यके 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषः यश्चायं दक्षिणेऽक्ष'न्निति सूर्यमण्डलान्तर्वर्तिपुरुषेणाक्षिपुरुषस्यैक्यावगमेनाक्षिपुरुषो नारायण एव । किञ्च 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं

सन्तमिन्द्र इत्याचक्षते परोक्षेण, अथैतद्वामेऽक्षिणि पुरुषरूपमेपास्य पत्नी विराट्' इत्यक्षि-पुरुषस्य इन्द्रत्वमभिधाय -इन्द्रपत्न्या राडसि बृहती श्रीरसीन्द्रपत्नीति लक्ष्म्यभेदप्रति-पादनेनाक्षिपुरुषस्य लक्ष्मीपतित्वसिद्ध्या नरायणत्वसिद्धिः । (वे. मं. दी. 110)

'तस्य यथा कप्यासं पुंडरीकं एवमक्षिणी' इति अन्तरादित्यविद्योक्तरूपं 'तस्य तदेवरूपं यदमुष्य रूपं' इत्यादिनातिदिश्यते । तत्राक्षिणीति द्विवचनस्वारस्येन पुंडरीकाक्षो नारायण एव । पुण्डरीकाक्षत्वं भगवदसाधारणं रूपमिति भावः ।

2. जीवात्मा । 'य आत्मापहतपाप्मा' इत्यादि प्रजापतिवाक्यम् । तत् ऐतिह्यरूपेण श्रुत्वा पश्चादुपसन्नयोः इन्द्रविरोचनयोः प्रजापतिरुपदिशति; 'य एषो-ऽक्षिणि पुरुषो दृश्यते' इति । नेहाक्षिपुरुषः परमात्मा । 'एतन्त्वेव ते भूयोऽनुव्याख्या-स्यामि' इत्युपक्रम्य स्वप्नाद्यवस्थाभिधानात् । न चेह जीवस्य अक्षिणि स्थितिरुपदि-श्यते । किन्तु अक्षिविकाराविकाराभ्यां जीवस्य स्थितिगती निश्चीयेते । अतोऽक्ष्णो जीवस्थितिगतिसूचकत्वात् अक्षिणि दृश्यते इत्युक्तम् । अस्मिन् कर्मण्यस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन् पुरुषो यथा गृहादन्यः, एवं शरीरे स्थितिगतिमान् आत्मा देहातिरिक्तः इत्युक्तं भवति । (श्रु. प्र. 1-3-18)

एतच्च 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' (ब्र. सू. 1-3-18) इति सूत्रे स्पष्टम् । अन्तरधिकरणान्तराधिकरणविषयवाक्ययोस्तु अक्षिणि स्थितस्य प्रकारान्तरेण परमात्मपरत्वं स्थापयिष्यते ॥

**अक्षिविद्या** — 1. अक्षिस्थपरमपुरुषोपासनम् ।

छान्दोग्ये 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच, एतदमृतं एतद-भयं एतद्ब्रह्म' इत्यादिना अक्षिस्थस्य पुरुषस्य संयद्वामत्वादिगुणविशिष्टतया विधीयमाना विद्या । अन्तराधिकरणेन निरूपिता च । इयं उपकोसलं प्रत्युपदिष्टत्वाच्चोपकोसलविद्येति व्यवह्रियते ।

2. बृहदारण्यके तु सत्यं ब्रह्म . . . तद्यत्सत्यं . . . . यश्चायं दक्षिणेऽक्षिन् इत्युपक्रम्य अक्षिणि सत्यस्य ब्रह्मणः व्याहृतिशरीरकत्वेन, अहं इति नामविशिष्टतया च उपासनम् । इदं तु सम्बन्धाधिकरणेन विवृतम् । इयमेव अक्षिस्थसत्यब्रह्मविद्या इति च व्यवह्रियते ।

3. अन्तरधिकरणे निरूपिता अक्षिविद्या तु उद्गीथशेषतया हिरण्मयविग्रह-विशिष्टपुरुषदृष्टिरूपैव ॥

**अक्षोभ्यः** — (स. ना. 807) गम्भीराशयत्वेनाविकार्यः । (वि. स. भा. 684) गम्भीरातिशयतया क्षोभ्यो विकार्यो नेति । (वि. स. निर्व. 684)

गम्भीराशयवत्त्वेन ह्यधिकारितया च सः ।
अक्षोभ्यः सप्तवर्णः स्यादक्षोभ्यत्वप्रदायकः ॥
(वि. स. नि. 684)

**अक्षोभ्यः** — (स. ना. 999) प्रपन्नाभयदानदार्ढ्यात् स्वमहिम्नापि दुर्धर्षत्वाच्च क्षोभयितुमशक्यः (वि. स. भा. 830) प्रपन्नजनाभयप्रदानप्रीतिदार्ढ्याच्च स्वस्य स्वमहिम्नापि दुष्प्रधर्षतया च क्षोभयितुं शक्योऽर्हो वा क्षोभ्यः, स नेति (वि. स. निर्व. 830)

अभयप्रदाननियमदार्ढ्यादपि च नित्यशः ।
अचाल्यस्स्वमहिम्नापि ह्यक्षोभ्य इति कीर्तितः ॥
(वि. स. नि. 830)

**अखण्डम्** — 1. निरवयवम् । (वि. को.) 2. नास्ति खण्डः यस्य । अविच्छिन्नम् । 3. अन्यूनम् – पूर्णम् ॥ (सं. अ.)

**अखण्डं वस्तु** — निर्विशेषम् ।

आनन्दज्ञानादिशब्दाः आनन्दत्वादिसामान्यमुखेन प्रवृत्ताः स्वार्थं परित्यज्याखण्डं वस्तु लक्षयन्ति । अतः आनन्दादयः सर्वेऽपि पदार्थाः उपसंहर्तव्या इत्युक्तं परैः ।

परं तु शब्दैकप्रमाणके वस्तुनि यथाशब्दं गुणाभ्युपगमस्य युक्तत्वात् । गुणाविवक्षायां एकेतरशब्दवैयर्थ्यात् । अतद्व्यावृत्तिमुखेन प्रतिपत्तेः मुख्यार्थापवादाभावेनायुक्तत्वाच्च, अतः आनन्दज्ञानादिशब्दाः सखण्डं गुणविशिष्टं विशेषणविशिष्टमेवं वस्तु बोधयन्तीति तेषां शब्दानां अखण्डवस्तुबोधकत्वं शशविषाणप्रायमेवेति सिद्धान्तः ॥

**अखण्डविकुण्ठयोगमायाविभूतिः** — अनन्तप्रतिहतिरहितस्वापृथक्सिद्धत्वेन युज्यमानाश्चर्यशक्तिः परमात्मा ।

'येषां विभर्म्यहमखण्डविकुण्ठयोगमायाविभूतिरमलांघ्रिरजः किरीटैः' (भाग. 3-16-9)

**अखण्डवाक्यार्थभङ्गवादः** — शतदूषण्यां ३८ तमो वादः ।

निर्विशेषमेव वस्तु 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवेदान्तवेद्यमिति सिषाधयिषवः परे, समानाधिकरणवाक्यं सर्वमपि विशेषणविशेष्यभावरहितं, अत एव अखण्डं निर्विशेषमेव वस्तु बोधयतीति समर्थयन्ति । त एवं वर्णयन्ति – शब्दस्य हि आपाततः प्रतीयमाने अर्थे न प्रामाण्यम्, अपि तु तात्पर्यविषयीभूत एवार्थे । यथा 'गङ्गायां घोषः' इत्यादौ गङ्गावृत्तिघोषरूपार्थे न तस्य प्रामाण्यं, किन्तु गङ्गातीरवृत्तिघोषरूप एवार्थे । एवं 'सत्यं ज्ञानं' इत्यादिवाक्येन ब्रह्मणि न सत्यत्वादयः प्रतिपिपादयिषिताः ; किन्तु ब्रह्मस्वरूपप्रतिपादनमात्रे तस्य तात्पर्यम् । सत्यत्वादिधर्माणामविवक्षायां च निर्धर्मकं एकं अखण्डं ब्रह्मैव तद्वाक्यविषयः इति निर्विशेषवस्तुसिद्धिः ।

यथा आकाशे दृश्यमानेषु प्रकाशमानवस्तुषु 'कश्चन्द्रः ?' इति पृष्टे 'प्रकृष्टप्रकाशः चन्द्रः' इत्युत्तरयन्ति । अत्र इतरताराद्यपेक्षया विविच्य चन्द्रस्य प्रतिपत्तिः प्रकृष्टप्रकाशेन प्रतिपाद्यते । चन्द्रस्य प्रकृष्टप्रकाशः परिचायकः, न तु चन्द्रे तद्धर्मप्रतिपादनं विवक्षितम् । अतः स्वरूपमात्रपरमिदं वाक्यं, न विशेषणपरम् ।

किञ्च अनेकधर्मविशिष्टं एकं वस्तु शब्दः न प्रतिपादयितुमलम् । 'नीलमुत्पलं' इत्यादौ उत्पलत्वविशिष्टे नीलत्वविशिष्टाभेदबोधने उत्पलत्वेऽपि नीलत्वविशिष्टाभेदः बोधनीयः । स च बाधितः । अतः तत्र उत्पलत्वनीलत्वरूपधर्मौ विहाय तदाश्रयधर्मिणः ऐक्यमात्रमेव तद्वाक्यं बोधयति । एवं 'सत्यं ज्ञानं' इत्यादिकमपि ब्रह्मस्वरूपमात्रपरमिति निर्विशेषं अखण्डं ब्रह्मैव वेदान्तवाक्यवेद्यम् । समानाधिकरणवाक्यानां सर्वेषामपि इयमेव गतिः इति ।

सिद्धान्ते तु – 'प्रकृष्टप्रकाशः चन्द्रः' इति वाक्यं चन्द्रस्वरूपप्रतिपादनपरमिति सत्यम् । स्वरूपञ्च इतरताराद्यपेक्षया वैलक्षण्यबोधनेनैव बोद्धुं शक्यम् । तच्च वैलक्षण्यं 'प्रकृष्टप्रकाश'पदेन बोध्यते । ताराः अल्पप्रकाशाः. चन्द्रः प्रकृष्टप्रकाश इति हि विवक्षितम् । प्रकृष्टप्रकाशांशस्याविवक्षायां कथं इतरविविक्तचन्द्रप्रतिपत्तिः सम्भवेत् ? अतः विशेषणांशेऽपि तात्पर्यमावश्यकमेव ।

ननु न तत् प्रधानतया विवक्षितम्, चन्द्रप्रतिपत्तिरेव प्रधानतया विवक्षितेति चेत् ; विशेष्यस्य प्राधान्यं, विशेषणस्याप्राधान्यमिति औत्सर्गिकमिदम् । न तावता विशेषणस्याविवक्षा सिद्ध्यति ।

उत्पलत्वविशिष्टे नीलत्ववैशिष्ट्यबोधनं बाधितत्वात्त्याज्यमिति चेत्, शब्देन प्रतीयमानोऽयं विरोधः, न वस्तुनि विरोधः। एकस्मिन् वस्तुनि अविरुद्धानेकविशेषणानां सद्भावे विरोधाभावात्। 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यं' इति सामानाधिकरण्यलक्षणेऽपि प्रवृत्तिनिमित्तभेदविवक्षा स्पष्टैव।

अतश्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्यमपि जडात्, जीवात्, परिच्छिन्नाच्च व्यावृत्तं ब्रह्म सत्यत्वज्ञानत्वानन्तत्वरूपधर्मैः प्रतिपादयतीति तद्वाक्यं सविशेषमेव वस्तु बोधयति, न निर्विशेषं ब्रह्मेति सिद्धम्। विस्तरस्तु तत्र द्रष्टव्यः॥

**अखण्डार्थत्वभङ्गः** — संसर्गानवगाहित्वभङ्गः।

सत्यज्ञानादिवाक्यस्याखण्डार्थत्वं तावदनुपपन्नं, लोके वेदे वा सर्वस्यापि वाक्यस्य समभिव्याहृतपदार्थसंसर्गतया व्युत्पत्तेः। स्वरूपमात्रपरत्वे च तद्भङ्गप्रसङ्गः। अन्यथा ज्योतिष्टोमादिवाक्यानामपि स्वरूपमात्रपरत्वेन वैदिककर्ममात्रविलयापत्तेः। न च समानाधिकरणवाक्यानामेव स्वरूपपरत्वमिति वाच्यम्, विनिगमकाभावात्। वैपरीत्यस्यापि सुवचत्वाच्च। समानाधिकरणव्यधिकरणवाक्ययोरुभयोरपि संसर्गपरत्वाविशेषात्। इयांस्तु विशेषः, समानाधिकरणवाक्ये पदार्थानामभेदः संसर्गः, अन्यत्र सम्बन्धमात्रमिति। न चाभेदस्य स्वरूपानतिरेकेण तत्परवाक्यस्य अखण्डार्थत्वमविकलमिति वाच्यम्, अनेकविशेषणविशिष्टविशेष्याभेदस्यैव समानाधिकरणवाक्यार्थत्वेनाखण्डार्थत्वासिद्धिः॥ (वे. मं. दी. 203)

**अखण्डार्थत्वासाधकत्वम्** — निर्विशेषासाधकत्वम्।

अयमत्र निष्कर्षः — व्यधिकरणवाक्यानां समानाधिकरणानां 'नीलोत्पलं', 'दण्डी पुरुषः' इत्यादिवाक्यानाञ्च सखण्डार्थत्वमङ्गीकृत्यापि तत्त्वमस्यादिवाक्ये च तदनङ्गीकारेण अखण्डार्थत्वमङ्गीकृत्य तत्साधनाय 'प्रकृष्टप्रकाशः चन्द्रः', 'सोऽयं देवदत्तः' इत्यादिवाक्ये च अखण्डार्थत्वं साधनीयं भवेत्। वस्तुनः निर्विशेषत्वात् तथांगीकार्यमिति चेत् साधकाभावेन अप्रामाणिकस्य अखण्डार्थत्वस्य त्याग एव उचितः। सोऽयं देवदत्त इत्यादिदृष्टान्तेऽपि तत्तेदन्ताश्रयाभेद एव वाक्यतात्पर्यात्। अत्र देशभेदविरोधस्तु कालभेदेन परिहृतः इत्यभाषि भाष्यकारैः॥ (वे. मं. दी. 310)

**अखण्डार्थत्वम्** — संसर्गाविषयकशाब्दज्ञानजनकत्वम्। (वे. वा. 15-8) इदं परमतानुरोधेन। सिद्धान्ते – सर्वत्र संसर्गभाननियमात्॥

**अखण्डैकरसम्** — निर्विशेषं ब्रह्म ।

निर्विशेषतैकस्वभावम् । (श्रु. प्र.1-93) नित्यनिर्विशेषस्वप्रकाशस्वभावम् । (त. टी. पु. 101) परमतानुरोधेनेदम् ॥

**अखण्डोपाधिः** — अनेकपदार्थाघटितः, अत एव विभजनानर्हो धर्मः ।

शब्दप्रवृत्तिनिमित्ततया भासमानाः धर्माः जातिरूपाः, उपाधिरूपाश्चेति द्विविधाः । 'गौः' इत्यादौ प्रतीयमानं गोत्वादिकं जातिः अखण्डं एकं वस्तु आद्यगोष्ठी प्रविष्टम् । द्वितीयस्य तु उदाहरणं 'आकाशः' इत्यादौ आकाशत्वादिकम् । आकाशत्वं हि न जातिः, किन्तु उपाधिः ।

उपाधिश्च द्विविधः – सखण्डः अखण्डश्चेति । आद्यस्तु 'नित्यः' इत्यादिव्यवहारप्रयोजकः नित्यत्वादिः । नित्यत्वं हि ध्वंसाप्रतियोगित्वरूपम्, न त्वन्यत् । एवञ्च नित्यत्वं अनेकपदार्थसमुदायरूपं, नत्वखण्डमेकं वस्तु । अतः स सखण्डोपाधिः इत्युच्यते । द्वितीयस्तु आकाशत्वादिः । आकाशत्वं हि कश्चनाखण्डः पदार्थः, न त्वनेकपदार्थसमुदायरूपं तत् । अतः अयं अखण्डोपाधिरित्युच्यते ।

शब्दाश्रयत्वरूपमेवाकाशत्वं सखण्डमित्यपि केचित् । तदा तु 'प्रतियोगित्वं' इत्यादिव्यवहारप्रयोजकं प्रतियोगितात्वादिकमेव अखण्डोपाधौ दृष्टान्तः । अतिरिक्ताया जातेरनङ्गीकारपक्षेऽपि इदं सर्वं समानमेव ॥

**अखिलम्** — खिलं नास्तीति, समस्तम् ।

'अखिलभुवनजन्मस्थेमभङ्गादिलीले' (श्री. भा. श्लो. 1) कार्येषु ब्रह्मणः सृष्ट्यादिषु व्यापाराविषयभूतं (खिलं) न किञ्चिदस्तीत्यर्थः । अनया व्यतिरेकोक्त्या प्रायिकनिवृत्तिः, 'अज्ञातं नास्ति ते किञ्चित्' इतिवत् । अतः सकलमित्यन्वयमुखेनानुक्तिः । (श्रु. प्र. 1-4)

**अखिलज्ञानम्** — अखिलस्य ज्ञानम् ।

'अखिलज्ञानादिपूर्णो ब्रह्म' (अष्ट. 7) अखिलस्य ज्ञानम् – अखिलज्ञानम् । अधिकारिस्वरूप, तन्निष्ठा, तद्विरोधि, तत्फलविषयं ज्ञानमित्यर्थः । (अष्ट. व्या.)

**अखिलवाक्यम्** — समग्रतयोपलभ्यमानश्रुतिवाक्यम् ॥ (वि. को.)

**अखिलहेयप्रत्यनीकत्वम्** — स्वभावतः हेयसम्बन्धगन्धानर्हत्वम्, परमात्मासाधारणो धर्मः।

अखिलहेयात्यन्ताभाववत्वम्। तेन कतिपयहेयरहितेभ्यो व्यवच्छेदः, अथवा हेयप्रत्यनीकत्वं आश्रितानां यथोपायं स्वेच्छया हेयनिवर्तकत्वम्; तथा सति लोके स्व (स्वपदंपरमात्मपरं) सङ्कल्पायत्तहेयसद्भावस्य न विरोधः। न च विरुद्धघटनशक्ति-कल्पनास्वरूपमात्रेण हेयनिवर्तकत्वस्यानङ्गीकारात्। अन्यथातिप्रसङ्गात्॥ (ग. वे. भा. 109)

**अखिलाधारः** — परमात्मा। अखिलं आधारं व्याप्यं यस्य सः॥ (वि. को.)

**अखिलेत्यादेः भाष्यान्तर्भावः** — अखिलेत्यादि श्रीभाष्यमङ्गलश्लोकस्य भाष्येऽन्तर्भावः।

ननु सूत्रव्याख्यारूपत्वाभावात् अखिलेत्यादिकं न भाष्यान्तर्भावीति चेन्न। सूत्रतात्पर्यार्थपरत्वात् भाष्यान्तर्भाव्येव। सूत्रतात्पर्यार्थपरत्वञ्च तत्रैव श्लोकव्याख्याने स्पष्टम्। किञ्च मङ्गलाचरणमारिप्सितग्रन्थनिर्विघ्नपरिसमाप्त्याद्यर्थतया तदुपयोगादिति तदन्तर्भाव्येव।

शाबरशाङ्करादिभाष्येषु नमस्कारादर्शनात् अत्र नमस्कारकथनमयुक्तमिति चेन्न। 'नमः प्रवरगुणैकास्पदाय' इति द्रमिडभाष्ये देवतागुरुनमस्कारश्रवणात्। शाबरशाङ्कर-योस्तु ईश्वरानभ्युपगमात् जीवब्रह्मभेदानभ्युपगमाच्च नमस्यानादरः। अत्र तु सिद्धान्तानु रूप्यात् नमस्या अत्यन्तोपपन्ना। शाङ्करग्रन्थोपक्रमे च व्याख्यातृभिः नमस्काराद्यभावात् कुग्रन्थत्वमाशङ्क्य युष्मदस्मदित्यादिग्रन्थे प्रत्यगर्थानुसन्धानेन अर्थात् मङ्गलाचारः कृतः इति परिहृतम्। (श्रु. प्र. 1-10)

**अखिलेत्यादिना निरस्तवादाः** —

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे।
श्रुतिशिरसिविदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा॥

अत्र श्लोके शास्त्रप्रतिपाद्यैकदेशभूतः परपक्षप्रतिक्षेपश्चानर्थः सूचितो भवति। जन्मस्थेमभङ्गादिशब्देन युगपत्सर्गादिकमनभ्युपगच्छन्तो भाट्टप्राभाकरा व्यावर्तिताः।

लीलाशब्देन साक्षिमात्रेश्वरवादिहैरण्यगर्भव्युदासः। विनतेत्यादिपदेन जीवानां परस्परम्, ब्रह्मणा च भेदमनभ्युपयन्तो ब्रह्माज्ञानवादिनोऽपास्ताः, श्रुतिशिरसीत्यनेन वेदबाह्यचार्वाक-बौद्धार्हतनिरासः ; तेनैव पदेनानुमानिकेश्वरवादिनो व्युदस्ताः। ब्रह्मणीत्यनेनाब्रह्मात्मक-प्रधानपरमाणुकारणवादिसाङ्ख्यवैशेषिकादिव्युदासः। श्रीनिवासशब्देन पाशुपतादि-व्युदासः। अनेनेश्वरोत्तीर्णब्रह्मवादिनो [भेदाभेदवादिनो] व्युदस्ताः। शेमुषीशब्देन ज्ञानकर्मसमुच्चयोपायवादिव्युदासः। भक्तिरूपेति वाक्यार्थज्ञानमात्रोपायवादिव्युदासः इत्येवमनुसन्धेयम्। (श्रु. प्र. 1-7)

अत्र प्रथमेन पादेन (स्वाभावतः) जगदनादिवादनिरासः। द्वितीयेन निरनुग्र-हेश्वरवादनिरासः। तुरीयेण उत्तीर्णवादरूपः व्योमातीतवादश्च निरस्तः॥ (द. उ. 29)

**अख्यातिः** — भेदाग्रहः, असंसर्गाग्रहो वा।

प्राभाकराः शुक्तिरजतत्वयोः असंसर्गाग्रहात् शुक्तिरजतयोः भेदाग्रहं भ्रान्तिस्थले प्रतिपेदिरे। सैव अख्यातिः, (चिं. म. 201) अन्यथाख्यातिहेतुना भेदाग्रहेण अन्यथा-ख्यातिकार्यभूतविफलप्रवृत्तिनिर्वाहे किमर्थं अन्यथाख्यात्यन्तरकल्पनम्। तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन इति न्यायमूलकलाघवात् अन्यथाख्यातित्यागः। अन्यथा-व्यवहारनिर्वाहश्चेति। अख्यातेः कथं ख्यातित्वेन गणना इति चेत् अख्यातिः — ख्यात्यभावः, विशिष्टज्ञानाभावः। भेदाग्रहः। असंसर्गाग्रहो तद्विशिष्टं धर्मिज्ञान धर्मज्ञानोभयं अख्यातिपदार्थ इति वा। (न्या. प. टी. 46, 47)

[सिद्धान्ते अभावस्य भावान्तररूपत्वात् अख्यातिरपि धर्मभूतज्ञानस्यावस्थाविशेष एव। अत एव 'तद्वादिनाप्यवर्ज्यत्वात् अख्यातौ लाघवं स्मृतम्' इत्युक्तं न्याय-परिशुद्धौ। ग्रहणस्मरणात्मकं ज्ञानद्वयं यथार्थमेवेति बोध्यम्।] प्रसिद्ध्यभावः॥ (वि. को.)

अभानम्। ख्यातिः - भानम्। अत्र ख्यातिपदं भेदभानं वदति। प्राभाकरमते सर्वं यथार्थज्ञानम्। अयथार्थज्ञानमेव नास्ति। शुक्तिरजतस्थले उभयोः भेदभानाऽभावात् भ्रान्तिः जायते। (सं. अ.)

सर्वेषां यथार्थत्वे भ्रान्ताभ्रान्तव्यवस्था न सिद्ध्यतीति चेन्न। यथा भवतां ज्ञानत्वाविशेषेऽपि किञ्चिद्यथार्थं किञ्चिच्चायथार्थं, तथा यथार्थेऽपि भ्रान्ताभ्रान्तव्यवस्थो-पपत्तेः। कारणदोषबाधकवशात् व्यवस्थासिद्धिरिति चेत् तर्हि तेनैव भ्रान्ताभ्रान्त-

व्यवस्थाऽस्तु। भवतां यथार्थत्वे ज्ञानस्य बाधो नास्तीति चेत्, भवतां वा ज्ञानत्वाविशेषे कथं बाधोपपत्तिः? ज्ञानत्वाविशेषेऽपि 'नेदं रजतं' इति ज्ञानोदयदर्शनात् कल्प्यते इति चेत्, यथार्थत्वेऽपि तर्हि दर्शनबलादेव कल्प्यताम्। अयन्तु विशेषः। भवतां ज्ञानस्वरूपबाधया अयथार्थत्वं, अस्माकन्तु व्यवहारबाधया। अतो येनैव कारणेन यथार्थायथार्थविवेकः, तेनैव कारणेन भ्रान्ताभ्रान्तविवेक इति समानम्॥
(वि. को.)

**अख्यातिसंवलितयथार्थख्यातिः** — असंसर्गाग्रहसहकृतं यथार्थज्ञानम्।

प्राचुर्येण सर्वत्र यथार्थख्यातिरेव सुलभा। पञ्चीकरणादिप्रक्रियया शुक्तौ रजतमस्ति, रजते च शुक्तिरप्यस्ति। सदृशे सदृशान्तरस्य विद्यमानत्वं तान्त्रिकैरप्यनुमन्यते। अत एव 'सोमाभावे पूतीकग्रहणं' इत्युच्यते। पूतीकेऽपि सोमावयवस्य विद्यमानत्वात्। उक्तमिदं यमुनाचार्यैः —

सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्।
सोमावयवसद्भावादिति न्यायविदो विदुः॥ इति।

तेन शुक्तौ विद्यमानमेव रजतं शुक्तिरजतज्ञाने गृह्यते। तेन विद्यमानरजताग्रहणात् यथार्थख्यातिः।

अत्रायं विशेषः — शुक्तौ शुक्तिभूयस्त्वमस्ति रजताल्पीयस्त्वञ्च। यथा च शुक्तिभूयस्त्वरजताल्पीयस्त्वाग्रहणसहकृतं विद्यमानरजतग्रहणं भ्रान्तिज्ञानमित्युच्यते। तथा च अख्यातिसंवलितयथार्थख्यातिस्त्वयन्तविदामस्माकमभिमतम्। अत्र श्रुतिविदभिमतेति स्वपक्षस्य पारमार्थ्यसाधकं सन्ध्याधिकरणविषयवाक्यं स्मार्यते, 'न तत्र रथा न रथयोगाः न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते स हि कर्ता' इति। यत्र द्रव्ये द्रव्यान्तरसद्भावो न लभ्यते तत्र प्राभाकराभिमतः भेदाग्रहः असंसर्गाग्रहो वा स्वीकार्यः इति भावः। (चिं. म. 201) अत एवोक्तम् . . . .
'प्रायो बुद्धिर्यथार्था श्रुतिविदभिमता क्वापि भेदाग्रहादि' इति। (अ. सा. 201)

इदन्त्वत्र बोध्यम् — शुक्तौ रजतसद्भावो नाम शुक्तौ रजतभ्रमहेतुभूतसादृश्यप्रयोजकावयवविशेषसद्भाव एव, न त्वाभरणाद्युपयोगिरजतावयवसद्भावः। अतो नानुभवादिविरोधः।

यद्यपि देहात्मभ्रमादिषु एतत्प्रक्रिया न सम्भवति; परं तु तत्रापि अन्यथाख्यातिहेतुभूतज्ञानद्वयेनैव — अख्यात्यैव तन्निर्वाहः। ज्ञानद्वयमपि यथार्थमेव। शुक्ति रजतभ्रमस्थलेऽपि शुक्तौ विद्यमानाल्परजतावयवेषु अल्पत्वाज्ञानं, भूयश्शुक्त्यवयवेषु भूयस्त्वाज्ञानमेव तादृशभ्रमे मूलकारणम्। भूयस्त्वाग्रहणसमकालिकशुक्त्यवयवग्रहणं अल्पत्वाग्रहणसमकालिकरजतावयवग्रहणं च यथार्थमेव। एवं सर्वत्र मूलतः अख्यातेरवर्जनीयत्वपरं 'संवलित'पदम्। अवयवसद्भावोपपादनञ्च संभवस्थलाभिप्रायेण। इयमेव अख्यातिसंवलितयथार्थख्यातिः।

केचित्तु — भाष्ये ख्यातिवादान्ते 'अथवा किमनेन' इत्यादिनोक्तः स्वाप्नपदार्थवत् तादात्विकपदार्थसृष्टिवाद एव सिद्धान्तः। पूर्वं अनिर्वचनीयरजतोत्पत्तिवादनिरासश्च तैस्तस्य परमात्मसृष्टत्वानङ्गीकारादुपपद्यत इत्याहुः।

अन्ये तु — एतत्पक्षस्य दृष्टिसृष्टिपक्षतुल्यत्वात्तद्भाष्यं 'चिन्तासाफल्यमान्द्यात् श्रमबहुलतया तत्र तज्ज्ञैरुदासि' इत्युक्तन्यायेन एतादृशातिविचारे स्वस्यानास्थामेव सूचयतीति पूर्वोक्तयथार्थख्यातिरेव सिद्धान्त इति वदन्ति॥

अल्परजतावयवेषु अल्पत्वाज्ञानमात्रं न, तन्मूलकं भूयस्त्वज्ञानमपि भवति इति वाद एवान्यथाख्यातिवादः। एवं अन्यथाख्यातेरपि अख्यातिरेव निदानम्। 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायेनान्यथाख्यातिहेतुभूताख्यात्यैव निर्वाहे अन्यथाख्यातिकल्पने गौरवम्। परन्तु लोकप्रतीतिस्वारस्यं त्वत्रैवेत्यभिप्रेत्याभिहितमाचार्यैः — 'स्वारस्यमन्यथाख्यातावख्यातौ लाघवं स्थितम्' इति॥

**अगतिः** — उपायान्तरशून्यः। न गतिः यस्य (सं. अ.) कर्मरहितः॥ (वि. को.)

**अगतिकगतिन्यायः** — यत्रान्या गतिः – उपायः नास्ति तत्रासम्मतमपि स्वीक्रियते।

असम्मतस्वीकरणं अगतिकस्य पुरुषस्य गतिः। महता मार्गेण गच्छन् यदा कथञ्चित् रुद्धः स्यात्, तदा पदपथेनापि गन्तुमीहते। पदपथ एव तस्य गतिः — मार्गः॥ (मी. को.)

**अगाधत्वम्** — अशक्यतलस्पर्शत्वम्। 'अगाधभगवद्भक्तिसिन्धवे' (स्तो. र. 1) क्षोभणार्थिभिरक्षोभ्यत्वम्॥ (स्तो. र. भा.)

**अगुणः** — 1. कल्याणगुणविरोधी।

'तस्य के ह्यगुणा देवि राष्ट्रे वाऽप्यथवा पुरे' (रा. अ. 44-16)

सर्वगुणसम्पन्नस्य देशे वने वा पुरे वा के अगुणाः, न कोऽपि इत्यर्थः। [अगुणः गुणविरोधी हेतुः] रामस्य कल्याणगुणाकरत्वमभिव्यज्य हेयगुणविरोधित्वं व्यज्यते – तस्य के इत्यादिना (त. श्लो.) 2. व्याप्यं(चेतनाचेतन)गतगुणैरस्पृष्टः परमात्मा ॥ (भाग. वी.) 'अगुणो विभुः' (भाग. 1-2-30)

**अगृह्यः** — चक्षुरादिना ग्रहणानर्हः।

'अगृह्यो न हि गृह्यते' (बृ. उ. 6-5-15)। अत्र हेतुहेतुमद्भावेन अगृह्यः न हि गृह्यते इति उभयोस्साफल्यं (श्रु. प्र. 1-4-22) अगृह्यत्वान्न गृह्यत इत्यर्थः। अग्राह्यः इत्यादौ 'अर्हे कृत्यतृचश्च' (पा. सू. 3-3-169) इति सूत्रेण अर्हार्थे 'कृत्य'प्रत्ययः ॥

**अगोत्रम्** — अनामकम् ब्रह्म।

'यत्तदद्रेश्यं . . अगोत्रम्' (मुं. उ. 1-1-6)न गोत्रं यस्य ॥ (सं. अ.)

**अगोत्रमवर्णम्** — प्राकृतनामरूपरहितं ब्रह्म।

लोकप्रसिद्धगोत्रवर्णयोरप्रसङ्गात् निषेधोऽनुपपन्न इति प्रसक्तप्राकृतनामरूपात्मक-गोत्रवर्णनिषेधः कृतः ॥

**अग्निः** — 1. अग्निशरीरकः परमात्मा।

अग्रनयनादिगुणयुक्तः (ई. वे. भा., कू. भा. 18) प्राणोऽग्निरुच्यते अग्रनेतृ-त्वादिगुणयोगेनाग्निशब्दितः, स एष प्राक् प्रजापतिनिर्दिष्टः परमात्मा। (प्र. उ. 1-7) 2. अग्रनेता मोक्षप्रदः। संसारपाशदाहकः इति वा (रं. भा.) 'मामुपास्व' 'प्राणोऽस्मि प्रज्ञात्मा' इत्यादिशब्दवत् अग्निशब्दस्य अपर्यवसानवृत्त्या न तच्छरीरकपरमात्मपरं आश्रयणीयम्। 'अग्रं नयतीत्यग्निः' इति योगव्युत्पत्त्या अग्निशब्दस्य अग्निव्यवधान-मन्तरेण साक्षादेव परमात्मपरत्वं सम्भवति। (छां. उ. रं. भा. 5-24) इदं च 'साक्षा-दप्यविरोधं जैमिनिः' इति सूत्रसिद्धम्। [यत्र अन्यादिशब्दस्य अनन्यथासिद्धतत्त-लिङ्गानां सद्भावः तत्र अपर्यवसानवृत्त्या अन्यादिशब्दानां तत्तच्छरीरकपरमात्मपरत्वमेव उचितम्।]

अत एवान्यत्रोक्तम् –

परविद्यासु जीवोक्तिः निरुक्त्यादेः पराश्रया ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥

इति । (न्या. सि. श्लो. 40)

3. स्वयंप्रकाशः जीवः । (तै. ना. कू. भा. 9) तस्य मध्ये महानग्निः । (तै. ना. उ.) 4. द्युलोकः । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' (मुं. उ. 2-1-4) तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुहोति' (छां. उ. 5-4-2)

अग्निर्द्विविधः, श्रौताग्निः, स्मार्ताग्निश्चेति । अर्चिरादिमार्गे प्रथम आतिवाहिकः । रुद्रः । 'अग्निर्वै रुद्रः' इति प्रसिद्धेः । (वि. को.) (अष्टदिक्पालेषु अन्यतमः) आग्नेयदिगधिपतिः । (सं. अ.)

**अग्निचित्** — अन्याधारस्थलविशेषः ।

'मनश्चितः . . . . . अग्निचितः' (अ. र. 5-3-11) अग्निशब्देन जाठराग्निव्यापारः विवक्षिताः । (अ. र. रं. भा.) कर्मण्यग्न्याख्यायाम् । (पा. सू. 3-2-92) कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् स्यात् अन्याधारस्थलविशेषस्याख्यायां इत्यर्थकानुशासनेन क्विबन्तोयम् । अग्निचित् – जाठराग्निव्यापारः । अत्र विद्यामयक्रतुप्रकरणात् मनसा संपादितः क्रतुविशेषः बोध्यः । अत एव जाठराग्निव्यापारपर्यन्तं अनुधावनम् ॥

**अग्निजिह्वाः** — काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्तजिह्वाः ॥

(मुं. उ. 1-2-4)

हिरण्या, कनका, रक्ता, कृष्णा, सुप्रभा, अतिरिक्ता, बहुरूपा, इत्यपि नामान्तराणि ॥ (मुं. टी.)

**अग्निपरिग्रहः** — स्मार्तस्यौपासनाग्नेः श्रौताग्नित्रयस्य च परिग्रहः ।

'कुर्याच्चाग्निपरिग्रहम्' (वि. पु. 3-8-22) अत एव श्रौतस्मार्तकर्मानुष्ठानं इति प्रसिद्धिः । दक्षिणाग्नि – आहवनीय – गार्हपत्यभेदेन श्रौताग्निः त्रिविधः ।

**अग्निविद्या** — उपकोसलविद्याङ्गभूतमुपासनम् ।

छान्दोग्ये अमयः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (4. 15). इति ब्रह्मविद्यामुपदिश्य 'अथ हैनं गार्हपत्योऽनुशशास' इत्यारभ्य 'य एष आदित्ये पुरुषो दृश्यते सोहमस्मि' 'य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि' 'य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि' इत्युपदिदिशुः । [इयमेवाग्निविद्या । इयं स्वतन्त्रविद्या वा, प्रकृत-ब्रह्मविद्याङ्गं वा इति संशये स्वतन्त्रविद्यात्वे, तया व्यवधानात् 'य एषोऽक्षिणिपुरुषः' इत्येषा ब्रह्मविद्या न स्यात् इति प्रसक्तो विचारः ।] न चेयं विद्या ब्रह्मविद्याङ्गमिति वक्तुं शक्यम्; ब्रह्मविद्याफलानन्तर्गततद्विरोधिसर्वायुः प्राप्तिसन्तत्यविच्छेदादिफलश्रवणात् ।

उच्यते — 'प्राणो ब्रह्म एतदमृतमभयमेतद्ब्रह्म' इत्युभयत्र ब्रह्मसंशब्दनात् , आचार्यस्तु ते गतिं वक्ता' इत्यभिवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेः तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते । 'अथ हैनं गार्हपत्योऽनुशशास' इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च ।

किञ्च 'व्याधिभिः परिपूर्णोऽसि' इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहति-गर्भजन्मजरामरणादिभवभयोपतप्तायोपकोसलाय 'एषा सोम्य तेऽस्मद्विद्या चात्मविद्या च' इति समुच्चित्योपदेशात् मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते । एवञ्चाङ्गत्वेऽ-वगते सति फलानुकीर्तनमर्थवाद इति गम्यते । न चात्र मोक्षविरोधि फलं किञ्चित् श्रूयते; 'अपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति' इत्यादीनां फलानां मोक्षाधिकृतस्यानुगुणत्वात् । (श्री. भा. 1-2-15) अतोऽग्निविद्याया ब्रह्मविद्याङ्गत्वे न कोऽपि विरोधः ॥

**अग्निविद्यासाध्यम्** — अग्नि – वेदाध्यनसाध्यं कर्म ।

'अग्निविद्यासाध्येषु कर्मसु' (श्री. भा. 1-3-33) अग्निः – आहिताग्निः, विद्या – वेदविद्या – वेदाध्ययनम्, [आभ्यां साध्यं इति यावत् ।] (श्रु. प्र.)

एतेन ब्रह्मविद्यायाः कर्माङ्गत्वोक्तेः अप्राधान्यं स्यादिति शङ्का निवारिता ॥

**अग्निष्टोमः** — यज्ञविशेषः ।

यज्ञान्तरानुष्ठानयोग्यतासंपादनार्थं आहिताग्नौ आदौ क्रियमाणं कर्म । (सं. अ.) सोमसंस्थाविशेषः ॥ (वि. को.)

**अग्निहोत्रम्** — 1. यागविशेषः । 2. वैश्वानरविद्यान्तर्गतकर्मविशेषः ।

'अथ य एतदेवं विद्वान् अग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति' (छां. उ. 5-24-1) अग्निहोत्रं प्राणाहुतिं जुहोति — अनुतिष्ठतीत्यर्थः । (श्रु. प्र. 1-2-32)

वैश्वानरविद्यानिष्ठः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसन्धाय स्वकीयानि उरलोमहृदयमनास्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिर्बर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयान् अग्निहोत्रोपकरणभूतान् परिकल्प्य, प्राणाहुतेश्च अग्निहोत्रत्वं परिकल्प्य, एवं विधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरं आराधयेदिति, 'उर एव वेदिः लोमानि बर्हिः हृदयं गार्हपत्यः' इत्यादिनोपदिश्यते (श्री. भा. 1-2-33)

एवञ्च वैश्वानरनिष्ठेन प्रतिदिनं अनुष्ठीयमानपञ्चप्राणाहुतिषु परमात्माराधनरूपाग्निहोत्रत्वं सम्पादयितव्यम् इति भावः ।

अग्नये होत्रम् — होमः यस्मिन् ; वैदिककर्मविशेषः । इदञ्च कर्म द्विविधम् ; नित्याग्निहोत्रम्, मासाग्निहोत्रञ्चेति । (सं. अ.)

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** — (ब्र. सू. 4-1-16) (अग्निहोत्राद्यधिकरणे प्रथमसूत्रम् )

तुशब्दः सुकृतान्तरेभ्यो विशेषणार्थः । अग्निहोत्राद्याश्रमधर्माः फलाश्लेषासंभवात् अनुष्ठेया एव । तदसम्भवश्च तत्कार्यार्थत्वात् तेषां विद्याख्यकार्यायैव हि तदनुष्ठानम् । तद्दर्शनात् दृश्यते हि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिना, अग्निहोत्रादीनां विद्यासाधनत्वम् ।

अग्निहोत्राद्याश्रमधर्मः किं विदुषोऽनुष्ठेयः उत नेति संशयः । सुकृतदुष्कृतयोः अश्लेषविनाशाभिधानात् आश्रमधर्मस्यापि सुकृतत्वसाम्येन कार्याश्लेषात् अननुष्ठेयः इति पूर्वपक्षः । राद्धान्तस्तु आश्रमधर्मस्य तु विद्योत्पत्तिरेव कार्यमिति तत्कार्यायैव अनुष्ठेयः । दृश्यते हि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना विद्योत्पत्तिकार्यत्वम् । विद्या च आप्रयाणादहरहरभ्यासाधेयातिशयोत्पाद्यैव ।

तत् ज्ञानाख्यं कार्यमिति विग्रहो विवक्षितः । तस्य ज्ञानस्य कार्यं मोक्षः । तदर्थमिति पक्षे ज्ञानकार्यमोक्षस्य कर्मकार्यत्वं विद्योत्पत्तिद्वारेणैव इत्यौपचारिकमिति वक्तव्यम्; ततो वरं ज्ञानाख्येति ।

अनेन अग्निहोत्रादिनित्यनैमित्तिकानां विद्यासाधनत्वं सिद्धम् ।

अग्निहोत्रादि विदुषा कर्तव्यं यावदायुषम् ।
विद्याख्यकार्यवृद्ध्यर्थं यज्ञेनेत्यादिदर्शनात् ॥

(ब्र. प. मा. 485)

**अग्निहोत्राद्यधिकरणम्** — (अधि. सं. 4-1-10)

१. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ।
२. अतोऽन्यापि हि एकेषामुभयोः ।
३. यदेव विद्ययेति हि ।

इति सूत्रत्रयात्मकं अग्निहोत्रादिपदादिमं एवं उच्यते ।

अश्लिष्टफलत्वोक्तपुण्यवदग्निहोत्राद्याश्रमधर्माणामपि पुण्यत्वाविशेषात्फलाश्लेषावश्यंभावेन निष्फलेऽनुष्ठाने इच्छाया असम्भवात् अग्निहोत्रादीनामननुष्ठानमित्याशङ्क्य 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादावग्निहोत्रादीनां विद्योत्पत्त्यर्थत्वस्य श्रुतत्वात् फलाश्लेषासम्भवेन विद्याख्यकार्यनिष्पत्तये तान्यनुष्ठेयानीत्युक्तम् ।

अश्लेषनाशश्रवणात् कृतानामकार्यता स्वाश्रमकर्मणाञ्च ।
नैतत्तु कार्यं खलु यज्ञशब्दात् विद्यासमुत्पादनशक्तितश्च ॥

(न्या. क. सं. 4-10)

**अग्निहोत्रीन्यायः** — मीमांसान्यायः ।

'एष तु वा अग्निहोत्री यः सत्यं वदति,' इत्यग्निहोत्र्यन्तराप्रतीतेः, 'अग्निहोत्रं जुहोति' इति प्रतीताग्निहोत्रिण एव सत्यवदनरूपाङ्गविधानपरमिति अग्निहोत्रीन्यायः ।

'एष तु वा सत्येन अतिवदति' इत्यत्र तु स न्यायः न प्रवर्तते । तथा हि 'एष तु वा अग्निहोत्री यः सत्यं वदति' इत्यादिषु अग्निहोत्र्यन्तराप्रतीतेः प्रतीतस्यैवाग्निहोत्रिणः सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते । अत्र तु प्राणातिवाद्यपेक्षयातिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं परं ब्रह्म प्रतीयते । सत्यशब्दश्च

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः। अतः तन्निष्ठस्यातिवादिनः पूर्वस्मादाधिक्यं सम्भवतीति वाक्यस्वरससिद्धं अन्यत्वं न बाधितव्यम्। 'एष तु वा अतिवदति'. इत्यत्र 'तु'शब्दस्य पक्षान्तरद्योतकत्वात् प्राणातिवाद्यपेक्षया सत्यवादिनः आधिक्यनिबन्धनो भेदः गम्यते ॥

**अग्नीन्द्रादीनां यज्ञभागभाक्त्वम्** — अग्निन्द्रादीनां तु तत्तद्यज्ञभागार्हत्वम्।

अग्न्यादीनां यज्ञभागार्हत्वञ्च स्वाराधनप्रीतेन भगवतैव दत्तं न तु स्वाभाविकम्। यथोक्तं व्यासेन –

ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः।
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ॥ इति।

अनेन वाक्येन देवादिभिः अव्यवधानेन भगवतो यष्टव्यत्वमुक्तम्। तत्र भगवद्वचः –

येन यः कल्पितो भागः स तथा समुपागतः।
प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ॥ इति।

(श्रु. प्र. 1-3-26)

एवं यज्ञभागभाक्त्वं अग्न्यादीनां भगवता दत्तम् ॥

**अग्नीन्धनम्** — अग्न्याधानम्।

आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्म। (श्री. भा. 3-4-25)

**अग्नीन्धनाद्यधिकरणम्** — (अधि. सं. 3-4-4)

'अत एव चाग्नीन्धनाद्यनपेक्षा' इत्यग्नीन्धनपदोपक्रान्तं इदं सूत्रं एवं व्यवह्रियते।

ऊर्ध्वरेतस्सु आश्रमेषु यज्ञाद्यभावात्तदङ्गिका ब्रह्मविद्या तेषां न सम्भवतीत्याशङ्क्य – 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादि-श्रुतेः तेषामपि ब्रह्मविद्यावगमात् तेषां विद्या अग्नीन्धनाद्यनपेक्षेत्युक्तम्।

विद्यास्तु यज्ञादितदङ्गहानेः प्रव्राजकानां न हि सम्भवन्ति।
नैत'यदिच्छन्त' इति श्रुतत्वात् अग्न्याद्यपेक्षारहितैव साऽस्ति ॥

(न्या. क. सं. 3-57)

**अग्नीषोमीयसंज्ञपनम्** — अग्नीषोमीयपशुहिंसा।

'अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात्' (श्री. भा. 3-1-25) अनर्थोदर्को व्यापारो हि हिंसा; अल्पदुःखदोऽप्यतिशयिताभ्युदय-साधकव्यापारो रक्षणमित्यर्थः। तथा च हिंसात्वाभावादेव दूरोत्सारितो दोषः। (श्रु. प्र. 3-1-25) रागप्राप्ता हिंसा शास्त्रनिषिद्धत्वात् पापं अग्नीषोमीयपश्वालम्भनेषु प्राणवियोजनफलव्यापाररूपत्वेन हिंसात्वे सत्यपि 'न हिंस्या'दिति सामान्यं 'आलभे-तेति' विशेषविधिरुपरुन्धे। विशेषविधिप्राप्ते सामान्यनिषेधस्य दुर्बलत्वात्। अथापि 'अग्नीषोमीयहिंसा अधर्म्या, हिंसात्वात्, ब्राह्मणहिंसावत्' इत्यनुमितिः आगमबाध-सोपाधिकत्वाभ्यां दुःस्थैव। 'न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः, सुगेभिः' इति मन्त्रवर्णेन पशोः विशिष्टदेशप्राप्तिरुच्यते।

अयमत्र विभागः, अग्नीषोमीयपश्वालम्भनस्य हिंसात्वमभ्युपगम्य 'आलभेते'ति विधिबलात् 'न हिंस्या'दिति निषेधस्य संकोचमाहुः केचित्। अपरे पुनः श्रुति-स्मृतिबलात् हिंसात्वमेव नाभ्युपगच्छन्ति। अल्पीयसा दुःखेन अधिकसुखप्राप्तिहेतोः अहिंसात्वात्। न म्रियसे न रिष्यसीति तथैव श्रुतत्वाच्चेति। (स. सि. 438) शिष्टं अध्वरपदे द्रष्टव्यम्॥

**अग्नेर्हव्यवाहकत्वम्** — हविषः उन्नयनम्।

ननु अनेकशरीरप्रतिपत्त्या देवानां इहैव सन्निधानं यद्युच्यते, तर्हि अग्नेः हव्यवाहकत्वश्रुतिः 'ते वा एते आहुती हुते उत्क्रामतः। . . . ते दिवमाविशतस्ते दिवं तर्पयतः। ते तत आवर्तेते ते। इमामाविशतः' इति। स्मर्यते च—

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः॥ इति।

'इन्द्र आगच्छ, हरिव आगच्छ मेधातिथे' 'अग्निमग्न आवह सोममावह' इति येषु इष्ट्यादिकर्मसु देवताह्वानतदागमने श्रुते तेष्वेव कर्मसु इहागत्य हविरदनम्; अन्यत्र तु अग्निभिः हविषः उन्नयनं इति विभागः। हुतहविर्भोक्तृत्वं तु सूर्यादीना-मेव। न च तत्र सूर्यादीनामाह्वानम्। अतो देवताह्वानवत्सु कर्मसु इहागत्य हवि-रदनं, अन्यत्र हविषः उन्नयनमिति विभागः उपपन्नः। अतोऽग्नेः हव्यवाहकत्वश्रुतिः 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति स्मृतिश्च चरितार्था॥ (श्रु. प्र. 13-26)

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्** — (ब्र. सू. 3-1-4) तदन्तरप्रतिपत्त्यधिकरणे चतुर्थं सूत्रम् ।

'यत्रास्य पुरुषस्य मृतस्य अग्निं वागप्येति वातं प्राणः चक्षुरादित्यम्' (बृ. उ. 5-2-13) इति मरणवेलायां वागादीनां अग्न्यादिष्वप्ययश्रुतेः जीवेन सह गमनश्रुतिः अन्यथा नेयेति चेत्; तन्न भाक्तत्वात् । तत्र वागादिशब्दानां वागाद्यभिमानिदेवतावाचित्वात् । तत्र वागादीनां 'ओषधीर्लोमानि वनस्पतीन् केशाः' इत्यनपियद्भिः लोमादिभिः सह पाठात् । अतः देहाद्देहान्तरं गच्छन्नयं जीवो देहान्तरारम्भहेतुभिः भूतसूक्ष्मैः संपरिष्वक्त एव गच्छतीति सिद्धम् ।

अनेन लिङ्गशरीरान्तरं नास्तीति सूचितम् । अत्र भाक्त इति पदं अमुख्यपरम् । मरणकाले वागादीनां लयोक्तिः तदधिष्ठातृदेवतापक्रमणपरेति, जीवेन सहगमनं न घटते इति शङ्का निरासि ।

अग्न्यादिषु गतिश्रुत्या जीवेन गमनं कथम् ।
तेषामिति न वक्तव्यं अभिमानिपरा हि सा ॥

(ब्र. प. मा. 291)

**अग्न्यानयनन्यायः** — एकस्य साक्षादुक्तावपि तदविनाभूतान्यस्यापि प्रतीतिसाधकः ।

यथा अग्निरानीयतां इत्युक्ते अचोदितमपि पात्रानयनं अग्न्यानयने अन्तर्भवति । (मी. को.) तद्वत् जातिशक्तिवादिनां मते 'गौरानीयतां' इत्युक्ते जातिविशिष्टव्यक्तिरेवानीयते । तथैव गोव्यक्तिरानीयतामित्यत्रापि ; संस्थानमेव जातिरिति सिद्धान्ते संस्थानेन विना संस्थानिनः प्रतीत्यभावाच्च ससंस्थानमेव वस्तु आनीयते इति भावः ।

एवमेव 'मनुष्यो गच्छती'त्यादौ शरीरवाचकमनुष्यादिपदस्य आत्मपर्यन्तं बोधो जायत एव ॥

**अग्रजः** — (स. ना. 892) प्राप्तवतां मुक्तानां अग्रे सह सर्वैश्वर्यश्रिया यथापर्यङ्कविद्यं परमभोग्यो जायत इति । (वि. स. भा. 752)

स्वस्याग्रे प्राप्तमुक्तानां सर्वैश्वर्यश्रिया सह ।

यथापर्यङ्कविद्यं च करुणाविष्टचेतसा ॥
तद्भोग्यो जायते यश्च सोऽग्रजः परिकीर्तितः ।
(वि. स. निर्व. 752)

**अग्रणीः** — (स. ना. 220) अग्रिमं – पश्चिमं पदं नयतीति । (वि. स. भा. 254)

महोदारतया भक्तानग्रिमं पश्चिमं पदम् ।
नयतीत्यग्रणीः प्रोक्तो भक्तमोक्षप्रदो मनुः ॥
(वि. स. नि. 254)

**अग्रभुक्** — जीवात्मा ।

'सोऽग्रभुग्विभजन् तिष्ठन्नाहारमजरः कविः ।' (तै. ना. उ. 9)

अग्रस्य परमात्मनो भोक्ता । (कू. भा.)

**अग्रहणम्** — ग्रहणाजनकत्वम् ।

'द्वैतस्याग्रहणं तुल्यं उभयोः प्राज्ञतुर्ययोः' (मां. उ. का. 2-13)

अत्र द्वैतस्य देहादौ स्वातन्त्र्यस्य अग्रहणं – ग्रहणाहेतुत्वं स्वातन्त्र्यभ्रमाजनकत्वं प्राज्ञतुरीययोः तुल्यमित्यर्थः । (कू. भा.)

अत्र प्रकरणानुरोधेन स्वातन्त्र्यभ्रमस्याग्रहणमिति स्वीकृत्य, गृह्यते अनेनेति करणसाधनतया भ्रमसाधनं तन्न भवतीति ग्रहणाहेतुत्वरूपोऽर्थः प्रतिपादितः । व्यधिकरणनिर्देशात् भावप्रधाननिर्देशश्च विवक्षितः । वासुदेवादिचतुर्मूर्तिषु प्राज्ञतुरीयोपासकयोः देहात्मभ्रमस्वतन्त्रात्मभ्रमौ न जायेते इति भावः ॥

**अग्राह्यः** — (स. ना. 56) मृत्तन्त्वादिरिव कुलालकुविन्दादिना अनधिष्ठेयः । (वि. स. भा. 121) कुविन्दादिना तन्त्वादिरिव ग्रहीतुं अधिष्ठातुं शक्यः ग्राह्यः स नेति ।
(विं. स. निर्व 121)

अग्राह्यो योऽनधिष्ठेयो मृत्तिकेव कुलालकैः । (वि. स. निर्व. 121)

**अग्राह्यम्** — पाण्यादिकार्यहानोपादानाद्यविषयः ब्रह्म ।

'यत्तदद्रेश्यमग्राह्यम्' (मुं. उ. 1-1-6) अनुमयाऽपि दुर्ग्रहम् । ज्ञानकर्मेन्द्रियानर्हत्वमिह विवक्षितमिति केचित् । (त. टी. 86)

**अग्र्यम्** — 1. अप्राकृतम् ।

एकस्त्वमग्र्यम् । (वि. पु. 5-1-45) अग्रे भवमिति व्युत्पत्त्या सृष्टेः प्रागपि विद्यमानं अप्राकृतं वस्तु उच्यते इति भावः । 2. आदिकारणम् । 3. उत्कृष्टम् ॥ (वि. को.)

**अग्र्यप्रायन्यायः** — बाहुल्यानुरोधेनेतरत् नेयमित्यर्थपरोऽयम् ।

अयं न्यायः बाधकाभावे जीवति । (श्रु. प्र. 1-1-5)

अग्रे भवाः अग्र्याः । तेषामाधिक्ये तदनुरोधेनेतरत्रापि अर्थो वर्णनीयः इत्याशयः । प्रकृते तदैक्षतेत्यनेनेक्षणं श्रुतम् ; तच्च मुख्यं वा गौणं वेति विचारे 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इत्युभयत्रापि गौणेक्षणस्यैव ग्राह्यतया, अग्र्यप्रायनयानुरोधेन तदैक्षतेत्यत्र गौणमेवेक्षणं ग्राह्यमिति सांख्याः । सिद्धान्ते तु तेजोऽबन्नानामपि परमात्मैवात्मेति तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः । अतः तत्साहचर्यात् तदैक्षतेत्यत्रापि मुख्येक्षणग्रहणात् तच्छब्दः न प्रधानपरः ; किन्तु परमात्मपर एवेत्यनेन न्यायेन सिद्धम् ॥

**अग्र्यबुद्धिः** — सूक्ष्मदर्शनशीलबुद्धिः ।

'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।' (क. उ. 3-12)
ऐकाग्र्ययुक्ता बाह्याभ्यन्तरव्यापाररहिता बुद्धिः ॥ (रं. भा.)

**अघजित्** — हेयप्रतिभटः ।

**अघटितघटनासामर्थ्यम्** — सर्वशक्तिमत्त्वफलम् । अघटितस्य घटनायां सामर्थ्यम् ।

ईश्वरस्य अघटितघटनासामर्थ्यलक्षणं सर्वशक्तिमत्त्वमपि अनेकान्तवादापातरूपदोषानवकाशेन वक्तव्यम् । यथा यद्यद्वस्तु यथा यथा घटयितुमर्हं तत्तद्वस्तु तथा तथा अन्यैरघटितं ईश्वरेण सङ्कल्पमात्रेण घटितं भवतीत्यर्थः इति । अन्यथा नीलमपि पीतं भवेदित्यनेकान्तवादापातः ॥ (द. उ. 225)

**अघटितघटनी** — भगवच्छक्तिविशेषः ।

'अघटितघटनी ते शक्तिराविष्कृता स्यात्' (पा. स. 58) मेरुमन्दरसंयोगवत् अयोज्यानामपि योजनहेतुः ॥ (पा. स. व्या.)

**अघन्यायः** — अघं – पापं, तस्य ब्रह्मज्ञानेन नाशः। पुण्यस्यापि अश्लेषविनाशविषये अघन्यायो निर्दिष्टः। अनिष्टफलसाधनतया पुण्यमपि पापतुल्यमेवेति भावः॥ (मी. को.)

**अघमर्षणः** — 1. अघानां भेत्ता। वरुणः।

'वरुणोऽपामघमर्षणः' (तै. ना. 45) अघानामपनोदकः वरुणः। (रं. भा.) [अत्र वरुणशब्दः अन्तर्यामिपरमात्मपरः।] 2. अघं मर्षयति नाशयतीत्यघमर्षणः। 'ऋतञ्च' इत्यादिमन्त्रविशेषः। (सं. अ.) अन्तर्जले निमग्नेन जप्यमानं सूक्तम्। 3. कश्चन ब्रह्मर्षिः॥

**अघशक्तिः** — अघजन्या परमपुरुषाप्रीतिः।

कर्मादौ शक्तित्वव्यपदेशः औपचारिकः॥ (वि. को.)

**अघस्य विनाशकरणम्** — ब्रह्मविद्याप्राप्तौ पूर्वोत्तरपुण्यपापविनाशनम्।

अघस्य विनाशकरणम् – उत्पन्नायाः तच्छक्तेः विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव। तदेवं विद्या वेदितुः वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसंचयजनितपरमपुरुषाप्रीतिं विनाशयति। (श्री. भा. 4-1-13)

उत्पन्नस्य कर्मणः उत्पन्नायाः कार्यकरणशक्तेः, विनाशकरणम् – विनाशः। (श्रु. प्र.) पुण्यपापयोरुभयोरप्यघत्वं वेदान्तसम्मतम्॥

**अघस्याश्लेषः** — ब्रह्मविद्याप्राप्तौ उत्तरपुण्यपापयोः असम्बन्धः।

अघस्याश्लेषकरणम् – वैदिककर्मायोग्यतावासनाप्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायञ्च कुर्वन्ति। तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्। 'नाविरतो दुश्चरितात्' इत्यादि शास्त्रम्। (श्री. भा. 4-1-13)

उत्पत्स्यमानस्य कर्मणः स्वकार्यकरणशक्तेः प्रतिबन्धोऽश्लेषः॥ (श्रु. प्र.)

**अघातिकर्मचतुष्टयम्** — (जैनमते) अष्टविधबन्धेषु घटकम्।

शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखदुःखोपेक्षाहेतुभूतम् । (श्री. भा. 2-2-31) अपरिमितशरीरसंस्थानं, तदभिमानः, तत्स्थितिः, तत्प्रयुक्तसुखदुःखोपेक्षा इत्येषां हेतुरित्यर्थः । अन्यथा चतुष्टयायोगात् ॥ (श्रु. प्र.)

**अघायुः** — अघसाधनभूतायुर्विशिष्टः ।

'अघायुः इन्द्रियारामः' (गी. 3-16) [अत्र अघशब्दः आयुर्घृतं इतिवत् 'अघसाधने' औपचारिकः ।] अघारम्भायैव यस्य आयुः, अघपरिणतं वा, उभयरूपं वा सोऽघायुः । यः यज्ञशिष्टेन देहधारणमकुर्वन् स अघायुर्भवति ॥ (गी. भा.)

**अङ्गम्** — 1. अपेक्षितम् ।

नियमेनोपादेयम् । (श्रु. प्र. 3-3-41) 2. परार्थम् । यथा विद्यार्थत्वात् कर्म विद्याङ्गम् ।

1. अप्रधानम् । यथा विद्याकर्मणोर्मध्ये कर्माप्रधानम् । 2. अवयवः । यथा शरीरस्य हस्तः अङ्गम् । (सं. अ.)

1. प्रयोजकं उपकारकं वा । यथा व्याप्तिरनुमित्यङ्गमित्यादौ । 2. यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमिति संज्ञामाहुः शाब्दिकाः । यथा 'भवति' इत्यत्र 'भव' इत्यस्य अङ्गसंज्ञा । 3. मुख्यफलाजनकत्वे सति मुख्यफलजनकव्यापारजनकमङ्गमिति मीमांसकाः । यथा दर्शपूर्णमासादौ प्रयाजादि अङ्गम् । 4. लग्नमिति मौहूर्तिकाः । (न्या. को.)

अङ्गं नाम तत्, यत् प्रधानं फलवत् करोति । इतिकर्तव्यताकांक्षस्य सन्निधौ श्रूयमाणं इतिकर्तव्यताविशेपणत्वेन परिपूरणसमर्थं यत् तत् अङ्गं भवितुमर्हति । तद्धि अङ्गं यत् प्रधानस्योपकरोति न यदुपकारे वर्तते । अङ्गं द्विविधं क्रत्वर्थं पुरुषार्थं चेति ॥ (मी. को.)

**अङ्गत्रयम्** — उपासनाङ्गत्रयम् ।

'एतत्त्रयं वीक्षेत दमं दानं दयामिति' (सु. उ. 3) दमो दानं दयेति गुणत्रयं प्रकृष्टतरमुपासनाङ्गम् । (व्या.)

**अङ्गपञ्चकम्** — 1. प्रपत्तेरङ्गानि ।

आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासः गोप्तृत्ववरणं तथा ॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ।

इति वचनात् आग्नेयादिषट्कवत्, आनुकूल्यसङ्कल्पादिषट्कं संभूयैकं कारणं स्यादित्यत्राह – 'साङ्गे त्वष्टाङ्गयोगव्यवहृतिनियतः षड्विधत्वोपचारः' (न्या. विं. 11) इति। 'न्यासः पञ्चाङ्गसंयुतः' इति व्यवस्थापकवचनानुगुणं अङ्गाङ्गिसमुच्चयेन षड्विधत्व-वचनं नेयमिति भावः। (व्या.)

प्रपत्तिदशायां प्रातिकूल्यवर्जनाद्यभावे साङ्गस्योपायस्य वैकल्यात्, पश्चात्तु प्राति-कूल्यादिसम्भवेऽपि कृतस्योपायस्य न वैकल्यम्, किन्तु प्रत्यवायान्तरपरिहारार्थं यथार्हं प्रतिविधानमेव कार्यम् ।

'तथा पुंसामविस्रम्भात् प्रपत्तिः प्रच्युता भवेत्'

इत्येतदपि तात्कालिकविस्रम्भवैकल्याभिप्रायम्; उत्तरकाले सतोऽसतोऽपि विश्वासस्य पूर्वकृतप्रपत्त्यङ्गत्वाभावेन तद्विरहे प्रपत्तिप्रच्यवनायोगात्। एवञ्च ब्रह्मास्त्र-न्यायदृष्टान्तोऽप्यत्र योग्यांशे स्थाप्यः; अन्यथा अतिप्रसङ्गात्। एतेन –

'उपायापायसंयोगे निष्ठया हीयतेऽनया'

इत्येतदपि गतार्थम्; तात्कालिकोपायापायसंयोगस्य प्रपत्तिविरोधित्वे तात्पर्यात्।

न चानुकूल्यसङ्कल्पस्याङ्गत्वेन श्रवणात् सङ्कल्पितकरणमप्यङ्गं, तथा श्रुत्यभावात् यथाश्रुति सङ्कल्पमात्रस्याङ्गत्वे सङ्कल्पितकरणस्याङ्गत्वकल्पनानुपपत्तेश्च। कृत्याकरणरूपा-पायानिवृत्तिस्तु स्वतन्त्रविधेरेव सिध्यतीति नोपप्लवावकाशः।

'आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः'

इत्यनेनापि अपायनिवृत्तौ सङ्कल्पादिविशेषस्य तात्कालिक उपयोगः प्रदर्श्यते। अत्रानुकूल्यशब्दो हि तत्सङ्कल्पप्रतिपादनपरः, 'आनुकूल्यस्य सङ्कल्प' इत्यादिसिद्धा-नुवादात्।

न चोपायापायेत्यादौ प्रपत्तिनिष्ठाहानिर्विवक्षिता, किन्तूपायापायत्यागविशिष्ट-मध्यमवृत्तिहानिः, विशेषणाभावेऽपि हि विशिष्टाभावः सिध्यति; अत एव हि तत्र

'अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत्'

इत्यादिना तावन्मात्रनिमित्तत्वे प्रायश्चित्तमेव विधीयते, न तु पूर्वकृतां प्रपत्तिं प्रच्युतामभिप्रेत्य तत्फलार्थं पुनः प्रपत्तिः। (न्या. विं. व्या. 12) एवमङ्गाङ्गिभावः, तत्रावान्तरवैयाकुली च शामिता।

2. तर्काङ्गानि।

'प्राप्तिस्तर्काप्रतिहतिरवसानं विपर्यये।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम्॥'

इत्युक्तम्॥ (वि. को. प.)

**अङ्गपञ्चकसमन्वयः** — आनुकूल्यादिपञ्चानां उदाहरणम्।

['न धर्मनिष्ठोऽस्मि' इत्यादिना प्रपत्तेरङ्गपञ्चकं प्रदर्श्यते] तदित्थं 'नमो नमोऽनन्तदयैकसिन्धवे' इति श्लोके नमःप्रयोगेणानुकूल्यसङ्कल्पप्रातिकूल्यवर्जने दर्शिते। 'न धर्मनिष्ठः' इत्यादिभिः अकिञ्चनाधिकारत्वं, कार्पण्यरूपमङ्गञ्च। रक्षिष्यतीति विश्वासस्तु 'शरण्य' इति सम्बुद्ध्या व्यज्यते। रक्षणसमर्थः कारुणिकश्च शरण्यः। स च प्रपन्नं मां रक्षिष्यतीति विस्रम्भणीयः। सोपसर्गधातुविशेषश्चात्राध्यवसायवैशिष्ट्यं व्यनक्ति। 'त्वत्पादमूलं शरणं प्रपद्ये' इत्यनेनैव गोप्तृत्ववरणात्मनिक्षेपौ सिद्धौ। प्रार्थनान्वितो हि भरन्यासः प्रपत्तिः। रक्षादिमात्रप्रार्थनायामाज्ञादिपूर्वकभरन्यासे च प्रपत्तिशब्दप्रयोगदर्शनात्॥ (स्तो. भा. 22)

**अङ्गप्रपत्तिः** — भक्तेरङ्गभूता प्रपत्तिः।

'स्वतन्त्राङ्गप्रपत्तिभ्यां प्रसन्नावत्र तावुभौ' (र. सा. 103)

साधनभूता भक्तिरत्र विवक्षिता॥

**अङ्गविधिः** — (विधिः) गुणविधिः।

यथा दध्ना होमं जुहोतीत्यादिः। (न्या. को.) अग्निहोत्रं जुहोतीत्यादिना विहितप्रधानकर्मशेषतया अयं गुणविधिः॥

**अङ्गाङ्गिभावः** — एकं प्रधानं अपरं चाप्रधानं यत्र, तत्राङ्गाङ्गिभावो दृश्यते। यथा भक्तिः अङ्गी, कर्मज्ञाने अङ्गे॥ (सं. अ.)

**अंगारन्यायः** — अङ्गारस्वभावबोधको न्यायः।

यथा अङ्गारः उष्णश्चेत् हस्तं दहति। शीतलश्चेत् हस्तं मलिनीकरोति च। (मी. को.) एवं भगवद्द्विट् अज्ञो वा, अभिज्ञो वा स्वसंसर्गिणं मलिनं करोत्येवेति भावः॥

**अंगारावक्षयणम्** — अङ्गारग्रहणपात्रम्।

'त्वां स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता ३' इति (बृ. उ. 5-9-18) अङ्गारा अवक्षीयन्ते गृह्यन्ते येन पात्रेण तदङ्गारावक्षयणम्॥ (रं. भा.)

**अंगावबद्धास्तु न शाखासु हि प्रतिवेदम्** — (ब्र. सू. 3-3-53) अंगावबद्धाधिकरणे प्रथमसूत्रम्।

न त्वंगावबद्धाः उपासनाः तासु शाखासु व्यवस्थिताः, अपि तु प्रतिवेदं सर्वशाखासु सम्बध्यन्ते इत्यर्थः। हिः हेतौ। यस्मात् उद्गीथजातीयत्वाविशेषेण सर्वसम्बन्धः तस्मादित्यर्थः।

उद्गीथाद्युपासनानां सर्वशाखागतक्रत्वन्वयः समर्थ्यते। तथा हि – 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथादिक्रत्वंगाश्रया उपासनाः श्रूयन्ते; ताः किं यासु शाखासु श्रूयन्ते, तास्वेव व्यवस्थिताः, उत सर्वासु शाखासु सम्बद्धाः इति संशयः। शाखासु स्वरभेदात् प्रतिशाखं उद्गीथभेदेन यत्र श्रूयन्ते, तत्रस्थोद्गीथादेः सन्निधानात् तेनैव अन्विता व्यवस्थिताः इति पूर्वपक्षः।

राद्धान्तस्तु – यद्यप्युद्गीथव्यक्तिभेदो विद्यते, तथापि तत्र तत्र च उद्गीथजातीयत्वेन सम्बन्धात् सर्वेषां च उद्गीथजातीयत्वाविशेषात् 'उद्गीथमुपासीत' इति श्रुत्यैव सर्वसम्बन्ध इति सर्वशाखासु उद्गीथोपासनाः सम्बध्यन्ते।

'क्रत्वंगमाश्रिताश्चैताः न शाखासु व्यवस्थिताः।
उद्गीथोपासनाः सर्वशाखास्वपि च संगताः॥

(ब्र. प. मा. 407)

**अंगावबद्धाधिकरणम्** — (अधि. सं. 3-3-22)

१. अंगावबद्धास्तु न शाखासु हि प्रतिवेदम्।

२. मन्त्रादिवद्वाऽविरोधः।

अंगावबद्धपदोपक्रान्तं सूत्रद्वयात्मकमिदं इत्थं निरूप्यते ।

उद्गीथोपासनानि यासु शाखासु तास्वेव तेषामनुसन्धानमित्याशङ्क्य — सामान्येनोद्गीथादिसम्बन्धितया विहितत्वात् सर्वत्रोद्गीथादेस्सन्निहितत्वाच्च सर्वशाखासु उद्गीथाद्युपासनानि संवध्येरन् इत्युक्तम् ।

उद्गीथस्योपास्तिः नियता स्वास्वेवं नेतरास्वमितेः ।
नैवं शंक्यमुपास्तेः केवलमुद्गीथमात्रविषयत्वात् ॥
(न्या. क. सं. 3-42)

**अङ्गित्वानुपपत्तेश्च** — (ब्र. सू. 2-2-6) रचनानुपपत्त्यधिकरणे षष्ठं सूत्रम् ।

अङ्गाङ्गिभावानुपपत्तेः प्रकृतेः जगत्सर्गो नोपपद्यते । अनेन प्राज्ञानधिष्ठितप्रधानस्य कारणत्वे दोषः आपाद्यते, गुणानां उत्कर्षनिकर्षनिबन्धनाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः 'प्रतिप्रतिगुणाश्रयविशेषात्' इति वदद्भिः भवद्भिः (सांख्यैः) अभ्युपगम्यते । प्रतिसर्गावस्थायान्तु साम्यावस्थानां सत्त्वरजस्तमसां अन्योन्याधिक्यन्यूनत्वाभावात् अङ्गाङ्गिभावानुपपत्तेः न जगत्सर्गप्रसङ्गश्च । अतश्च न प्राज्ञानधिष्ठितं प्रधानं कारणम् ।

सत्त्वादीनां गुणानां तु प्रलये समता भवेत् ।
गुणस्य चैकस्याङ्गित्वानुपपत्तेरसम्भवः ॥
(ब्र. प. मा. 180)

**अङ्गिना अङ्गोपमर्दः** — अङ्गत्यागः ।

ननु योगदशायां कालादिक्रमजानतः कर्तव्यलोपः स्यादेव, अतः कर्मत्यागोऽत्र न तामस इत्याह – 'योगारूढस्य कर्मच्यवनमपि तदा सह्यमङ्ग्यर्थवाक्यैः' इति । (त. मु. 106) अयं भावः । योगदशायां बहिरप्रवृत्तमनसो न धीपूर्वककर्मत्यागः । अबुद्धिपूर्वकन्तु उत्थानकालेऽपि न लिम्पतीति नियमितं, किमुत समाधौ । अङ्ग्यर्थवाक्यैः – कर्मणां समाधिरूपाङ्गिशेषत्ववाक्यैः [कर्मत्यजनं सह्यमेव] । ततश्चाङ्गप्रधानविरोधोऽङ्गिना [समाधिना] अङ्गोपमर्दो [कर्मत्यागः] न दोषायेति सिद्धम् ॥ (स. सि.)

**अङ्गिप्रपत्तिः** — स्वतन्त्रप्रपत्तिः ।

प्रपत्तेस्तु प्रपत्तव्यप्रसादद्वारता तथा ।
तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता ॥

केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ।
उपाये च फले चैव स्वप्रयत्ननिवर्तनम् ॥
स्वाम्यायत्तमिति व्यक्तं निक्षेपस्यांगिता तथा ।
(प्र. पा. 2-20-22)

स्वरूपफलभरसमर्पणेषु भरसमर्पणस्यैव अंगित्वम्; निक्षेप एव समर्पणम्; न्यासः प्रपत्तिरित्युच्यते। प्रपत्तिस्तु प्रपत्तव्यस्य परमात्मनः प्रसादद्वारैव हेतुर्भवति। अन्ततो सिद्धोपायस्यैवाव्यवहितोपायत्वेन प्राधान्यम्। तेन संरक्ष्यमाणस्य स्वस्य कैङ्कर्यरूपफलं स्वामिन एव। न तु स्वस्य [प्राधान्येनेति भावः] स्वरूपादिसमर्पणं स्वाम्यायत्तमेवेति भाव्यम् ॥

**अङ्गुल्यग्रचोद्यम्** — कश्चन न्यायः ।

यथा अर्थान्तरं स्पृशन् अङ्गुल्यग्रं स्वात्मानं न स्प्रष्टुमलं तथा ज्ञानं न स्वात्मानं विषयीकर्तुमलं इति बौद्धादीनां, परेषाञ्च चोद्यम्। [अनेन ब्रह्मणः अवेद्यत्वं परे स्थापयन्ति।]

[परं तु] यथा रूपादिर्हि पृथिव्यादौ स्वसम्बन्धात् चाक्षुषत्वादि जनयन्, स्वस्मिन् न रूपादिसम्बन्धाधीनः चाक्षुषत्वादौ। तथा अनुभूतिः आत्मनः प्रकाशमानत्वे, प्रकाशत इति व्यवहारे च स्वयमेव हेतुरिति चोद्यमिदं परिहृतम् ॥ (श्री. भा. 1-106)

**अङ्गुष्ठप्रमितविद्या** — जीवात्महृदयस्थितत्वेन अङ्गुष्ठप्रमितपरमात्मनः उपासनम्।

इयन्तु कठोपनिषदि, श्वेताश्वतरोपनिषदि च 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' (क. उ. 4-12) 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा' (क. उ. 6-17; श्वे. उ. 3-13) इत्यादिवाक्यैः प्रतिपाद्यते। प्रमिताधिकरणेन च इयं प्रसाधिता ॥

**अङ्गुष्ठमात्रः** — 1. अङ्गुष्ठपरिमाणः परमात्मा ।

अत्र 'प्रमाणे द्वयसच् दघ्नच् मात्रचः' (पा. सू. 5-2-37) इति प्रमाणार्थे मात्रच् प्रत्ययः ।

'अङ्गुष्ठमात्रः पुरुषः मध्य आत्मनि तिष्ठति, ईशानो भूतभव्यस्य' (क. उ. 2-4-12) 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' (श्वे. उ. 3-13) सर्वेषामन्तरात्मा असौ हृदयगुहानिहितत्वनिबन्धनांगुष्ठपरिमाणयुक्तः पुरुषः। (रं. भा.)

इह अंगुष्ठमात्रः इत्येतत्पदं प्रमिताधिकरणोक्तरीत्या परमात्मपरम्। जनानां हृदयस्य अंगुष्ठमात्रपरिमाणतया तदवच्छिन्नस्य परमात्मस्वरूपस्य सर्वव्यापिनोऽपि अंगुष्ठमात्रत्वम्। एतदुपपादनायैव अन्तरात्मा इत्यादि। सदा जनानामित्यस्य अन्तरात्मेत्यत्रापि अपकर्षः। जनसम्बन्ध्यन्तःकरणावच्छिन्नोऽयमात्मा इति। 'सर्वस्य चाहं हृदि सन्निविष्टः' इति हि गीयते। (टि.)

2. जीवात्मा। 'प्राणाधिपस्सञ्चरति स्वकर्मभिः। अंगुष्ठमात्रः रवितुल्य-रूपः' (श्वे. उ. 5-8)

'अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्'

एतादृशप्रकरणबलात् अंगुष्ठप्रमितत्वं जीवस्यापि उपपन्नम्।

उभयत्रापि अंगुष्ठप्रमितत्वं औपाधिकमेवेति मन्तव्यम्। जीवस्यापि 'आराग्र-मात्रो ह्यवरोऽपि दृष्टः'

'वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः . . . . ॥'

इति अणुपरिमाणत्वश्रुतेः। 'वालाग्रं' इति परिमाणविशेषस्य संज्ञा॥

**अङ्गेष्वंगित्ववादः** — न्यासविद्यांगेषु अङ्गित्वोक्तिः।

'न्यासः पञ्चाङ्गसंयुतः' इत्युक्ताङ्गिभूतन्यासविद्यायाः कतिपयांगेष्वेवाङ्गित्ववादो दृश्यते, कथमेतदुपपद्यते इत्यत्राह —

'अंगेष्वंगित्ववादः फलकथनमिह द्वित्रमात्रोक्तयश्च
प्राशस्त्यं तत्र तत्र प्रणिदधति ततः सर्ववाक्यैककण्ठ्यम्'

इति। (न्या. विं. 12)

अयं भावः, तत्तदङ्गानां प्राशस्त्यबोधनार्थमेव प्रार्थनादिषु एकैकस्मिन् 'प्रार्थना शरणागतिः' इत्यादिरीत्या अंगित्वोक्तिः प्राशस्त्यबुद्धिजननार्थैवेति बोध्यम्। एवमेव द्वित्रिमात्रोक्तिमात्रेण तेषामेवाङ्गतेति च न भाव्यम्। तथासति 'न्यासः पञ्चाङ्गसंयुतः' इत्यादिवचनैः विरोधः स्यात्। अतः एतादृशोक्तिः प्राशस्त्यपरैवेति बोध्यम्॥

**अङ्गेषु यथाश्रयभावः** — (ब्र. सू. 3-3-59) यथाश्रयभावाधिकरणप्रथमसूत्रम्।

'उद्गीथमुपासीत' इति उद्गीथाद्यङ्गे आश्रितानामुपासनानां उद्गीथवदेव क्रत्वर्थत्वं; न तु पुरुषार्थत्वम् , गोदोहनादिवत् स्ववाक्ये फलान्तराश्रवणात् उद्गीथादिसम्बन्धितया क्रत्वङ्गभावो न विरुध्यते इति पूर्वपक्षपरमिदम् ।

'यदेव विद्यया करोति . . . तदेव वीर्यवत्तरं' इति फलान्तरसाधनतया अवगतस्योपासनस्याङ्गभावासम्भवात् 'उद्गीथमुपासीत' इत्युद्गीथाश्रयतामात्रप्रतिपादनात् 'उद्गीथमुपासीत' इत्युद्गीथाद्यङ्गेषु आश्रितानां उपासनानां उद्गीथादिवत् क्रत्वङ्गभाव एव । गोदोहनादिवत् स्ववाक्ये फलान्तराश्रवणात् उद्गीथादिसम्बन्धितया क्रत्वङ्गभावो न विरुध्यते इति ।

उद्गीथादिष्वाश्रितानां उपास्तीनां यथाश्रयम् ।
क्रत्वङ्गभावो गोदोह इव तत्र फलश्रुतेः ॥
(ब्र. प. मा. 413)

**अङ्घ्रियुगलम्** — भगवच्चरणौ ।

'श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना' (स्तो. र. 5) उपमान्तरराहित्येन अन्योन्यसदृशदेवताद्वन्द्ववच्चाविभक्तोद्देश्यम् । (स्तो. र. भा.) परस्परसंयोगेन सञ्जातरामणीयकञ्च । (स्तो. भा. पे.)

'अनतिक्रमणीयं हि अङ्घ्रियुगलम्' इत्युक्त्या श्रीमन्नारायणचरणावेवोपायत्वेनाश्रीयेते भक्तैः । पादपीठारविन्दात् अधिकं सौकुमार्यं ते पादारविन्दयोः वर्तत इति ज्ञायते । अत एव सौकुमार्यातिशयपराजितमासनपद्मं पादारविन्दे वहति । किञ्च त्रिविक्रमावतारे ते पादारविन्दशोधनेन समुत्थिता या त्रिपथगा गङ्गा, तत्स्रोतस्सु, एकं स्रोतः ध्रुवः धत्ते, भवानीपतिः अपरं शिरसा वहति । अत एवास्य 'अलकं नन्दयतीति अलकनन्दिनीति अन्वर्थनामाऽभवत् । एते ते पादारविन्दे त्रैलोक्यपावनगङ्गोत्पादकतया अत्यन्तपावने पादारविन्दे भोग्ये' इत्यादिरीत्या वर्णितमहिमशालिनीति भावः । तदेतदुक्तम् –

सुसुन्दरस्यास्य पदारविन्दे पादारविन्दाधिकसौकुमार्ये ।
अतोन्यथा ते बिभृयात्कथं नु तदासनं नाम सहस्रपत्रम् ॥
(सुं. स्त. 62)

एते ते बत सुन्दराह्वयजुषः पादारविन्दे शुभे
यन्निर्नेजसमुत्थितत्रिपथगा स्रोतस्सु किञ्चित् किल।
धत्तेऽसौ शिरसा भुवस्तदपरं स्रोतो भवानीपतिः
यस्यास्यालकनन्दिकेति निजगुर्नामैवमन्वर्थकम् ॥
(सुं. स्त. 64)

**अङ्घ्रिसरोजम्** — भगवत्पादारविन्दम् ।

'तस्मै नमो मधुजिदङ्घ्रिसरोजतत्त्व . . . . सीम्ने' (स्तो. र. 2) अङ्घ्रिशब्देन शुभाश्रयविग्रहद्वारा अनुरागातिशयहेतुत्वं, तत्रापि शेषभूतस्योद्देश्यतमांशश्च प्रदर्श्यते । सरोजस्वरूपणेन मङ्गलत्वं भोग्यत्वञ्च व्यञ्जितम् । भगवदङ्घ्रिबलेन मधुर्जितः, अयं [यामुनः] तु तद्भोग्यतातिशयेन जितः इति भावः ॥ (स्तो. र. भा.)

**अङ्घ्रिसरोजसुधाः** — भगवद्भक्ताः ।

'वयमपि ते समास्समदृशोङ्घ्रिसरोजसुधाः' (भाग. 10-87-24) अङ्घ्रिसरोजमेव सुधा, तद्वत् भोग्यं येषां ते त्वच्चरणसरोजप्रकाशका वयमपीत्यर्थः । अङ्घ्रिसरोजं सुष्ठु धयन्ति पिबन्ति अनुभवन्ति । 'धेट् पाने' इति धातोः रूपमिदम् । सुधापानवत् भगवच्चरणसेवाभिरताः इत्यर्थः ॥ (भाग. वी.)

**अचक्षुरूपः** — परमात्मा ।

'अचक्षुरूपो बहुरूपरूपः' (वि. पु. 5-1-41) अचक्षुस्स्वरूपश्च, चक्षुस्स्वरूपरहितो वा । (वि. चि.) प्रथमे च चक्षुः रूपं च पृथक् निषिध्यते । द्वितीये तु चक्षुस्स्वरूपं एकमेव निषिध्यते ॥ [आर्षप्रयोगोऽयम्]

**अचक्षुःश्रोत्रम्** — चक्षुःश्रोत्ररहितं ब्रह्म ।

'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्' (मुं. उ. 1-6) न चक्षुः श्रोत्रं च यस्य । ज्ञानेन्द्रियरहितम् । (रं. भा.) इन्द्रियायत्तज्ञानरहितम् । (त. टी. 86) अत्र चक्षुश्श्रोत्रपदं ज्ञानेन्द्रियसामान्योपलक्षणम् ॥

**अचरमगुरुः** — प्रथमगुरुः श्रीमन्नारायणः ॥

**अचलः** — (स. ना. 751) दुर्योधनादिभिः दुरात्मभिः अभेद्यः । (वि. स. भा. 645)
दुरात्मभिः दुर्योधनादिभिः अभेद्यतया चलः — चञ्चलो नेति ॥ (वि. स. निर्व. 645)

**अचलप्रतिष्ठः** — समाधिनिष्ठः ।

अचलवत् प्रतिष्ठा यस्य । अचलवत् स्थिरो योगी । समाधौ स्थितस्सन् ध्यानमग्नः ॥ (सं. अ.)

**अचलम्** — च्यवनधर्मरहितम् ।

'कूटस्थमचलं ध्रुवम्' (गी. 12-3) अपरिणामित्वेन स्वासाधारणाकारात् न चलति, न च्यवते इत्यचलं प्रत्यगात्मस्वरूपम् ॥ (गी. भा.)

**अचलं स्थिरम्** — निष्कम्पम् धारणप्रयत्नरहितं च ।

'समं कायशिरोग्रीवं धारयन् अचलं स्थिरम् ।' (गी. 6-13)

कायशिरोग्रीवं समं अचलं सापाश्रयतया स्थिरं धारयन् । (गी. भा.) अचलशब्देन निष्कम्पत्वेऽभिहितेऽपि स्थिरमित्येतत् अङ्गकम्पकरश्रमहेतुभूतपश्चाद्धारणप्रयत्ननिवृत्तिहेत्वभिप्रायमिति दर्शयितुं सापाश्रयतया स्थिरमित्युक्तम् ॥ (ता. चं.)

**अचलत्वञ्चापेक्ष्य** — (ब्र. सू. 4-1-9) आसीनाधिकरणे तृतीयं सूत्रम् ।

निश्चलत्वञ्चापेक्ष्य, पृथिव्यप्पर्वतादिषु, ध्यानवाचोयुक्तिः दृश्यते । 'ध्यायतीव पृथिवी; ध्यायन्तीवापः, ध्यायन्तीव पर्वताः' इति । आप इति स्थिरं तटाकादिजलं विवक्षितम् । निश्चलत्वमैकाग्र्यात् भवति । तच्च आसीनस्यैव । गत्यादौ विजातीयप्रत्ययेन चलनसम्भवात् इत्यर्थः । अतः आसीनस्सन्नेवोपासीत ।

निश्चलत्वं तु सम्प्रेक्ष्य पर्वतादिषु दृश्यते ।
ध्यानवाचोयुक्तिरिति ह्यासीनस्यैव तद्भवेत् ॥

(ब्र. प. मा. 478)

**अचला** — निर्विघ्ना [श्रद्धा] ।

'तस्य तस्याचलां श्रद्धाम्' (गी. 7. 21) विघ्ने सति चाञ्चल्यं भवतीति तद्धेतुभूतविघ्नराहित्यं विवक्षितम् ।

जातायाः श्रद्धायाः अचलत्वं नाम प्रतिबन्धकराहित्येन आफललाभं निरन्तरं सन्तन्यमानत्वम् ।। (ता. चं. )

**अचापलम्** — दैवीसंपद्विशेषः ।

'मार्दवं ह्रीरचापलम्' (गी. 16. 2) स्पृहणीयविषयसन्निधौ अचञ्चलत्वम् । (गी. भा.) एतेन क्रीडापरिहासमृगयाक्षादिष्वप्रसंगो दर्शितः ।। (ता. चं.)

**अचित्** — स्वरूपतो नामान्तरभजनार्हावस्थावत् , तत्त्वत्रयेष्वन्यतमम् ।

अचित् ज्ञानशून्यं विकारास्पदञ्च । ज्ञानशून्यत्वे सति विकारार्हत्वं अचित्सामान्यलक्षणं । ज्ञानशून्यत्वादेव 'भोक्ता भोग्यं प्रेरितारञ्च' इति श्रुतिः भोग्यं वक्ति । विकारो नाम अवस्थान्तरापत्तिः । 'क्षरं प्रधानम्' इत्यादिश्रुतिः क्षरशब्देन अस्य विकारास्पदतां अभिधत्ते । इदञ्च शुद्धसत्त्वं, मिश्रसत्त्वं, सत्त्वशून्यञ्चेति त्रिविधम् ।। (त. त्र. व्या. 140) विवरणं तु तत्तत्पदेषु द्रष्टव्यम् ।।

**अचितो ब्रह्मांशत्वम्** — अचितः चिदचिद्विशिष्टब्रह्मैकदेशत्वम् ।

अत्र अहेः कुण्डलभावादिवत् ब्रह्मणोऽवस्थाविशेषरूपं इति परे वदन्ति । 'ब्रह्मैवेदं सर्वं' इति तादात्म्यं प्रभातदाश्रययोरिव अचिद्ब्रह्मणोः ब्रह्मजातियोगमात्रेण भवतीति च कैश्चिदुच्यते । तदा अश्वत्वादिवत् ब्रह्मापि ईश्वरे चिदचिद्वस्तुनोश्च अनुवर्तमानंसामान्यमिति सकलश्रुतिस्मृतिव्यवहारविरोधः। आद्यपक्षे ब्रह्मणः विकारित्वप्रसङ्गश्च। अतः जीववत् पृथक्सिद्ध्यनर्हविशेषणत्वेन अचिद्वस्तुनो ब्रह्मांशत्वं स्वीकरणीयम् । अत एव 'पूर्ववद्वा' (ब्र. सू. 3-2-28) इति सूत्रितम् । अतः विशिष्टवस्त्वेकदेशत्वेन अभेदव्यवहारो मुख्यः । विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारोऽपि मुख्यः; ब्रह्मणो निर्दोषत्वञ्च रक्षितम् ।

चिदचिद्विशिष्टवस्तुन एव ब्रह्मपदार्थत्वात् विशिष्टवस्त्वैकदेशस्यैवांशपदार्थत्वाच्च अचितोऽपि ब्रह्मांशत्वम् । अपृथक्सिद्धविशेषणवाचकस्य विशेष्यपर्यन्तताशक्तेश्च 'सर्वं खल्विदं ब्रह्म' इत्यादि निर्देशोऽप्युपपन्न एव। अतः सिद्धान्ते चेतनाचेतनयोः उभयोरपि ब्रह्मणा सामानाधिकरण्यं एकविधमेव सम्भवति ।।

**अचित्प्रत्यासत्तिः** — अचितः प्रत्यासत्तिः । बद्धजीवेषु विद्यमानप्रकृतिसंबन्धः ।। (सं. अ.)

**अचित्संबन्धनिवृत्तित्वम्** — ज्ञानसंकोचरूपतिरोधानहेत्वचित्सम्बन्धनिवृत्तित्वम् ।

अचिन्निष्ठतिरोधायकतावच्छेदको यस्सम्बन्धः, तत्प्रतियोगिकध्वंसत्वम् । (मु. श. वा. 15)अचित्सम्बन्धसामान्यं न तिरोधानहेतुः, अवतारदशायां तस्यातिरोधायकत्वात् । अतः कर्मकृतत्वमेव तत्र भूमिलत्यमिप्रायः ॥

**अचित्सामानाधिकरण्यम्** — अचिद्वाचकब्रह्मपदयोश्चैकार्थबोधकत्वम् ।

[अचिद्भिः ब्रह्मणः स्वरूपैक्यासंभवात् तत्सामानाधिकरण्यप्रकारं विचारयति । ]

अचित्सामानाधिकरयण्यं बाधार्थमिति चेत् जीवसामानाधिकरण्यमपि तथा किं न स्यादिति । तथा सति जीवस्वरूपनिवृत्त्या शास्त्रस्य प्रयोजनपर्यवसानं न स्यादिति चेन्न ।

सामानाधिकरण्यस्य वस्तुमात्रोपलक्षणत्वेऽप्यहमर्थनिवृत्त्या तस्यापुरुषार्थविश्रान्तिः दुष्परिहरा । अतः पृथिव्यादिव्यावर्तकं ब्रह्मानन्यत्वं जीवस्यासिद्धम् । ब्रह्मैवाविकृतं जीवात्मनावतिष्ठते; विकृतं पृथिव्याद्यात्मनाऽवतिष्ठते इति चेन्न; जीवस्य ज्ञातृत्वात्, 'तच्च ज्ञातृत्वं विक्रियात्मकं' इति भवदभ्युपगमाच्च विकृतत्वाविकृतत्वरूपवैषम्याभावात् । स विकारोऽपरमार्थः इति चेत्, पृथिव्यादिविकारोऽप्यपरमार्थ इति पृथिव्यादेरनुत्पत्तिः जीवोत्पत्तिर्वा स्यात् ।

ननु पृथिव्यादिधर्मिण एव बाध्याः ; जीवत्वमात्रमिह बाध्यम् ; अतः स्वरूपनित्यत्वमिति चेन्न । पृथिव्यस्तीत्यादि तत्तत्पृथिव्यादिसमानाधिकरणत्वात् सन्मात्रस्य पृथिवीत्वादिधर्ममात्रस्यैव अपारमार्थ्यात् न पृथिवीस्वरूपबाधः इति वक्तुं शक्यत्वात् । अहमस्मि, घटोऽस्तीति जीवस्य घटादेश्च सदव्यतिरेको ह्यविशेषेण प्रतीयते ।
(श्रु. प्र. 2-3-18)

अतः अचित्सामानाधिकरण्यं अपृथक्सिद्धविशेषणत्वप्रयुक्तं भिन्नप्रवृत्तिनिमित्तानां शब्दानां एकार्थबोधकत्वरूपं तत्त्वमसीत्यादाविवैकरूपेणैवोपपन्नम् ॥

**अचिद्द्रव्यविशेषगुणाः** — अचिद्रूपस्य द्रव्यविशेषस्य गुणाः ।

शब्दादयः पञ्च तत्तद्भूतवर्तिनः प्रत्यक्षादिबलादभ्युपगताः । सत्त्वरजस्तमांसि च शास्त्रानुसारेण अङ्गीकृतानि । संयोगः शक्तिश्च प्रत्यक्षादिसिद्धः ॥ (न्या. प. 314)

**अचिन्त्यः** — (स. ना. 836) मुक्तोपमयापि दुर्निरूपः । (वि. स. भा. 708) चिन्तयितुमर्हः शक्यो वा चिन्त्यः, स नेति ॥ (वि. स. निर्व. 708)

**अचिन्त्यः** — सर्ववस्तुविजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्हः ।

'अव्यक्तोऽयमचिन्त्योऽयम्' (गी. 2-25) । एतेन सौगताद्यभिमतानां आत्मानित्यत्वसाधनानां सत्त्वादीनाम् , तदनुग्राहकतर्काणां उपलम्भागमादिविरोधात् मूलशैथिल्यमुक्तं भवति ॥ (ता. चं)

**अचिन्त्यरूपम्** — सकलेतरविजातीयस्वरूपम् ।

'सर्वस्य धातारमचिन्त्यरूपम्' (गी. 8-9) दिव्यात्मस्वरूपम् ॥

**अचिन्त्याः खलु ये भावा न तान् तर्केण साधयेत्** — अयं च न्यायविशेषः ।

ये भावा जगज्जन्मोपादाननिमित्तपरिमाणधर्माधर्मादयः पदार्थाः चिन्तयितुमयोग्याः तान्न तर्केण साधयेदिति । न हि ते तर्केण साधयितुं शक्यन्ते ; तर्कान्तरेण तेषां बाधसम्भवात् । अत एव भगवता पराशरेण –

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥

(वि. पु. 1-3-1)

इति सामान्यदृष्ट्या परिचोद्य,

शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ॥

इत्युक्तम् । (वि. पु. 1-3-2)

लोके द्रव्यत्वादग्निरनुष्णः इतिवत् येनकेनचिदाकारेण यस्य कस्यचित् साहचर्यमात्रदर्शनेन तत्सामान्यात् यत्साधनं दूषणं वा क्रियते, न तदर्हतीत्यर्थः ॥

**अचिन्त्यात्मा** — परमात्मा ।

अचिन्त्यः आत्मा यस्य सः । चिन्तयितुमशक्यस्वभाववान् । (सं. अ.)
[अत्रात्मशब्दः स्वभावपरः । परन्तु स्वरूपपरोऽपि वक्तुं शक्यः । ]

**अचिन्त्याद्भुताक्लिष्टत्वम्** — चिन्तयितुमशक्यत्वादिकम् ।

'अचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये' (स्तो. र. 1)

अस्मदादिभिः स्वरूपतः कारणतः विशेषतो विषयतश्च परिच्छेत्तुमशक्यत्वम् । कुतर्कैरपह्नोतुमशक्यत्वं वा । अद्भुतत्वं अवगतांशस्यापि लोकोत्तरतया आश्चर्ययुक्तत्वम् । अक्लिष्टत्वञ्च –

'स्वयमागतविज्ञाना निवृत्तिं धर्ममास्थिताः'

इतिवत् प्राचीनसुकृतविशेषजनितेन परावरगुरुप्रसादेनायत्नलब्धत्वम् ; विरुद्ध-धर्मसंमर्दरहितत्वं वा । अत्राचिन्त्यत्वादित्रिकञ्च द्वन्द्वात्पूर्वत्वात् प्रत्येकमन्वेति । (स्तो. र. भा.) चिन्त्यत्वेन शोधितस्यापि अचिन्त्यत्वोक्तिः, इतरसजातीयतया चिन्तयितुमशक्यतामाह । तेन अनित्यत्वादिसाधकसावयवत्वाद्यनुमानानां धर्मिग्राहक-मानबाधः अभिप्रेतः । (ग. भा. वे. 110)

'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायः । अत्रान्तशब्दः सामीप्यमात्रवाची । अत एवात्र पूर्वसामीप्यमाश्रीयते इति भावः ॥

**अचेतनम्** — चेतनभिन्नं [ज्ञातृत्वरहितं] वस्तु ।

अस्य प्रवृत्तिलक्षणव्यापारसत्त्वेऽपि ज्ञातृत्वाभावात् बुद्धिपूर्वकप्रवृत्तिर्नास्तीति कर्तृत्वं भोक्तृत्वं च न स्तः । तदिदमचेतनं त्रिगुणं, कालः, शुद्धसत्त्वं, ज्ञानमिति चतुर्विधम् । (द. उ. 201) 'अचेतनं त्रिविधमित्यन्यत्र' । विस्तरस्तु अचेतन-त्रैविध्यपदे द्रष्टव्यः । एतेषां वस्तुत्वोक्तेः अपारमार्थ्यं व्यावर्तितम् ॥

**अचेतनत्रैविध्यम्** — अचेतनं त्रिविधम् ।

त्रिगुण-काल-शुद्धसत्त्वरूपेण त्रैविध्यं बोध्यम् । अचेतनशब्दश्च अत्राचिद्द्रव्य-परः । अचेतनद्रव्यभूतस्यापि धर्मभूतज्ञानस्य चेतनग्रहणे विशेषणतयोपात्तत्वात् अत्र पृथगनुपादानम् । (ग. भा. वे. 133)

अस्यापि पृथग्गणने तु चातुर्विध्यम् । 'विविधविचित्रानन्तभोग्यभोगोपकरण-भोगस्थानसमृद्धः' इत्युक्तरीत्यापि त्रैविध्यम् ॥

**अचेतनसंपत्तिः** — अचित्प्राप्तिः, संसारित्वम् ।

कर्मकृताचित्सम्बन्धो हि संसारः । संपत्तिशब्दस्य प्राप्त्यर्थत्वं 'तापत्रयाभि-हतिहेतुभूतामचित्संपत्तिम्' इति भाष्येण व्यक्तम् । (श्रु. प्र. 1-1-7)

अत एव भाषितं – 'यदि च प्रधानमचेतनं कारणमुपदिश्येत, तदा तदात्म-कत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्यते; 'यथाक्रतुन्यायेन' तन्निष्ठस्याचेतन-संपत्तिरेव स्यादिति ॥

**अचेतनेष्वपि चेतनवदुपचारः** — अयञ्च न्यायविशेषः ।

देशान्तरप्राप्तिलक्षणकार्यदर्शनात् अचेतनेष्वपि क्रियाव्यवहारः – 'अयमस्य कोणोऽभिनिस्सृतः' 'अयमभिप्रविष्टः' इति । अभिनिष्क्रामति द्वारम् । (पा. सू. 4-3-86) इत्यत्र 'स्रुघ्नं अभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्' इत्युदाहरणपरमहा-भाष्योक्तोऽयं न्यायः । (मी. को.)

अत एव 'ते हेमे प्राणाः अहंश्रेयसे विवदमानाः ब्रह्माणं जग्मुः' इत्यादयः श्रौतनिर्देशाः उपपद्यन्ते । एवमेव 'रथो गच्छति' इत्यादावपि अस्य न्यायस्य सञ्चारः ॥

**अचेतसः** — आत्मावलोकनसमर्थचेतोरहिताः ।

'नैनं पश्यन्त्यचेतसः' (गी. 15-11) विद्यमानस्यापि चेतसः प्रकृतोपयोगा-भावात् असत्कल्पत्वं अचेतश्शब्देन विवक्षितम् ॥ (ता. चं)

**अचोदनीयं हि शास्त्रम्** — न्यायविशेषः ।

'तस्मादारूढपातेऽप्यधिकृतिरिति नाचोदनीयं हि शास्त्रम्' (अ. सा. 414)

'शास्त्रविहितेषु युक्तिवादो न कार्यः' इति हि न्यायः । यथा योगिनामनव-धानेन पातकसंभवे मुनयो योगमेव प्रायश्चित्तं वदन्ति; तथैव नैष्ठिकयवानप्रस्थय-पारिव्राज्याश्रमेष्वपि तत्परावर्तनजनितपातेऽपि प्रायश्चित्तात् ब्रह्मविद्यायां अधिकारोऽस्त्विति शङ्कायामाह – 'अचोदनीयं हि शास्त्रम्' इति । निष्कृतिस्तु उक्ताश्रमभ्रष्टव्यतिरिक्त-विषयैवेति वचनबलात् स्वीकरणीयमिति तत्र चोदना न कार्या ।

आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा ॥

इति नैष्ठिकाद्याश्रमभ्रंशे प्रायश्चित्तनिषेधात् ॥

**अच्युतः** — (स. ना. 101) तेभ्यः प्रपन्नेभ्यो नापगतः । (वि. स. भा. 165) तेभ्यः प्रपन्नेभ्यः च्युतः – अपगतः नेति । (वि. स. निर्व. 165)

भक्तेभ्योऽच्युतपूर्वत्वात् अच्युतः परिकीर्तितः ।
आश्रितानां च्युतिर्यस्मात् नास्ति सोऽच्युत ईरितः ॥
(वि. स. नि.)

**अच्युतः** — (स. ना. 320) ब्रह्मादिसाधर्म्येणावतारेऽपि स्वैश्वर्यप्रच्युतिवैधर्म्यात् अच्युतः ।
(वि. स. भा.)

**अच्युतः** — (स. ना. 537) व्यूहेऽपि –
'च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु ।
यस्मान्न च्यवते स्थानात् तस्मात्सङ्कीर्त्यतेऽच्युतः ॥
(वि. स. भा.)

व्यूहेऽपि हि नायं च्यवनधर्मा ततश्च्युतो नेति । (वि. स. निर्व.)
यस्मान्न च्यवते स्थानात् ब्रह्मादिः सोऽच्युतः स्मृतः ॥ (वि. स. निर्व.)

**अच्युतः** — 1. स्वरूपस्वभावप्रच्युतिशून्यः ।
भौतिकविकाररहितः, यद्वा जीवगतज्ञानसङ्कोचादिरहितः । (वि. चि. 1-2-5)
2. परमात्मा । 'दुष्कर्मस्वनिवर्तनानुमनने पुंसः करोत्यच्युतः' (त. सा. 47) प्रमाण-तर्काभासावलम्बनैः बाह्यकुदृष्टिभिः अप्रच्यावनीयकारणत्वनियन्तृत्वादिमहिमा भगवान् । (व्या.) 3. आश्रितसंरक्षणव्रतात् न च्युत इत्यच्युतः [च्युत इति कर्तृसाधनः]। ज्ञान-बलैश्वर्यादेःअप्रच्युतत्वं वा विवक्षितम् । 'यस्मात्प्राप्ता न च्यवन्ते सोऽच्युतः' इत्यपि निरुच्यते । अत्र च्युतो यस्मान्नास्ति सोऽच्युतः इति ब्रहुव्रीहिः । (स्तो. भा. 3) 'न त्यजेयं कथञ्चन' इत्यादिवादिनं त्वामाश्रितः च्युतो न भवतीत्यभिप्रायः ।

**अच्छः** — आलोकाद्यनुप्रवेशयोग्यसन्निवेशवान् ॥ (वि. को.)

**अच्छायम्** — कर्मरहितम् ।
'यो ह वै तदच्छायम्' (प्र. 3-4-10) अपापम् । अत्र 'छाया'शब्देन ज्ञानसंकोचकं कर्मोच्यते ॥ (रं. भा.)

**अच्छावाकः** — होतुः पुरुषः । तृतीयवर्गस्थोऽयम् । (मी. को)

**अजः** — (स. ना. 96) स्वप्राप्तिपरिपन्थि सर्वं स्वयमेव क्षिपतीति । (वि. स. भा. 160)
स्वप्राप्तिपरिपन्थि सर्वं स्वयमेव अजति क्षिपतीति । (वि. स. निर्व. 160)
प्रत्यर्थिनस्स्वसंप्राप्तौ प्रजानां क्षिपतीत्यजः । (वि. स. नि. 160)

**अजः** — (स. ना. 206) स्तम्भसम्भवत्वेन इतरवन्न जायत इति । (वि. स. भा 245)
स्तम्भसम्भवतया इतरवत् जनयितुः न जायत इति । (वि. स. निर्व. 245)
'स्तम्भजत्वादितरवन्न जातत्वादजस्मृतः' (वि. स. नि. 245)

**अजः** — (स. ना. 524) अकारवाच्यतया जातः । (वि. स. भा. 475)

अस्मिंस्तत्त्वावसाने प्रणवप्रकृतिभूताकारवाच्यतया रमणीयत्वात् अः – अकार-वाच्यः, जः – जातः प्रादुर्भूत इति । (वि. स. निर्व. 475)

तत्त्वावसानकाले च प्रणवप्रकृतित्वतः ।
स्मर्तव्यत्वादजः प्रोक्तः षडर्णो ह्यूर्मिनाशकः ॥
(वि. स. नि. 475)

**अजः** — 1. नित्यः जीवात्मा परमात्मा च ।

'ज्ञाज्ञौ द्वावजौ' (श्वे. उ.1-9) उत्पत्तिराहित्यन्तु द्वयोरपि समानम् । (रं. भा.)

भगवद्गीतायां 'न जायते म्रियते वा कदाचित्' 'अजोऽपि सन् अव्ययात्मा' इति भगवता श्रीकृष्णेन बहुधा निरूपितं जीवेश्वरयोः नित्यत्वम् । जीवगतनित्यत्वं तु परमात्मनित्येच्छासिद्धम् । एतच्च प्रसङ्गाभिप्रायेण, आत्मानोऽपि अनित्यास्स्युरिति यदि सङ्कल्पयेत् तदा अनित्या भवेयुरिति प्रसङ्गः ।

2. उत्पत्तिरहितः परमात्मा ।

'यो मामजमनादिं च' (गी. 10-3) न जायत इत्यजः । अनेन विकारि-द्रव्यादचेतनात् तत्संसृष्टात् संसारिचेतनाच्च विसजातीयत्वमुक्तम् । (गी. भा.)

'कूटस्थ आत्मा परमेष्ठ्यजो महान्' (भाग. 7-3-32) कर्मायत्तजन्मादिशून्यः । 'महानज आत्मा' इति श्रुत्यर्थोऽत्राभिहितः । (भाग. वी.)

कर्मानधीनस्वेच्छावतारवान् । (वि. को.)

**अजङ्गमम्** — स्वतो गमनाभाववत् ।

शिलाकाष्ठादिकम् । अन्यद्वारा गमनसत्त्वेऽपि, स्वतो गमनाभाववत्त्वेन लक्षणमव्याहतम् ॥ (र. पे. 175)

**अजङ्गमशरीरम्** — काष्ठादयः शिलादयश्च ।

शरीरं सामान्यतो द्विधा । जङ्गमं, अजङ्गमञ्चेति । काष्ठादीनां शिलादीनां च अजङ्गमत्वमेव । यथा वृक्षगुल्मलतावीरुत्तृणानां तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञानाम् । शिलादिशरीरिणोऽपि जीवा विद्यन्त इति अहल्यादिवृत्तान्तश्रवणात् सिद्धम् । तथा च वेदार्थसंग्रहे प्रोक्तम् – 'अतो देवो, मनुष्यो . . . लता, काष्ठं शिला, तृणं, घटः पटः' इत्यादयः सर्वे प्रकृतिप्रत्यययोगेन अभिधायकतया प्रसिद्धाः शब्दाः लोके तत्तद्वाच्यतया प्रतीयमानतत्तत्संस्थानवस्तुमुखेन तदभिमानिजीव, तदन्तर्यामिपरमात्मपर्यन्तस्यैव वाचका इति ।

इदञ्च व्यष्टिनामरूपाणां सर्वेषां जीवानुप्रवेशश्रुतिबलावलम्बनेनोक्तम् । उक्तञ्च श्रीमद्गीताभाष्ये 'अधो गच्छन्ति तामसाः' इति । अन्यत्वं ततस्तिर्यक्त्वं, ततः क्रिमिकीटादिजन्म, ततः स्थावरत्वं, ततोऽपि गुल्मलतात्वं, ततश्च शिलाकाष्ठलोष्ठादित्वं गच्छतीत्यर्थः इति । अत्र स्थावरशब्दः गोबलीवर्दन्यायेन वृक्षादिस्थावराख्यविशेषविषयो ज्ञेयः । (न्या. सि. 107, 108)

एतेन पूर्वोक्त तमोमोहमहामोहादिसंज्ञितानां वृक्षगुल्मलतावीरुत्तृणानामेव नगात्मकाजङ्गमसृष्टौ परिगणनात् शिलाकाष्ठादीनां पञ्चसु अनन्तर्भावात् जङ्गमदेवमनुष्यादिकोटावप्यनन्तर्भावात् शिलाकाष्ठादीनां न शरीरत्वम् । तच्छरीरे जीवानामप्यभावाच्चेति मन्वानं प्रति वृक्षादिवत् शिलाकाष्ठादीनामपि जीवशरीरत्वमस्तीति स्थापनात् प्रसक्ता शङ्का न्यवारि ।

'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतिः व्यष्टिनामरूपाणां सर्वेषां परमात्मात्मकजीवप्रवेशप्रयुक्तत्वं बोधयत्येव । पञ्चीकृतानन्तरकालिकसृष्टिरेव व्यष्टिसृष्टिरिति सिद्धान्तः । सा तु चतुर्मुखकर्तृका वा स्यात्, जीवसामान्यकर्तृका वा स्यादिति भावः । अतः जीवानामानन्त्यात् कर्मविशेषस्य च विचित्रत्वात् शिलाकाष्ठघटपटादिष्वपि जीवसम्बन्धस्य प्रामाणिकत्वात् अजङ्गमशरीरत्वेनैतेषां परिगणनं

योयुज्यत एव। अत्र नियमनाभावात् तच्छरीरत्वं कथमिति न च शङ्कनीयम्, स्वरूपयोग्यतायाः सद्भावात्। अधिकन्तु शरीरलक्षणे द्रष्टव्यम्॥

**अजडम्** — स्वयंप्रकाशम्।

स्वगोचरज्ञानत एव प्रकाशमानं जडम्। तदन्यदजडम्। अजडं द्विविधम्; प्रत्यक् परागिति। प्रत्यक् – स्वस्मै भासमानम्, पराक् – परस्मा एव भासमानम्॥ (स. सि. 6)

**अजडत्वम्** — स्वयंप्रकाशत्वम्। [अनन्याधीनप्रकाशत्वम्]

शुद्धसत्व-धर्मभूतज्ञान-जीवेश्वरसाधारणं लक्षणं अजडत्वम्। तत्र शुद्धसत्व-धर्मभूतज्ञानसाधारणं लक्षणं – पराक्त्वे सति अजडत्वम्। तत्तु स्वयंप्रकाशत्वे सति परस्मा एव भासमानत्वम्। (य. दी. 81) एवमेव जीवेश्वरसाधारणं लक्षणं प्रत्यक्त्वे सत्यजडत्वम्। तत्तु स्वयंप्रकाशत्वे सति स्वस्मा एव भासमानत्वम्।

स्वनिरूपितविषयतावत्त्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वं अजडत्वम्॥ (वि. को.)

**अजनः** — कर्माधीनजन्मरहितः परमात्मा।

न जनः – जननं यस्य। (सं. अ.)
'जनी'धातोः भावे घञि, जनिवध्योश्च (पा. सू. 7-3-35) इति सूत्रेण वृद्ध्यभावो बोध्यः॥

**अजरम्** — जरामरणशून्यम्।

'अमेयमजरं ध्रुवम्' (वि. पु. 1-2-20) न जीर्यति इति अजरम्। (वि. चि.) जराशब्दः मरणस्यापि उपलक्षकः॥

**अजलस्थलज्ञः** — तारतम्यरहितः परमात्मा।

'यद्भक्तेष्वजलस्थलज्ञम्' (श्रीरं. स्त. पू. 124) जलस्थलविभागानभिज्ञम्। अत्युन्नतातिनीचत्वरूपतारतम्यविचाराभावेन अखिलशरण्यं इत्यर्थः। (व्या.) अस्य चरणविशेषणत्वेऽपि अर्थात्परमात्मन्येव पर्यवसानम्। अत एव हि –

'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः' इति गीयते॥

**अजसंयोगः** — विभुद्रव्ययोः संयोगः ।

अस्तु संयोगः; अथापि विभूनां परस्परसंयोगो नास्तीति काणादादयः । अन्यतरकर्म, उभयकर्म वा संयोगो वा संयोगस्य हेतुः, त्रितयमपि विभुषु न घटत इति । अत्रोच्यते – ईश्वरज्ञानादीनां कारणाभावात् 'अभाव' इति परवादिभिरुक्ते कार्यभूतस्य ज्ञानादेः कारणापेक्षा न नित्यज्ञानादेः इति काणादादयः परिहरन्ति; तुल्यमेतदजसंयोगकल्पनेऽपि । अनित्यसंयोगस्यैव कारणाभावात् अभावो वक्तुं शक्यते । नित्यस्य तु कारणसापेक्षत्वाभावेन तदभावात् अभावो वक्तुं न शक्यत इति । तर्हि अजसंयोगसाधने किं मानम् । उक्तमेव नैरन्तर्यम् । अपि च अजसंयोगसाधने तावदनुमानं शक्तमशक्तं वा भवतु, विपक्षे बाधकाभावात् । शास्त्रं पुनः 'सर्वाधारं धाम विष्णुसंज्ञं' इत्यादिकंपरस्य ब्रह्मणः कृत्स्नप्रपञ्चाधारत्वमावेदयति । तदाधारत्वञ्च तदपृथगवस्थानमेव । अतः युक्त एवायं अजसंयोग इति ॥ (स. सि. 414)

**अजहत्स्वभावः** — परमपुरुषः ।

न जहत् स्वभावः येन सः स्वासाधारणगुणान् कदापि न जहाति । प्राकृतसजातीयरामकृष्णाद्यवतारेष्वपि स्वासाधारणैश्वर्यादिगुणपूर्णः ॥ (सं. अ.)

**अजहत्स्वार्था** — लक्षणाविशेषः ।

1. लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधिका । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा । 2. यत्र वाच्यस्याप्यन्वयस्तत्राजहती लक्षणा । यथा छत्रिणो गच्छन्तीत्यादौ ।

अवयवार्थसंवलितसमुदायार्थबोधकत्वमजहत्स्वार्थत्वम् । 'उदाहरणं राजपुरुषः इति' इति वैयाकरणाः । वैयाकरणमते शक्त्यपेक्षया लक्षणावृत्तिः पृथङ्नास्त्येव । (न्याः को.) अप्रसिद्धा (अननुगता) शक्तिरेव तन्मते लक्षणेति व्यवह्रियते ।

शक्यलक्ष्योभयस्य क्रियान्वयित्वे इति संप्रदायः । 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ ॥ (मी. को.)

**अजहल्लक्षणा** — अजहत्स्वार्था लक्षणा ।

**अजा** — उत्पत्तिरहिता – प्रकृतिः ।

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥
(श्वे. उ. 4-5)

मन्त्रार्थस्तु – तेजोबन्नलक्षणविकारगतलोहितशुक्लकृष्णरूपयुक्तां स्वसमानरूपविविधभूतभौतिकस्रष्ट्रीं उत्पत्तिरहितां काञ्चन कश्चिदविद्वान् उत्पत्तिराहित्येन तत्समान एव सन् तत्राहम्बुद्ध्या सेवमानः तामनुसृत्य शेते – तिष्ठति । अपरोविद्वान् कश्चित् कालं भुक्त्वा उत्पन्नवैराग्यः त्यजतीति । (रं. भा.)

अस्याः प्रकृतेरजाशब्देन छागत्वकल्पनोपदिश्यत इति तदप्यसङ्गतं, निष्प्रयोजनत्वात् । (श्री. भा. 1-4-10)

सर्वत्र रूढितोऽवयवशक्त्या वा प्रतिपाद्यमानमुख्यार्थपरिग्रहः स्वतः प्राप्तः । गौणार्थपरिग्रहस्तु मुख्यार्थानुपपत्त्या क्रियते । तत्रौचित्यातिशयलाभः, अनेकपद-मुख्यार्थत्वसिद्धिश्च प्रयोजनम् । तत्र न जायत इति योगार्थेनापि मुख्यार्थानुपपत्त्यभावः प्रदर्शितः । अजात्वज्योतिरुपक्रमात्वयोरवस्थाभेदेनाविरोधस्योक्तत्वात् । (श्रु. प्र.)

नन्वस्मिन्नजामन्त्रे स्वरसत एतावान् अर्थः प्रतीयते – काञ्चित् छागीं त्रिवर्णी स्वसरूपबहुप्रकारां (प्रजाकरीम्) एकश्छागः प्रीयमाणोऽनुवर्तते; अन्यः तामुपभुक्तां त्यजतीति । कथं भवदुक्तप्रकृतिरूपार्थग्रहणम् ?

यदि चाध्यात्मशास्त्रे लौकिकार्थप्रतिपादनानौचित्यात् आध्यात्मिकार्थे पर्यवसानं कर्तव्यमिति, तर्हि 'द्वासुपर्णा' इति मन्त्रे वृक्षसुपर्णपिप्पलशब्दैः शरीरजीवकर्मफलानां गौण्या वृत्त्या ग्रहणवत् , 'गौरनाद्यन्तवती' इत्यत्र गोशब्देन गौण्या वृत्त्या प्रकृतिग्रहणवत् इहापि अजाशब्देन गौण्या वृत्त्या प्रकृतिग्रहणं युक्तम् ; न तु यौगिकार्थग्रहणम् । रूढिपूर्वकलक्षणाविशेषरूपगौण्यपेक्षया योगदौर्बल्यस्य प्रोद्गातृधिकरणे स्थितत्वात् . . . . . इति चेन्न –

मुख्यार्थानुपपत्तौ हि गौणार्थाश्रयणं युज्यते । उपपद्यते चाजाशब्दे यौगिकार्थस्य मुख्यस्य ग्रहणम् ।

ततश्च यौगिकार्थस्य मुख्यस्याजाशब्दार्थस्य सम्भवे परीत्या छागत्वरूपणं गौणवृत्त्याश्रयणञ्चायुक्तम् । 'गौरनाद्यन्तवती' इत्यत्र गोशब्दे यौगिकार्थास्फुरणात् , 'सर्व-

कामदुघाम्' इति दोहनस्य गोशब्दरूढ्यर्थग्रहणनियामकस्य सत्त्वाच्च तत्र तथा; इह तु योगार्थस्फूर्तेः, रूढ्यर्थग्रहणनियामकशब्दान्तरसमभिव्याहाराभावाच्च यौगिकार्थ एव ग्राह्यः। (रं. भा.) अतः ब्रह्मात्मक प्रधानार्थत्वे श्रुत्यर्थः उपपन्नो भवति ॥

**अजाकृपाणीयन्यायः** — न्यायविशेषः।

अजाकृपाणपदाभ्यां तदागमनपतने लक्ष्येते, अजागमनमिव, कृपाणपतनमिव, अजाकृपाणं, ततः अजाकृपाणमिव अजाकृपाणीयमिति। एवमागच्छन्त्या अजायाः कृपाणपतनात् यथा वधः तत्सदृशं मरणमिति फलितोऽर्थः। (मी. को.) 'समासाच्च तद्विषयात्' (पा. सू 5-3-106) उपमानविषयात् समासात् इवार्थे 'छ'प्रत्यये सत्येवं रूपं भवति।

एवमेव काकतालीयन्याय इति च व्यपदिश्यते। अतर्कितोपनत इति यावत्। एतन्मूलकमेव यादृच्छिकसुकृतविशेषेणोपपन्नमिति च वेदान्तिभिः व्यवह्रियते ॥

**अजागलस्तनः** — अजायाः गले विद्यमानः स्तनसदृशः अवयवविशेषः। तत्तुल्यः निष्प्रयोजनपदार्थः।

प्रकृत्यंशगतैः धर्मैर्यदि तादृग्व्यवस्थितिः।
अजागलस्तनप्रायः पुमान् किमिति कल्प्यते ॥

(स. सि. 1·2)

सांख्यमते प्रकृतेः व्यापिन्याः सर्वात्मसाधारणत्वात्, जीवानामपि व्याप्ततया, सर्वे भोगाः सर्वेषां स्युरिति, बद्धमुक्तव्यवस्था न स्यादिति पुरुषबहुत्वकल्पनमजागलस्तनप्रायमिति भावः – तन्मते प्रकृतिपरिणतिरेव भोगः, अतः सर्वेषां प्रकृतिसन्निधानादिसाम्यात् भोगव्यवस्था न स्यादेव ॥

**अजातपुत्रनामोत्कीर्तनन्यायः** — न्यायविशेषः।

भाविसंज्ञया निर्देशो विवक्षितोऽत्र। (मी. को.) अत एव 'सभूरिति व्याहरत स भुवमसृजत' इत्यादि श्रौतनिर्देशाः उपपन्नाः ॥

**अजातमभूतम्** — जन्मस्थित्यादिरहितं ब्रह्म।

'अजातममूर्तं अप्रतिष्ठितम्' (सु. उ. 3) कार्यकारणरूपाचिद्गतदोषाभावेन तद्व्यावृत्तिमाह – अजातमित्यादिना। जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यति इत्यचेतनस्य भावविकाराः षड्च्यन्ते। तत्र उत्पद्यमानावस्था जन्म, उत्पन्नावास्था च अस्तित्वम्। तदुभयाभावमाह अजातममूर्तं इति। जन्म च, तदवच्छिन्नं अस्तित्वं च नास्तीत्यर्थः। (श्रु. भा.) एतदुपलक्षणं विकारसामान्यराहित्यस्य॥

**अजायमानः** — जन्मरहितः परमात्मा।

'अजायमानो बहुधा विजायते' (पु॰ सू.) अजायमान इति कर्महेतुक सुखाद्यर्थप्राकृतदेहसङ्गतिरूपजन्मनिषेधः। (श्रु. प्र. 1-1-21) अजायमान इति सांसारिकवज्जन्मनिषेधः न स्वरूपनित्यत्वपरः। नापि जन्ममिथ्यात्वपरः, असदादेरपि स्वरूपनित्यत्वादेरविशिष्टतया 'तस्य धीराः परिजानन्ति योनिम्' इति वाक्यस्य निरर्थकत्वप्रसङ्गात्। (श्रु. प्र. 1-4-29) कर्मनिबन्धनोत्पत्तिशून्यस्य भगवतः विविधजननं तु अवताररूपवमेव। अत एव 'बहुधा विजायते' इत्युक्तम्॥

**अजाया ज्योतिरुपक्रमात्वम्** — नित्याया अपि प्रकृतेः ब्रह्मकार्यत्वम्।

'अणोरणीयान् महतो महीयान्' इति ब्रह्माभिधाय, 'सप्तप्राणाः प्रभवन्ति तस्मात्' इत्यादिना सर्वेषां लोकानां ब्रह्मादीनाञ्च ततः उत्पत्तिमभिधाय, सर्वकारणीभूताऽजा तत उत्पन्नाभिधीयते,

'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥

इति (श्री. भा. 1-4-9)

ज्योतिः ब्रह्म, 'तं देवा ज्योतिषां ज्योतिः' 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यादिश्रुतिप्रसिद्धेः। ज्योतिरुपक्रमा – ब्रह्मकारणिकेत्यर्थः। (श्री. भा. 1-4-9) प्रलयवेलायां हि सा प्रकृतिः ब्रह्मतापन्ना अविभक्तनामरूपा सूक्ष्मरूपेणावतिष्ठते; सृष्टिवेलायां तु उद्भूतसत्वादिगुणा विभक्तनामरूपा व्यक्तादिशब्दवाच्या तेजोबन्नादिरूपेण च परिणता लोहितशुक्लकृष्णाकारा चावतिष्ठते। अतः कारणावस्थाऽजा, कार्यावस्थाज्योतिरुपक्रमेति न विरोधः। (श्री. भा. 1-4-10) एतेन स्वरूपतो नित्यत्वेऽपि अवस्थायोगित्वेन उत्पत्तिवचनस्यापि न विरोधः॥

**अजाशरीरकब्रह्मविद्या** — अजाशब्दवाच्यमूलप्रकृतिशरीरकपरमात्मोपासनम् ।

इयञ्च मन्त्रिकोपनिषदि

'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्'

श्वेताश्वतरोपनिषदि च

'अजामेकां लोहितकृष्णरूपां ब्रह्वीः प्रजाः सृजमानां सरूपाः'

'ज्ञाज्ञौ द्वावजावीशनीशावजाह्येका भोक्तृभोगार्थयुक्ता'

अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्'

इत्यादिवाक्यैः प्रतिपादिता। एतत् त्रयं परस्परवैलक्षण्येन दर्शनसमानाकारध्यानेन यदा विन्दते विषयीकरोति तदा ब्रह्म भवति – मुक्तोभवतीत्यर्थः । ब्रह्ममिति छान्दसं रूपम् । इयं विद्या चमसाधिकरणेन निर्धारिता च ॥

**अजितः** — (स. ना. 553) प्राकृतैः उत्पत्तिमरणादिभिः न जिता यथोक्तद्रव्योपादाना पुरी अजिता अस्यास्तीति । (वि. स. भा.) यथोक्तद्रव्योपादानाऽपराजिताख्यपुरीकतया, न – नास्ति, जिता प्राकृतैरुत्पत्तिमरणादिभिः पराजितास्येति वा, तैर्न जिता अजिता अपराजिताख्या प्रख्याता पुरी सास्यास्तीति वा । (वि. स. निर्व )

प्राकृतैर्न जिता या सा यस्यास्तीत्यजिता पुरी ।
अजितस्तेन विज्ञेयः ससार्णो मुक्तिदो मनुः ॥

(वि. स. नि.)

**अजितजितः** — 1. परमात्मा ।

'अजितजितस्सममतिभिः' (भाग. 6-10-34) अजितश्चासौ जितश्च इति विग्रहः । अभक्तैः स्वाधीनं कर्तुं अनर्होऽपि साधुभिः सुलभप्राप्यः । (भाग. वी.) अर्हार्थे 'क्त'प्रत्ययः । अनेन विरोधः परिहृतः । अनन्यप्रयोजनेन भजतां स्वपर्यन्तं दातेति सौलभ्यं परमात्मनः प्रकाश्यते ।

2. हे अजित, त्वं शरणागत्या जितः ।

'ये प्रायशोऽजितजितोऽप्यसितैस्त्रिलोक्याम्' (भाग. 10-14-3)

हे अजित, कैरपि अजितोऽपि त्वं इति सम्बोधनाभिप्रायः । (भाग. वी.) असितैः विषयेषु अनासक्तैः त्वं जित एव, त्वच्छरणागतिरेव त्वद्वशीकारोपायः इति भावः ॥

**अजीवः** — जीवभोग्यवस्तुजातम् । (जैनमते) (श्री. भा. 2-2-31)

**अज्झल्न्यायः** — न्यायविशेषः ।

अचः स्वराः । हलो व्यञ्जनानि । अयञ्च न्यायः श्लोकेन विवृतः । तथा हि –

'एकाकिनोऽपि राजन्ते सारसत्त्वाः स्वरा इव ।
व्यञ्जनानीव निस्सत्त्वाः परेषामनुगामिनः ॥

इति । (मी. को.)

अनेन परमात्मानुग्रहरूपबलवतः एकाकिनोऽपि प्राबल्यं प्रदर्शितम् । 'सारो बले स्थिरांशे च' इत्यमरः । सारसत्त्वाः – बलयुतजन्तवः ।

तदुक्तं अभियुक्तैः –

अत्यन्तबलवन्तोऽपि पौरजानपदाजनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥ इति ॥

**अज्ञः** — अल्पज्ञः जीवात्मा ।

'ज्ञाज्ञौ द्वावजौ' (श्वे. उ. 1-4) [अत्र अज्ञत्वं न ज्ञानाभाववत्वं, तस्य जडसाधारणत्वात् , किन्तु अल्पज्ञत्वम् । ] ज्ञानयोगाशक्तः । 'अज्ञानां कर्मसङ्गिनाम्' (गी. 3-26) अज्ञानां – आत्मन्यकृत्स्नवित्तया ज्ञानयोगोपादानाशक्तानां मुमुक्षूणाम् । (गी. भा.) यथावदुपदेशलब्धज्ञानरहितः । (गी. भा.) 'अज्ञश्चाश्रद्दधानश्च' (गी. 4-40)

**अज्ञा** — अचेतना, प्रकृतिः ।

'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' (मं. उ. 1-3)

स्वरूपविकारः प्रकृतेरेव । जीवस्य तु स्वरूपपरिणामाभावेऽपि धर्मभूतज्ञान-सङ्कोचविकासवत्तया अज्ञत्वं वर्तत एवेति 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यादिभिः अज्ञत्वव्यपदेशो बोध्यः ॥

**अज्ञातज्ञापनविधिः** — अविदितप्रतिबोधनम् ।

ज्ञातुमिच्छा जिज्ञासा, इच्छायाः इष्यमाणप्रधानत्वात् इष्यमाणं [विचारात्मकं] ज्ञानमिह विधीयते । (श्री. भा. 1-21) [अज्ञातार्थज्ञापनद्वारा, अप्रवृत्तप्रवर्तकत्वं हि विधेः व्यापारः । अत्र रागत एव स्वतः प्रवृत्तिः जातेति, एकांश एव स्वीकृतः ।]

अज्ञातज्ञापनं विधिरिह विवक्षितम्, नत्वप्रवृत्तप्रवर्तनम्; रागतः प्रवृत्तेर्वक्ष्यमाणत्वात् । रागतः प्रवृत्तस्यापि पूर्वपक्षयुक्त्याऽनारम्भणीयताबुद्धौ सत्यां आरम्भणीयत्वज्ञापनं हि अज्ञातज्ञापनम् । अतो विधीयत इत्यस्य स्वयमेव प्रवर्तत इति वक्ष्यमाणग्रन्थेनाविरोधः । (श्रु. प्र. 1-22)

ननु रागप्राप्ते विचारे कथं 'विधीयते' इत्युक्तिः; नाप्यत्र गुर्वभिगमनादिनियमांशापेक्षया विध्युक्तिः, न्यायानुपयोगात्; तादृशनियमनिषेधेन पूर्वपक्षानुत्थानाच्च मैवम्; रागप्राप्तस्याप्यनारम्यत्वभ्रमे तन्निषेधपरत्वात् अत्र विधिशब्दस्य ।

जातापि हि विचारेच्छा पूर्वपक्षोक्तयुक्तितः ।
सीदन्त्युत्तभ्यते युक्त्या सिद्धे व्युत्पत्तिपूर्वया ॥

(त. टी. 26)

विधिरत्राज्ञातसिद्धव्युत्पत्तिज्ञापनरूपः । उपासनस्यापि प्रीतिरूपतया रागप्राप्तत्वेऽपि तस्य श्रेयस्साधनत्वमलौकिकमिति वैधत्वोपपत्तिः ॥ (द. उ. 296)

**अज्ञातसुकृतम्** — अज्ञातञ्च तत् सुकृतञ्च । मया इदं सुकृतमनुष्ठेयं इत्यभिप्रायं विनापि क्रियमाणकृत्यन्तरेण उत्पद्यमानं सुकृतम् । (सं. अ.) अबुद्धिपूर्वकमिति यावत् ॥

**अज्ञानम्** — 1. भगवद्व्यतिरिक्तविषयकं ज्ञानम् ।

'तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्' (वि. पु. 6-5-87) 2. आत्मज्ञानविरोधि ।

'एतज्ज्ञानमितिप्रोक्तं अज्ञानं यदतोऽन्यथा' (गी. 13-11)

ज्ञायतेऽनेनात्मेति ज्ञानं, आत्मज्ञानसाधनं इत्यर्थः । क्षेत्रसम्बन्धिनः पुरुषस्यामानित्वादिकमुक्तम् । गुणवृन्दमेवाऽऽत्मज्ञानोपयोगि, एतद्व्यतिरिक्तं सर्वं क्षेत्रकार्यं आत्मज्ञानविरोधीति । (गी. भा.)

3. परावरतत्त्वकृत्याकृत्याविवेकः । [आसुरी संपत्] (गी. भा.) 'अज्ञानञ्चाभिजातस्य' (गी. 16-4)

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते'

आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने, परब्रह्मध्यानेनात्यन्तिकनाशङ्गते सति हेत्वभावात् असन्तं परस्मात् ब्रह्मणः आत्मनः देवादिरूपभेदं कः करिष्यति।

'अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते'

इति हि अत्रैवोक्तम् । (श्री. भा. 1-255)

4. ज्ञानविरोधि कर्म । अज्ञानशब्दस्यानिर्वचनीयपरत्वं लोकतः शास्त्रतश्च न व्युत्पन्नम् । कर्मवाचित्वव्युत्पत्तिस्तु विष्णुपुराणे एव दर्शिता । (श्रु. प्र. 1-255)

5. मोक्षोपायज्ञानादन्यत् तद्विरोधि वा । 'साविद्या या विमुक्तये विद्यान्या शिल्पनैपुणम्' इति वचनात् । (श्रु. प्र. 1-213)

6. अज्ञानं – ज्ञानाभावः, ब्रह्मपर्यन्तत्वाभावेन अयथावस्थितवस्तुविषयत्वात् । (श्रु. प्र. 1-213)

7. निग्रहस्थानविशेषः ।

वादिना त्रिभङ्ग्यन्तराभिहिते सभ्येष्वन्यतमेनापि विदितार्थे वचने, मया न ज्ञायत इति वाद्यन्तरस्य यत् वचनं तत् तस्य अज्ञानम् । (न्या. प. 152)

अज्ञानं भावरूपं [परमते] । प्रत्यक्षादिप्रमाणाविषयतया आश्रयानुपपत्ति, तिरोधानानुपपत्ति, स्वरूपानुपपत्ति, अनिर्वचनीयत्वानुपपत्ति, प्रमाणानुपपत्ति, निवर्तकानुपपत्ति, निवृत्त्यनुपपत्तिरूपसप्तविधानुपपत्तिभिश्च तन्नाङ्गीकर्तुं शक्यमिति श्रीभाष्यकाराणामाशयः । 'अज्ञानेनावृतं ज्ञानं' इत्यादौ अज्ञानशब्दः ज्ञानभिन्नज्ञानविरोधिकर्मपर एवेति च निरूपितम् ।

8. मिथ्याज्ञानम् । विवरणे त्वेवमुक्तम् ; त्रिविधमज्ञानम् ; स्वरूपाज्ञानम् , अन्यथाज्ञानम् , विपरीतज्ञानञ्चेति । स्वरूपाज्ञानं नाम वस्तुनोऽप्रतिपत्तिः । अन्यथाज्ञानं वस्तुनः वस्त्वन्तरतया भानम् , यथा शुक्तेः रूप्यतया । विपरीतज्ञानं तु यथावद्वस्तुनि भासमाने युक्तिभिस्तस्यान्यथोपपादनम् ; यथा ज्ञातृतया अहन्त्वेन आत्मनि भासमानेऽपि कुयुक्तिभिरस्य भ्रान्तित्वोपपादनं कुदृशां इति । (वि. को.)

9. अविद्या । तत्रोक्तम् --

अनादिभावरूपं यद्विज्ञानेन विलीयते ।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते ॥

इति मायावादिवेदान्तिनो वदन्ति ॥ (न्या. को.)

**अज्ञानसाक्षित्वभङ्गवादः** — शतदूषण्यां २८ तमो वादः ।

यत्पुनराहुः आसंसारं अज्ञानसाक्षित्वेन ब्रह्म अवतिष्ठते । श्रूयते हि 'साक्षी चेता केवलो निर्गुणश्च' इत्यादि । न च स्वप्रकाशप्रत्यक्षात् ऐन्द्रियिकप्रत्यक्षाच्च अतिरिक्तं साक्षि प्रत्यक्षं नाम न किंचिदुपलभ्यते इति वाच्यम् । सुखमहं अस्वाप्सं, एतावन्तं कालं न किंचिदहं अज्ञासिषं इति सुखाज्ञानयोः साक्षित्वेन सुप्तोत्थितस्य स्वात्मपरामर्शात् ।

तत्र तावत् स्वरूपसुखप्रकाशः स्वप्रकाशान्तर्गतः । न पुनः साक्षिप्रकाशगम्यः । वैषयिकसुखप्रकाशस्तु सुषुप्तिकाले न सम्भवति । अज्ञानमपि तदानीन्तनस्मृत्यभावेन अनुमीयते तत्कालादिवत् । न हि सुषुप्तिकालोऽपि तदानीमेव साक्षिणा गृहीतः इति इष्टम् । इष्यमाणत्वेऽपि कालोपाधेरपि कस्यचित् गृहीतत्र्यतया जागरनिर्विशेषत्वप्रसङ्गः । तदग्रहणे पुनः एतावन्तं कालं न किञ्चिदहमज्ञासिषं इति कालविशेषणोपादानविरोधः स्यात् ।

किञ्च किमिदं साक्षित्वमिति निरूपणीयम् । न तावत् साक्षात्कर्तृत्वम्, ब्रह्मणः वास्तवज्ञातृत्वानभ्युपगमात् । लोके परमार्थद्रष्टारमेव साक्षीति व्यपदिशन्ति । आविद्यकस्याऽपि ज्ञातृत्वस्य अहङ्कारनिष्ठत्वाभ्युपगमेन विलीनाहङ्कारेषु सुषुप्त्यादिकालेषु तदसिद्धेः । नापि साक्षात्काररूपत्वं 'साक्षाद्द्रष्टरि संज्ञायाम्' इत्यनुशासनेन साक्षात् ज्ञातर्येव साक्षिशब्दप्रयोगात् । (श. दू. वाद. 28) अतः अज्ञानसाक्षित्वं दुर्निरूपमिति भावः ॥

**अज्ञानस्य अभावरूपत्वम्** — अज्ञानस्य भावरूपत्वनिरासः ।

ननु अहमज्ञः इत्यादिप्रतीतेः भावरूपाज्ञानविषयत्वे लाघवम् । भावाभावयोर्मध्ये भावस्य लघुत्वादिति चेत् हन्तैवमघटं भूतलमित्यादिप्रतीतेरपि लाघवेन भावरूपाघटत्वादिविषयत्वप्रसङ्गेनाभावमात्रोच्छेदप्रसङ्गात् ; सिद्धान्ते भावान्तरस्यैवाभाव-

तया अहमज्ञ इत्यादिप्रतीतेरधिकरणतद्धर्मविषयत्वोपपत्तौ अतिरिक्तभावरूपाज्ञानकल्पने गौरवाच्च, सावयवत्व-परिणामित्वाद्यनेकधर्मकल्पनाप्रसङ्गाच्च ।

एतेन त्वदुक्तमर्थं न जानामि; शास्त्रार्थं न जानामि, राजवृत्तान्तं न जानामि इत्यादिप्रतीतिरपि विशेषज्ञानाभावविषयत्वेन व्याख्याता । अन्यथा सामान्यतः शास्त्रार्थादिज्ञानसत्त्वेन तद्विरोधेन भावरूपाज्ञानस्याप्यसम्भवात् । (वे. मं. दी. 133)

एवञ्च भावरूपाज्ञानकल्पने लाघवं नास्तीति प्रदर्शितम् ॥

**अज्ञानस्य ज्ञाननिवर्त्यत्वम्** — अहं अज्ञ इत्यादिप्रतीतेः ज्ञानाभाव एव विषयः न तु भावरूपमज्ञानम् , इति सिद्धान्ते अनुपपत्तिमाशङ्क्य परिहरति ।

ननु 'ज्ञानेनाज्ञानं निवृत्त'मिति सर्वलोकव्यवहारात् 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' इति भगवद्गीतावचनाच्च ज्ञाननिवर्त्यत्वसम्भवः, ज्ञाननिवर्त्यत्वं हि ज्ञानजन्यविनाशप्रतियोगित्वं, न चाभावे तदस्तीति चेन्न; आलोकेनान्धकारो निवृत्तः, दारिद्र्यं धनागमेन निवृत्तमित्यादिवदुपपत्तेः । न हि आलोकनिवर्त्योऽन्धकारो भावः धनागमननिवर्त्यं दारिद्र्यं वा भावरूपं किञ्चिदस्ति । किन्त्वालोकधनयोरभावावेव । अतः ज्ञाननिवर्त्यत्वं तावदज्ञानस्य अभावरूपत्वेऽपि सिद्धम् । (वे. मं. दी. 136) अन्धकारस्याभावरूपत्वकथनमभ्युपगमवादः ।

भावरूपाज्ञानं, तत्त्वज्ञाननिवर्त्यमिति परेषामाशयः, तत्र अज्ञानस्याभावात्मकत्वेऽपि निवर्तनीयत्वं घटत इति उपपादितम् ।

**अज्ञानोपहितब्रह्मोपादानवादः** —

वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्याऽज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किञ्चिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते । तदुपहितब्रह्मोपादानश्च अविकारे स्वप्रकाशचिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मनि ज्ञातृज्ञानज्ञेयविभागरूपोऽध्यासः । तस्यैवावस्थाविशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तु तत्तज्ज्ञानरूपाध्यासोऽपि जायते । कृत्स्नस्य मिथ्यारूपस्य तदुपादानत्वं च मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते । (श्री. भा. 1. भा. 2. पु. 8.)

[समसत्ताकोऽन्यथाभावः परिणामः विषमसत्ताकोऽन्यथाभावः विवर्तः । परिणाम्युपादानं अज्ञानं, विवर्तोपादानं ब्रह्मेति विवेकः । ]

निष्कृष्टब्रह्मणः उपादानत्वाभावात् आह तदुपहितेति । स्वप्रकाशस्य कथं अध्याससम्भवः इत्यत्राह – तिरोहितस्वरूप इति । तिरोधायकं किमित्यत्राह तेनैवेति । अहङ्कारः अज्ञानञ्च आन्तराध्यासः, ज्ञेयं बाह्याध्यासः । अध्यासरूपे – अध्यस्तरूपे कर्मणि घञ् । एवं निष्कृष्टब्रह्मणः उपादानत्वानुपपत्तिः उक्ता । उपादानत्वे उपपत्तिमाह – कृत्स्नस्येति । सुवर्णजातीयस्य भूषणस्य स्वर्णमेव हि उपादानं दृष्टं, तद्वदिति भावः । (श्रु. प्र.)

सिद्धान्ते तु जगतः सत्यत्वात् सूक्ष्मचिदचिद्ब्रह्मैव उपादानम्, विशिष्टमेव कार्यमिति स्वीकृतम् ॥

**अज्ञो घटः इत्यादीनां साधुत्वसंपादानम् —**

'भावरूपाज्ञाननिरसनानन्तरं ज्ञानविशेषाभाव एव तद्विषय इति स्वीकार्यमित्यन्यत्र सर्वत्राप्यज्ञानानुभवे स एव विषयोऽस्तु' इत्युपसंहृतम् । पश्चादियं शङ्का –

नन्वेवं सति 'अज्ञो घटः', 'न जानाति घटः' इत्यादिप्रयोगोऽपि साधुः स्यात्, न चाप्रयोगादेवाप्रयोग इति वाच्यम्; नियामकान्तरसम्भवे गत्यभावस्वीकारस्य तस्य जघन्यत्वादिति चेत् न; अर्थसत्त्वादनुशासनविरोधाभावाच्च तत्साधुताया इष्टत्वात् । अप्रयोगस्त्वप्रसङ्गादेव, निषेधस्य प्रसङ्गपूर्वकत्वात् ।

तदुक्तं महाचार्यैः –

घटो नेच्छति न द्वेष्टि न दुःख्यति न सुख्यति ।
न गच्छति न जागर्ति न शेते न च भाषते ॥

इत्यादावप्यसाधुत्ववस्त्वभावप्रसङ्गतः ।
अप्रसङ्गान्निषेधस्य व्यतिरेकोपपादने ॥

घटेऽपि धीनिषेधो न तथैवेति विभावय ।
जानाति घट इत्येवं विप्रलम्भेन चोदितः ।
प्रयुङ्क्ते च न जानाति घट इत्येव संसदि ॥

इति । (वे. मं. दी. 134)

वस्तुतस्तु अज्ञपदस्य जडपर्यायत्वविवक्षयाऽयं प्रयोगः ॥

अञ्जलिः — कमलमुकुलाकारकरद्वयसंयोगरूपमुद्राविशेषः ।

'त्वदङ्घ्रिमुद्दिश्य . . . . . सकृत्कृतोऽञ्जलिः' (स्तो. र. 28)

'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इत्युच्यते ।

अत एव श्रीमद्रामायणे च —

कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् ।
अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥

इत्यभिहितम् । 'तौ युतावञ्जलिः पुमान्' इति च नैघण्टुकाः ।

'एकहस्तप्रणामश्च एकश्चापि प्रदक्षिणम्'

इति शक्तं प्रत्युक्त एकहस्तप्रणामनिषेध इह प्रतिषिध्यते । (स्तो. भा.) अनन्यगतिकत्वसूचकतया अकिञ्चनकृताञ्जलिस्तु प्रपत्तिपरतया शास्त्रैः व्यवस्थापितः ।

अकारवाच्यं परमपुरुषं जलयतीत्यञ्जलिः । (वि. को.)

देवताप्रसादाभयप्रदानादौ संहतहस्तसंयोगमात्रमञ्जलिः । 'अञ्जलिना वारि पिबेत्' इत्यादौ व्याकोशः । 'अञ्जलिना सक्तून् प्रदाय जुहुयात्' अत्राञ्जलिः सक्तुग्रहणशक्ततया प्रसृतो ग्राह्यः, न नमस्कारकालीन इव । शक्तिरत्र नियामिका । द्विहस्तसंयोगः सव्याकोशः अर्थात् कर्तव्यः; तथा हि शक्यते होमं निर्वर्तयितुम् ॥ (मी. को.)

अञ्जसा — 1. पारमार्थिकम् ; न मायामात्रम् ।

अञ्जसैव विश्वसृजो रूपम् । तत्तु न चक्षुषा ग्राह्यम् । मनसा त्वकलुषेण साधनान्तरवता गृह्यते' इति [भगवतो विग्रहविषये] द्रमिडभाष्यकारवचनम् । (वे. सं. 386)

अञ्जसा — अव्यवधानेन, स्वाभाविकमित्यर्थः । ऐन्द्रजालिकवस्तुवत् मायाकृतमिति शङ्काव्यावृत्त्यर्थमाह — तत्तु इति । मिथ्याभूतं तु दुष्टेन्द्रियग्राह्यम्, अदुष्टकरणग्राह्यत्वश्रवणात् परमार्थभूतमित्यभिप्रायः । (ता. दी.)

अत एव पाणिनीयाष्टाध्यायिव्याख्याने सरस्वतीकण्ठाभरणे उक्तं 'अरे अद्धा-पुरुषोऽञ्जसा वक्ति साधुः' इति। (पारमार्थिकं वक्तीत्यर्थः)

2. शीघ्रम्।

'ततो रामश्च कृष्णश्च मतिं चक्रतुः अञ्जसा' (वि. पु. 5-22-5)

3. साक्षात्। (वि. को.)

'तत्त्वेत्वद्धाञ्जसा द्वयम्' इत्यमरः॥

**अणवश्च** — (ब्र. सू. 2-4-6) प्राणाणुत्वाधिकरणे प्रथमसूत्रम्

अणवश्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः। प्राणानां – इन्द्रियाणां अणुत्वमत्र स्थाप्यते।

'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति इति गतिश्रवणात्। इन्द्रियाणि किं सर्वगतानि, उत अणुपरिमाणानीति संशयः। सर्वगतानीति पूर्वपक्षः; 'त एते सर्व एव समाः सर्वेऽनन्ताः' इति प्राणानां आनन्त्यश्रवणात्।

राद्धान्तस्तु 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रवणात् परिमितत्वे सति अप्रत्यक्षत्वादणवः। आनन्त्यश्रुतिस्तु 'अथ यो हैताननन्तानुपास्ते' इत्युपासन-विधानात् उपासनाफलबाहुल्यविषया। अत्राणुत्वं उपलब्ध्ययोग्यपरिच्छिन्नपरिमाणत्वम्। अणुत्वञ्चैषां सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वं, कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गात्। तस्मात् सूक्ष्माः परिच्छिन्नाश्चैते प्राणा इत्यध्यवस्यामः।

अणवस्त्विन्द्रियाणीति ह्यनुगत्यादिना श्रुताः।
उपासार्थमनन्ताः इत्येतानि गदितानि हि॥

(ब्र. प. मा. 274)

**अणिमा** — 1. अणुवत् दुर्विज्ञेयः। परमात्मा।

'स य एषो अणिमा। ऐतदात्म्यमिदं सर्वम्'। (छां. उ. 6-8-7)

मानान्तरागोचर इत्यर्थः। (रं. भा.)

2. अष्टसिद्धिष्वन्यतमसिद्धिविशेषः। (ग. पं. व्या. 5)

3. अणोः जीवस्याप्यन्तरात्मतया प्रवेशयोग्यः॥ (वि. को.)

**अणीयस्त्वम्** — सूक्ष्मत्वम् ।

'यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' (मुं. उ. 1-1-7) अणीयस्त्वं – सूक्ष्मत्वं, व्यापित्वमिति फलति । (रं. भा.)

न तु अल्पपरिमाणत्वम् ; अत्रैव परमात्मनः निरतिशयज्यायस्त्वप्रतीतेः। सर्व-सूक्ष्मवस्तुप्रवेशयोग्यतया निरतिशयसौक्ष्म्ययुक्तमिति भावः ॥

**अणीयोर्ध्वा** — ऊर्ध्वभूता शिखा (आत्म) ज्वाला अणीयसी ।

'तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः' (तै. ना. उ. 99) अणीयसी ऊर्ध्वा अणीयोर्ध्वा इति कर्मधारयः। सन्धिश्छान्दसः । व्यवस्थित इति लिङ्ग-व्यत्ययः छान्दसः । (रं. भा.)

भट्टभास्करे तु अणीयसां ऊर्ध्वा इति तत्पुरुषमाश्रित्य नातः परमणीयोऽस्ति इति व्याख्यातम् ॥

**अणुः** — (स. ना. 839) अतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्यात् अणुः । (वि. स. भा.) अतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसमर्थतया अणोरणीयान् तत्सर्व-मणति गच्छतीति अणुः । (वि. स. निर्व.)

अतिसूक्ष्महृदाकाशाव्यक्तजीवप्रवेशने ।
शक्तिमानणुरित्युक्तः षडर्णस्सर्वशक्तिदः ॥

(वि. स. नि.)

**अणुः** — 1. अतीन्द्रियः परमात्मा ।

'अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययम्' (मं. उ. 1-1-1)

2. सूक्ष्मतया चक्षुराद्यगोचरः । 'मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य' (क. उ. 2-13) 3. दुर्विज्ञेयः । 'एषोऽणुरात्मा चेतसा वेदितव्यः' (मुं. उ. 3-1-9) 4. क्षुद्रधान्यविशेषः । '. . . . गोधूमा अणवस्तिलाः' (वि. पु. 1-6-21)

1. अतिसूक्ष्मः विश्वोपादानभूतः । 2. दुर्विज्ञानः मानान्तरानधिगम्यः ॥

(वि. को.)

**अणुत्वम्** — 1. परिमाणविशेषः ।

2. परिच्छिन्नत्वे सति अतिस्वच्छत्वम् । (श्रु. प्र. 2-4-6)

3. (इन्द्रियाणाम् ) परिच्छिन्नत्वे सति उपलब्ध्यर्हस्थूलताराहित्यम् । न तु जीवात्मस्वरूपवदत्यन्ताल्पत्वम् । (श्र. प्र. 2-4-6)

1. महत्त्वावधित्वम् । 2. बहुदिगवच्छेदेन न्यूनभावः । 3. इन्द्रियाणामणुत्वमुपलब्ध्ययोग्यपरिच्छिन्नपरिमाणत्वमात्रम् । (वि. को.)

आत्मनामणुत्वं, इन्द्रियाणां अणुत्वं च तत्तत्पदेषु द्रष्टव्यम् ॥

**अणुपरिमाणतारतम्यम्** — अणुपरिमाणपारम्यम् ।

अणुत्वोत्कर्षः इति यावत् । (न्या. सि. टी. 24) अणुत्वनिष्ठ अपकर्षसमानाधिकरण उत्कर्षः । (र. पे. 51)

**अणुभ्योऽणु** — अणिष्ठम् , ब्रह्म ।

'यदर्चिमत् यदणुभ्योऽणु (च) यस्मिन् निहिता लोकिनश्च' (मुं. उ. 2-2-2)

अणुभ्योऽपि – अतिसूक्ष्मश्यामाकादिभ्यः अणिष्ठम् – सूक्ष्मतया सर्वान्तःप्रवेशयोग्यमित्यर्थः ॥ (रं. भा.)

**अणुरपि विशेषोऽध्यवसायकरः** — अयञ्च न्यायविशेषः ।

इदमित्थमेवेति विषयपरिच्छेदोऽध्यवसायः । अध्यवसानं अध्यवसायः । (मी. को.)

स्वल्पोऽपि विशेषः इतरव्यवच्छेदकतया निर्णयजनको भवतीति भावः ॥

**अणुरात्मा** — जीवः ।

'एषोऽणुरात्मा चेतसा वेदितव्यः यस्मिन् प्राणः पञ्चधा संविवेश' (मुं. उ. 3-1-9)

सर्वगतत्वञ्चात्मनः अवश्याभ्युपेत्यम् , सर्वत्र कार्योपलब्धेः सर्वत्रात्मनः सन्निधानाभ्युपगमात् ; शरीरगमनेनैव कार्यसम्भवे सति गतिकल्पनायां प्रमाणाभावाच्च । (श्री. भा. 2-3-19)

गतिकल्पनपक्षे अणुत्वं गतिश्चोभयं कल्प्यम् ; इतरपक्षे विभुत्वमेव कल्प्यमिति कल्पनालाघवात् विभुत्वमेवोपपन्नमिति काणादाः । (श्र. प्र.) विभुत्वसम्भवात् अनन्यथासिद्धं गतेः कल्पकं नास्तीति भावः ।

देशान्तरे भोग्यवस्तूत्पत्तेः अदृष्टाधीनत्वात्, निराश्रयस्य धर्मादेस्तत्र कार्यकारित्वासम्भवात्, विभुत्वम् आत्मनः अभ्युपेयमिति ।

सिद्धान्ते तु, ईश्वरप्रीतिकोपरूपत्वाददृष्टस्य ईश्वरस्य च विभुत्वात् देशान्तरेप्यदृष्टवदात्मसंयोगसद्भावात् नानुपपत्तिः ।

अस्यां श्रुतौ साक्षादणुत्वं श्रूयते । अणुसदृशं वस्तूद्धृत्य तन्मानत्वं च जीवस्य श्रूयते;

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः . . . . . ॥ इति ।
'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति च ।

अतोऽणुरेवायमात्मा ॥

**अणुश्च** — (ब्र. सू. 2-4-12) (श्रेष्ठाणुत्वाधिकरणम्)

श्रेष्ठप्राणोऽप्यणुरेव; पूर्ववदुत्क्रान्तिश्रवणात्, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति इत्यादिषु ।

अधिकाशङ्का तु 'सम एभिः त्रिभिर्लोकैः', 'प्राणे सर्वं प्रतिष्ठितम्' इत्यादि श्रवणात् महापरिमाण इति । परिहारस्तु – उत्क्रान्त्यादिश्रवणात् परिच्छिन्नत्वे निश्चिते सर्वस्य प्राणिजातस्य प्राणायत्तस्थितित्वेन वैभववादोपपत्तिः ।

अणवश्चेति सूत्रम् इन्द्रियाणामणुत्वस्थापनार्थम्, इदन्तु मुख्यप्राणस्येति विवेकः ।

प्राणोऽनूत्क्रामतीत्यादिश्रुत्या प्राणोऽप्यणुर्भवेत् ।
महत्वं शङ्कितं यत्तु तद्वैभवपरं भवेत् ॥

(ब्र. प. मा. 280)

**अणूनामतीन्द्रियता** — अणूनाम् इन्द्रियागोचरत्वम् ।

अतीन्द्रियाणुवचनमपि प्रदीपावयवानामिव ऐन्द्रियिकाणामेवावस्थाविशेषेण अतीन्द्रियत्वाभ्युपगमात् अविरुद्धम् । (न्या. प. 21)

सिद्धान्ते त्रसरेण्वतिरिक्ताणूनामनङ्गीकारात् त्रसरेणूनां च इन्द्रियग्राह्यत्वात् तदतीन्द्रियत्वकथनं विरुद्धमिति चेत् त्रसरेणवोऽपि सूर्यमरीचिसंपर्कविशेषसहकारादेव

दृश्यन्ते । सहकाराभावे तु न दृश्यन्त इति ते तदा अतीन्द्रिया एव । तथा च परमाणूनां अतीन्द्रियत्वं सहकारिवैकल्यनिबन्धनम् । एवञ्च आचार्यसूक्तौ अवस्था-विशेषपदं सहकारियोगादिरूपावस्थापरमेव । (न्या. प. टी.)

तथा च परमाणवः त्रसरेण्वपेक्षया सूक्ष्माः अतिरिक्ता इति पक्षे एवातीन्द्रियत्वं अणूनामुपपद्यते इत्युक्तेः नावकाशः, त्रसरेणूनामेव उक्तरीत्यातीन्द्रियत्वस्य स्थापनादिति भावः ॥

**अणोरणीयान्** — परमात्मा ।

'अणोरणीयान्महतो महीयान्' (क. उ. 2-20) अणोः सर्वाचेतनापेक्षया सूक्ष्मा-च्चेतनादणुतरः, ततोऽपि सूक्ष्मः, तदन्तः प्रवेशयोग्यः इत्यर्थः । (रं. भा.) 'अणोर-णीयान् महतो महीयान्' (श्वे. उ. 3-20) सकलसूक्ष्मवस्त्वन्तःप्रवेशयोग्यसौक्ष्म्यवान् । (रं. भा.) 'अणोरणीयान् महतो महीयान्' (तै. ना. उ. 66) सर्वसूक्ष्मवस्तुप्रवेशन-योग्यतया निरतिशयसौक्ष्म्ययुक्तः सर्वप्रपञ्चव्यापक आत्मा । (रं. भा.) 'अणोरणीयांसं' (गी. 8-9) जीवादपि सूक्ष्मतरः । (गी. भा.)

अणोरणीयान् महतो महीयान् इत्यनुश्रवः ।
विश्वव्यापित्वतात्पर्यात् न मिथो बाधमृच्छति ॥

(स. सि. 146)

इत्थं एकस्यैवाणुत्वमहत्वोक्तेः विश्वव्यापित्वे तात्पर्यं सिद्धम् ॥

**अण्डम्** — 1. ब्रह्माण्डम् ।

कपित्थफलाकारं पञ्चीकृतपञ्चभूतारब्धप्राकृतद्रव्यम् । (य. दी. 72) 'तदण्ड-मभवद्धैमम्' इत्यादिवचनानुसारात् ।

2. परमपदम् । 3. आकाशम् । (सं. अ.)

**अण्डाधिपतिः** — 1. चतुर्मुखः ।

'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥'

(म. स्मृ. 1-9)

इति वचनात् ।

2. अण्डानामधिपतिः । सर्वेश्वरः । (सं. अ.) [परमात्मा]

**अण्वन्तः** — सूक्ष्मवस्तुन अन्तः – निश्चयः ।

'याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन् अण्वन्तानिति' (बृ. उ. 6-1-1)

अणोः – सूक्ष्मस्य वस्तुनः प्रत्यगात्मादेः अन्तान् – निश्चयान् कर्तुम्, उत पशून् इच्छन् आगतोऽसीत्यर्थः । (रं. भा.)

'अन्तः समाप्तौ स्थाने च निर्णयेऽभ्यन्तरेऽपि च' इति निघण्टुः ॥

**अतः** — अतश्शब्दः वृत्तस्य हेतुभावे ।

'अथातो ब्रह्मजिज्ञासा' (ब्र. सू. 1-1-1)

वृत्तस्येति प्रकृत्यर्थः, हेतुभावे इति प्रत्ययार्थः । (श्रु. प्र. 1-12) एतच्छब्दप्रकृतिक 'तसिल्'प्रत्ययान्तोऽयं शब्दः । हेतौ पञ्चमी । 'एतदः अन्' (पा. सू. 5-3-5) अनेन सूत्रेण एतच्छब्दस्य 'अन्' आदेशे 'न'लोपे च अत इति रूपम् । तथा च कर्मविचारेण निष्पन्नं कर्मविशेष्यकाल्पास्थिरफलकत्वनिर्णयं, तथा साङ्गाध्ययनानन्तरं वृत्तं साङ्गब्रह्मज्ञानविशेष्यकानन्तस्थिरफलकत्वापातप्रतीतिमपि परामृशति । इत्थं च कर्मविशेष्यकाल्पास्थिरफलकत्वनिर्णयविशिष्टसाङ्गब्रह्मज्ञानविशेष्यकानन्तस्थिरफलकत्वापातप्रतीतेः इति विशिष्टस्य हेतुत्वं सिद्धमिति भावः । एवं सर्वत्र अतश्शब्दघटकैतच्छब्देन सर्वनामशब्देन पूर्वोपस्थितार्थविशेषपरामर्शः बोध्यः ॥

**अत एव च नित्यत्वम्** — (ब्र. सू. 1-3-28) देवताधिकरणे चतुर्थं सूत्रम् ।

यत एव वसिष्ठादिशब्दानां अकृतिवाचित्वं, अत एव च पूर्वाकृतिसदृशाकृतिविशिष्टवसिष्ठादिद्वारा पूर्वानुपूर्वीसदृशानुपूर्वीविशिष्टतयैव वेदस्याविष्कारात् नित्यत्वम् ।

अर्थवादानां प्रतीयमानेऽर्थे तात्पर्यमस्ति चेत् 'मन्त्रकृतः' इत्यादि वाक्येष्वपि मन्त्रकृत्त्वे तात्पर्यसम्भवात् वेदस्य अनित्यत्वमिति शङ्का, इन्द्रादिशब्दानां आकृतिवाचित्वात् तत्तच्छब्देन तत्तदर्थस्मृतिपूर्वकतत्तदर्थसृष्ट्या परिहृता ।

मन्त्रकृत्वं नाम अनधीत्यैव मन्त्राणां अस्खलितक्रमस्वरवर्णतया दर्शनम् । तच्च तत्तन्मन्त्रस्मृतिपूर्वकं प्रजापतिना यथापूर्वं सृष्टैः तत्तन्नामरूपभाग्भिः प्रवाहपरंपरया आगतैः वसिष्ठादिभिः क्रियत इति वेदनित्यत्वमन्त्रकृत्वाविरोधः इत्यर्थः ।

सूर्याचन्द्रमसौ धाता यथापूर्वमितिश्रुतेः ।
धाता वेदं हि संस्मृत्य सृजतीत्यस्य नित्यता ॥

(ब्र. प. मा. 93)

**अत एव च स ब्रह्म** — (ब्र. .सू 1-2-16) (अन्तराधिकरणे चतुर्थं सूत्रम् )

यतस्तत्र भवभयभीतायोपकोसलाय ब्रह्मस्वरूपजिज्ञासवे 'कं च तु खं च न विजानामि' इति पृच्छते 'यद्वा व कं तदेव खं यदेव खं तदेव कम्' इत्यन्योन्या-वच्छेदकतया अपरिच्छिन्नसुखस्वरूपं ब्रह्मेत्यभिधाय, 'प्राणं च हास्मै तदाकाशं चोचुः' इत्युक्तम् । अत एव खशब्दाभिधेयस्य आकाशोऽपरिच्छिन्नसुखविशिष्टं परं ब्रह्मैव ।

यथा प्रथमपादे 'भेदव्यपदेशाच्चान्यः' इत्यन्यशब्दोक्तिः । तृतीये 'ईक्षति कर्मव्यपदेशात् सः' इत्युक्तिः । 'चतुर्थे च वदतीति चेन्न प्राज्ञो हि प्रकरणात्' इति प्राज्ञशब्दोक्तिः । तथैवास्मिन् द्वितीयपादेऽपि सर्वत्र साध्यबोधकपदसिद्धये ब्रह्मेति निर्देशः ।

इदं च सूत्रं नान्यैरङ्गीकृतम् । सिद्धान्ते तु दृष्टिविधित्वशङ्कावारणायेदं आव-श्यकम् ।

अनेन प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्म इत्यत्र अपरिच्छिन्नसुखविशिष्टं परमेव ब्रह्माभिहितमिति कथमिदमवगम्यते । यावता नामब्रह्मेत्यादिप्रतीकोपासनमेवेत्याशङ्का निरासि ।

तस्मात् कं ब्रह्म खं ब्रह्मेत्यत्राकाशस्य कीर्तनात् ।
अक्ष्याधारतया तस्य त्वाकाशो हि परः पुमान् ॥

(ब्र. प. मा. 48)

**अत एव चाग्नीन्धनाद्यनपेक्षा** — (ब्र. सू. 3-4-25) (अग्नीन्धनाद्यधिकरणे प्रथमसूत्रम् )

अत एव ऊर्ध्वरेतसां विद्यावत्त्वश्रुतेरेव, आधानाद्यनपेक्षा, तेषु विद्या । अग्नी-न्धनं हि अग्न्याधानम् ।

ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्या सम्भवति नेति संशयः । यज्ञाद्यभावात् तेषां तदङ्गिका विद्या न सम्भवतीति पूर्वपक्षः । राद्धान्तस्तु – 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति'

'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादिश्रुतेः तेषां विद्यावत्त्वावगमात् तेषु अग्निहोत्राद्यनपेक्षा विद्येति निश्चीयते ।

विद्यावत्त्वश्रुतेरेव विद्या स्यादूर्ध्वरेतसाम् ।
अग्न्याधानादिरहितेत्यवगन्तुं च शक्यते ॥

(ब्र. प. मा. 443)

**अत एव चानन्याधिपतिः** — (ब्र. सू. 4-4-9) (सङ्कल्पाधिकरणे द्वितीयसूत्रम्)

यतो मुक्तः सत्यसङ्कल्पः अत एवानन्याधिपतिः । न कदाचिदपि कर्माधीनोऽयम् । अनधिपतिरिति नोक्तम् ।

अत्रायमाशयः – स्वाभाविकशेषिणः परमपुरुषादन्यो नाधिपतिः मुक्तस्येति, अन्यशब्दो बहुव्रीहिसूचनार्थ इति चेन्न; अनन्याधिपतिरित्युक्तेऽपि, अन्येषामिति समाससद्भावात् अतोऽन्यशब्दस्योक्त एवार्थ इति संप्रदायः । अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम् । तदा प्रतिहतसंङ्कल्पत्वं भवेत् । अतः मुक्तानां विधिनिषेधयोग्यत्वं सिद्धम् ।

सत्यसङ्कल्पतावत्त्वात् मुक्तस्य परमाप्तितः ।
निषेधविधियोग्यत्वं विद्यते न च तस्य तु ॥

(ब्र. प. मा. 532)

**अत एव चोपमा सूर्यकादिवत्** — (ब्र. सू. 3-2-18) (उभयलिङ्गाधिकरणे अष्टमं सूत्रम्)

यतः पृथिव्यादौ सर्वत्रस्थितस्यापि परमात्मनः निर्दोषत्वं कल्याणगुणाकरत्वं च, अत एव शास्त्रेषु जलसूर्यकाद्युपमा क्रियते ।

'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥

इत्यादिषु उपमा उच्यते ।

अतः पृथिव्यादिषु स्थितस्य परस्य निर्दोषत्वं न शङ्कनीयम् ।

'सर्वत्रोभयलिङ्गत्वात् जलसूर्योपमा कृता ।
ब्रह्मणश्शास्त्रतश्चेति जलाधारेष्विवांशुमान् ॥'

(ब्र. प. मा. 332)

**अत एव न देवता भूतं च** — (ब्र. सू. 1-2-28) (वैश्वानराधिकरणे चतुर्थं सूत्रम्)

छान्दोग्ये 'यस्त्वेतमेवं प्रादेशमात्रं अभिविमानं वैश्वानरमुपास्ते' इत्यत्र, यतः त्रैलोक्यशरीरोऽसौ, यतश्च निरुपाधिकशब्दनिर्दिष्टः अत एव नाग्न्याख्या देवता, न तेजस्संज्ञकं भूतञ्च वैश्वानरः ।

'लोकत्रयशरीरत्वात् पुरुषत्वेन कीर्तनात् ।
वैश्वानरो नाग्निर्देवो न च भूततृतीयकम् ॥'

(ब्र. प. मा. 60)

**अत एव प्राणः** — (ब्र. सू. 1-1-24) (प्राणाधिकरणम्)

आकाशस्य कारणत्वनिरासानन्तरं प्राणस्यापि तत् व्यावर्त्यते। आकाशाधिकरणोक्तन्यायेनैव प्राणोऽपि न जगत्कारणम्। कृत्स्नस्य भूतजातस्य प्राणाधीनस्थिति-प्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हतीति अधिकाशङ्कायां शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात् 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहते' इति नोपपद्यते। अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते। तथा चाकाशस्य जगत्कारणत्वनिरासानन्तरं, क्रमप्राप्तवायुविशेषप्राणस्यापि तत् न्यवारि ।

'पूर्वोक्तादेव लिङ्गाच्च प्राणो ब्रह्मेति कथ्यते ।
सर्वप्राणिप्राणनाच्च निर्देशाच्च प्रसिद्धवत् ॥

(ब्र. प. मा. 24)

**अत एव सर्वाण्यनु** — (ब्र. सू. 4-2-2) वागधिकरणे द्वितीयं सूत्रम्।

यतो वाचो मनसि संयोगमात्रमुच्यते; न तु लयः; अत एव तदानीं 'सर्वाणीन्द्रियाणि वाचमनुमनसि संपद्यन्ते' इति वचनं वाङ्मनसि संपद्यत इति वचनवदुपपन्नम्, 'तस्मादुपशान्ततेजाः अपुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' इति ।

अनुवाचन्त्विन्द्रियाणां संपत्तिर्मनसि श्रुतेः ।
संपद्यमानैर्मनसि त्विन्द्रियैरिति शब्दतः ॥

(ब्र. प. मा. 490)

**अतत्प्रधानेभ्यः तत्प्रधानं प्रबलम्** — न्यायविशेषः ।

प्रधानाप्रधानयोः प्रधानस्यैव प्राबल्यमिति न्यायः । अनेन न्यायेन साकार-श्रुतीनां अतत्प्रधानत्वाभावात् । तासां च तत्प्रधानत्वमनुवादत्वोपासनार्थत्वव्युदासात् तात्पर्यलिङ्गावगमाच्च स्थितम् ।

एवञ्च परमात्मगताकारविशेषाणां प्रमाणान्तराप्रतिपन्नत्वात् अनुवादत्वं न युज्यते । तथैव निर्गुणविद्यायाः सिद्धान्ते अभावाच्च उपासनशेषतया तेषां पारमार्थिकत्वात् अन्यथासिद्धिः वक्तुं नैव शक्यत इति भावः ॥

**अतद्गुणोक्तिः** — न तस्य गुणः, अतद्गुणः; तस्य उक्तिः ।

तद्वृत्तिव्यतिरिक्तवस्तुवृत्तिगुणान् तस्मिन् आरोप्य उक्तिः । यथा सर्वेश्वरासाधारणगुणान् सर्वज्ञत्वादिकान् चतुर्मुखादिषु आरोप्य कथनम् ॥ (सं. अ.)

**अतद्गुणसंविज्ञानः** — 1. बहुव्रीहिप्रभेदः ।

[जन्मादीति सृष्टिस्थितिप्रलयम् । तद्गुणसंविज्ञानो बहुव्रीहिः' इति भाष्यव्याख्यानावसरे] बहुव्रीहिर्द्विविधः, तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्चेति । तत्र प्रथमस्योदाहरणं 'सर्वादीनि सर्वनामानि', 'लम्बकर्णमानय' इत्यादि । द्वितीयस्योदाहरणं 'चित्रगुमानय' इति ।

तच्छब्देन विशेष्यम्, गुणशब्देन विशेषणञ्च विवक्षितम् । समित्येकीकारे । विशेष्यं च एककार्यान्वितत्वेन सह ज्ञापयतीत्यर्थः । एवमपि बहुव्रीहेर्नान्यपदार्थप्रधानत्वभङ्गः, स्वपदवाच्यविशिष्टसमुदायस्य तत्समुदायिनो वा अन्यपदार्थतया विवक्षितत्वोपपत्तेः । समासस्थपदवाच्यस्यापि विशिष्टसमुदायान्तर्गतत्वाकारेण ह्यन्यपदार्थत्वं युज्यते, स्वपदमात्रस्य तेनाकारेण तद्वाचकत्वाभावात् । तद्भिन्नः अतद्गुणसंविज्ञानः ।

(श्रु. प्र. 1-1-2)

अत्र – 'तच्छब्देन विशेष्यं, गुणशब्देन विशेषणञ्च विवक्षितम्' इत्युक्तेः अत्र द्वन्द्वसमासः व्यासार्याणां सम्मत इति ज्ञायते । परं तु सर्वनामशब्दसमभिव्याहारे एकशेषप्रसङ्गात् इदममनुपपन्नमिव भाति । तथापि;

'जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥'

इत्यभियुक्तोक्तौ 'तच्चितोः' इत्यत्र एवमनुपपत्तिमाशङ्क्य, 'तत्' इति, न सर्वनाम, किन्तु विभक्तिप्रतिरूपकमव्ययमिति लघुशब्देन्दुशेखरे समाहितत्वात् नानुपपत्तिः।

यो वहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयवोधनेऽसमर्थः स इति प्राचीना आहुः। यथा 'दृष्टसागरमानय', 'चित्रगुमानय' इत्यादौ च। यत्र स्वार्थस्योपलक्षणतया विधेयान्वयः सः। यथा 'चित्रगुः' इत्यादौ ॥ (न्या. को.)

**अतद्व्यावृत्तिः** — अपोहः।

तद्भिन्नव्यावर्तनम्। यथा योगाचारबौद्धमते नीलत्वादिरूपो धर्मः अनीलव्यावृत्तिरूप इति ॥ (न्या. को.) (शिष्टं तु अपोहपदे द्रष्टव्यम्)

**अतन्त्रितः** — अनियाम्यः, न तन्त्रितः। (सं. अ.) स्वतन्त्रः इत्यादौ आयत्ते तन्त्रशब्दः प्रयुक्तः ॥

**अतपस्कः** — असमास्ततपाः।

'इदं ते नातपस्काय नाभक्ताय कदाचन' (गी. 18-67)

अतपस्काय — अतप्ततपसे। (गी. भा.) अतपस्कशब्देन तपःप्रारम्भमात्रे कृतेऽपि श्रवणानाधिकारित्वं विवक्षितमित्यत आह — अतप्ततपसे इति। (ता. चं.)

'इदं ते नातपस्काय' इत्यादिना अयोग्यानां प्रथममुपादानं योग्यानामकथनादपि तत्कथनस्यानिष्टतमत्वात् ॥ (गी. भा. 18-69)

**अतर्क्यम्** — 1. तर्कागोचरम्।

'अणीयान् ह्यतर्क्यमणुप्रमाणात्' (क. उ. 2-8)

ननु येनकेनचिदुपदिष्टेऽप्यूहापोहशालिनः आत्मावगतिः स्यादेव इत्यत आह — यतः अणोरप्यणीयान् आत्मा (परमात्मा) अतः तत्स्वरूपं तर्कागोचरम्। (रं. भा.)

2. बाधकागोचरभूतम्। (श्रु. प्र. 2-1-12)

**अतलम्** — षष्ट्यधिकशतत्रयम्।

तथा हि गणकप्रसिद्ध्या कटपयाः वर्गाः। तत्र वर्गाक्षरसंख्यया संग्रहः। गणकप्रसिद्ध्या अकारः शून्यवचनः। टकारात् षष्ठेन तकारेण षट्संख्या। यवर्ग-

तृतीयेन लकारेण त्रित्वसंख्या। तत्राङ्कानां वामतो गतिरिति पूर्वोक्तप्रकारेण मेलने अतलशब्दः षष्ट्यधिकशतत्रयसंख्यामाह। (न्या. को.)

एवमेव 'सौली संख्या शुभाशीः' अधिकृतिगणना चिन्मयी ब्रह्मकाण्डे' (अ. सा. 16) इत्यादौ गणना द्रष्टव्या॥

**अतलादयः** — अधोलोकविशेषाः।

अतलं वितलं चैव नितलञ्च गभस्तिमत्।
महाख्यं सुतलं चाग्र्यं पातालं चापि सप्तमम्॥
(वि. पु. 2-5-2)

**अतश्चायनेऽपि दक्षिणे** — (ब्र. सू. 4-2-19) (दक्षिणायनाधिकरणे प्रथमसूत्रम्)

यतो हेतोः निशि मृतस्यापि ब्रह्मप्राप्तिः, तत एव बन्धहेत्वभावात् दक्षिणायने मृतस्यापि ब्रह्मप्राप्तिरस्त्येवेति।

दक्षिणायने मृतस्य विदुषो ब्रह्मप्राप्तिरस्ति नेति संशयः। 'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति' इति विदुषो दक्षिणायने मृतस्य चन्द्रसायुज्यश्रवणात् चन्द्रं प्राप्तानां 'अथैतमेवाध्वानं पुनः निवर्तन्ते' इति वचनाच्च दक्षिणायने मृतस्य ब्रह्मप्राप्तिः न सम्भवतीति पूर्वपक्षः।

राद्धान्तस्तु पूर्वोक्ताद्बन्धहेत्वभावात् विदुषः चन्द्रं प्राप्तस्यापि पुनरावृत्तिः न सम्भवति। चन्द्रसायुज्यवचनं विदुषो ब्रह्मप्रेप्सोः विश्रमस्थानमात्रविषयम्। आवृत्तिवचनं तु अविदुषामेव।

ननु 'दिवा च शुक्लपक्षश्च' इत्यादि तु अब्रह्मविद्विषयमिति पूर्वाधिकरण एव स्थितत्वात् कथमस्याः शङ्काया उत्थितिरिति चेत्, सत्यम्। दक्षिणायनमृतस्य चन्द्रप्राप्तिश्रवणात् चन्द्रं प्राप्तस्य पुनरावृत्तिश्रवणाच्च, भीष्मादीनां ब्रह्मविदामुत्तरायणप्रतीक्षादर्शनाच्च दक्षिणायनमृतस्य न ब्रह्मप्राप्तिः इत्यधिकाशङ्कायामुच्यते – 'अतश्चायनेऽपि दक्षिणे' इति। अयनेऽपि दक्षिणे मृतस्य पूर्वाधिकरणोक्तरीत्याऽस्त्येव ब्रह्मप्राप्तिः। चन्द्रं प्राप्तस्यापि विदुषः 'तस्मात् ब्रह्मणो महिमानमाप्नोति' इति वाक्यशेषे ब्रह्मप्राप्तिश्रवणात् चन्द्रप्राप्तिः विश्रमहेतुमात्रम्। चन्द्रं प्राप्तस्य पुनरावृत्तिवचनमब्रह्मविद्विषयम्। भीष्मादीनां स्वच्छन्दमरणानामुत्तरायणप्रतीक्षणमुत्तरायणप्राशस्त्यप्रदर्शनार्थम्।

पूर्वोक्तहेतोर्विदुषस्त्वयने दक्षिणेऽपि च ।
मृतस्यापि भवेदेव ब्रह्मप्राप्तिस्तु तत्क्षणात् ॥
(ब्र. प. मा. 507)

**अतस्त्वितरज्ज्यायो लिङ्गाच्च** — (ब्र. सू. 3-4-39) (विधुराधिकरणे चतुर्थसूत्रम्)

'अतः अनाश्रमित्वात् इतरत्' आश्रमित्वमेव ज्यायः, धर्मभूयस्त्वात्, लिङ्गाच्च स्मृतेश्च इति ।

'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः'

इति हि स्मर्यते । तस्मादनाश्रमित्वेन विद्यानिष्ठत्वमापद्विषयमित्यभिप्रायः ।

अनाश्रमित्वादितरत् ज्यायो धर्मेण भूयसा ।
अनाश्रमी न तिष्ठेत्तु दिनमेकमिति स्मृतेः ॥
(ब्र. प. मा. 457)

**अतिक्रान्तभावनीयः** --- योगविशेषः । (न्या. को.)

**अतिग्रहः** — विषयः ।

'वाग्वै ग्रहः; स नाम्ना अतिग्रहेण गृहीतः ।' (बृ. उ. 5-2-3) अतिशयेन स्वस्वविषयिणं इन्द्रियादिकं गृह्णाति स्ववशीकरोतीत्यतिग्रहः । (रं. भा.)

ग्रहाख्यपात्रविशेषस्थं द्रव्यम् ॥ (वि. को.)

**अतिघ्नी** — अतिशयं गता दशा । (सुषुप्तिकालिकी)

'स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीत, एवमेवैष एतच्छेते' (बृ. उ. 4-1-19) एवमेवैषः सुप्तो जीवः स्वापदशायां अतिशयितामानन्दस्य दशां प्राप्य परमात्मनि शेते इत्यर्थः । (रं. भा.)

अत्र 'हन-हिंसागत्योः' इत्यनेन 'हन्'धातुः गत्यर्थः । 'यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरं एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति श्रुत्यनुसारेण सुषुप्तिकाले पुरीतन्नाडीप्रदेशावच्छिन्न-प्राज्ञसंयोगेन आनन्दः प्रत्यहं 'आढ्यो दरिद्रो वा' इत्याद्युक्तक्रमेण सर्वेषामानुभाविकः । अत एव 'सुखमहमस्वाप्सम्' इति परामर्शः उपपद्यते ॥

**अतिच्छन्दाः** — अभिलाषातिगं ब्रह्म ।

'तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूपम्' (बृ. उ. 6-3-21) छन्दश्शब्दः इच्छावाची । अतिच्छन्दा इति छान्दसम् ॥ (रं. भा.)

**अतिदेशः** — सङ्गतिविशेषः ।

उपोद्घातश्चापवादः प्रत्युदाहृतिरेव च ।
दृष्टान्ताक्षेपातिदेशप्रसङ्गा इति सप्तधा ॥
(न. सं. मा. 4)

'अत एव प्राणः' इत्यादीनि अतिदेशसूत्राणि । तदुक्तम् –

कृत्वा यत्राधिकां शङ्कां पूर्वमेवातिदिश्यते ।
सङ्गतिः कथिता सद्भिः काचित्तत्रातिदेशिकी ॥
(न. सं. मा. 10)

1. एकत्र श्रुतस्यान्यत्र सम्बन्धः । यथा स्तोकं पचति, मृदु पचतीत्यादौ स्तोकमृद्वादौ क्रियाविशेषणानां कर्मत्वमित्याद्यनुशासनेन कर्मत्वातिदेशः ।

स चातिदेशः षोढा । शास्त्रातिदेशः, कार्यातिदेशः, निमित्तातिदेशः, व्यपदेशातिदेशः, तादात्म्यातिदेशः, रूपातिदेशश्चेति ।

2. इतरधर्मस्येतरस्मिन्प्रयोगायादेशः । यथा मीमांसायां प्रकृतिवद्विकृतिः कर्तव्येत्यादिः ।

3. अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसन्ततेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ॥

4. उपदेशः । यथा –

'इत्यर्चितः स भगवानतिदिश्यात्मनः पदम्'

इत्यादौ अतिदेशशब्दार्थः । (न्या. को.)

अतिदेशो नाम ये परत्रविहिताः धर्माः, तमतीत्यान्यत्र तेषां देशः । यथा देवदत्तस्य भोजनविधिं कृत्वा तमेव विधिं यज्ञदत्ते अतिदिशति, 'देवदत्तवत् यज्ञदत्तो भोजयितव्यः' इति । अन्यधर्मत्वेनावगतानां तत्सम्बन्धादरेण अन्यत्र प्रदेशो प्रापणं येन

व्यापारेण भवति सोऽतिदेशः। अतिदेशः उपदेशात् दुर्बलः। अतिदेशोऽपि क्वचिदुपदेशात् बलीयान्, आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इति न्यायात् ॥ (मी. को.)

**अतिदेशाच्च** — (ब्र. सू. 3-3-45) (पूर्वविकल्पाधिकरणे द्वितीयसूत्रम्)

मनश्चितादीनां क्रियामयक्रत्वङ्गत्वं अतिदिश्यते। 'तेषामेकैक एव तावान्यावानसौ पूर्वः' इति इष्टकचिताग्नेः वीर्यं [कार्यकरत्वसामर्थ्यं] मनश्चितादिष्वतिदिश्यते। तेन तुल्यकार्यत्वादविकल्पः। ततश्चेष्टकचितवत् तत्क्रतुनिर्वर्तनेन तदङ्गभूता मनश्चितादयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा एवेति पूर्वपक्षपरमिदम्। विद्यैव तु निर्धारणात् दर्शनाच्च इति सूत्रेण मनश्चितादीनां विद्यामयक्रत्वङ्गत्वमेव सिद्धान्तयिष्यते।

यावानसौ पूर्व इति ह्यतिदेशाद्विकल्पतः।
मनश्चितस्य तत्तुल्यं क्रियामयमखान्वयः ॥

(ब्र. प. मा. 399)

**अतिप्रश्न्या** — आक्षेपार्हा।

'अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि' (बृ. उ. 5-6-1) प्रश्नमर्हतीति प्रश्न्या। नियमाद्युपेतप्रश्नमर्यादामतिक्रम्य वर्तमानः प्रश्नः। आक्षेप इति यावत्। अतिप्रश्नमर्हतीत्यतिप्रश्न्या। (रं. भा.)

**अतिप्रसङ्गः** — 1. अतिव्याप्तिः। 2. प्रकृतादन्यत्र प्रसञ्जनम्। (न्या. को.)

**अतिमात्रम्** — महापरिमाणम्।

'सर्वव्यापिनमतिमात्रमत्यद्भुतम्' (गी. भा. 11-24) मात्राशब्दः परिमाणवाची, तमतिक्रान्तम् ॥

**अतिमानः** — आसुरीसम्पद्विशेषः।

'दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च' (गी. 16-4)

स्वविद्याभिजनाननुगुणोऽभिमानः। (गी. भा.) विद्याभिजनग्रहणं वीर्यादेरप्युपलक्षणम्।

वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
वेषवाग्वृत्तिसारूप्यमाचरन्विचरेदिह ॥ (ता. चं.)

इत्यस्योल्लङ्घनमिहाभिप्रेतम् ॥

**अतिमानिता** — अस्थाने गर्वः ।

'अद्रोहो नातिमानिता' (गी. 16-3)

**अतिमानुषचेष्टितः** — परमात्मा ।

अतिक्रान्तं मानुषस्य चेष्टितं येन । अतिक्रान्तमानुषव्यापारवान् । सेतुबन्ध-गोवर्धनोद्धरणादि । (सं. अ.)

**अतिमुक्तिः** — मोक्षः ।

'तद्येयं वाक् सोऽयमग्निः स होता, स मुक्तिः सातिमुक्तिः' (बृ. उ. 5-1-3) इति । कर्माङ्गभूते होतरि अग्न्यभिन्नत्वेन वा अग्न्यधिष्ठितत्त्वेन वा ध्यातायाः वाचो दृष्टौ कृतायां कर्मणो वीर्यवत्तरतया ब्रह्मोपासनद्वारा जीवद्दशायामेव विश्लिष्टाश्लिष्टपूर्वोत्तर-दुरितभरत्वलक्षणा मुक्तिर्भवति, शरीरवियोगानन्तरं प्रकृत्यतिक्रान्तपदाधिरोहणलक्षणा अतिमुक्तिः भवतीत्यर्थः । (रं. भा.) इयमेव मुख्या मुक्तिः । शरीरसम्बन्धवेलायां मुक्तिव्यवहारस्तु गौण एव ॥

**अतिमुच्य** — ज्ञात्वा ।

'चक्षुषश्चक्षुरतिमुच्य धीराः . . . अमृता भवन्ति' (के. उ. 1-2) चक्षुरादीनां प्रकाशकं [ब्रह्मस्वरूपं] ज्ञात्वा अमृता भवन्ति । (रं. भा.)

ज्ञानादेव मुक्तेः प्रमाणसिद्धत्वात् कारणे कार्योपचारात् अतिमुच्येतिपदं मोचन-हेतुज्ञानपरमिति भावः ॥

**अतिमृत्यु** — मृत्युं – आदित्यं, अतिक्रम्य वर्तमानं साम ।

'अथ खलु आत्मसंमितमतिमृत्यु सप्तविधं सामोपासीत' (छां. उ. 2-10-1)

अत्र मृत्युशब्देन आदित्योऽभिधीयते । आदित्यस्य अहोरात्रकालावर्तनेन जगन्नाशहेतुत्वात् मृत्युत्वम् । द्वाविंशत्यक्षरात्मकस्य सप्तविधसामभक्तिविशेषस्य एक-

विंशतिलक्षणादित्यस्य संख्यातिरेकित्वात् अतिमृत्युत्वम् । (रं. भा.) अतिमृत्युत्वेन साम्नः अत्र उपासनं विवक्षितम् ॥

**अतिमोक्षः** — मोक्षः ।

'इत्यतिमोक्षाः । अथ संपदः' (बृ. उ. 5-1-6) प्रकृतिमण्डलातिक्रमणरूप-मोक्षः । (रं. भा.)

**अतिरेकः** —

1. व्यतिरेकः – असाधारणधर्मः । 2. आधिक्यम् । 3. धर्म्यन्तरेष्व-सन् धर्मः । (वि. को.)

**अतिवहनम्** — गन्तॄणां गमयितृत्वम् ।

**अतिवादः** — 1. अतिक्रम्यवादः ।

भ्रमादिदोषरहितानामपि वक्तॄणां तदा स्वविवक्षितात् अधिकार्थान्तराकथनं विवक्षितेऽर्थे प्ररोचनार्थः अतिवादश्च सम्भवतः । यथा निर्दोषस्यापि वेदस्य ।

न हि वेदो दर्शपूर्णमासप्रकरणे वाजपेयं प्रशंसति; नापि कर्मप्रकरणे ब्रह्म प्रति-पादयति; अतिवदति च प्रतिपिपादयिषितमर्थम्, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'न किरिन्द्र त्वदुत्तरो न ज्यायान् अस्ति वृत्रहन्' इत्यादिना । न चैतावता वेदस्य कर्मान्तरं तत्त्वान्तरं चानभिमतमिष्यते; अन्यत्र वेदेनैव कर्मान्तरतत्त्वा-न्तरप्रतिपादनात् ।

एवं कपिलादयोऽपि स्वविवक्षितादधिकं तदानीं न वदन्ति, विवक्षितं अतिवदन्ति च । सांख्यशास्त्रे प्रकृतिप्राकृतपुरुषतत्त्वविवेकमात्रस्य विवक्षितत्वात् अधिकाप्रतिपादनं 'नास्मात्परं किञ्चित्' इत्यतिवादश्च भवति ।

योगे च यमनियमाद्यङ्गकस्य समाधिपर्यन्तस्य योगस्य, तत्र ध्येयभूतस्येश्वरस्य क्लेशकर्मादिदोषास्पर्शस्य च प्रतिपिपादयिषितत्वात् उपादानत्वानुक्तिः ।

न चैतावता तद्वक्तॄणां ईश्वरः तस्योपादानत्वं चानभिमतं भवति । अन्यत्र कपिलासुरिसंवादब्रह्मरुद्रसंवादादिषु कपिलहिरण्यगर्भादिभिरेवेश्वरस्य, तस्य जगदुपादान-भावस्य च प्रतिपादितत्वात् ।

न च तदनुक्तिमात्रेण, अतिवाददर्शनाच्च सांख्ययोगयोरनादरणीयता च भवति; तयोरुपजीव्यभूयिष्ठत्वात् वेदान्तार्थप्रतिपत्त्यनुष्ठानयोः तदाकांक्षासम्भवात् ; विप्रलिप्सादिदोषविरहदशायां प्रणीतत्वाच्च । न हि शब्दानुशासने कर्मकलापब्रह्मविद्ययोरप्रतिपादनात् तदनादरणीयत्वं, तद्वत् । (श्रु. प्र. 2-2-42)

[एतेन सर्वत्र कृतानां अतिवादानां तात्पर्यं ऊह्यम् । अत एवाश्रुतवेदान्तानां कर्मणि अश्रद्धा मा भूदिति देवताधिकरणे अतिवादाः कृता इति वेदार्थसंग्रहे उक्तम् । ]

2. अर्थवादः ।

ननु स्मृत्यापि श्रुतिसङ्कोचो दृश्यते । 'न हिंस्यात्' इति निषेधो हि श्राद्धकल्पस्थमांसविधानेन संकुचति । नैवम् – मांसेनापि श्राद्धं कर्तव्यं इति अवश्यं श्राद्धकर्तव्यतातिवादरूपत्वात् तादृशवचनानाम् । (श्रु. प्र. 2-2-38) अनेन श्राद्धमवश्यं कर्तव्यमिति श्राद्धप्रशंसापरतया स्मृतिवाक्यं प्रवृत्तम् । न तु श्रुतेः बाधकल्पनापरतया ।

3. अन्यपरोक्तिः । (त. टी. 28)

4. वस्तुस्वभावाननुगुणोत्कर्षवादः । स्वार्थे तात्पर्याभाववद्वाक्यम् ॥ (वि. को. प.)

अतिवादित्वम् — स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादित्वम् ।

'स वा एष एवं पश्यन् एवं मन्वानः एवं विजानन् अतिवादी भवति' (छां. उ. 7-15-4) अतिक्रान्तस्वोपास्यवस्तुवादी भवति । बृहस्पतिसमप्रत्यर्थिजनाप्रतिभाधायकस्वोपास्यदेवतापारम्यशालित्वं अतिवादित्वम् । तच्चोपास्यदेवतातिशये पर्यवस्यति । 'एवं पश्यन् एवं मन्वानः' इत्यादौ 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शतृप्रत्ययः । ततश्च स्वोपास्यदेवतासाक्षात्कारोऽतिवादित्वे हेतुरित्यर्थः । साक्षात्कारप्रीतस्वोपास्यदेवतानुग्रहादीदृशमतिवादित्वं भवतीति भावः । (रं. भा.)

'एष तु वा अतिवदति यस्सत्येनातिवदति' (छां. उ. 7-16-1) अतिवादित्वं हि वस्त्वन्तरात्पुरुषार्थतयातिक्रान्तस्वोपास्यवस्तुवादित्वम् । नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात् प्राणविदोऽतिवादित्वम् ; तस्यापि सातिशयपुरुषार्थत्वात् निरतिशयपुरुषार्थतयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति 'एष तु वाऽतिवदति यस्सत्येनातिवदती'त्युक्तम् । (श्री. भा. 1-3-7)

न हि प्राणातिवादिन्येवातिवादिशब्दो रूढः,

'क्लृप्तावयवशक्त्यैव लब्धे स्वार्थावबोधने ।
नह्यावयवनामस्त्वं प्रत्याचष्टे हि सूत्रकृत् ॥'

इति दर्शितात्, 'प्रोक्षणीष्वर्थसंयोगात्' इति सूत्रितात् प्रोक्षणीनयात् अवयवशक्त्या स्वार्थबोधे सम्भवति रूढिकल्पनायोगात् । अतो न प्राणातिवादिन्येवातिवादिशब्दस्वारस्यमित्यर्थः । . . . . . अस्य प्रवृत्तिनिमित्तस्य [अतिक्रान्तस्वोपास्यवस्तुवादित्वस्य] परमात्मोपासक एव पुष्कलत्वात् तस्मिन्नेवातिवादिशब्दो मुख्यः इति 'यः सत्येनातिवदति' इति वदतः आचार्यस्याभिप्रायः ।। (श्रु. प्र.)

**अतिव्याप्तिः** — लक्षणमतिक्रम्य लक्षणस्य वर्तनम् । अयं लक्षणदोषः ।

यथा गोः शृङ्गित्वस्य लक्षणत्वे अलक्ष्यवृत्तित्वात् अतिव्याप्तिः ।। (न्या. को.)

**अतिशेषः** — निश्शेषम् ।

'कर्मातिशेषेणाभिसमावृत्त्य' (छां. उ. 8-15-1) अतिमर्यादं इत्यादौ अतेः मर्यादाभावे वृत्तेर्दर्शनात् अतिः अर्थाभावे वर्तते । अतः अतिशेषपदस्य यथोक्त एवार्थः । ततश्चातिशेषेणाशेषेण अभिसमावृत्त्य निर्वर्त्येत्येवान्वयः ।। (रं. भा.)

**अतिष्ठाः** — सर्वोत्कृष्टः ।

'अतिष्ठास्सर्वेषां भूतानां मूर्धा राजेति वा' (बृ. उ. 4-1-2) अतीत्य तिष्ठतीत्यतिष्ठाः । अत्र 'आतो मनिन्' इत्यादिना 'विच्'प्रत्ययः । 'अतिष्ठाः सर्वेषां भूतानां मूर्धा भवति' (कौ. उ. 4-7) सर्वमपि कार्यमतिक्रम्य तिष्ठतीत्यतिष्ठाः । (रं. भा.) सर्वातिशायितयेति भावः ।

**अतिसूक्ष्मचिदचिच्छरीरकं ब्रह्म** — नामरूपविभागानर्हचेतनाचेतनशरीरकं प्रलयावस्थं ब्रह्म ।

['सदेव सोम्येदमग्र आसीदेकमेव' इति एकत्वावधारणादिना — प्रलयकाले चिदचितोरभावात् इदमयुक्तमित्यत्राह ।]

अविभागापत्तिदशायामपि चिदचिद्वस्तु अतिसूक्ष्मं सकर्मसंस्कारं तिष्ठति इत्युत्तरत्र वक्ष्यते — 'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' इति ।

स्वस्माद्विभागव्यपदेशानर्हतया परमात्मनैकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरादेकस्मादेवाद्वितीयात् निरतिशयानन्दात् सर्वज्ञात् सत्यसङ्कल्पात् ब्रह्मणः नामरूपविभागार्हस्थूलचिदचिद्वस्तुशरीरतया बहुभवनसङ्कल्पपूर्वको जगदाकारेण परिणामः श्रूयते, 'सत्यं ज्ञानमनन्तं ब्रह्म . . . . . ', 'सोऽकामयत बहुस्यां, प्रजायेय', 'तत्सृष्ट्वा तदेवानुप्राविशत् ; तदनु प्रविश्य सच्च त्यच्चाभवत्' इति । (श्री. भा. 1-4-27)

'सूक्ष्माण्येकादशाक्षाणि' इत्यादौ व्यवह्रियमाणसूक्ष्मत्वापेक्षया इदञ्चात्यन्तविलक्षणमित्यभिप्रायेण अतिसूक्ष्मेत्यभापि । एवञ्च प्रलयेऽपि चिदचितोः अतिसूक्ष्मतया स्थितिरुपपन्नैव ॥

**अतिसृजते** — अनुजानाति ।

'तं यः प्रत्याह, तमतिसृजते' (कौ. उ. 1-12) चन्द्रः स्वप्रश्नस्य यः सदुत्तरं प्रयच्छति तमतिसृजते भगवल्लोकगमनाय अनुजानाति ॥ (रं. भा.)

**अतिसृष्टिः** — अतिशयिता सृष्टिः ।

'सैषा ब्रह्मणोऽतिसृष्टिः' (बृ. उ. 3-4-6) यस्मात् श्रेयसः श्रेष्ठान् ऊर्ध्वरेतसः सनकसनन्दनादीन् देवानसृजत, सैषा ब्रह्मणः अतिसृष्टिः – अतिशयिता सृष्टिः ॥ (रं. भा.)

**अतीतसर्वावरणः** — परमात्मा ।

'अतीतसर्वावरणोऽखिलात्मा' (वि. पु. 6-5-83) आवरणं – प्रकृतिसम्बन्धकर्मवासनादिकम् । तत्सर्वमतीतं येन, स इत्यर्थः । यद्वा सर्वविषयज्ञानावरणम् – सर्वावरणम्, सर्वविषयज्ञानसङ्कोचमतीत इत्यर्थः । ज्ञानशक्त्यादिसर्वगुणसङ्कोचकातीत इति वा अर्थः ॥ (श्रु. प्र. 1-211)

**अतीतस्यापि व्यावर्तकता** — अतत्कालवर्तिनोऽपि मिथो भेदधीजनकता ।

मिथो व्यावर्तकत्वं तत्कालवर्तिनैव धर्मेणेति न नियमः; अतत्कालवर्तिनापि तन्निष्ठतयोपलभ्यमानेन तत् सिद्धेः । (न्य. प. 307) 'कुरुणा ह्यतीतेन व्यावर्त्यं कुरुक्षेत्रमित्युच्यते' इति ॥ (टि.)

**अतीन्द्रः** — (स. ना. 159) इन्द्रानुजत्वेऽपि ऐश्वर्येणापदानेन तमतिक्रान्तः । (वि. स. भा.)

इन्द्रानुजत्वेऽप्यविदितविभवतया अतिक्रान्त इन्द्रमिति । (वि. स. निर्व.)
'इन्द्रानुजत्वेऽप्यैश्वर्यादतीतोऽतीन्द्र उच्यते' (वि. स. नि.)

**अतीन्द्रियः** — (स. ना. 171) ज्ञानोपकरणान्यतिक्रान्तः । (वि. स. भा.)
अतिक्रान्तः इन्द्रियाणि ज्ञानोपकरणानि तदविषयतयेति । (वि. स. निर्व)
'ज्ञानोपकरणव्रातमतिक्रान्तो ह्यतीन्द्रियः' (वि. स. नि.)

**अतीन्द्रियग्राह्यः** — शास्त्रग्राह्यः ।
इन्द्रियमतीत्य वर्तमानेन शास्त्रेणैव ग्राह्यः ॥ (वि. को)
इन्द्रियागोचरवस्तुग्राहकत्वात् अतीन्द्रियपदं शास्त्रपरमिति भावः ॥

**अतीन्द्रियम्** — 1. दिव्यम् ।
'सोप्यतीन्द्रियमालोक्य तयोः कर्म' (वि. पु. 5-21-25)
2. प्रत्यक्षाद्यगोचरम् ॥ (वि. को)

**अतीन्द्रियत्वम्** —
इन्द्रियजन्यलौकिकप्रत्यक्षाविषयत्वम् ॥ (न्या. को)

**अतीपानम्** — शास्त्रनिषिद्धपानम् ।
'अत्याशनादतीपानात् यच्च उग्रात् प्रतिग्रहात्' (तै. ना. उ. 39)
अतीपानमिति छान्दसत्वात् दीर्घः ॥

**अतुलः** — (स. ना. 357) अनुपमः । (वि. स. भा)
अप्रतिमतया नास्ति तुला उपमा अस्येति । (वि. स. निर्व)
गरुडध्वजवत्वाद्धि अतुलोऽनुपमस्स्मृतः ॥ (वि. स. नि)

**अतृणादः** — तृणभक्षणासमर्थः वत्सः ।
'अथ वत्सं जातमाहुरतृणादः' (बृ. उ. 3-5-2) पयसः पथ्यन्नत्वादेव जात मात्रं वत्सं अतृणाद इति पयोमात्राहार इत्याहुः इत्यर्थः । तथा च यवग्री.हेतृणाद्यदना-

योग्यकालेऽपि पयस एव पशुभिः आह्रियमाणत्वात् पयः पश्वन्नमिति युक्तमिति भावः ।।
(रं. भा)

**अतेजस्कम्** — मनोऽधीनप्रकाशरहितं ब्रह्म ।

'अतेजस्कमचक्षुष्कम्' (सु. उ. 3) अत्र चक्षुरादीन्द्रियाधीनव्यापारराहित्योक्तेः-तत्समभिव्याहारेण, तेजःपदमपि मनोऽधीनप्रकाशपरमिति भावः ॥

**अतेजोमयः** — शारीरो जीवः ।

'स वा अयमात्मा ब्रह्म विज्ञानमयः मनोमयः प्राणमयः अतेजोमयः' (बृ. उ. 6-4-5) तेजोव्यतिरिक्तपूर्वोक्तमनोमयाद्यतिरिक्तमहदहङ्कारादिमयः । तदुपकरणकः इत्यर्थः । चतुर्विंशतितत्त्वमयत्वात् शरीरस्य इतरदनुक्तं सर्वं च अतेजोमयशब्दसंगृहीतमिति द्रष्टव्यम् । (रं. भा)

तेजोव्यतिरिक्तम् ; तथा तदन्यत् यत्पूर्वोक्तं तद्व्यतिरिक्तं च यत् तन्मयः इत्यर्थः ; तच्च महदादि ।। (टि)

**अतोनन्तेन तथा हि लिङ्गम्** — (ब्र. स. 3-2-25) (उभयलिङ्गाधिकरणे पञ्चदशतमसूत्रम् ।

'उभयलिङ्गं सर्वत्र हि' इत्यादिना उक्तैः हेतुभिः अनन्तेन कल्याणगुणगणेन योगः ब्रह्मणः सिद्धः । तथा सति उभयलिङ्गमेव ब्रह्म ।

ये तु उभयलिङ्गत्वं पूर्वपक्षीकुर्वन्ति तन्मते इदं सूत्रं न घटते । उभयलिङ्गत्वसमर्थनेनोपसंहारात् ।

'न स्थानतोऽपि परस्योभयलिङ्गम्' इत्यत्रोक्तं उभयलिङ्गमेवात्रत्यलिङ्गपदेन उच्यते – यथा भीमसेनः भीमः, सेनः इति पदेनैव बोध्यते । अत एवोक्तं वार्तिककैः – 'विनापि प्रत्ययं पूर्वोत्तरपदयोः लोपो वा वाच्यः' इति ।

अभेदस्य स्वाभाविकत्वात् भेदस्यादिधकत्वात् अनन्तेन प्राज्ञेन एकतां गच्छति जीवः, तथा हि 'ब्रह्मैव भवति' इति लिङ्गमिति व्याख्यानमपि न चारुतरम् , यतः पूर्वसूत्राणां परोक्तार्थपरत्वानुपपत्तिः । अत एव 'अतोऽनन्तेन' इति सूत्रञ्च न ब्रह्मणो जीवैक्यापत्तिविषयम् ।

किञ्च लिङ्गशब्दस्य श्रुतिवाचित्वं चायुक्तम् । 'प्रत्यक्षानुमानाभ्यां' इति श्रुतेः प्रत्यक्षशब्दनिर्दिष्टत्वात् लिङ्गशब्दस्य चिह्नपर्यायत्वाच्च । अतोऽत्रलिङ्गपदं उभयलिङ्गपरं 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यनेनोपक्रान्तं निर्दोषत्वकल्याणगुणाकरत्व-रूपं उभयलिङ्गमेवात्र लिङ्गपदेनोपसंहृतमित्येव स्वरसम् ।

अतोऽनन्तेन कल्याणगुणजातेन योगतः ।
परस्य स्वप्रकाशस्योभयलिङ्गं समञ्जसम् ॥

(ब्र. प. मा. 339)

**अतोऽन्यापि ह्येकेषामुभयोः** — (ब्र. सू. 4-1-17) अग्निहोत्राद्यधिकरणे द्वितीयं सूत्रम् ।

अतः अग्निहोत्रादिसाधुकृत्यायाः विद्योत्पत्यर्थायाः; अन्यापि विद्याधिगमात् पूर्वोत्तरयोः पुण्यकर्मणोः उभयोश्च कारीर्यादिका, वृष्ट्यन्नाद्यर्थतया विदुषानुष्ठिता, विद्योत्पत्तेः पूर्वं कृतानादिकालप्रवृत्ता च प्रबलकर्मान्तरप्रतिबद्धफला साधुकृत्याऽस्ति हि । अत एकेषां शाखिनां 'सुहृदः साधुकृत्यां' इति वचनं तद्विषयम्; विद्ययाऽश्लेविनाश-श्रुतिश्च तद्विषया ।

भुक्तं भुज्यमानं भोक्ष्यमाणं प्रतिबद्धफलं चेति विविधं कर्म । तत्र पूर्वं पश्चाच्च वृष्ट्यन्नादिहेतोः कृतं प्रतिबद्धफलं कर्मास्ति । तद्विषया 'सुहृदः साधुकृत्या'मिति श्रुतिः अश्लेषविनाशश्रुतिश्चेति ।

यदि अग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था, विद्योत्पत्तेः प्राचीनञ्च सुकृतम् । 'यावत्संपातमुषित्वा', 'प्राप्यान्तं कर्मणः' इत्यनुभवेन विनष्टम्, भुक्तशिष्टञ्च प्रारब्ध-फलं; 'सुहृदः साधुकृत्यां' इत्यस्य को विषय इति शङ्का दूरीकृता ।

साधुकृत्यां सुहृद इत्युभयोः पुण्यकर्मणोः ।
अन्यापि प्रतिबद्धा च साधुकृत्या भवेदिति ॥

(ब्र. प. मा. 486)

**अत्ता** — संहर्ता ।

अनुभविता ॥ (वि. को)

**अत्ता चराचरग्रहणात्** — (ब्र. सू. 1-2-9) (अत्रधिकरणे प्रथमसूत्रम्)

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' इत्यत्र यच्छब्दार्थः ब्रह्मक्षत्रोदनस्य अत्ता – संहर्ता परमात्मा, ब्रह्मक्षत्रशब्देन चराचरस्य कृत्स्नस्य जगतो ग्रहणात्। मृत्यूपसेचनो ह्योदनो न ब्रह्मक्षत्रमात्रम्; अपि तु तदुपलक्षितं चराचरात्मकं कृत्स्नं जगदेव।

कठवल्लीष्वाम्नाते 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति वाक्ये 'यस्य' इति षष्ठीनिर्दिष्टः सम्बन्धः ओदनोपसेचनसामर्थ्यात् अदनीयात्तृभावलक्षणविशेषपर्यवसितः। तस्मादत्ता सूचितः।

अत्र ओदनोपसेचनसूचितोऽत्ता किं जीवः, उत परमात्मेति संशयः। जीवः इति पूर्वपक्षः। कुतः भोक्तृत्वस्य कर्मनिमित्तत्वात् जीवस्यैव तत्सम्भवात्। राद्धान्तस्तु – सर्वोपसंहारे मृत्यूपसेचनमदनीयं चराचरात्मकं कृत्स्नं जगदिति तस्यैतस्य अत्ता परमात्मैव। न चेदं कर्मनिमित्तं भोक्तृत्वं, अपि तु जगत्सृष्टिस्थितिलयलीलस्य परमात्मनो जगदुपसंहारित्वरूपं भोक्तृत्वम्।

अनन्तरं 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ' इति च नान्तःकरणजीवौ, बुद्धिजीवौ वा, किन्तु जीवपरमात्मानावेव इति प्रतिपादयतीति अनन्तरं सूत्रैः स्थाप्यते।

सूचितोऽत्ता तु संहर्ता परमात्मेति निश्चयः।
मृत्यूपसेचनं ब्रह्मक्षत्रान्नं हि जगद्भवेत्॥

(ब्र. प. मा. 41)

**अत्तृविद्या** — अत्रधिकरणे तु साधिता।

'सत्यत्वादिस्वरूपनिरूपकधर्मैस्साकं जगत्संहर्तृत्वादिगुणविशिष्टतया' ब्रह्मणः उपासनम्। इयं कठवल्लीषु 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इत्यादिवाक्यैः निरूप्यमाणम्॥

**अत्यन्तभेदः** — शरीरतया आत्मनिष्ठत्वमप्यसहमानो भेदः।

जीवब्रह्मणोः प्रकारप्रकारिभावरहितः भेदः। (श्रु. प्र. 1, भा. 2-63) जीवपरयोः केवलभेदवादिनः वैशेषिकादयः। जीवब्रह्मणोः प्रकारप्रकारिभावानभ्युपगमेन तन्मते अत्यन्तभेद एव। सिद्धान्ते तु भेदसद्भावेऽपि, नियतप्रकारप्रकारिभावः 'अहं

ब्रह्मास्मि' इति व्यपदेशप्रयोजकः स्वीकृत इति, भेदश्रुति-घटकश्रुत्यविरोधार्थं तत्त्वमसीत्यादिवाक्यसामानाधिकरण्यं शरीरशरीरिभावेनोपपादितम् ।]

अभेदासामानाधिकरणभेदः ऐक्यप्रतिभटस्वभावः ।। (वि. को)

**अत्यन्तमहती** — द्वादशीप्रभेदः ।

श्रवणद्वादशीयोगे बुधवारो भवेद्यदि ।
अत्यन्तमहती नाम द्वादशी सा प्रकीर्तिता ॥

(न्या. को)

[द्वादशीव्रतमनुतिष्ठमानैः वेदन्तिभिरपि ज्ञातव्या ।]

**अत्यन्तवेगिता** — बुद्धिगतो धर्मः ।

'अत्यन्तवेगिताऽत्यन्तसौक्ष्म्यं निर्भरता तथा'
स्वसत्ताकालभाव्याप्तिर्ज्ञाने लक्ष्मचतुष्टयम् ॥

इति न्यायतत्त्वे प्रथमाधिकरणे ॥ (न्या. सि. 257)

[बुद्धेः] अत्यन्तवेगिता नाम यद्वशात् मुक्तिकाले धीसंकोचककर्मापगममात्रेण सकलब्रह्माण्डवर्तिपदार्थसंयोगः ॥ (टी)

**अत्यन्तसौक्ष्म्यम्** — अतिसूक्ष्मता बुद्धेः ।

'अत्यन्तवेगिताऽत्यन्तसौक्ष्म्यं निर्भरता तथा ।
स्वसत्ताकालभाव्याप्तिर्ज्ञाने लक्ष्मचतुष्टयम् ॥'

इति न्यायतत्त्वे प्रथमाधिकरणे । (न्या. सि. 257)

यद्वशात् मुक्तौ सर्वव्यापनशीलायाः बुद्धेः संसारदशायां मशकदेशान्तर्मितत्वेऽपि न बुद्ध्यवयवानां परस्परप्रतिघातः, तत् ॥ (टी)

**अत्यन्तातीन्द्रियाणि** — नित्यानुमेयानि प्रकृत्यादीनि । (इदं सांख्यमतम्)

सुखदुःखमोहात्मकानि लाघवप्रकाशचलनोपष्टम्भनगौरवावरणकार्याणि अत्यन्तातीन्द्रियाणि कार्यैकनिरूपणविवेकानि अन्यूनानतिरेकाणि, समतामुपेतानि सत्वरजस्तमांसि द्रव्याणि मूलप्रकृतिरित्युच्यते । (श्री. भा. 2-2-1)

एकस्यैव वस्तुनः देशकालावस्थावैगुण्येनातीन्द्रियत्वं भवेदपि तद्व्यावृत्तयेऽत्यन्त-पदम्। सिद्धान्ते तु नित्यानुमेयत्वं नाङ्गीक्रियते श्रुतिसिद्धत्वात्। सत्त्वरजस्तमसां द्रव्यत्वं च नेष्यते। तेषां गुणत्वेनैव प्रसिद्धेः॥

**अत्यन्ताभावः** — अभावेष्वन्यतमः।

यथा अत्र घटो नास्तीति व्यधिकरणनिषेधः -- वस्त्वन्तरगतासाधारणविरोधिधर्म एव। (ता. चं. 2-27)

अत्यन्ताभावान्योन्याभावौ तु धर्म्यन्तरस्वरूपावेव। एतस्य प्रत्यक्षे अन्तर्भावः॥ (य. दी. 52)

अत्यन्तः – 1. अन्तमवधिं अतिक्रान्तो नित्योऽभाव इति व्युत्पत्तिः। अन्तं स्वप्रतियोगिनिष्ठाभावप्रतियोगित्वमतिक्रान्तोऽत्यन्तस्स चासावभावश्च इति विग्रहः। यद्वस्तु यत्र न कदापि भविष्यति न च कदाचिद्भूतं तस्य वस्तुनस्तत्रात्यन्ताभावो मन्तव्यः। यथा वायौ रूपं नास्तीति प्रतीतिसाक्षिकोऽभावः। 2. त्रैकालिकसंसर्गावच्छिन्न-प्रतियोगिताकोऽभावः। 3. त्रैकालिकसंसर्गाभावः। 4. नास्तीत्यनुभवसिद्धो नित्यः संसर्गाभावः। 5. प्रतियोग्याश्रयोऽभावोत्यन्ताभावः।

अत्यन्ताभावो द्विविधः। एकपर्याप्तधर्मावच्छिन्नप्रतियोगिताकः। अनेक-पर्याप्तधर्मावच्छिन्नप्रतियोगिताकः। आद्यो धर्मः घटत्वादिः। द्वितीय उभयत्वादिः अयमेव व्यासज्यवृत्तिरित्युच्यते॥ (न्या. को.)

**अत्यन्तायोगव्यवच्छेदः** — एवकारार्थेष्वन्यतमः। अत्यन्तासम्बन्धव्यावृत्तिपर इति यावत्।

अयोग-अन्ययोग-अत्यन्तायोगव्यवच्छेदाः एवकारार्थाः। नीलं सरोजं भवत्येव इत्यादौ तु क्रियासङ्गतैवकारः अत्यन्तायोगव्यवच्छेदपर एवेति सरोजे नीलात्यन्ताभावः व्यावर्त्यते॥

**अत्यर्कानलदीप्तम्** — परमपदम्।

1. अर्केणानलेन च दीप्तं लोकमतिक्रम्य वर्तमानम्।

2. अर्कमनलं चातीत्य दीप्तं परमपदम्॥ (सं. अ)

**अत्यर्थप्रियः** — वाचामगोचरप्रीतिविषयः भगवान्।

'प्रियो हि ज्ञानिनोऽत्यर्थं अहं स च मम प्रियः' (गी. 7-17)

अत्र अर्थशब्दः अभिधेयवचनः । ज्ञानिनोऽहं यथा प्रियः तथा मया सर्वज्ञेन सर्वशक्तिनापि अभिधातुं न शक्यते इत्यर्थः । प्रियत्वस्य इयत्तारहितत्वात् । (गी. भा)

अतिशयकाष्ठां वक्तुमाह, अर्थशब्दः अभिधेयवचनः इति । अत्यर्थं–अत्यभिधेयम्, अभिधेयातिक्रमणं च अत्र अभिधेयान्तराद्वैलक्षण्यम् । तच्च अभिधातुमशक्यतेत्यभिप्रायेणाह–'ज्ञानिनोऽहमिति' । अभिधातुमशक्यं इत्यस्य ईश्वरवचनत्वात् तेनाप्यशक्यं इति फलितं इत्यभिप्रायेणोक्तं 'मया' इत्यादि ।

ननु सर्वज्ञेन यदज्ञातं तदसदेव स्यात् ; यत्र चासौ अशक्तः तत्र चास्य अनीश्वरत्वं स्यात् इत्यत्राह – प्रियत्वस्येति । गगनकुसुमादिवत् असत्वनिबन्धनम् अज्ञानं न दोषाय । अन्यथा भ्रान्तत्वप्रसङ्गात् । इयत्तायाः अभावादेव तद्वाचकः शब्दोऽपि नास्तीति तदप्रयोगोऽपि न अशक्तिहेतुः इति भावः । (ता. चं.)

अत्यर्थं–अतिक्रान्ताभिधेयं, प्रियत्वं वाचामगोचरं इत्यर्थः । (श्रु. प्र. 160)

अत्यर्थं–अर्थमतिक्रम्य इत्युक्तौ वस्तुनि यावत्प्रियत्वं युक्तं तावतोऽधिकं प्रियत्वं इत्यर्थः स्यात् । स न युक्तः । संभावितसर्वप्रकारप्रियत्वस्याऽपि अनवधिकानन्दे ब्रह्मणि अपर्याप्तत्वात् । अतोऽर्थशब्दप्रवृत्तिनिमित्ताभिधेयतातिक्रमपर्यवसानाय आह–अतिक्रान्ताभिधेयमिति ।। (टि.)

**अत्यर्थप्रिया** — निरतिशयप्रीतिरूपा स्मृतिः । साक्षात्काररूपा स्मृतिः ।

[दर्शनसमानाकारा] स्मर्यमाणात्यर्थप्रियत्वेन स्वयमपि अत्यर्थप्रिया यस्य ।
(श्री. भा. 1-60)

अर्थेनैव विशेषो हि निराकारतया धियामिति भावः । अनुभूयमानोऽनुभवः इतिवदयं निर्देशः औपचारिकः ; अत्यर्थप्रीतिरूपेत्यर्थः । अत्यर्थानुकूलरूपा–स्मर्यमाणस्य भगवद्विषयस्य निरवधिकनिरुपाधिकानुकूलत्वेन तद्विषयानुस्मृतिरपि हि निरतिशयानुकूला भवति ।

यद्वा ध्रुवानुस्मृतिः स्वयमप्यत्यन्तानुकूलत्वात् अयुक्तावस्थायामपि प्रीतिरूपज्ञानेन प्रतिसन्धीयत इति प्रिया । अत एव हि 'या प्रीतिरविवेकानां' इत्यादिना सा प्रार्थ्यते॥
(श्रु. प्र. 1-61)

**अत्यर्थमत्प्रियत्वम्** — निरतिशयभक्तिमत्त्वम् ।

मत्प्राप्त्यनुगुणोपासनविपाकं तद्विरोधिनिरसनमत्यर्थमत्प्रियत्वादिकं चाहमेव ददामि ॥
(गी. भा 8-14)

**अत्यागिनः** — कर्तृत्वममताफलत्यागरहिताः ।

अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्यासिनां क्वचित् ॥
(गी. 18-12)

'अहं करोमी'ति कर्तृत्वस्य 'ममेदं कर्मे'ति ममतायाः, 'ममेदं फलमि'ति फलस्य च त्यागः । तादृशत्यागरहिताः ॥

**अत्याशनम्** — शास्त्रनिषिद्धाशनम् ।

'अत्याशनादतीपानात् यच्च उग्रात् प्रतिग्रहात्' (तै. ना. उ. 39)

**अत्याश्रमी** — 1. मोक्षाश्रमी ।

'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच' (श्वे. उ. 6-21) 'अतिः पूजायां' पूजाश्रमयुक्तेभ्यः परमहंससन्न्यासिभ्या । (रं. भा.) अत्याश्रमीत्यस्य अतिशयिताश्रमशाली इत्यर्थः । 'अनाश्रमी न तिष्ठेत्तु (दिनमेकं) क्षणमेकमपि द्विजः' इति अनाश्रमावस्थानस्य निषिद्धतया तादृशानामुत्तमपात्रतया ग्रहणायोगादित्याशयेन अतिः पूजायामित्युक्तम् । (टि.) अनेनातिक्रान्ताश्रमग्रहणं व्यावर्तितम् ॥

2. अतिशयित आश्रमी ।

'योगं त्वत्याश्रमिभ्यः परममितिवचो वक्ति मोक्षाश्रमेण' (त. मु. 106) अत्र अतिशयिताश्रमयोगो विवक्षितः । अन्यथा मत्वर्थीयवैयर्थ्यात् इति भावः । (स. सि)

'मोहात्तस्य परित्यागः तामसः परिकीर्तितः'

इत्युक्तेः वर्णाश्रमपरित्यागः शास्त्रनिषिद्ध एव । अतः उत्कृष्ट आश्रम एव अत्र विवक्षितः न तु वर्णाश्रमत्यागः । अतिशयित आश्रमः मोक्षाश्रमः, तद्वद्भ्यः । 'आश्रममतिक्रान्तेभ्यः' इति व्युत्पत्त्या, वर्णाश्रमरहितानामेव वेदान्तश्रवणेऽधिकार इति व्याख्याने 'अत्याश्रमेभ्यः' इत्येव स्यादिति भावः ॥

**अत्रम्** — प्राणः ।

न त्रायते अन्येन केनचित् ।। (वि. को.)

**अत्रधिकरणम्** — (अधि. सं. 1-2-2)

१) अत्ता चराचरग्रहणात् ।

(२ प्रकरणाच्च ।

३) गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ।

४) विशेषणाच्च ।

इति सूत्रचतुष्टयात्मकं, अत्तृपदोपक्रान्तं इदम् । 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः' इत्यादिवाक्ये कर्मनिमित्तभोक्तृत्वश्रवणात् अत्ता जीव एवेत्याशङ्कय मृत्यूपसेचनत्वसामर्थ्यसिद्धचरचरादनस्य जगदुपसंहाररूपत्वात् तस्य च परमात्मासाधारणत्वात् अत्ता परमात्मेत्युक्तम् ।

अत्ता तु जीवो न परः स्वतन्त्रः स एव यत्कर्मफलोपभोगी ।

इत्यप्यसत् तद्धि चराचरस्य मृत्यूपसेकात् अदनं त्वपीतिः ।।

(न्या. क. सि. 1-22)

**अत्र ब्रह्म समश्नुते** — अत्रैव–उपासनवेलायां, ब्रह्मानुभवति ।

उपासनवेलायां यो ब्रह्मानुभवः तद्विषयमिदं 'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' (क. उ. 6-14, बृ. उ. 6-4-7) इति वाक्यम् ।

'समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य' इत्यत्र भाष्यम् – 'अनुपोष्य – शरीरेन्द्रियादिसम्बन्धमदग्ध्वैव यत् अमृतत्वं उत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते, तदुच्यते, 'यदा सर्वे प्रमुच्यन्ते' इत्यादिकया श्रुत्येत्यर्थः । 'अत्र ब्रह्म समश्नुते' इति च उपासनवेलायां यो ब्रह्मानुभवः तद्विषयमित्यभिप्रायः' (रं. भा.) । पापसंबन्धराहित्येन, ब्रह्मानुभवेन चेहैव मुक्त इव भवतीति यावत् । (रं. भा. बृ. उ.)

जीवन्मुक्तेः देहसंबन्धकाल एव उपासनाबलात् जातपुण्यपापरूपाश्लेषविनाशरूपत्वेन मुक्तिसाम्यमादाय तथोक्तिरित्यंगीकारात्, अत्र–उपासनावेलायां, ब्रह्माश्नुते –ब्रह्मानुभवं लभते इत्यर्थः । न तु अत्र–अस्मिन् लोके ब्रह्माश्नुते–प्राप्नोतीति ॥

**अत्राभिधीयते**—अस्मिन् पूर्वपक्षे सूत्रकारैः परिहारोऽभिधीयते इत्यर्थः। (श्रु. प्र. 1-भा. 2-88) अस्मिन् प्रकरणे अस्माभिरभिधीयते इत्यर्थवारणायेदं विवरणम्।

**अत्रेदं तत्त्वम्**—श्रुतिस्मृतीतिहासाद्यविरुद्धार्थगवेषणायां, श्रुत्यादिष्विति वा। इदं यथा-प्रमाणं वक्ष्यमाणं – प्रामाणिकमित्यर्थः॥ (ता. चं. 13-3)

**अत्रैवर्णिकानां उपासनानधिकारः**—वेदार्थज्ञानोपायाभावात् शूद्रादीनां अनधिकारः।

कथं तर्हि ऐतिहासिकानि पौराणिकानि च भगवत्स्तोत्राणि शूद्रैः पठ्यन्ते? इत्थम्। केवलसङ्कीर्तनत्वेन तेषां पाठो न पुनर्वेदान्तोपबृंहणत्वेनेति विभागो बोध्यः। (चिं- म.) तदुक्तम्–

विद्यास्थानानि शूद्रैर्मुरभिदकथयत् पाण्डवाय द्विसप्ता-
प्यस्प्रष्टव्यानि तस्मान्न हि विकलधियां स्यादुपासाधिकारः॥

(अ. सा. 126)

ननु शूद्रादिनामपि परभजनं 'ब्राह्मणैः क्षत्रियैर्वैश्यैः' इत्यादिना 'मां हि पार्थ व्यपाश्रित्य' इत्यादिना चोक्तम्। तत्कथमुपपद्यते इति चेत्, तदनुष्ठानं स्वजात्यनुरूप-धर्मानुष्ठानेन मालाकरण-दीपारोपण-प्रदक्षिणनमस्कारोपलेपनादिमात्रेणेति न विरोधः। तर्हि धर्मव्याधादीनां ब्रह्मविद्यानुष्ठानं कथमिति न शङ्कनीयम्। 'धर्मव्याधस्तुलाधारो विदुर इत्येवमादयस्तु महानुभावाः, पूर्वजन्माभ्याससंसिद्धाः; न पुनरेतस्मिन्नेव जन्मनि वेदाभ्यासादिजनितज्ञानवन्त इति तत्रापि न विरोधः। (चिं. म. 127)

'विद्यारम्भदशायामेव त्रैवर्णिकजन्मापेक्षितं न त्वनुवृत्तभवान्तराधिगतविद्यास्मृतेः तदभ्यासे' इति तात्पर्यचन्द्रिकायामनुगृहीतं इह स्मर्तव्यमिति भावः। (प. यो) संवर्गविद्यायां शूद्रेत्यामन्त्रणं शोकाविष्टतया शोचनाद् शूद्रः इति निरुक्तेन च जान-श्रुतौ क्षत्रिये प्रयुज्यते, न पुनः शूद्रजातित्वेन इति न कोऽपि दोषः। अयञ्चाप-शूद्राधिकरणन्यायसिद्धो विषयः।

**अत्र्यार्षेयः**—त्र्यार्षेयभिन्नः।

त्रीणि आर्षेयाणि यस्य सः त्र्यार्षेयः। तथा यो न भवति एकार्षेयो वा द्व्यार्षेयो वा पञ्चार्षेयो वा; सः अत्र्यार्षेयः। तस्य यज्ञाधिकारो नास्तीति जैमिनिमतम्। तस्या-प्यस्ति इति इतरेषां ऋषीणां मतम्॥ (मी. को)

ननु देवानां त्र्यार्षेयत्वाद्यभावात् कर्मानधिकारात् कर्माङ्गकब्रह्मविद्यायामधिकारो न स्यादिति चेत्; मनुष्यकर्तृकब्रह्मविद्यायामेव तन्नियमात्, देवादिकर्तृकेषु तन्नियमावात्। मा स्तु यज्ञाद्यङ्गकत्वं देवाद्यनुष्ठितब्रह्मविद्याया इति तु न शङ्क्यम्; 'देवा वै सत्रमासत' इत्यादौ देवानामपि यज्ञानुष्ठानश्रवणात्। अतः देवानां त्र्यार्षेयत्वाद्यभावेऽपि कर्मसु, तदङ्गकब्रह्मविद्यायां चास्त्येवाधिकारः॥

अथ — 1. कर्मविचारानन्तरम्। 'अथातो ब्रह्मजिज्ञासा' (ब्र. सू. 1.1.1)

'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ'

इत्यमरः। अत्रायमथशब्दः आनन्तर्ये भवति इति (श्री. भा. 1-1-1) आनन्तर्यातिरिक्तस्यार्थस्य प्रकृतेऽनन्वयं दर्शयति। श्री. भा. टि. 1-10)

[अनेन समभिव्याहृतोभयपदस्वारस्यं स्वस्वारस्यञ्च सूचितम्। वेदस्य भागद्वयात्मकत्वात् उत्तरभागविचाररूपब्रह्ममीमांसारम्भसूत्रघटकोऽथशब्दः कर्मविचारानन्तर्यबोधक इति भावः।]

अथशब्दस्यानन्तर्ये प्रसिद्धिः प्रकृष्टापि सोपयोगासाधारणवृत्तविशेषादृष्ट्याऽपोदिता। अत एव न प्रकृतादर्थान्तरपरत्वं, कल्पद्वयादृष्टेश्च। प्रश्नस्त्वनर्थकोऽनुत्तरश्च। कार्त्स्न्यमनपेक्षितवचनम्; एकदेशचिन्ता हि न शङ्कारूढा। तस्मादारम्भार्थकत्वं स्यात्। आरभते ह्यत्र सूत्रकारः। मङ्गलार्थकत्वं वा। स्मर्यते हि —

'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥'

इति। तत्राह—अत्र इति। भवतिना अथशब्दस्य स्वारस्यानूक्तिः। अत्रायम्पदाभ्यां अपवादापोहः। अत्र—वेदोत्तरांशविचार्यत्वार्थे सूत्रे। तेन यतः कुतश्चिद्वा भागान्तरसाधारणाद्वा कुतश्चिदानन्तर्योक्तेः आनर्थक्यात् कर्मविचाररूपं वृत्तं विविनक्ति। अयं 'अथातो धर्मजिज्ञासा' 'अथातः क्रत्वर्थपुरुषार्थजिज्ञासा' इत्यादिष्विवातश्शब्दोपेतः। एतच्छब्दो हि प्रस्तुते स्वरसः। विभक्तिश्चासौ हेतुत्वे। एवं सामान्यतः अत इत्यभिहिते ब्रह्मजिज्ञासया विशेषतः आक्षिप्ते वृत्ते सति आनन्तर्यस्वारस्यं नापोद्यते। अथात इति समुदितप्रयोगनिरपेक्षसामर्थ्यव्यक्त्यर्थः 'अत्रायं शब्द' इति केचित्। (त. टी. 18)

[ऐकशास्त्र्यवादिनां देवताविचारानन्तरमिति न 'अथ'शब्दार्थः । चतुर्लक्षण्यात्मको देवताकाण्डस्तु कर्मशेषभूत एवेति तस्यापि कर्मविचारात्मकत्वादेव कर्मविचारानन्तरमित्युक्तेः सौष्ठवं बोध्यम् ।]

2. 'अथ केन प्रयुक्तोयं पापं चरति पूरुषः' (गी. 3-36)

अत्र प्रश्नार्थकः कात्स्न्र्यपरो वा अथशब्दः ।। (ता. चं.)

अथशब्दार्थानन्तर्यभेदाः—

'अथातो ब्रह्मजिज्ञासे'त्यत्र अथशब्दस्य आनन्तर्यार्थकत्वे–

1. साधनचतुष्टयं पूर्ववृत्तमिति भास्करभाष्यम् ।

2. तापत्रयाभिहतिः पूर्ववृत्तमिति यादवप्रकाशभाष्यम् ।

3. कर्मविचारः पूर्ववृत्तमिति भास्करभाष्यम् ।

4. देवादिभ्योऽनृणीभावः प्रज्ञापरिपाककषायश्चेत्यन्ये इति भास्करभाष्योल्लिखितं मतान्तरम् ।

तथा पञ्चपादिकायां तृतीयवर्णकेऽनूदितं कर्मणामधिकारपरम्परया शब्दतो वा संस्कारतया वा यथाविभागं तादर्थ्यावगमात् निश्रेयसप्रयोजनत्वाच्च आनन्तर्यवचनः अथशब्दः । 'अधिगतादनन्तरं' इति वृत्त्यन्तरवाक्यम् ।

तथा तत्रैवानूदितम् । 'तत्राथातश्शब्दौ प्रथम एव अध्याये प्रथमसूत्रे एव वर्णितौ । अथेति पूर्वप्रकृतां धर्मजिज्ञासामपेक्ष्य अनन्तरं ब्रह्मजिज्ञासाप्रारम्भार्थः । अत इति पूर्वनिर्दिष्टस्यैवार्थस्य हेतुतामाचष्टे ब्रह्मजिज्ञासां प्रति' इत्यपरवृत्तिवाक्यम् ।

'वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति बोधायनापराभिधानोपवर्षाचार्यविरचितपूर्वोत्तरमीमांसाव्याख्यानरूपवृत्तिग्रन्थवाक्यम् । एतत्सर्वमभिसन्धाय बोधायनमतमेवाङ्गीकृतम् (द. उ. 262) । गूढार्थसंग्रहे तु (पु. ८ ख)बोधायनोपवर्षौ भिन्नावेवेति विशदीकृतम् । तथा च सिद्धान्तेऽपि कर्मविचारस्यैव पूर्ववृत्तत्वं संमतम् ॥

अथर्वाङ्गिरसः— अथर्वणा अङ्गिरसा च दृष्टा मन्त्राः ।

'अथर्वाङ्गिरस एव मधुकृतः' (छां. उ. 3-4-1)

**अथातःपदद्वयसार्थक्यम् —**

'अथातो ब्रह्मजिज्ञासा' इत्यत्राथातःपदयोरन्यतरेणालम्; सूत्रं ह्येतत्; मैवम्–प्रयोजनाधिक्यात्; कर्मविचाराव्यवधायकशास्त्रान्तरनैरपेक्ष्यद्योतनार्थत्वात् अथशब्दस्य। ब्रह्मविचारार्थत्वहेतोरन्यलभ्यप्रयोजनत्वेनापातधीस्थस्य विशेषणविशेष्यांशासिद्धिव्युदासार्थत्वादतश्शब्दस्य। (त. टी. 19)

'आनन्तर्येऽप्यहेतुत्वं हेतुत्वेपि विलम्बनम्।
दृष्टमिष्टञ्च तत्सार्थं अथातश्च पदद्वयम्'॥

एतेनायमथशब्दो नानन्तर्यवाचकः, असाधारणवृत्तविशेषशून्यशास्त्रारम्भसूत्रघटकत्वात् सामान्यतः 'अथ शब्दानुशासनम्' इत्यादिसूत्रघटकाथशब्दवत्। ततश्चासाधारणवृत्तिविशेषादर्शनात् प्रसिद्धिप्रकर्षहेतुरसिद्धः इत्याक्षेपे–कर्मविचारो ब्रह्मविचारपूर्ववृत्तः तन्नियतपूर्ववृत्तत्वात्, सामान्यतः कर्मविचारपूर्ववृत्तसाङ्गाध्ययनवत् इति न्यायेन पूर्वपक्षहेतुरसिद्धीकृत इत्यवधेयम्। (द. उ. 293)

अनेन आनन्तर्यहेतुत्वयोरुभयोः सिद्धिः प्रदर्शिता॥

**अथातो ब्रह्मजिज्ञासा —**

कर्मविचारानन्तरं ब्रह्मविचारः आरम्भणीयः। अथेत्यानन्तर्ये। अत इति च वृत्तस्य हेतुभावे। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ज्ञातुमिच्छा जिज्ञासा। इच्छायाः इष्यमाणप्रधानत्वात् इष्यमाणं ज्ञानमिहाभिप्रेतम्। पूर्ववृत्तादल्पास्थिरफलकेवलकर्माधिगमादनन्तरं तत एव हेतोः अनन्तस्थिरफलब्रह्माधिगमः कर्तव्यः इति।

अत्रायमथशब्दः आनन्तर्ये वर्तते; अतश्शब्दशिरस्कत्वात्। अतश्शब्दश्च पूर्ववृत्तस्य हेतुभावे। पूर्ववृत्तं च कर्मज्ञानमिति विज्ञायते; आरिप्सितस्य ब्रह्मज्ञानस्य वेदार्थविचारैकदेशत्वात्।

अधीतवेदस्य हि पुरुषस्य कर्मप्रतिपादनोपक्रमात् वेदानां कर्मविचारः प्रथमं कार्यः अथातो धर्मजिज्ञासेत्युक्तम्। कर्मणां च प्रकृतिविकृतिरूपाणां धर्मार्थकामरूपपुरुषार्थसाधनतानिश्चयः, 'प्रभुत्वादार्त्विज्यम्' इत्यन्तेन सूत्रकलापेन सङ्कर्षणेन कृतः। एवं वेदस्यार्थपरत्वे कर्मणां च तदर्थत्वे तेषां च केवलानां त्रिवर्गफलत्वे निश्चिते सति वेदैकदेशभूतवेदान्तमात्रे केवलकर्मणामल्पास्थिरफलत्वं ब्रह्मज्ञानस्य च अनन्तस्थिरफलत्व-

मापाततो दृष्ट्वा, अनन्तरं मुमुक्षोरवधारितपरिनिष्पन्नवस्तुबोधजननशब्दशक्तेः पुरुषस्य ब्रह्मबुभुत्सा जायत इति—'अथातो ब्रह्मजिज्ञासे'ति कर्मविचारानन्तरं तत एव हेतोः ब्रह्मविचारः कर्तव्य इत्युक्तं भवति ।

विचारात्कर्मणः स्वल्पं फलं ज्ञात्वा मुमुक्षुणा ।
कर्तव्या ब्रह्मजिज्ञासा फलस्यानन्त्यमिच्छता ॥

(ब्र. प. मा.)

एवं सूत्रस्याक्षरयोजना कृता । अथ तात्पर्यार्थः उच्यते । 'सिद्धे व्युत्पत्त्य-सम्भवात्' ब्रह्मविचारो नारम्भणीय इति पूर्वपक्षे, सिद्धे व्युत्पत्तिसम्भवात् आरंभणीय इति । एवं योजनाद्वयं व्याहतमिति पूर्वमीमांसानभिज्ञचोदनम् ।

'अथातो धर्मजिज्ञासा' इत्यत्र अध्ययनानन्तरं, तत एव हेतोः धर्मविचारः कर्तव्यः इत्युक्त्वा भाट्टैः अध्ययनस्य स्वर्गार्थत्वात् न धर्मविचारः इति पूर्वपक्षं कृत्वा अर्थज्ञानार्थत्वात् स कर्तव्य इति सिद्धान्तितम् । तच्च व्याहतं स्यात् । तत्र हि सूत्राक्षराणि योजयित्वा तात्पर्यार्थः उक्तः । अत्राप्यक्षरार्थमुक्त्वा तात्पर्यार्थः उच्यते इत्युपपन्नम् ।

अक्षरयोजनायां ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः कर्मविशेष्यकाल्पास्थिरफल-कत्वनिर्णयविशिष्टानन्तस्थिरफलब्रह्मविशेष्यकापातप्रतीतिः । अनन्तस्थिरफलापातप्रतीतिः नास्ति चेत् अल्पास्थिरफल एव तृप्तः स्यात् ; अल्पास्थिरफलत्वनिर्णयो नास्ति चेत् न निर्वेदः स्यात् इति विशिष्टो हेतुः ।

अत एवोक्तं सारे—प्रकृतपरामर्शिना एतच्छब्देन पूर्ववृत्तसामान्यमभिहितमिति —कर्मविचारानन्तरं कर्मविषयकनिर्णयः अध्ययनमात्रानन्तरकालिकब्रह्मज्ञानविषयकापात-प्रतीतिश्च पूर्ववृत्ते—इति विवेचकानां स्पष्टम् ।

अत्रापातप्रतीतिः सम्भावितप्रामाण्या विवक्षिता । तादृशी हि सा प्रवृत्तिहेतुः । तत्र ब्रह्मज्ञानस्य अनन्तस्थिरफलापातप्रतीतेः प्रामाण्यसम्भावनानुपपन्ना, सिद्धवस्तुनि शब्दस्य बोधकत्वनिश्चयाभावात् इति विशिष्टहेतौ विशेष्यांशासिद्धिमाशङ्क्य, सिद्ध-वस्तुनि व्युत्पत्तिसंभवात् अनन्तस्थिरफलापातप्रतीतिरस्तीति परिह्रियते ।

पूर्ववृत्तसामान्यस्य हेतुत्वपरामर्शिना अतश्शब्देनैव सिद्धेर्व्युत्पत्तिरपि बोधिता। अत्र पूर्वपक्षवादी प्राभाकरः। सूत्रकारैः भविष्यद्दर्शनवेदित्वात्, कैश्चिदनुक्तत्वेऽपि सम्भाव्यमानानां प्रतिकूलपक्षाणां आशङ्क्य निरसनीयत्वाच्च, एवं पूर्वपक्षीकरणं युक्तम्। यद्वा जैमिनिमतं हीदं, 'चोदना लक्षणोऽर्थ एव वेदप्रतिपाद्य' इति। चोदना च क्रियायां प्रवर्तकं वचनं। तमाशङ्क्य सिद्धवस्त्वपि वेदप्रतिपाद्यमिति सूत्रकारैः साधयितुं युज्यते।

ब्रह्मण इति कर्मणि षष्ठी — 'कर्तृकर्मणोः कृति' इति विशेषविधानात्, ब्रह्मणे इति चतुर्थीपरिग्रहे प्रयोजनत्वसिद्धावपि प्रकृतिविकारभावाऽभावे चतुर्थीसमासायोगात् तदपरिग्रहः। 'सप्तमी' इति योगविभागात् ब्रह्मणि जिज्ञासेति समासेऽपि ब्रह्मणो विषयत्वमात्रं स्यात् न तु प्रयोजनत्वमिति सप्तम्यपरिग्रहः। शंकुलया खण्ड इतिवत् तृतीयासमासे विषयत्वप्रयोजनत्वे न सिध्यतः इत्यभिप्रायः। षष्ठ्याः कर्तृकर्म-साधारण्येऽपि जिज्ञासाकर्तृत्वं तापत्रयातुरस्यैव, ब्रह्मणस्तु कर्मत्वमित्यभिप्रायेण कर्मणि षष्ठीत्युक्तम्। तत्स्वीकारे ब्रह्मणो विषयत्वप्रयोजनत्वे सिध्येतामिति भावः।

ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातियासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते — सर्वत्र बृहत्वयोगेन हि ब्रह्मशब्दः। बृहत्वञ्च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः। स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। प्रवृत्तिनिमित्तस्य पुष्कलतया सद्भावात्। अन्यत्र तु औपचारिक एव।

ज्ञातुमिच्छा जिज्ञासा इतीच्छासन्नन्तः जिज्ञासाशब्दः प्रकृत्यर्थस्य विचारात्म-कज्ञानस्य इष्यमाणत्वमवगमयति — 'न ह्ययं स्वार्थिकसन्नन्तमीमांसाशब्दवत् समुदाय-रूढ्या विचारपरः, तद्वदिह स्वार्थे सन्स्वीकारे विशेषविध्यभावात्।

अथ स्यात् इच्छासन्नन्तत्वे कर्तव्यतायाः क्वान्वय इति वक्तव्यम्। न तावत् प्रत्ययार्थभूतायां इच्छायाम्, तस्याः वस्तुसौन्दर्यायत्तायाः अपुरुषतन्त्रत्वात्। नापि तद्विशेषणे ज्ञाने, पदार्थैकदेशे तस्मिन् पदार्थान्वयविरोधादिति। न स्यात्। सविशेषणे विधिनिषेधयोः विशेष्यबाधे विशेषणोपसंक्रान्तेः 'स्वर्गी ध्वस्तः, शिखी नष्टः' इत्यादौ दर्शनात्। अत एवेष्यमाणं ज्ञानं (विचारात्मकं) इह विधीयते इति भाषितम्। अज्ञातज्ञापनं विधिः इह विवक्षितम्, न त्वप्रवृत्तप्रवर्तनम्। रागतः प्रवृत्तेः वक्ष्य-माणत्वात्।

रागतः प्रवृत्तस्यापि पूर्वपक्षयुक्तिभिः अनारम्भणीयताबुद्धौ सत्याम् आरम्भणीयत्व-ज्ञापनं हि 'अज्ञातज्ञापनम्'। अतो विधीयते इत्यस्य स्वयमेव प्रवर्तते इति ग्रन्थेन चाविरोधः।

महाभाष्ये 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सूत्रे ग्रामाय, ग्रामं वा गन्तुमिच्छतीत्यत्र कर्मणिप्रयोगे 'ग्रामो गन्तुमिष्यते' इत्यत्र गमेः कर्मणः ग्रामस्य इषिकर्मत्वाभावे अनभिहितत्वात् द्वितीयामापाद्य, इच्छार्थकसमभिव्याहारस्थले उभयोरपि कर्मतया, 'गमेस्तु ग्रामः कर्म, इषेस्तूभे कर्मणी' इति सिद्धान्तितम्। तन्न्यायेन इच्छार्थकसनः ब्रह्म, ज्ञानं चोभयं कर्म, जानातेस्तु ब्रह्मैव कर्म। अतः ब्रह्मविषयकविचारः इत्यर्थः सिद्धः। इच्छाविषयत्वं विचारस्य इष्टसाधनतयैव, ब्रह्मणस्तु इच्छाविषयत्वं स्वतः इष्टत्वरूपमिति फलत्वं ब्रह्मणः सिद्धम्। तथा च स्वभावतो निरस्तनिखिलदोषानवधिकातिशयासंख्येयकल्याणगुणगणपुरुषोत्तमप्राप्तये तद्विषयकविचारः आरम्भणीय एव। विचारस्तु उपासनद्वारा इष्टसाधनं भवतीति निष्कण्टकोऽयं मार्गः।

परे तु-प्रपञ्चस्य सत्यत्वेन ज्ञाननिवर्त्यत्वाभावात् ज्ञानाय ब्रह्मविचारो नारंभणीय इति पूर्वपक्षं कृत्वा, प्रपञ्चस्य मिथ्यात्वेन ज्ञाननिवर्त्यत्वात् ज्ञानाय स आरम्भणीय इति सिद्धान्तयन्ति। अतः कर्मणां निवर्तकज्ञानाङ्गत्वाभावात् साधनचतुष्टयानन्तरं तत एव हेतोः ब्रह्मजिज्ञासा कर्तव्या। तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते यैः जिज्ञासितैः विना ब्रह्म जिज्ञासितं न भवतीति तान्यर्थाक्षिप्तान्येवेति न पृथक्सूत्रयितव्यानि। यथा 'राजाऽसौ गच्छती'त्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति, तद्वत्। एतेन शेषषष्ठ्यां ब्रह्मसम्बन्धिनी जिज्ञासा प्रतिज्ञाता भवति। तत्र यानि ब्रह्माश्रितानि लक्षणप्रमाण-युक्तिज्ञानसाधनफलानि तेषामपि विचारः प्रतिज्ञातो भवति, न तु कर्मणि षष्ठ्याः इति शङ्कायाः नावकाशः इत्याहुः।

अन्ये-प्रमाणाभावेन जीवचैतन्यातिरिक्तब्रह्मणोऽभावात् जीवस्य च स्वप्रकाशत्वेनासन्दिग्धत्वात् तथा च विषयाभावात् प्रत्यग्रूपे ब्रह्मणि अहमिति प्रतीयमानेऽपि मोक्षानुपलम्भेन प्रयोजनाभावात् तत एव तत्प्रतिबद्धाधिकार्यभावाच्च न ब्रह्मजिज्ञासा कर्तव्या इति प्राप्ते सिद्धान्तितं भगवता सूत्रकारेण 'ओम् अथाऽतो ब्रह्मजिज्ञासा ओम्' इति।

अत्र सूत्रे आद्यन्तयोरोङ्कार उच्चारणीयः। तत्र आद्यः एक एव दृष्टादृष्टोभयार्थः। अत एव सूत्रावयवः सर्वसूत्रेषु अनुवृत्त्यर्थम् असंहिततया उच्चार्यते।

अथवा आदौ ओङ्कारद्वयम् अदृष्टार्थं दृष्टार्थञ्चेति । अन्ते तु पक्षद्वयेऽपि अदृष्टार्थकः एक एव ओंकारः । अदृष्टार्थत्वं नाम केवलं श्रवणविशरणरूपदोषपरिहारार्थत्वम् ; दृष्टार्थत्वं तु अन्वेतव्यपदार्थप्रतिपादकत्वम् । तत्र आदिसूत्रावयवभूतं 'ओम्' इत्येतत् अव्ययं ब्रह्मविशेषणं गुणपूर्णत्ववाचि । ब्रह्मशब्दोऽपि विद्वद्रूढ्या महायोगेन च विष्णुवाची; अथशब्दः आनन्तर्यार्थकः, योग्यतया 'अधिकारात्' इति सम्बध्यते । कर्तव्येति शेषः ।

तथाच अथ – अध्ययनशमदमादिरूपाधिकारानन्तरम् , अतः – स्वजन्यज्ञानजन्यप्रसादजन्यमोक्षाख्यफलयुक्तत्वात् गुणपूर्णस्य ब्रह्मणः–विष्णोः, जिज्ञासा–श्रवणादिरूपो विचारः कर्तव्य इति सूत्रार्थः । विष्णोः प्रसादात् इति अतश्शब्दस्यार्थान्तरम् ।

यतः नारायणप्रसादादृते न मोक्षः; न च ज्ञानं विना अत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्तव्या । (म. भा.) सूत्रे कर्तव्या इति पदं अतश्शब्दपरामर्शनीयसमर्पकं 'यतः' इत्यादिकं च अध्याहार्यमिति भावः । 'सूत्राद्यन्तयोः ओंकार ऊह्यः, तत्र चाद्यसूत्रेऽवयवत्वमेकस्य, अन्यत्रानवयवत्वम्' इत्याद्युपपादयन्ति ।

भाष्यान्तरेष्वदृष्टः जिज्ञासाधिकरणभाष्यविस्तरस्तु किं निबन्धन इति चेत् , निर्विशेषं ब्रह्म एकमेव सत्यम् अन्यत्सर्वं मिथ्या, तस्यैवाज्ञानेन – भ्रान्त्या जगत् कल्प्यते, आत्मैक्यविज्ञानेनैव अविद्यायाः निवृत्तिः, 'न तूपासनादिना' इति प्रत्यवस्थाने – निर्विशेषवस्तुवादिभिः निर्विशेषवस्तुनि इदं प्रमाणमिति न शक्यते वक्तुं, सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम् , स्वानुभवस्याऽपि सविशेषविषयत्वाच्च इति प्रतिज्ञानार्थस्थापनं; भावरूपाज्ञाननिरासार्थं सप्तविधानुपपत्त्युपपादनम् , असत्यात्सत्यसिद्धिनिरसनं, सर्वत्र सत्यादेव सत्यसिद्धिप्रदर्शनं, भावरूपाज्ञानपरतयोदाहृतश्रुतिस्मृतिपुराणयुक्त्यादीनां विमर्शनेन तत्परत्वनिरासः, सामानाधिकरण्यस्य तु शरीरात्मभावलक्षणतादात्म्यनिबन्धनत्वव्यवस्थापनं, चिदचितोः परमपुरुषस्य च स्वरूपविवेकः, सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्मैव कारणम् ; तस्योपादानत्वेऽपि सङ्घातस्योपादानत्वेन चिदचितोः ब्रह्मणश्च स्वभावासाङ्कर्यं चित्रपटदृष्टान्तोपपादनेन जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसांकर्यं च सम्यगुपपाद्य, सिद्धे एव शब्दानां व्युत्पत्तिः इति मतं विमृश्य, तथा 'निर्बन्धो निर्निबन्धनः' इति सोपपत्तिकं व्यवस्थाप्य, वेदास्यैकप्रबन्धोत्तरभागविचाररूपशारीरकमीमांसायाः कर्मविचारानन्तर्यं प्रत्यतिष्ठिपत् भगवान् भाष्यकारः ।

एवं 'यक्षानुरूपो बलि'रिति न्यायेन निरसनीयानां बाहुल्यात् सूत्रार्थः व्यस्तारि।

'अथातो ब्रह्मजिज्ञासा' इत्यादिमसूत्रघटकः प्रथमः अकारोऽपि माङ्गलिक एव। 'अथ शब्दानुशासनम्' इत्यत्र, 'अ इ उ ण्' इत्यत्र चाकारं प्रयुञ्जानेन महाभाष्यकारेण सूत्रकारेण चायमर्थः स्मारितः। अत एवोक्तमभियुक्तैः 'अ' इति भगवतो नारायणस्य प्रथमाभिधानमभिदधता किं नाम मङ्गलं न कृतमिति। एषु भगवद्वाचकत्वाभावेऽपि तच्छक्तियोगात् सर्वत्राकारो माङ्गलिक एवेति हृदयम्॥

**अदः** — परोक्षबुद्धिविषयः।

यथासौ हरिश्चन्द्रो राजेत्यादौ विप्रकृष्टपरोक्षव्यक्तिरिति केचित्। (न्या. को.

अत एवोक्तमन्यत्र –

'इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम्॥' इति॥

अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्।

**अदत्कम्** — भक्षयितृ।

'श्वेतमदत्कम् अदत्कं श्वेतं लिन्दु मामिगाम्' (छां. उ. 8-14) अद – भक्षणे इति धातोः शत्रन्तादल्पार्थे 'क'प्रत्ययः औपचारिकमदनमिति ज्ञापनाय। अत्र श्वेत-शब्देन लक्षणया सत्त्वगुणः उच्यते। तस्य अदत्कम्। चरमधातोः सत्त्वगुणतत्कार्य-ज्ञानादिप्रमोषकत्वात् तद्भक्षकत्वम्। तादृशं चरमधातुं अदत्कम् – भक्षयितृ। लिन्दु – स्त्रीव्यञ्जनं मामिगाम् – न प्राप्नुयाम्। चरमधात्वाधारयोनिप्रवेशो माभूदिति – जन्म माभूदिति॥ (रं. भा.)

**अदमः** — (स. ना. 865)

न चास्यान्यः कश्चिद्दमितेति। (वि. स. भा.) कृत्स्नस्यापि परिपन्थिवर्गस्य अस्मिन् अकिञ्चित्करतया नास्ति दमः दमकर्म अन्यः, अन्यकर्तृकदमनं वा अस्येति। (वि. स. निर्व.)

'कश्चिद्दमयिता नास्ति यस्यासावदमः स्मृतः' (वि. स. नि.)

(भाष्ये एवमित्यस्य दमयितेति पूर्वप्रस्तुतार्थः।)

**अदम्भित्वम्** — आत्मज्ञानसाधनत्वेनोपादेयगुणविशेषः ।

'अमानित्वमदम्भित्वम्' (गी. 13-7) धार्मिकत्वयशःप्रयोजनतया धर्मानुष्ठानं दम्भः, तद्रहितत्वम् ॥ (गी. भा.)

**अदितिः** — 1. अदितिशब्दवाच्यः परमात्मा ।

'स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वं सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमदितेरदितित्वं वेद' (बृ. उ. 3-2-5) इति परमात्मनि अदितिशब्दनिर्वचनम् ।

2. जीवः ।

'या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती' (क. उ. 4-7) कर्मफलान्यत्तीति अदितिः जीवः उच्यते । (श्री. भा. 1-2-11) अदितिशब्दस्य देवमातरि भूमौ च वेदप्रसिद्धेः तद्व्यावृत्त्यर्थमवयवशक्त्या जीववाचित्वं दर्शयति कर्मफलानीति । रूढ्यर्थस्य गुहाप्रवेशासम्भवात् योगपरिग्रहः । (श्रु. प्र.)

3. भूमिः ।

'अदितिर्देवा . . . . . . वसिष्ठः' (तै. ना. उ. 111) देवगन्धर्वमनुष्यपित्रसुरसर्वभूतमातृत्वयुक्ता, मेदिन्यादिशब्दप्रवृत्तिनिमित्तगुणवती, 'कतमा का' 'या सा सत्या अमृता' इत्यादिशब्दिता भूमिरेव । खण्डनानर्हत्वात् भूमेरेवादितित्वम् । (रं. भा.) दोऽवखण्डने इति धातुना निष्पन्नोऽयं शब्द इति भावः ।

अदितिः – सर्वभूतानां माता इत्यन्वयः । न केवलं देवादीनां पञ्चानां, सर्वेषामपि स्थावरान्तानां भूतानां मातेत्यर्थः । (टि.)

4. लक्ष्मीः ।

अखण्डनीयस्वरूपगुणविभवा । दोऽवखण्डने । दितिर्नेत्यदितिः । द्यतिस्यतीत्यादिना इकारः । साक्षाल्लक्ष्मीः, लक्ष्मीविभूतिरूपभूमिर्वा ॥ (वि. को.)

**अदुष्टम्** — दोषरहितम् । (अन्नम्)

'जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः' (वाक्यकारवचनम्)

त्रिविधदोषरहितम् । जातिदुष्टम्, आश्रयदुष्टम्, निमित्तदुष्टञ्चेति दुष्टं त्रिविधम् । जातिदुष्टम् – कलञ्जगृञ्जनादिकम् । आश्रयदुष्टम् – अभिशस्तपतित चण्डालादिद्रव्यम् । निमित्तदुष्टन्तु उच्छिष्टकेशाद्युपहतम् ॥

**अदृढाः प्लवाः** — तमसः पारं गमयितुमक्षमान्युडुपानि ।

'प्लवा ह्येते अदृढा यज्ञरूपाः' (मुं. उ. 1-2-7) षोडशऋत्विक्पत्नीयजमानरूपाष्टादशकर्त्राश्रितत्वेनोक्तम् अवरं – फलाभिसन्धिमत्तया अश्रेष्ठं कर्म, येषु यजमानेषु वर्तते, एते यज्ञरूपाः – यज्ञप्रधानाः पुरुषाः जीर्णनौका इव संसारार्णवसन्तरणासमर्थाः । (रं. भा.) अनेन केवलकर्मणामक्षमत्वं स्थापितम् ॥

**अदृप्तः** — (स. ना. 719) अथाऽपि दर्पदोऽपि स्वयं अदृप्तः । (वि. स. भा) दर्पदोऽपि स्वयं दृप्तः – पारमेष्ठ्यतेजसा गर्वितः स नेति । (वि. स. निर्व.)

'अथाप्यगर्वितो योऽसावदृप्तस्स उदाहृतः' (वि. स. नि.)

**अदृश्यः** — (स. ना. 305) अतर्क्यवृत्तान्तः । (वि. स. भा.) अतर्क्यवृत्तान्ततया दृश्य द्रष्टुं शक्यः नेति । (वि. स. निर्व.)

'अतर्क्यवृत्तान्ततया जगतः प्रलयेऽपि यः ।
न लब्धश्चिन्त्यमानोऽपि सोऽदृश्य इति कथ्यते ॥'
(वि. स. नि.)

**अदृश्यम्** — चक्षुरादिग्रहणानर्हम् । (ब्रह्म)

'यदा ह्येवैष एतस्मिन्नदृश्ये' (तै. उ. 2-31) अदृश्य इत्यचिद्व्यावृत्तिः । (श्रु. प्र. 1-208) दृश्यं हि अचित् इत्यचिद्व्यावृत्तिः ॥

**अदृश्यत्वादिगुणकाधिकरणम्** — (अधि. सं. 1-2-5)

१) अदृश्यत्वादिगुणको धर्मोक्तेः ।

२) विशेषणभेदव्यपदेशाभ्यां च नेतरौ ।

३) रूपोपन्यासाच्च ।

इति सूत्रत्रिकमदृश्यत्वादिगुणकपदारब्धम् एवं निर्दिश्यते ।

'अथ परा यया तदक्षरमधिगम्यते' इत्यादिवाक्ये अद्रेश्यमित्यादिना निषिध्यमानस्य पृथिव्याद्यचेतनगतदृश्यत्वादेः पृथिव्यादिसजातीयसूक्ष्माचिदुपस्थापकत्वादक्षरं प्रधानं, अक्षरात्परतः परश्च जीवः इत्याशङ्क्य, सर्वज्ञत्वादीनां परमात्मधर्माणां प्रतिपादनात् अक्षरः परमात्मा 'अक्षरात्परतः परः' इत्यक्षराद्व्यक्तात् परो यः प्रत्यगात्मा तस्मादपि परः परमात्मेति सिद्धान्तितम् ।

स्थूलत्वदृश्यत्वनिषेधनेन सूक्ष्मं त्वदृश्यत्वगुणं प्रधानम् ।
क्षेत्रज्ञ एवाक्षरमित्यसत्स्यात् प्रतिज्ञया तत्परतः परत्वात् ॥
(न्या. क. सं. 1-25)

**अदृश्यत्वादिगुणको धर्मोक्तेः**— (ब्र. सू. 1-2-22) (अदृश्त्वादिगुणकाधिकरणे प्रथमसूत्रम् )

अदृश्यत्वादिगुणकः परमात्मा सर्वज्ञत्वादितद्धर्मोक्तेः ।

आथर्वणे 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्' इत्यारभ्य 'यद्भूतयोनिं परिपश्यन्ति धीराः' 'अक्षरात्परतः परः' इत्यादिः श्रूयते । तत्र किं प्रधानपुरुषौ प्रतिपाद्येते उत परमात्मैवेति संशयः । प्रधानपुरुषाविति पूर्वपक्षः । पृथिव्याद्यचेतनगतदृश्यत्वादीनां प्रतिषेधात् ; अङ्कुशादिशब्दैरिव प्रत्यासन्नावस्थान्तराश्रयभूतं तज्जातीयाचेतनं प्रधानमेव भूतयोन्यक्षरं अदृश्यत्वादिपदैः प्रतीयते । न तु धर्म्यन्तरं, न तु विजातीयं गौरवात् । तथा अक्षरात्परतः परः इति च एतस्य अधिष्ठाता पुरुष एवेति पूर्वपक्षः ।

राद्धान्तस्तु उत्तरत्र 'यस्सर्वज्ञः सर्ववित्' इति प्रधानपुरुषयोः असम्भावितं सार्वज्ञ्यमभिधाय 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत' इति सर्वज्ञात् सत्यसङ्कल्पात् जगदुत्पत्तिश्रवणात् पूर्वोक्तमदृश्यत्वादिगुणकं भूतयोन्यक्षरमक्षरात्परतः पर इति च निर्दिष्टं तदक्षरं परं ब्रह्मैवेति विज्ञायते । यदा विश्वशब्दः चिदचिदात्मकजगत्परः तदोर्णनाभिदृष्टान्तस्य च अचेतनोपस्थापकत्वानुपबृंहकत्वात् निषिध्यमानं दृश्यत्वादिकमपि न अचेतनोपस्थापकमिति अदृश्यत्वादिगुणकः परमात्मा; ततः परान्तरासम्भवात् अक्षरात् परतः परश्च परमात्मैवेति फलितम् ।

सिद्धान्ते ज्ञानेन्द्रियागोचरत्वेनादृश्यत्वमुपपन्नमेव । ज्ञानेन्द्रियगोचरं न भवतीति प्रसज्यप्रतिषेध एव विवक्षितः ।

अत्रादृश्यत्वादिगुणकशब्देन अक्षरं, पुल्लिङ्गनिर्देशेन अक्षरात्परतः परश्च द्वयमपि विषयीक्रियत इत्यभिप्रायेण वाक्यद्वयं विषयतयोदाहृतम् ।

इदमत्र बोध्यम् — 'अदृष्टो द्रष्टा' इत्यन्तर्यामिब्राह्मणे तावत् चेतनासाधारण-द्रष्टृत्वसमानाधिकरणादृश्यत्वश्रवणात् परमात्मपरत्वमस्तु, अत्र तु तथा न, केवला-दृश्यत्वमेव श्रूयते । तच्चाकृशादिपदवत् एकस्यामेव व्यक्तौ अवस्थाभेदेन भेदसम्भवात् । तथा सृष्टौ प्रधाने दृश्यत्वस्य सम्भवात् अवस्थान्तरे प्रलये तस्मिन्नेवादृश्यत्वस्य च सम्भवात् प्रधानमेवेति शङ्कितुराशयः ।

सिद्धान्ते तु अत्रापि उत्तरवाक्यानुसारात् भूतयोनेः अक्षरस्य सर्वज्ञत्वादिः प्रतीयते, अतः इदमप्यन्तर्यामिब्राह्मणवाक्यसमानमेवेति परमात्मपरमेव । एतेन 'अदृष्टो द्रष्टा' इत्यत्रापि 'तृच्'प्रत्ययस्यार्हार्थकत्वात् तत्समानाधिकरणादृष्टपदस्यापि 'धातुसम्बन्धे प्रत्ययाः' इत्यनुशासनेन अर्हार्थे कृत्प्रत्ययाङ्गीकारेण 'अदृष्टो द्रष्टा', 'अदृश्यं' इत्यन-योरप्येकार्थकत्वात् प्रधानपरमेवेति शङ्का निरासि ।

'अक्षरात्परतः परः' इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते; तस्य सर्वज्ञस्य विश्वयोनेः सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवात् । अतोऽत्राक्षरशब्दः भूतसूक्ष्ममचेतनं ब्रूते ।

यत्तु समानविभक्तिनिर्देशस्वारस्यात् 'परतोऽक्षरादि'ति सामानाधिकरण्यमिति — तन्न, परशब्दस्य पञ्चम्यन्तपदसापेक्षत्वात् तत्स्वारस्यार्थं न सामानाधिकरण्यम् । किञ्च परतोऽक्षरादिति न निर्दिष्टम् । 'अक्षरात्परतः परः' इति हि क्रमः, तत्स्वारस्याच्च न सामानाधिकरण्यम् । अतः वैयधिकरण्येनाक्षरात् अव्याकृतात् प्रधानात् परः पुरुषः (जीवः) तस्मादपि परः परमपुरुष एवेति योजनैव साधीयसी ।

सारे तु 'अथवा, सामानाधिकरण्येन परतोऽक्षरात् पञ्चविंशकात् पर इति भेदव्यपदेशः इति योजनापि प्रादर्शि । अनया अक्षरशब्दार्थः पूर्वपक्षोक्तरीत्या न प्रधानम्, किन्तु पञ्चविंशकः पुरुष एवेति ऐक्यवादस्य नावकाश इति चासूचि ।

अदृश्यत्वादिगुणकमक्षरं परमः पुमान् ।
सर्वज्ञत्वादिधर्मोक्तेश्चाक्षरात्परतः परः ॥

(ब्र. प. मा. 54)

**अदृष्टम्** — 1. पुण्यपापे ईश्वरप्रीतिकोपरूपे ।

पुण्यापुण्यस्वरूपे हि शास्त्रैकसमधिगम्ये, . . . . . तच्च परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्यापुण्ये, तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे इति वदति ।
(श्री. भा. 2-2-3)

इन्द्रियागोचरे ईश्वरप्रीतिकोपात्मके पुण्यपापे । तद्विषयत्वप्रतिनियमादेव च क्षेत्रज्ञानां कर्मफलनियमोपपत्तिः । (न्या. सि. 283)

'चोदनालक्षणोऽर्थो धर्मः' इति शास्त्रैकसमधिगम्यं श्रेयस्साधनं धर्मः, तद्विपरीतं अधर्म इत्युच्यते । स तु क्रियादिरेव । 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इत्याद्यभिधानात् । चिरध्वस्तस्यापि कर्मणः कालान्तरभाविफलानुगुणं किमपि द्वारम्, अन्यत् अदृष्टमुपादेयम् । तच्चान्तःकरणपरिणतिरिति सांख्याः प्राहुः । चेतसो वासनेति सौगताः । पुंधर्म इति न्यायवादिनः । विभुरूपं किमपि तत्त्वान्तरमिति जैनैकदेशिनः । पुद्गलरूपमिति तत्सयूथ्याः । एतस्य सर्वस्य कल्पनामात्रसिद्धत्वात् तत्तत्कर्माचरणपरिणतेश्वरबुद्धिविशेष एवादृष्टमिति तत्त्वविदां सम्प्रदायः । एवं धर्माधर्मलक्षणं तत्साध्यादृष्टस्वरूपं बोध्यम् । (स. सि. 436)

अस्त्वदृष्टं यत्किञ्चिदेव, तत् 'सेवाध्ययनतुल्यत्वे दृष्टा हि फलभिन्नते'त्युक्तप्रकारेण फलभेदात् परिकल्प्यते न पुनरागमैकसमधिगम्यमिति केचिदाहुः । तथा च दृष्टेष्वपि कारणेषु यत्किञ्चिद्वैषम्यात् फलभेदोऽस्तु; किमनेनादृष्टेन? अदृष्टं कल्पनीयं, तस्य च भेदः कल्पनीयः, तथा च गौरवम् । अस्माकन्तु दृष्टेष्वेव कारणेषु भेद एव कल्प्यः । अतो लाघवमिति भावः । तस्मादागमैकसमधिगम्यमदृष्टम् । (स. सि. 437) तच्चादृष्टमीश्वरप्रीतिकोपरूपमेवेति बोध्यम् ।

भगवत्प्रीत्यप्रीतिजनकजीवकर्तृककर्मविशेषजन्यो ज्ञानविशेषः । सः विशेषः भगवत्सङ्कल्प एव विभुस्वरूपं भगवन्तमाश्रितः । (य. दी. 108)

2. ज्ञानेन्द्रियागोचरम् ।

'अदृष्टमव्यवहार्यं' (मां. उ. 2-7) विश्वादिरूपत्रयं बाह्यान्तरपदार्थज्ञापनतद्व्यापाररूपकार्यलिङ्गेनानुमेयं न तथा चतुर्थं रूपं दृश्यमित्यदृष्टमिति वा, अमुक्तदृष्ट्यगोचरत्वाद्वा अदृष्टम् । (कू. भा.)

गुणः – पुण्यपापात्मकं भोग्यम् । अपूर्वशब्दवदस्यापि व्यवहारः तत्तन्मतानुरोधेन बोध्यः । (न्या. को.)

**अदृष्टानियमात्** — (ब्र. सू. 2-3-50) (अंशाधिकरणे नवमसूत्रम्)

सत्यमिथ्योपाधिकृतत्वेप्यात्मनः, ब्रह्मण एवाज्ञानं उपाधिश्चेति, तत्तत्कृतेनादृष्टादिनापि न नियमः । पूर्वं ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि जीवानामन्योन्यभेदादणुत्वेन प्रतिशरीरं भिन्नत्वाच्च भोगसाङ्कर्यं वारितं सिद्धान्ते । तदिदानीं परमते अदृष्टादिनापि वारयितुं दुश्शकमिति प्रतिपाद्यते ।

अदृष्टजोपाधिमूलब्रह्मजीवात्मकल्पनम् ।
अदृष्टानियमात्तेषां न सिद्ध्येदिति निश्चितम् ॥
(ब्र. प. मा. 266)

**अदृष्टो द्रष्टा** — अयोगिभिरदृष्टत्वे सति रूपादिसाक्षात्कारवान् । (परमात्मा)

'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता' (बृ. उ. 5-7-27) अत्रात्मसाक्षात्कार तदुपायभूतश्रवणमनननिदिध्यासनकर्तृत्वं हि प्रतीयत इति जीवपरमिदं स्यादिति शङ्कां परिहरति ।

न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकं, अपि तु स्वभावत एव सर्वज्ञत्वात् सत्यसङ्कल्पत्वाच्च स्वत एव । तथा च श्रुतिः पश्यत्यचक्षुः स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीता' इति । (श्री. भा. 1-2-19)

अत्रायमभिप्रायः श्रुत्यन्तरेषु 'न दृष्टेः द्रष्टारं पश्येः न श्रुतेः श्रोतारं शृणुयाः . . . .' 'आत्मा वा अरे द्रष्टव्यः, श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिवाक्यैः श्रवणमननादिकर्तृत्वं परस्य प्रतिषिद्धम् । तत्कर्मत्वं च श्रुतम् । तस्मादिह द्रष्टा श्रोतेति प्रतीयमानं परस्यात्मनः श्रवणादिकर्तृत्वं तत्प्रतिषेधकश्रुतिविरुद्धम् । रूपादिसाक्षात्कर्तृत्वं तु 'पश्यत्यचक्षुः . . . . . .' इति श्रुत्यन्तरावगतम् । अतः श्रवणादिकर्तृत्वप्रतिषेधकश्रुतिविरोधात् रूपादिसाक्षात्कारविधायकश्रुत्यन्तरानुरोधाच्च इह श्रूयमाणा द्रष्टादिशब्दाश्च रूपादिसाक्षात्कारवाचकाः, न तु श्रवणमननध्यानतत्साध्यदर्शनपरा इति । (श्रु. प्र.)

अत्र द्रष्टृत्वं रूपसाक्षात्कारवत्त्वम्। न तु चक्षुर्जन्यज्ञानवत्त्वम्; तस्य परमात्मन्यसम्भवात्। . . . . द्रष्टृत्वादिकं जीवस्याप्यस्तीत्यदृष्टत्वादिना द्रष्टृत्वादिकं विशेषितम्। तादृशञ्च तन्न जीवस्यास्तीति भावः। अत्र च द्रष्टृत्वादौ उपाध्यनुक्तेः निरुपाधिकद्रष्टृत्वमर्थसिद्धमिति [तच्च परमात्मासाधारणमिति] द्रष्टव्यम्॥ (बृ. उ. रं. भा. 5-7-27)

**अदेशः** — अयोग्यस्थानम्।

'अदेशकाले यद्दानम्' (गी. 17-22) अदेशः – कलिङ्गकीकटादिः (ता. चं.) (कीकटः मध्यगयाप्रदेशः)

**अद्धा** — निश्चयः।

इति यस्य स्यादद्धा न विचिकित्सास्ति (छां. उ. 3-14-5) 'तत्त्वे त्वद्धा अञ्जसा द्वयं' इत्यमरः। अतं – सततं गमनं गत्यर्थकानां ज्ञानार्थकत्वात् ज्ञानं वा दधाति इत्यर्थे 'क्विप्'प्रत्ययः॥

**अद्भुतः** — (स. ना. 896)

सर्वदा सर्वैः सर्वथानुभवेप्यपूर्ववदतिविस्मयनीयः। (वि. स. भा.)

तत्सदा सर्वथा सर्वैः भुज्यमानोऽप्यपूर्ववत्।
स्मयनीयोऽद्भुतः प्रोक्तः . . . . . ॥

(वि. स. नि.)

**अद्भुतम्** — 1. लोकोत्तरतयाश्चर्यावहम्।

'अचिन्त्यदिव्याद्भुतनित्ययौवनः' (स्तो. र. 45) सदानुभूतत्वेऽपि अदृष्टपूर्ववदाश्चर्यावहम्। (स्तो. र. भा.) 2. विचित्रावतारयोगः। 'अचिन्त्यदिव्याद्भुतनित्यनिरवद्यः' (गी. भा. अवतारिका) प्रतिक्षणमपूर्ववदनुभाव्यत्वम्, वटपत्रशयनविश्वरूपाद्यवस्थागतमाश्चर्यत्वं च अद्भुतशब्देन विवक्षितम्। (ता. चं.)

'राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम्' (गी. 18-76)

3. शब्दतोऽर्थतश्च आश्चर्यावहम्॥ (ता. चं.)

**अद्भुतोक्तयः** — कुत्राप्यदृष्टार्थस्य कथनम् ।

न हि वेद एवाद्भुतदृष्टिः लोकेऽपि, दृश्यते हि मान्थालव्यालादीनां अन्धकारेऽपि रूपदर्शनम् । अद्भुतं नाम अन्यत्रादृष्टस्यापि क्वाचित्कदर्शनम् । (स. सि. 335) [लोकातीताश्चर्यार्थप्रतिपादकत्वे तु शास्त्रस्य स्वातन्त्र्यम् ]

ननु वटदलशायिनो भगवतो बालस्य जठरे विश्वमिदं वर्तत इत्यत्यन्तविरुद्धमभिधीयते, तत्कथं शास्त्रसिद्धं इत्यत्राह (चिं. म. 516) . . . . वटदलशयनाद्यद्भुतं चैवमूह्यम्' इति । (अ. सा. 516) एवं श्रुतेरद्भुतार्थप्रतिपादनं अन्यत्रापि; तथा हि – भागवताः खलु भगवतः पञ्चशक्तिमयं दिव्यदेशमाचक्षते । तत्र शक्तिशब्देन दिव्यानि पञ्चभूतान्यभिधीयन्ते । तानि सङ्घातात्मकानि वा न वेति विकल्पे सङ्घातात्मकत्वे नित्यत्वमेव नास्ति, कृत्स्नस्यापि सङ्घातात्मनो वस्तुनः विनाशित्वेनोपलम्भात् । नित्यत्वे च तेषां परमाणुरूपत्वेन पृथिव्यादिरूपेण विभज्य दर्शनं न स्यात् ।

किञ्च परिपूर्णनिरतिशयशक्तिकस्य भगवतः पर्यङ्काद्यैः साधनीयं किमपि फलं नास्ति । राजादीनां हि पर्यङ्कादिपरिकल्पनं जाड्यादिहेतुभूतायासादिपरिहारार्थं दृश्यते । भगवतस्तु परिपूर्णनिस्सीमशक्तिकतया किमनेन पर्यङ्कादिकल्पनेनेति भावः । किञ्च सर्वदेशव्याप्तियुक्तब्रह्मप्राप्तिसिद्ध्यर्थं देशविशेषवर्तिपरिच्छिन्नवस्तुप्राप्त्यर्थमिवोर्ध्वगतिरपि निष्प्रयोजना इत्यादि शङ्का —

'. . . . . गतिरपि विफलेत्यादिकान् हैतुकानाम्
क्षोदिष्ठक्षीबजल्पान् श्रुतिरुपशमयेदद्भुतार्थस्वतन्त्रा ॥'

(अ. सा. 515)

इत्यनेन पर्यहारि । (प. यो.)

अयं भावः । श्रुतिप्रतिपन्नेऽर्थे निर्मूलाशङ्का निर्मतीनां दुर्मतीनां वा जायत इति श्रुतिप्रामाण्यवेदिभिः अनादरणीयमेव । श्रुतेरीदृशसामर्थ्यं कुत इत्याशङ्क्य परिहरति – अद्भुतेति । अपूर्वार्थाभिधायित्वं श्रुतेः भूषणं, तत्राप्यद्भुतार्थाभिधायित्वमत्यन्तभूषणम् । अद्भुतत्वं हि अत्यन्तदृष्टविसजातीयत्वम् । तेन बाधकाभावे यथाश्रुतमर्थतत्त्वं निर्णेतव्यं नीतिमद्भिः । परवाद्युक्तानि तु बाधकानुमानान्यागम-

विरुद्धत्वात् स्वयमेवाप्रमाणतामश्नुवते । लोके हि द्वीपान्तरागतानां लौकिकार्थप्रतिपादकान्यपि वाक्यानि अपूर्वेष्वर्थेषु प्रमाणभूतान्येव परिगृह्यन्ते ।

एवञ्च सति वैदिकानि वाक्यानि अद्भुतार्थप्रतिपादकानि किमर्थं तथात्वेन न परिगृह्यन्ते, कारणदोषस्यानाशङ्कनीयत्वात् बाधकप्रमाणस्य चादृष्टत्वात् । निर्मूलमेवाप्रामाण्यशङ्कायां सर्वोपप्लवप्रसङ्गादिति । (चिं. म. 515)

एतेन सर्वत्राप्यदृष्टार्थस्य सत्यता स्थापिता ॥

अब्ध्यस्सम्भूतः — समुद्रे आविर्भूतः समुद्रशायी ।

'अब्ध्यस्सम्भूतः हिरण्यगर्भ इत्यष्टौ' (तै. उ. 2-11)

'अब्ध्यस्सम्भूतः' 'हिरण्यगर्भ इत्यष्टौ' 'अब्ध्यस्सम्भूतः पृथिव्यैरसाच्च' 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्युत्तरानुवाकः 'हिरण्यगर्भ इत्यष्टर्चम्' च तदेकवाक्यतापन्नमिह पठितव्यमित्यर्थः ।

यथा 'अम्भस्य पार' इत्यस्य, 'यमन्तस्समुद्रे कवयो वयन्ति', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इति समुद्रशायित्वविद्युद्वर्णपुरुषत्वादिलिङ्गात् भगवत्परत्वम्, एवं 'अब्ध्यस्सम्भूतः' इत्युत्तरानुवाकस्यापि, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वरूपासाधारणलिङ्गात्, भगवत्परत्वं सिद्धम् ।

अत्र 'ह्री'शब्दो भूमिपरः, 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यन्यत्र श्रवणात् । रामायणे च –

रामस्य दक्षिणे पार्श्वे पद्मा श्रीः समवस्थिता ।
सव्ये तु श्रीविशालाक्षी . . . . . . ॥'

इति भूम्यां श्रीशब्दप्रयोगात्, 'त्वामिहोपह्वये श्रियम्' इति वैदिकप्रयोगाच्चेति द्रष्टव्यम् ।

एतेन देवतान्तरस्य पारम्यशङ्का प्रत्युक्ता । ब्रह्मशिवादीनां क्वचित् कारणत्वश्रवणमात्रेण परब्रह्मत्वे आकाशप्राणेन्द्रादीनामपि पारम्यप्रसङ्गात् । तेषां कार्यत्वश्रवणात् पारम्याभावे ब्रह्मरुद्रादेरपि महोपनिषदादौ कार्यत्व श्रवणसाम्यात् । न चाथर्वशिखायां 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इति विष्णोरपि कार्यत्वं श्रूयत इति शङ्क्यम्; तस्य 'अजायमानो बहुधा विजायते' इति श्रुत्या अवताररूपत्वाऽऽवेदनात् ।

न चेयं श्रुतिः देवतान्तरपरा किं न स्यादिति शङ्क्यम्, तत्सन्निधौ 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति भगवदसाधारणलक्ष्मीपतित्वलिङ्गादिति द्रष्टव्यम् ।

तथा हिरण्यगर्भ इत्यष्टर्चस्यापि निरुपाधिकभूतपतित्वलिङ्गात्, हिरण्यगर्भः शत्रुघ्नः' इति नामसहस्रपाठात् 'हिरण्यगर्भः इत्यष्टभिर्हविर्निवेदयेत्' इति विष्णुस्मृतौ भगवदाराधने विनियोगात् ज्योतिश्शास्त्रे सूर्यसिद्धान्ते अनिरुद्धव्यूहं प्रकृत्य 'हिरण्यगर्भो भगवानेष छन्दस्सु पठ्यते' इत्युक्तेः । पाद्मे गिरियज्ञानन्तरमिन्द्रस्तवे —

अग्रे हिरण्यगर्भस्त्वं भूतस्य समवर्तत ।
त्वमेवैकः पतिरसि पुरुषस्त्वं हिरण्मयः ॥

इत्यादिना अस्य मन्त्रस्य भगवत्परतया उपबृंहितत्वाच्च हिरण्यगर्भ इत्यष्टर्चस्यापि भगवत्परत्वमेवेति द्रष्टव्यम् । (रं. भा.)

अत्राष्टभिर्मन्त्रैः क्रमेण सर्वलोकाधारत्वं, लोकान्तर्वर्तिसर्वविधप्राणिनियन्तृत्वम्, सर्वफलप्रदत्वम्, पर्वतसमुद्रभूमण्डलादिलोकगतसर्वाचेतनशेषित्वं, जगदवनार्थप्रार्थ्यमानानेकावतारत्वम्, द्युप्रभृतिसर्वलोकगोचरपतनप्रतिबन्धानुगुणधारणनिपुणत्वम्, अग्रनेत्रुत्पादकत्वम्, तादृशानुग्राहकत्वसहितदेवदेवत्वमिति गुणान् भगवतः सङ्कीर्त्य स एव सर्वकर्मसमाराध्य इति स्थापितमित्यनुसन्धेयम् ॥ (कू. भा. टि.)

**अद्भ्योऽग्निः** — निमित्तात् जलात् अग्निरुत्पद्यते ।

'अद्भ्योऽग्निस्तेजसस्ता इति' (त. मु. 13) 'अद्भ्योऽग्निः', 'अग्नेरापः' इति श्रुत्योः विरोधं परिहरति 'व्यष्टौ ताभ्यः कदाचित् तदुपजनिरतो व्यत्ययस्तत्समष्टौ' इति । (त. मु. 13) अत्र व्यष्टौ निमित्तभूताभ्यः अद्भ्यः कदाचित् तदुपजनिः इति भाव्यम् । अतः 'अग्नेरापः' इति समष्टिविषयश्रुतिविरोधो न ॥

**अद्रव्यम्** — तत्त्वविशेषः ।

अवस्थाश्रयः उपादानम् । (आगन्तुरपृथक्सिद्धधर्मोऽवस्था) अतथाभूतमद्रव्यम् । (न्या. सि. 3) संयोगरहितम् । (न्या. सि. 288)

इदन्तु द्रव्यादत्यन्तभिन्नम् । 'द्रव्याद्रव्यप्रभेदात् मितमुभयविधं तद्विदः तत्त्वमाहुः' (त. मु. 6) द्रव्यादत्यन्तभिन्नं अद्रव्यं न पुनः कौमारिलजैनादिवत् भिन्ना-

भिन्नम् । इदञ्चानुपाधिकम् । समवायादिसम्बन्धाभावेन स्वभावादेव तत् द्रव्यं विशिनष्टि – यथा समवायः स्वयं सम्बन्धान्तराभावेऽपि स्वभावादेव तावेव सम्बन्धिनौ सङ्घटयति नान्यौ; नापि स्वयं सम्बन्धः । एवमेव द्रव्याद्रव्ये स्वभावादेव विशिष्टव्यवहारमातन्वाते । (स. सि. 362)

अपृथक्सिद्धसम्बन्धावच्छिन्नागन्तुकधर्मत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत् । (र. पे. 7)

1. अनुपादानम् । 2. आगन्तुकधर्मानाश्रयः । 3. संख्याकारकान्वयायोग्यम् ॥ (वि. को.)

**अद्रव्यप्रभेदः** — संयोगरहितमद्रव्यं – तद्विशेषः ।

तत्र च त्रिगुणे सदृशविसदृशसन्तानः कालेऽपि क्षणलवनिमेषत्वादिपरार्धपर्यन्तः, बुद्धौ प्रत्यक्षानुमितित्वश्रौतत्वरूपः, शुद्धसत्त्वेऽपि केचित् त्रिगुणसमाः, इत्यनन्तप्रकारो यथाप्रमाणमनुसन्धेयः । तदुक्तं वरदविष्णुमिश्रैः 'गुणाश्चानन्ताः' इति । तेषां च अनन्तवैषम्यस्य विविच्य निर्देष्टुं अशक्यत्वात् शक्यांशस्य च द्रव्यनिरूपणेनैव निरूपितप्रायत्वात् तथातिरिक्तनिरूपणस्य च लोकव्यवहारादृष्टाद्युपयोगाभावात् अन्यानि स्फुटपरिगणनीयान्यद्रव्याणि निरूप्यन्ते । सत्त्वरजस्तमांसि, शब्दादयः पञ्च, संयोगः, शक्तिः, इति दशैव । एवंविधेष्वेवाद्रव्येषु गुरुत्व-द्रवत्व-स्नेह-संस्कार-संख्या-परिमाण-पृथक्त्व -विभाग -परत्वापरत्व-कर्म-सामान्य-सादृश्य-विशेष-समवाय-अभाव-वैशिष्ट्यादीनां यथासम्भवमन्तर्भावः । (न्या. सि. 289)

अद्रव्यं सत्त्वरजस्तमश्शब्दस्पर्शरूपरसगन्धसंयोगशक्तिभेदाद्दशधैव ॥ (य. दी. 4)

**अद्रव्यवर्गस्य दुरपह्नवत्वम्** — अद्रव्यस्य सर्वैरपलपितुमशक्यता ।

केचित् बौद्धाभासाः बाह्यार्थेषु जननजराभङ्गरूपान् विकारानाहुः । चित्तचैत्तेषु जननभङ्गावेव द्वौ विकारौ । तत्र विकल्पनीयं, एतद्विकारजातं वस्तुनः स्वरूपं, धर्मो वा? तत्र पूर्वस्मिन् पक्षे जननादीनां क्रम एव न स्यात् । न हि स्वरूपं क्रमेण भवति; स्वरूपत्वव्याघातात् । उत्तरत्र धर्मधर्मिभावं स्वयमेव वदसि तर्हि जननादयो मिथ्येति चेन्न; जननादीनां मिथ्यात्वे, तस्य वस्तुनो नित्यत्वमेव स्यात् । यदि वा तुच्छत्वमिति । (स. सि. 367)

रूपरसाद्यद्रव्याणि बौद्धैर्नाङ्गीकृतानि, तैरपि जननभङ्गादेः द्रव्येष्वङ्गीकारात् । तुल्यन्यायेन रूपादिकमप्यङ्गीकार्यमेवेत्यद्रव्यवर्गः दुरपह्नव इति भावः ॥

**अद्रव्यविचारप्रयोजनम्** — तत्त्वप्रधानशास्त्रेऽद्रव्यविचारसफलता ।

अद्रव्यविचारः न च निरर्थकः । तत्तद्द्रव्यनियतं अद्रव्यजातं यथा तत्तत्रापृथक्सिद्धं तद्वदेव विश्वमपि परस्यापृथक्सिद्धम् । इति बोधनस्यैव परमप्रयोजनत्वात् एवञ्च सति विशेषणगतानां विकारादीनां तत्तद्द्रव्यव्यवधानेन भगवद्विशेषणत्वात् न स्वरूपे भगवतो दोषः । तदिदमुक्तं 'इत्थं निर्धार्य निर्बाधान् द्रव्यधर्मा . . . . . . निर्णयामः' (त. मु. 361) इति। इत्थं निर्धारणं समस्तहेयरहितकल्याणगुणगणपरिपूर्णब्रह्मोपासने अत्यन्तमुपकरोत्येव ॥

**अद्रव्याणां शक्तिमत्त्वम्** — अद्रव्येषु स्वरूपात्मिका शक्तिः ।

शब्दादिषु शक्तिर्यद्यस्ति, कथमिव तेषामद्रव्यता? शक्त्याश्रयत्वेन तेषां गुणित्वात् । यदि शब्दादीनां शक्त्याश्रयता नास्ति, तर्हि शब्दादिभिः कार्यं किमपि कथं स्यात्, इत्याक्षेपे शब्दादयोऽपि स्वगतशक्तिमन्तरेणापि स्वरूपसहकारिभ्यामेव कार्यं कुर्वते । अन्यथा अनवस्थाप्रसङ्गादिति । यथा शक्तेः शक्त्यन्तराभावः, सतु शब्दादावपि तुल्य इत्यर्थः ॥ (स. सि. 460)

**अद्रव्याणां सत्यता** — अद्रव्याणां मृषात्वाभावः ।

चादयोऽसत्त्वे (पा. सू. 1-4-57) इत्यत्र 'सत्त्वं द्रव्यम्, असत्त्वमद्रव्यम्' इति पदविद्भिरभिहितत्वात् अद्रव्याणां मृषात्वमिति कश्चिदाह । तत्राह –

'नैतावत्तन्मृषात्वं गमयति न च तद्बाधकं किञ्चिदस्ति' (त. मु. 365) इति। बाध एव ह्यसत्त्वे कारणम् ; न च चाद्यर्थानां समुच्चयादीनां बाधोऽस्ति । तदभावेऽपि तन्मिथ्यात्वे सर्वपदार्थानां मिथ्यात्वं स्यादिति भावः । किं वा तेषां तात्पर्यमिति चेत् चादीनां द्योतकत्वम्, अन्येषां वाचकत्वं; यत् द्योत्यं तस्य विशेषणसम्बन्धानर्हत्वम् ; यद्वाच्यं तस्य विशेषणसम्बन्धार्हत्वमित्यादि विभागो यथाप्रमाणं चिन्तनीयः । अतः असत्त्वशब्दकथनमात्रादद्रव्याणां मिथ्यात्वप्रसङ्गाभावः इत्यर्थः । (स. सि. 365)

असत् मिथ्येत्यनयोः पर्यायतया लोके प्रयोगात् 'चादयोऽसत्त्वे' इत्यनेनाद्रव्याणां मिथ्यात्वमिति परेषां शङ्का । तस्य पदस्यार्थान्तरपरतया पदविद्भिरेव वर्णनात् न शङ्कायाः अवकाशः ॥

**अद्रव्येषु संख्या** — अद्रव्येषु अद्रव्यान्तरस्याभावात् संख्याव्यवहारस्योपपत्तिः ।

'अद्रव्येऽप्यस्ति संख्या व्यवहृतिबलतः सा ततोऽन्या गुणादेः
मैवं, संख्यासु संख्याव्यवहृतिवदियं स्यात्त्विहोपाधिसाम्यात् '

(त. मु. 404)

इत्युक्तरीत्या संख्याव्यवहृतिरद्रव्येऽप्यस्ति । अतो व्यवहारबलात् सा संख्या पुनरद्रव्याद्गुणादेरन्येति; तन्न । अद्रव्यत्वे समानेऽपि संख्यासु संख्याव्यवहारो भवद्भि रप्यङ्गीकार्यः । द्रव्यत्ववैधुर्यं हि अद्रव्यत्वं; तत्तु संख्यायामपि समानम् । तथा च संख्यायां संख्याव्यवहारवत् अन्येष्वप्यद्रव्येषु संख्याव्यवहारः औपाधिकः स्यादेवेति । (स. सि.) औपाधिकः – बुद्धिविशेषविषयत्वकृतः ॥

**अद्रेश्यम्** — अदृश्यम् ।

'यत्तदद्रेश्यमग्राह्यम्' (मुं. उ. 1-1-6) ज्ञानेन्द्रियाविषयम् । (रं. भा.) अद्रेश्यमिति छान्दसम् । प्रत्यक्षागोचरम् ; यद्वा चक्षुरगोचरम् । (श्रु. प्र. 1-188) इन्द्रियादृश्यं, चक्षुरदृश्यं वा । यद्वा ज्ञानेन्द्रियाविषयः । अद्रेश्यमितिपदं कृत्यप्रत्ययान्तत्वात् अर्हार्थम् । (श्रु. प्र. 1-2-22) ऐन्द्रियिकप्रत्यक्षानर्हम् ॥ (त. टी. 83)

**अद्रोहः** — दैवीसम्पद्विशेषः ।

'अद्रोहो नातिमानिता' (गी. 16-3) परेषु अनुपरोधः । परेषु स्वच्छन्दवृत्ति निरोधरहितत्वम् । (गी. भा.) प्रबलेन हि दुर्बलाः स्ववशे स्थापिताः स्वाच्छन्द्या न्निवार्यन्ते । सोयऽमुपरोधः, तदकरणमत्रानुपरोधः इत्याह स्वच्छन्देति । स्वस्य तु योगोपकारी स्वच्छन्दवृत्तिनिरोधः तप एव । अतः परेष्विति निवेशितम् ॥ (ता. चं.)

**अद्वारकबोधः** — साक्षादेव परमात्मबोधः ।

अग्न्यादिजीवद्वारा तदन्तर्यामितया परमात्मबोधः सद्वारकबोधः । अग्न्यादिपदानां अग्रं नयतीति व्युत्पत्त्या साक्षादेव विष्ण्वादिपदवत् परमात्मबोधनम् अद्वारकबोधः ॥

(सं. अ.)

17

**अद्वारकसृष्टिः — समष्टिसृष्टिः ।**

चतुर्मुखादिषु अन्तरात्मतया अवतिष्ठता तन्मुखेन क्रियमाणा सृष्टिः सद्वारकसृष्टिः (व्यष्टिसृष्टिः) । तद्व्यतिरिक्ता आदौ स्वेनैव क्रियमाणा प्रकृत्यादिमहाभूतपर्यन्ता सृष्टिः ।। (सं. अ.)

**अद्वारकान्वयः — साक्षादन्वयः ।**

'गुणवान्', 'तमेवं गुणसंपन्नम्' इत्यविशेषोक्तिषु भगवद्गुणेषु 'धर्मज्ञः सत्यसन्धश्च' इत्युक्तानां गुणानां अद्वारकत्वम्, 'समस्समविभक्तांगः स्निग्धवर्णः प्रतापवान्' इत्युक्तानां दिव्यमंगलविग्रहद्वारकत्वं च बोध्यम् । तथेहापि ईश्वरशरीरभूतचिदचिद्द्वारकोऽद्वारकश्च गुणान्वयो यथाश्रुति स्वीकार्य इति भावः । (श्रु. प्र. 1-1-13)

**अद्वितीयम् — स्वसजातीयरहितम् ।**

साजात्यश्चात्र चिदचिन्नियन्तृत्वेन । 'एकमेवाद्वितीयम्' (छां. उ. 6.2.1) यदुक्तं एकमेवाद्वितीयमित्यत्राद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते, अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानां अद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम्, कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते 'सत्यं ज्ञानमनन्तं ब्रह्म' इति; अतो लिलक्षयिषितं ब्रह्म निर्गुणमेव । अन्यथा 'निर्गुणं' 'निरञ्जनम्', इत्यादिभिः विरोधश्चेति ।

तदनुपपन्नम्, जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन, विचित्रशक्तिप्रतिपादनपरत्वादद्वितीयपदस्य । तथैव विचित्रशक्तियोगमेवावगमयति 'तदैक्षत बहु स्यां प्रजायेयेति; तत्तेजोऽसृजत' इत्यादि । अविशेषेणाद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत् – सिसृक्षोर्ब्रह्मणः उपादानकारणत्वं 'सदेव सोम्येदमग्र आसीदेकमेव' इति प्रतिपादितम् । कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरं इति तदेव अद्वितीयपदेन निषिध्यते इत्यवगम्यते । सर्वनिषेधे हि स्वाभ्युपगताः सिषाधयिषिताः नित्यत्वादयश्च निषिद्धाः स्युः । सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः, सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानां अत्रोपसंहारहेतुत्वात् । अतः कारणवाक्यस्वभावादपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन सविशेषमेव प्रतिपाद्यत

इति विज्ञायते। न च निर्गुणवाक्यविरोधः, प्रकृतहेयगुणविषयत्वात्, तेषां 'निर्गुणं' 'निरंजनम्', 'निष्कलं निष्क्रियं शान्तम्' इत्यादीनाम्। (श्री. भा. 1-192)

'सदेव' 'एकमेवेति' विजातीयसजातीयभेदव्यावर्तकावधारणद्वयसमभिव्याहृतम-द्वितीयपदं पारिशेष्यात् स्वगतभेदाभावपरमिति गुणतोऽपि सद्वितीयतां न सहत इति परे। (श्रु. प्र.)

सिद्धान्ते तु 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यत्र 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किंचन मिषत्' (मिष स्पर्धायाम्) इति श्रुत्यन्तरानुसारेण अग्रे सृष्टेःप्राक् सद्रूपमिदं जगत् एकमेवाविभक्तनामरूपमासीत् इति योजनया सच्छब्द-वाच्यस्योपादानत्वे सिद्धे उपस्थितनिमित्तकारणशंकायां विचित्रशक्तित्वात् स्थूला-वस्थाविशिष्टजगत् प्रति उपादानभूतस्यास्यैव निमित्तकारणतां वदति अद्वितीयशब्दः। 'नान्यत्किञ्चन मिषत्' इत्यस्य अत्रत्याद्वितीयपदविवरणरूपत्वात् स्पर्धमानद्वितीयस्यैव निषेधात् निमित्तान्तरमेव व्यवच्छिद्यते, न तु स्वगतभेदव्यवच्छेदः। तथा च सजातीय-विजातीयस्वगतभेदत्रयविशिष्टं ब्रह्मैवेति सिद्धान्तः। त्रिविधभेदसत्वेऽपि विशिष्टैक्यं तद्वितरनिषेधश्चोपपन्न एव।

2. समाभ्यधिकवस्त्वंतररहितम्।

यथा चोलनृपस्सम्राडतीयोऽस्ति भूतले।<br>
इति तत्तुल्यनृपतिनिवारणपरं वचः॥<br>
न तु तद्भृत्यतत्पुत्रकलत्रादिनिषेधकम्॥

इत्यत्र तत्तुल्यनृपतिव्यवच्छेदकमिव, ब्रह्मतुल्यतीयव्यवच्छेदकमेव भवति इदं चाद्वितीयपदम्। (ह. द. 39) अनेन तुल्यनिषेधेनाधिकस्यापि निषेधः सिद्ध्यत्ये-वेति भावः —

1 अदृष्टाद्वारकचेतनान्तरसहकरणरहितम्।

2 अधिष्ठात्रन्तररहितं निमित्तकारणञ्च। (वि. को.)

**अद्वितीत्वयम्** — स्वसजातीयद्वितीयरहितत्वम्।

स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वम्। (र. पे. 274)

**अद्वितीयश्रुतिविसंवादवादः — (श. दू. एकोनषष्टितमः)**

अत्र हि अनन्तपदवत् अद्वितीयपदेनापि सविशेषतैव। तथा हि – अद्वितीयपदे किं तत्पुरुषः ? उत बहुव्रीहिः ? इति विकल्पे निर्विशेषवादिनां आद्ये ब्रह्मणः द्वितीयादन्यत्वं तद्विरुद्धत्वं तदभावमात्रं वा स्यात्। प्रथमद्वितीययोः न द्वितीयहानिः, तदभावमात्रपरे तु समासे न सदादिशब्दैः सामानाधिकरण्यं स्यात् नञर्थस्य स्वतन्त्रत्वात्।

नापि बहुव्रीहिः। तत्र द्वितीयं यस्य नास्तीति किं प्रथमादिविषिकटाक्षेण, सर्वनिषेधाभिप्रायेण वा ? न पूर्वः, प्रथमादिसिद्ध्या सर्वनिषेधासिद्धेः। नोत्तरः, बहुव्रीहिविरोधात्। अनेकमन्यपदार्थे इति हि सः। किं च द्वितीयनिषेधवत्त्वञ्च धर्मं ब्रह्मणः उपस्थापयन्त्यां वृत्तौ, कथं निर्विशेषत्वसिद्धिः ? अनुपस्थापयन्त्यां च कथन्तरां नास्त्यर्थसम्बन्धे यस्येति विग्रहः? न च स्वरूपमेवात्र नास्तिशब्दार्थः। अन्यपदार्थत्वायोगात्, स्वस्य स्वसम्बन्धायोगाच्च। भेदक्लृप्त्युपचार इति चेत्, तथापि द्वितीयाभाव एव ब्रह्मेति निष्कर्षः स्यात्। तत्र चोक्तमध्यासानुपपत्त्यादि।

अपि चाविद्यातद्विकाराणां ब्रह्मव्यतिरेके कथमद्वितीयत्वम् ? तन्मिथ्यात्वेऽपि तेषां द्वितीयत्वस्य दुस्त्यजत्वात्। सत्यमिथ्यार्थयोरव्यतिरेके विरोधात्। न चैते जैननयनिष्ठाः। तन्निष्ठाश्च तत्तामिव द्वितीयतां वांछन्ति। ब्रह्मणो निर्विशेषत्वविवक्षायां च न किंचिदपि लक्षणं तत्र स्यादिति तदुदाहरणविरोधः। व्यवच्छेद्यायोगाच्चेति।

असत्पक्षे तु वृत्तिद्वयमपि सम्यक्। 'द्वितीयव्यतिरिक्तोक्त्या सतः स्यादग्रगण्यता। द्वितीयशून्यतोक्त्या च तत्समाननिषेधनम्'। न ह्यपरं कुतश्चित् सर्वकारणं ब्रह्म, येन तस्य द्वितीयता स्यात्। न चास्य किञ्चिदैश्वर्येण समम्, येन द्वितीयगणनां सहेत 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रवणात्। तेनात्र स्वसदृशद्वितीयनिषेधपरं वचः। आहुश्च –

'यथैक एव सविता न द्वितीयो नभस्स्थले। इत्युक्त्या न हि सावित्रा निषिध्यन्तेऽत्र रश्मयः ॥' तथा च—

यथा चोलनृपस्सम्राडद्वितीयोऽत्र भूतले।
इति तत्तुल्यनृपतिनिवारणपरं वचः ॥
न तु तत्पुत्रतद्भृत्यकलत्रादिनिवारणम् ॥ इति।

भाष्ये तु प्रकरणस्थमृत्पिण्डादिष्वेकशब्देनाविभक्तनामरूपावस्थाविशेषविशिष्ट-बोधनादुपादानत्वसिद्धौ पिण्डादिष्विवाधिष्ठात्रन्तरशङ्कायां तन्निषेधपरोऽयमद्वितीयशब्दः इति स्थापितम्। एतदेव 'बहु स्यामिति' बहुभवनतत्संकल्पयोराश्रयतयाऽनन्तरमेव स्थाप्यते; 'सोऽकामयत बहु स्या'मिति श्रुत्यन्तरैश्च। एतदर्थमेव प्रकृत्यधिकरणम्। अतोऽद्वितीयश्रुतिरेव विश्वातिशायित्ववाचिनी गुणविभूतिश्रुतिशतविदितबहुविधविशेष-जातातिशयितविशेषान्तरतत्परा, निर्विशेषवादिनां विसंवादिनीति नीतिविदः। (श.दू.)

शाङ्करे उपनिषद्भाष्येऽपि अद्वितीयमिति मृद्व्यतिरेकेण मृदो यथा अन्यत् घटा-द्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टम्, तथा सद्व्यतिरेकेण सतः सहकारि-कारणं वस्त्वन्तरं प्राप्तं निषिध्यते अद्वितीयमिति। द्वितीयं वस्त्वन्तरं न विद्यते इति अद्वितीयम् इति निमित्तान्तरनिषेधपरतयैव व्याख्यातम्॥ (भा. प्र. 176)

**अद्वेष्टा** — द्वेषरहितः।

'अद्वेष्टा सर्वभूतानां' (गी. 12-13) विद्विषताम् - अपकुर्वतामपि सर्वेषां भूतानां अद्वेष्टा मदपराधानुगुणं ईश्वरप्रेरितान्येतानि भूतानि द्विषन्त्यपकुर्वन्ति च इत्यनु-संधानः। (गी. भा.) विद्विषतामिति मानसः, अपकुर्वतामिति वाचिकः कायिकश्च व्यापारः॥ (ता. चं)

**अद्वैतम्** — 1. ऐक्यम्।

अद्वैतं द्वैतमित्याहुः (मं. उ. 2-5) परमात्मानं चिदचिद्विशिष्टम् अभिप्रेत्य तस्यैकत्वात् अद्वैतमित्याहुः 'एकमेवाद्वितीयं' इत्याद्याः काश्चन श्रुतयः। (रं. भा.)

(अत्र 'इति' शब्दः भिन्नक्रमः। द्वैतशब्दः धर्मिपर इति भावः। द्वाभ्यां इतः– द्वीतः। द्वीत एव द्वैतः। चिदचिद्विशिष्टः)

जीवाद्वैतवचनानि तु प्रकारैक्यविषयाणि; प्रकारैक्येऽपि हि एकादिशब्दाः प्रयुज्यन्ते। यथा 'अयमयं च एको बहुव्रीहिः' इति। 'रामसुग्रीवयोः ऐक्यं' इत्यादि च भाव्यम्। (न्या. सि. 135.) (जीवब्रह्माद्वैतन्तु प्रकारैक्यरूपम्)। द्वयोर्भावः द्विता। द्विता एव द्वैतम्। स्वार्थे अण्। द्वित्वमित्यर्थः। तद्भिन्नमैक्यमित्यर्थः)

कार्यकारणयोः ऐक्यप्रतिपादनात् एकविज्ञानेन सर्वविज्ञानप्रतिपादनात् सामा-नाधिकरण्याच्चेति त्रिधा हि अद्वैतप्रतीतिः। ..... विशिष्टं कारणं तदेव कार्यमिति

कारणात् कार्यस्यानन्यत्वम्। अतः कार्यकारणयोः ऐक्यपराणां श्रुतीनां तयोरेकद्रव्य-त्वमेव प्रतिपाद्यम्। न तु विशिष्टत्वनिषेधः, तस्य विहितत्वात्। एकविज्ञानेन सर्वविज्ञानमप्येवमेव। यथा मृत्पिण्डेन तत्कार्यज्ञानेऽपि पिण्डगतरूपादिनिषेधो न कृतः तद्वत्। (श्रु. प्र. 1; भा. 2-76, 77)

'अहमिमास्तिस्रो देवताः, अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि' इति तिस्रो देवताः इति सर्वमचिद्वस्तु निर्दिश्य, तत्र स्वात्मकजीवानुप्रवेशेन नामरूप-व्याकरणवचनात् सर्वे वाचकाः शब्दाः अचिद्विशिष्टजीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्य-वृत्तम्। अतः स्थूलसूक्ष्मचिदचित्प्रकारकं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत्। (श्री. भा. 1; भा. 2-27)

कारणज्ञानेनैव तत्कार्यसर्वविज्ञानसिद्धेः, कार्यकारणयोरनन्यत्वात् प्रवृत्तिनिमित्त-भेदेनैकार्थबोधकत्वाच्च तेधाप्यैक्यं सिद्धम्।

ब्रह्माद्वैतं जीवाद्वैतं चेति अद्वैतं द्विविधं शास्त्रप्रतिपाद्यम्। तत्र ब्रह्माद्वैतं प्रकार्य-द्वैतम्, जीवाद्वैतं प्रकाराद्वैतम्। कोऽत्र नियामक इति चेत्; उच्यते— ब्रह्मप्रकरणेषु सामानाधिकरण्येन ब्रह्माद्वैतप्रतिपादनात्, सामानाधिकरण्यस्य च प्रकारभेदविशिष्ट-प्रकार्यैकत्वपरत्वात्, 'एकस्सन् बहुधा विचारः' इति प्रकारबहुत्वस्य कण्ठोक्तत्वात्, ऐक्यविधिशेषस्य, 'नेह नानास्ति' इत्यादिभेदनिषेधस्य विहितैक्यविरोधिभेदविषयत्वात्, सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वेन प्रकारिबहुत्वनिषेधपरत्वात्, 'न तत्-समश्चाभ्यधिकश्च दृश्यते' इति ब्रह्मतुल्यप्रकार्यन्तरनिषेधकण्ठोक्त्या च प्रकार्यद्वैतमेत्र ब्रह्माद्वैतम्। जीवात्मबहुत्वस्य श्रुतिसिद्धत्वात् अन्यथा बद्धमुक्तव्यवस्थानुपपत्तेः उपदेशा नुपपत्तेः सुखादिव्यवस्थानुपपत्तेः

'पुमान् न देवो न नरो न पशुर्न च पादपः।
चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः॥'

'देवादिभेदेऽपध्वस्ते' इत्यादिभिः भेदविशेषनिषेधस्य कण्ठोक्तत्वात् मुक्तानां साम्यवचनात्, 'अहं त्वं च तथान्ये च', 'तत्र त्वमहमप्यत्र', 'तन्मनः समतालम्बि' इत्यादि प्राकरणिकवचनानुरोधात् एको व्रीहिरितिवत् एकशब्दस्यैकजातीयपरत्वोपपत्तेः जीवाद्वैतमेव। (श्रु. प्र. 1-240)

'तस्यात्मपरदेहेषु सतोप्येकमयम्' इत्यत्र सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतात्मसु देवाद्याकारेण तदर्शनम-तथ्यमित्युच्यते, पिण्डगतमात्मगतमपि तं न प्रतिषिध्यते . . . . . . देवमनुष्यादि-विविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु देवादिभेदरहितं सममित्यर्थः । तथा च जीवगतमद्वतं प्रकारा द्वैतमित्येव बोध्यं श्रुतिस्मृतिप्रामाण्यात् ।

अत एव तन्त्रवार्तिकापूर्वाधिकरणे चैतन्यात्मकत्वाद्यविभागाच्च उपनिषत्सु ऐका-त्म्यव्यवहारः इति स्पष्टं न्यरूपि । ये च मुक्तानां क्षेत्रज्ञानां ईश्वरेण सह एकत्ववादाः तेऽप्यत्यन्तसाम्यात् वैलक्षण्याभावाच्च नेयाः ।

तथा च श्रुत्यन्तरं 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति ईश्वरसाम्यापत्तिमेव मुक्तस्य दर्शयति । तथा भगवता वासुदेवेनाप्युक्तम् –

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति ।

यत्तु 'ममैवांशो जीवलोके जीवभूतस्सनातनः'

इति भगवद्वचनं तत् स्वामिभृत्यभावरूपम् । यथा खल्वमात्या राज्ञोंशाः व्यपदिश्यन्ते तथा जीवोऽपि ईश्वरांशः इत्युच्यते । अन्यथा जीवत्वनाशात् सनातनत्वा नुपपत्तिः . . . . . . । विस्पष्टं हि परापरपुरुषयोः भेदः –

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः'

इत्यादिना उपबृंहितः ॥ (द. उ. 166)

2. द्वयोः भावः द्विता । पृथक्त्वनिवेशित्वात्सङ्ख्यायाः तद्वाचिना शब्देन तस्य लक्षणा । तथा च द्विताशब्देन पृथक्त्वं बोध्यते । द्वितायाः इदं द्वैतं–पृथगित्यर्थः । . . . . . न विद्यते द्वैतं यस्मात् तत् अतद्वैतम् । इदं धर्मिपरम् । (च. टि. 371) स्वपृथग्भूतवस्त्वन्तरशून्यमिति यावत् ।

अद्वैतः — 1. देवादिलक्षणभेदकाकारशून्यः प्रत्यगात्मा ।

'सलिल एको द्रष्टाऽद्वैतो भवति' (बृ. उ. (6-3-32) यथा जले जलं प्रक्षिप्त-मेकं भवति, एवं सलिले सलिलवत् स्वच्छस्वभावे परमात्मनि लीनोऽयं द्रष्टा जीवः प्राज्ञात्मपरिषङ्गवशेन एकीभूतस्तन् अद्वैतो भवति। (रं. भा )

2. मिथ्याज्ञानिवर्तकपरः वासुदेवः ।

'अद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' (सां उ 2-7)। द्वीति भाव-प्रधानम्। द्वित्वेन वस्तुतत्वापेक्षया अन्यात्मकत्वरूपद्वितीयप्रकारेण इतम् – ज्ञातं वस्तु द्वीतम्। इण् गतौ। द्वीतस्येदं द्वैतम् – मिथ्याज्ञानं, न विद्यते मिथ्याज्ञानं यस्मात्, तं अद्वैतम्। मिथ्याज्ञानविरोधि वा। तत् अहं ममतादिमिथ्याध्यवसायनि-वर्तकमिति यावत्। एतादृशमात्मानं चतुर्थं पादं मन्यन्ते औपनि षदाः ॥ (कू. भा.)

**अद्वैततत्त्वम्** — श्रीमन्नारायणः ।

चिदचिद्विशिष्टः श्रीमन्नारायण एवाद्वैततत्त्वम् ॥ (य. दी. 1)

**अद्वैतनिष्ठा** — अद्वैते निष्ठा ।

सर्वं ब्रह्मात्मकत्वेन विज्ञाय क्रियमाणं उपासनम् ॥ (सं. अ.)

**अद्वैतमयम्** —- देवमनुष्यादिद्वैतरहितात्मविषयतया तत्प्रचुरम् ॥ (वि. को.)

**अद्वैतमहावाक्यानि** — 'तत्त्वमसि' इत्यादि वाक्यानि (परमतानुरोधेन)।
अधिकं 'महावाक्य'पदे द्रष्टव्यम् ॥

**अद्वैतवाक्यात् भ्रमानिवृत्तिः** — तत्त्वमसीत्यादिवाक्यात् प्रपञ्चभ्रमनिवृत्तिः न सम्भवति। यदपि वर्ण्यतेऽद्वैतवाक्यजन्यधीरेवाविद्या तत्कार्यकृत्स्नाध्यासबाधिका, प्रत्यक्षादेः भेद-वासनामूलतया भेदस्वरूपमात्रबोधकत्वात्; तत्त्वमसीत्यादीनां तु तत्त्वावेदकत्वात्। पूर्वा च भेदबुद्धिः, परा त्वद्वैतबुद्धिः, अतः अपच्छेदनयात् पूर्वबाधः; आहुश्च—

'पूर्वाबाधेन नोत्पत्तिः उत्तरस्य हि सेत्स्यति' इति ।

एवं तत्त्वज्ञानादज्ञानबाध एव मुक्तिरिति ।

अत्रोच्यते – न हि भवति पौर्वापर्यमात्रात् बाध्यबाधकभावः अतिप्रसङ्गात्, उपक्रमनये च वैपरीत्यात् अद्वैतवाक्यानामपि माध्यमिकवाक्येन बाधप्रसङ्गात्। कारण-दोषतदभावाभ्यां विशेष इति चेन्न, प्रत्यक्षादिष्वपि तदभावात्। प्राचुर्येण दोष-मूलत्वदर्शनात् अन्येष्वप्यनाश्वासः इति चेन्न, वाक्येऽपि समत्वात्, अविद्याभेदवासना-मूलत्वस्य चाविशेषात्। समानदोषेष्वपि भ्रमेषु परं बाधकं दृष्टमिति चेन्न; तथात्व-वेदने तदयोगात् तत्र सन्देह एव स्यात्। नित्ये वेदवाक्ये कारणदोष एव नेति चेन्न; वक्तृदोषाभावेऽपि अविद्यामूलदोषत्वस्य त्वयैवोक्तत्वात्।

प्रथममेव प्रयोजकशिक्षया ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति श्रवणात्। ततश्च प्रत्यक्षधीजननार्थः प्रयासः; तज्जनने कुहकशक्तिजनितप्रत्यक्षबुद्धाविव विश्वासश्च न स्यात्। भ्रान्तिसिद्धवाक्यादपि पूर्वभ्रान्तिनिवृत्तिः तत्फलनिवृत्तिश्च दृष्टेत्यपि न, भ्रान्तोऽयमिति विदितेन नायं सर्प इत्युक्तेऽपि न विस्रम्भः; स्वप्नसर्पभ्रमजनितं साध्वसं नायं सर्प इति स्वप्नभ्रमेण न शाम्यति; यदा स्वप्नसर्पनिषेधेऽपि स्वाप्नबुद्धिर्जायेत; अतो नाद्वैतवाक्यात् भ्रमनिवृत्तिः। तत्फलनिवृत्तिश्चात्र वक्तुं न शक्यते इति। (स. सि. 118) अतः परत्वमात्रं न बाधकत्वे प्रयोजकम् ॥

अधन्यपुरुषाः — कर्मज्ञानभक्तिविहीनाः।

'अन्यैरधन्यपुरुषैर्मनसाप्यवाप्यम् (वै. स्त. 45)

'धनगणं लब्धा' (पा. सू. 4-4-84) इति सूत्रेण 'यत्' प्रत्यये धन्या इति। 'ऋचस्सामानि यजूंषि सा हि श्रीरमृतासतां' इति श्रुत्या वेदजन्यतत्त्वज्ञानस्यैव परमधनत्वं; अतः साधूनां कर्मज्ञानभक्तिलाभेनैव धन्यता इति भावः। (व्या)

अधर्मः — 1. धर्मेतरः – उपायेतरत्फलम्।

'अन्यत्र धर्मादन्यत्राधर्मात्' (क. उ. 2-14) अधर्मः धर्मेतरः उपेयः। प्रसिद्धसाध्यविलक्षणम् फलमित्यर्थः। (रं. भा.)

2. पापम्। तच्च ईश्वरकोपरूपम्। धर्माधर्मयोरपि ईश्वरप्रीतिकोपरूपत्वेन ईश्वरज्ञानेऽन्तर्भावः। (य. दी. 150) (शिष्टं अदृष्टपदे द्रष्टव्यम्)

3. पुण्यपापात्मकं कर्म। पापवत् पुण्यस्यापि स्वफलजननद्वारा मुक्तिप्रतिबन्धकत्वात्, मुमुक्षोरिष्टफलप्रतिबन्धकत्वानिष्टफलसाधनत्वादिरूपाधर्मशब्दप्रवृत्तिनिमित्तयोगात्।

1. निषिद्धक्रियासाध्यतयाभिमतः सर्वप्रशासितुरीश्वरस्य निग्रहाख्य बुद्धिविशेषः। 2. स्थितिहेतुभूतो द्रव्यविशेषः व्यापी (जैनमते)। (वि. को)

1. गुणविशेषः (न्यायमते) शरीरादिजनकात्मविशेषगुणः। अयं च जीवमात्रसमवेतो भोगप्रायश्चित्तादिनाश्यश्चेति विज्ञेयम्। अधर्मो न प्रत्यक्षः किं त्वनुमानगम्यः। तच्चानुमानं देवदत्तस्य शरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोग-

हेतुत्वाद्देवदत्तप्रयत्नजन्यवस्तुवत् इति ज्ञेयम्। 2. नरकदुःखादिदुःखानां साधनम्। 3. निषिद्धकर्मजन्यः। निषिद्धकर्म चात्रानिष्टसाधनत्वेन वेदबोधितं कर्म। तच्च सुरापानादि। 4. दुःखासाधारणं कारणम्। अधर्मः आत्मगुणः कर्तुरहितप्रत्यवायहेतुः अतीन्द्रियः सम्यग्ज्ञानविरोधी। तस्य तु साधनानि शास्त्रप्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि। (न्या॰ को.)

**अधर्मत्वम्** — अनिष्टफलसाधनत्वम्।

स एव धर्मः सोऽधर्मः तं तं प्रति नरं भवेत्।
पात्रकर्मविशेषेण देशकालावपेक्ष्य च ॥

इति स्मृत्यनुसारेण, अधिकारिभेदेन धर्माधर्मत्वनिर्णयः। . . . बुभुक्षुदृष्ट्या विहितानां ऐहिकामुष्मिकफलवतां कर्मणां धर्मत्वं युज्यते; अतएव प्रवृत्तिधर्मा इति च व्यवह्रियते। मुमुक्ष्वपेक्षया फलसंगत्यागस्यावश्यकतया प्रवृत्तिधर्माणामधर्मत्वं च योयुज्यते। . . . . अत एव निवृत्तिधर्माः इति च व्यवह्रियते।

अत एव हि 'त्रैवर्गिकान् त्यजेद्धर्मान्' इति मुमुक्षुं प्रत्यनुशिष्यते। . . . तेषामेव च कर्मणां फलसंगादित्यागवतां निवृत्तिधर्मतापत्त्या विद्याङ्गत्वं च घटते। . . . . अतः देशकालपात्रादिभेदेनैव व्यवस्था कार्येति प्रवृत्तिकर्मणां मुमुक्षुदृष्ट्या अधर्मत्वं सूपपन्नम्। (स. सि. 162)

**अधश्शाखः** — अधःप्रसृतशाखः संसारवृक्षः।

'ऊर्ध्वमूलमधःशाखं अश्वत्थं प्राहुरव्ययम्' (गी. 15-1.)

संसाराख्यमश्वत्थं ऊर्ध्वमूलमधश्शाखमव्ययं प्राहुः श्रुतयः, 'ऊर्ध्वमूलोऽवाक्छाखः एषोऽश्वत्थस्सनातनः 'ऊर्ध्वमूलोमवाक्छाखं वृक्षं यो वेद संप्रति' इत्याद्याः। सप्तलोकोपरिनिविष्ट चतुर्मुखादित्वेनतस्योर्ध्वमूलत्वं पृथिवीनिवासिसकलनरपशुमृगक्रिमिकीटपतङ्गस्थावरान्ततया अधश्शाखत्वम्। (गी. भा.)

**अधिकम्** — 1. अर्थांतरभूतं (ब्रह्म)।

'अधिकं तु भेदनिर्देशात्' (ब्र. सू. 2–1-22)

आध्यात्मिकादिदुःखयोगार्हात् प्रत्यगात्मनः अधिकं अर्थान्तरभूतं ब्रह्म। (श्री. भा)

2. दोषविशेषः। अन्वितमुपयुक्तं अपुनरुक्तं कृतकरणतया स्वसिद्धान्त-निर्णीतं अधिकम्। तत्र हेत्वधिकं यथा; पर्वतोवह्निमान् धूमवत्त्वात्; आलोकवत्त्वात् इत्यादि। एवमेव दृष्टांताधिकम्, व्याप्त्यधिकम्, दूषणाधिकम्' इति। (न्या. प. 150)

**अधिकन्तु प्रविष्टं न तु तद्धानिः —** अयञ्च न्यायविशेषः।

'योऽसावसौ पुरुषस्सोऽहमस्मि', 'तत्त्वमसी'त्यादिष्वस्य प्रयोजनम्।

तथा हि– ननु 'योऽसौ पुरुषस्सोऽसावहमस्मि' इति कथं सामानाधिकरण्यं, अहं पदार्थस्य जीवात्मनः परमपुरुषाद्भिन्नत्वादिति चेन्न; अहंशब्देनापि अस्मदर्थान्तर्यामिण एवाभिधानेन 'अहं स' इति निर्देशस्य सुसङ्गतत्वात्।

ननु चाहंशब्दस्य प्रत्यगर्थान्तर्यामिपरत्वे सोऽस्मीत्युत्तमपुरुषो न घटते, न हि मदन्तर्यामीत्यादि शब्दान्तरेणोपस्थापिते प्रत्यगर्थान्तर्यामिणि उत्तमपुरुषान्वयासम्भवेऽपि अहमित्यस्मत्पदोपस्थापिते तस्मिन् उत्तमपुरुषान्वयी युज्यत एव। तथा हि पाणिनिसूत्रम् 'अस्मद्युत्तम' इति। प्रत्यगर्थबोधकास्मच्छब्दोपपदे उत्तमपुरुषो भवतीत्यर्थः। न पुनरस्मच्छब्दस्य प्रत्यगर्थद्वारा परमात्मपर्यन्ततायामुत्तमनिवृत्तिरिति। 'अधिकन्तु प्रविष्टं न तु तद्धानिः इति न्यायात्।

एवं तत्त्वमसीत्यादिष्वपि असीति मध्यमपुरुषो निर्वाह्यः; त्वंपदेनाभिमुखचेतनद्वारैव तदन्तर्यामिणोऽभिधानाभ्युपगमात् तत्रापि 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इत्येतावदेव हि स्मर्यते, न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिरपि। (ई. उ. कू. भा. 16) तद्धानिः— तानिद्धकर-मित्यर्थः। आयुः घृतमितिवत् निर्देशः। अत एव क्वचित् 'तद्धानये' इत्यपि।

यत्राधिकप्रवेशेऽपि प्रकृतस्य न हानिः तत्रायं प्रवर्तते, इति॥ (मी. को.)

**अधिकन्तु भेदनिर्देशात् —** (ब्र. सू. 2-1-22) (इतरव्यपदेशाधिकरणे द्वितीयं सूत्रम्)

तु शब्दः पक्षव्यावृत्त्यर्थः। प्रत्यगात्मनोऽधिकं अर्थान्तरभूतं ब्रह्म 'स कारणं करणाधिपाधिपः' इत्यादि भेदकधर्मनिर्देशात्।

आध्यात्मिकादि दुःखयोगार्हात् प्रत्यगात्मनः अधिकं अर्थान्तरं ब्रह्म इतरस्मा-दित्यर्थलभ्यं अस्मिन् अधिकरणे इतरव्यपदेशादिति पूर्वं तस्य प्रस्तुतत्वात् तत्र हेतुः

भेदनिर्देशात् इति । भेदप्रतिपादनैकतानात् श्रौतनिर्देशादित्यर्थः । न च भेदनिर्देशः औपाधिकः उपाध्यनवगमात् । न चाज्ञानं तदुपाधिः; मुक्तावपि तन्निर्देशात् । न हि तदानीमपि तदस्ति, मुक्तिविरोधात् । अतः शरीरशरीरिनिबन्धनमेवान्यत्वम्, न तु स्वरूपैक्यनिबन्धनम् । न च तादधीन्यमात्रपरतया अन्यथासिद्धिः शङ्कनीया, मुख्यत्वे बाधकाभावात् । शरीरपदप्रवृत्तिनिमित्ततया मुख्यतौचित्याच्च तदेतत्सर्वं दर्शयितुमधिकमित्युक्तम्; न तु भिन्नमिति । दृश्यते हि अधिकयोरपि भेदः । अत एव भाष्ये 'य आत्मनि तिष्ठन्', 'पृथगात्मानं प्रेरितारञ्च मत्वा', 'ज्ञा ज्ञौ', 'प्रधानक्षेत्रज्ञपतिः' 'नित्यो नित्यानां', इत्यादि भेदकधर्मा एव प्रदर्शिताः । भिद्यन्ते अनेनेति भेदकधर्माः भेदपदेनोच्यन्ते । अत एव अर्थान्तरं ब्रह्मेति भावः । कारणञ्च विशिष्टमेव । 'किं कारणं ब्रह्म' इति प्रश्ने 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा, सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्, इत्युत्तरोपसंहारात् ।

तत्र तु अयं विशेषः । यदुपादानत्वं तद्विशिष्टनिष्ठं यन्निमित्तत्वं तद्विशेष्यमात्रनिष्ठमिति आरम्भणशब्दादयोऽपि न स्वरूपमात्रनिष्ठाः । किन्त्ववस्थाविशेषनिष्ठाः । अवस्थावैशिष्ट्यञ्च क्वचित्साक्षात् क्वचित् परम्परया । नैतावता तु मुख्यत्वविरहः । अपृथक्सिद्धवस्तुगतावस्थाश्रयस्य सद्वारकस्यापि मुख्यतायाः 'बालो युवे'त्यादि व्यवहारेषु क्लृप्तत्वात् इत्युक्तं प्रकृत्यधिकरणे । अतः सूक्ष्मचिदचिद्द्वारकं स्थूलचिदचिदुपादानत्वमपि मुख्यमेव । भाव्यवस्थाविशिष्टं प्रति प्रागवस्थावत एवोपादानत्वात् । आकारभेदेऽपि आकार्यैक्यात् निमित्तोपादानैक्यमिति भावः । अतः भेदस्य स्वाभाविकत्वं सिद्धम् ।

करणाधिपस्याधिप इति श्रुत्येह भेदतः ।
निर्देशेनाधिकं ब्रह्म जीवान्नातोऽत्र दुस्स्थता ॥

(ब्र. प. मा. 160)

**अधिकपरिमाणम्** — अधिकपरिमाणविशिष्टं द्रव्यम् ।

यत् संयुक्तं देशं देशान्तरं च यत् युगपदाक्रमितुं तत् ततोऽधिकं परिमाणम् । (न्या. सि. 261) सिद्धान्ते परिमाणं नातिरिक्तमद्रव्यम् । शिष्टं परिमाणपदे द्रष्टव्यम् ॥

**अधिकरणम्** — 1. विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनरूपार्थपञ्चकप्रतिपादकम् ।

विषयः संशयश्चैव विचारो निर्णयस्तथा ।
प्रयोजनेन सहितं एतत्स्यादङ्गपञ्चकम् ॥

एवं पञ्चाङ्गसहितम् अधिकरणमित्युच्यते। (श्रु. प्र. 1, भा. 2, पु. 100)

विषयः संशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ॥ इति ।

दशाङ्गमित्याहुराचार्याः –

सङ्गतिर्विषयश्चैव संशयोत्थानकारणम् ।
संशयस्य प्रकारश्च तदर्था च विचारणा ॥
तस्याः फलफलित्वञ्च न्यायौ द्वौ पक्षयोर्द्वयोः ।
निर्णयस्तत्फलञ्चेति बोध्यान्यधिकृतौ दश ॥

इति (चिं. म. 27)

2. आधारः । यत्र यत्प्रतीयते तस्य तदेवाधिकरणम् । (वे. मं. दी. 193)

**अधिकरणत्वम्** — विषय-संशय-पूर्वपक्ष-उत्तर-सिद्धान्त एतत्पञ्चाङ्गबोधकवाक्यसमुदायरूपन्यायत्वमधिकरणत्वमिति मीमांसकाः वेदान्तिनश्चाहुः ॥ (न्या. को.)

**अधिकरणदोषाभासाः** —

पौनरुक्त्यम्, उक्तबाधः, मन्दत्वम्, असङ्गतत्वम्, विषयः, अफलता, मानबाधश्चेति । विवरणं तत्तत्पदे द्रष्टव्यम् । तदुक्तम् –

'त्र्यन्तस्वान्तवादिन्यधिकरणगणे पौनरुक्त्योक्तबाधौ
मन्दत्वासङ्गतत्वे विषयमफलतां मानबाधञ्च मन्तॄन्'

इति । (अ. सा. 3)

**अधिकरणपरस्परविरोधपरिहारः**— यथा वा शास्त्रयोन्यधिकरणसांख्याधिकरणविरोधपरिहारः ।

प्राज्ञाधिष्ठितत्वमनुमातुं नैव शक्यमिति शास्त्रयोन्यधिकरणे स्थापितम् । रचनानुपपत्त्यधिकरणे [सांख्याधिकरणे] तु परोक्तानां पक्षदृष्टान्तभूतानामचेतनानां संप्रतिपन्नवत् प्राज्ञाधिष्ठितत्वं सूत्रभाष्याभ्यां साध्यते इति; पूर्वापरविरोध इति चेदाह –

'सोऽपि प्राज्ञव्युदासेऽप्यनुमितिशरणान् प्रत्युपाद्यः प्रसङ्गः
नेष्टे तत्सिद्ध्यसिद्ध्योरनुमितिरिति खल्वाशयस्सूत्रकर्तुः'

इति (त. मु. 169)

अयं भावः । प्राज्ञानधिष्ठितत्वमनुमातुं न शक्यमिति सांख्याधिकरणतात्पर्यम् । शास्त्रयोनित्वाधिकरणस्य तु अधिष्ठितत्वं नानुमातुं शक्यमिति । अतः साधकबाधकाभावे शास्त्रं निरंकुशप्रसरमिति सूत्रकाराभिप्राय एव भाष्ये दर्शित इति । (स. सि.) एवमेव दर्शनान्तरेऽपि प्रतीयमानः परस्परविरोधः सर्वैरपि तत्र तत्र तात्पर्यभेदेन परिहरणीय एव ॥

**अधिकरणविषयः —**

अधिकरणविषयो द्विविधः । अधिकरणप्रतिपाद्यार्थस्तावेदकः मुख्यः । तत्प्रतिपादकश्रुतिरवान्तरविषयः । (चिं. म. 27) यद्यपि मीमांसासूत्राणि विषयवाक्यमधिकृत्यैव प्रवर्तन्ते । तथापि विषयस्यैव प्राधान्यादेवमभ्यधायि ॥

**अधिकरणसंख्या — 1. ब्रह्मकाण्डस्थाधिकरणसंख्या ।**

'अधिकृतिगणना चिन्मयी ब्रह्मकाण्डे' (अ. स. 16) तदित्थं — कादिषु चकारः षष्ठः, अतः एकस्थाने षट्त्वसंख्यानिवेशः । मकारस्तु पादिषु पञ्चमः, एवञ्च दशस्थाने पञ्चत्वसंख्यानिवेशः । यकारस्तु यादिषु प्रथम इति शतस्थाने एकत्वसंख्यानिवेशः । तथा च चिन्मयी च षट्पञ्चाशदुत्तरशतरूपा (१५६) अधिकरणसंख्येत्यर्थः । (प. यो.)

2. पादशः अधिकरणसंख्या ।

'अक्षोर्म्याशाहिकाष्ठाद्विरदमुनिवसूर्म्यद्रितत्त्वातिशक्व-
र्यक्षैरक्षैः प्रयाजैरिह भवति रसैः पादनीतिप्रबन्धः'

(अ. सा. 16)

अत्र लोकप्रसिद्धानुसारात् संख्यानिर्देशः । अक्षाण्येकादश, ऊर्मयः षट्, आशा दश, अहयः अष्टौ, काष्ठा दश, द्विरदाश्चाष्टौ, मुनयः सप्त, वसवोऽष्टौ, ऊर्मयः षट्, अद्रयोऽष्टौ, तत्त्वानि षड्विंशतिसंख्याकानि, अतिशक्वरी पञ्चदश,

अक्षाण्येकादश, पुनरप्यक्षाण्येकादश, पञ्च प्रयाजाः, रसाः पट् अनया प्रक्रियया प्रतिपादमधिकरणसंख्या सुविदिता। (चिं. म.)

अत एवम् अध्यायपादाधिकरणसूत्राणां संख्यानिर्णयः ॥

| अध्यायः | पादः | अधिकरणानि | | | सूत्राणि | | |
|---|---|---|---|---|---|---|---|
| | | शङ्करमते | रामानुजमते | मध्वमते | शङ्करमते | रामानुजमते | मध्वमते |
| १ | १ | ११ | ११ | १२ | ३१ | ३२ | ३१ |
| | २ | ७ | ६ | ७ | ३२ | ३३ | ३२ |
| | ३ | १४ | १० | १४ | ४३ | ४४ | ४३ |
| | ४ | ८ | ८ | ७ | २८ | २९ | २९ |
| | १ अध्याये | ४० | ३५ | ४० | १३४ | १३८ | १३५ |
| २ | १ | १३ | १० | ११ | ३७ | ४६ | ३८ |
| | २ | ८ | ८ | १२ | ४५ | ३२ | ४५ |
| | ३ | १७ | ८ | १९ | ५३ | ५२ | ५३ |
| | ४ | ९ | ८ | १३ | २२ | १९ | २३ |
| | २ अध्याये | ४७ | ३४ | ५५ | १५७ | १४९ | १५९ |
| ३ | १ | ६ | ६ | २० | २७ | २७ | २९ |
| | २ | ८ | ७ | २० | ४१ | ४० | ४२ |
| | ३ | ३६ | २६ | ४२ | ६६ | ६४ | ६८ |
| | ४ | १७ | १५ | ११ | ५२ | ५१ | ५१ |
| | ३ अध्याये | ६७ | ५४ | ९३ | १८६ | १८२ | १९० |
| ४ | १ | १४ | ११ | ८ | १९ | १९ | १९ |
| | २ | ११ | ११ | १० | २१ | २० | २२ |
| | ३ | ६ | ५ | ६ | १६ | १५ | १६ |
| | ४ | ७ | ६ | ११ | २२ | २२ | २३ |
| | | ३८ | ३३ | ३५ | ७८ | ७६ | ८० |
| आहत्य | | १९२ | १५६ | २२३ | ५५५ | ५४५ | ५६४ |

**अधिकरणसिद्धान्तः** — चतुर्विधसिद्धान्तेष्वन्यतमः ।

यत्तु यत्सिद्धावन्यप्रकरणसिद्धिः, सोऽधिकरणसिद्धान्त इति; तदयुक्तम्, तस्य सर्वैरभ्युपगमे सर्वतन्त्रसिद्धान्तत्वात्, स्वतन्त्रमात्रसिद्धौ प्रतितन्त्रत्वात्, परैरपि कैश्चिदभ्युपगमेऽभ्युपगमसिद्धान्तत्वात्। केवलं त्वयमस्य सिद्धान्त इति निर्णयेऽनुषङ्गसिद्धिलिङ्गं भवतीत्येतावता यदि पृथगभिधानं, काममभिधीयताम् इति । (न्या. प. 145)

यस्यार्थस्य सिद्धौ अन्येऽर्थाः अनुषज्यन्ते, न तैर्विना सोऽर्थः सिद्ध्यति, तेऽर्थाः यदधिष्ठानाः सोऽधिकरणसिद्धान्तः। (वि. को.)

यस्यार्थस्य सिद्धौ जायमानायामेवान्यस्य प्रकरणस्य प्रस्तुतस्य सिद्धिर्भवति सः । (न्या. को.) 'आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्' इत्यादौ मन आदीनाम् इन्द्रियत्वमन्तरा न तदधिष्ठातृतया आत्मसिद्धिः । अत्र मनसः इन्द्रियत्वादिकमधिकरणसिद्धान्तः ।।

**अधिकरणादिसंख्यापरिगणनप्रयोजनम्** —

अत्राधिकरणादीनाम् अन्योन्यसङ्करव्यावृत्तये मतान्तरव्यावृत्त्यर्थं चाधिकरणसंख्यानं सफलम् । एतद्व्याख्यैव संख्याकथनम् । अतः नेयं काकदन्तपरीक्षेत्याशयः ।

**अधिकानुभाषणम्** — अधिकाख्यनिग्रहस्थानम् ।

अनुभाषणन्तु दूष्यैकानुभाषण-तदधिकानुभाषण-विपरीतानुभाषण-केवलोत्तरमौनभेदात् पञ्चविधम् । प्रतिवादिना दूष्यांशानुवादपूर्वकमेव वादिदूषणं कार्यम्; तच्च अनुभाषणम् । दूष्यांशस्याधिक्येनानुभाषणम् अधिकानुभाषणमित्युच्यते ।।

**अधिकारः** — 1. प्राग्जन्मजं कर्म ।

'यजन्तः क्षपयन्त्युग्रमधिकारं फलप्रदम्' (वि. पु. 2-4-40)

2. अर्हता । यथा उपासनायां शमदमादिः । शमदमादिमत एव उपासनाधिकारित्वात् । यथा वा देवादीनाम् अर्थित्वसामर्थ्यप्रयुक्ता उपासनायामर्हता । (श्री. भा. 1-3-33) 3. प्रस्तावः । (श्रु. प्र. 2-3-13) यथा 'अधिकाररूप शब्दान्तरेभ्यः' इत्यत्र । 4. तादर्थ्यबोधनम् । (श्रु. प्र. 3-2-14) 5. पदम् । (स्थानम्) (श्रु. प्र. 3-3-31) 6. मदभिलषितसाधनत्वात् मदर्थमिदं कर्म इति

कर्मण्यैश्वर्यबोधे हि अधिकारः । (ता. चं. 3-30) 7. अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्त इति चातुर्विध्येनाधिकार उच्यते । अथवा अर्थित्वं सामर्थ्यं चेति द्विधैव अधिकारः । सामर्थ्यं पुनः त्रिधा । जन्मसामर्थ्यं, कर्मसामर्थ्यं, बुद्धिसामर्थ्यञ्चेति ।
(चिं. म. 119)

उपायानुष्ठानोपयुक्तो धर्मविशेषः । (वि. को.)

1. स्वामित्वं यथेष्टक्रयविक्रयादिकर्तृत्वसंपादकस्वामित्वं वा । यथा सर्वे स्युः अधिकारिण इत्यादावधिकार इति धर्मशास्त्रज्ञाः । 2. यद्धर्मविशिष्टेन कृतस्य कर्मणः फलजनकत्वं सः । 3. यत् प्रवर्तमानपुरुषनिष्ठं तथा ज्ञायमानं सत् प्रवृत्तिहेतुः सः । 4. यत् विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयते सोऽधिकार इति मीमांसकाः । 5. स्वसूत्रे लक्ष्यसंस्कारकवाक्यार्थशून्यत्वे सति विधिसूत्रैकवाक्यतापन्नत्वमिति शाब्दिका वदन्ति । 6. आरम्भः । अथ शब्दानुशासनम् इत्यादौ । (न्या. को.)

**अधिकाररूपशब्दान्तरेभ्यः** — (ब्र. सू. 2-3-13) (तेजोऽधिकरणे चतुर्थं सूत्रम् )

अन्नशब्देन पृथिव्युच्यते; महाभूतसृष्ट्यधिकारात् ; पश्चादपि महाभूतरूपसङ्कीर्तने 'यत्कृष्णं तदन्नस्य' इति रूपकीर्तनात् ; समानप्रकरणे 'अद्भ्यः पृथिवी' इति पृथिवीशब्दश्रवणाच्च । अनेन 'ता अन्नमसृजन्ते'त्यादौ अन्नशब्देन पृथिवीग्रहणे हेतवः प्रदर्शिताः । (अधिकारः— प्रस्तावः)

ता(ः) अन्नमसृजन्तेति पृथिव्यास्सृष्टिरुच्यते।
भूताधिकाररूपान्यशब्देभ्योऽन्नं धरेति च ॥
(ब्र. प. मा. 229)

**अधिकारविधिः** — फलस्वाम्यबोधको विधिरधिकारविधिः ।

यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिः ॥

**अधिकारित्वम्** — फलभागित्वम् ।

**अधिकारिनिष्ठाक्रमः** — अधिकारिणः उपायाधीनफलान्वयिनः या निष्ठा उपायाधीनफलव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगिनी स्थितिः । तस्याः क्रमः — परिपाटी ।
(श्री. भू. टि. 48)

**अधिकारिविवेकवादः** — शतदूषण्यां ६३ तमवादः ।

उपन्नतत्त्वज्ञानस्य कर्मयोगानधिकारः इति भवगद्गीतादीन् व्याचक्षाणैः परैः उक्तः अत्र प्रतिक्षिप्यते ।

तत्र तावत् सम्यगात्मदर्शनेन निरस्तमिथ्याज्ञानस्य प्रव्रज्यां प्रविष्टस्यापि सांख्य-संज्ञस्य ज्ञानयोगाधिकारिणः

'शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्'

इत्यादिभिर्लौकिकवैदिकसमस्तकर्मसंन्यासो नास्तीति सुव्यक्तम् ।

अथापि ब्रूमः – प्रव्रजितस्यापि यज्ञादिनिरपेक्षेषु प्राणायामादिकर्मयोगेषु अधिकारः आदिश्यते। अन्यथा

'कुर्याद्विद्वान् तथाऽसक्तः चिकीर्षुर्लोकसंग्रहम्'

इत्युक्तलोकसंग्रहार्थं कर्मण्यपि प्रवृत्तिः निषिद्धानुष्ठानं स्यात् । किञ्च वर्णाश्रम-धर्मा हि सर्वासु निष्ठासु इतिकर्तव्यतात्वेन अवतिष्ठन्ते; न तु स्वयमेव कर्मयोगादि-रूपाः । अत एव हि भक्तियोगावस्थस्यापि तदनुवृत्तिः । न च पूर्वकृतैः कर्मभिः मृदितकषायस्य किमिदानीन्तनैरिति वाच्यम् , अमुक्तस्यात्यन्तमृदितकषायत्वाभावात् । आत्मदर्शनसिद्धौ किं तदर्थेनेति चेन्न; अनिश्चितासद्भावपूर्वोत्तरज्ञानावरणहेतुविनि-वारणाय तदुपादानोपपत्तेः । अतः आत्मज्ञाने सिद्धेऽपि उत्तरोपचयसिद्ध्यर्थं अपचय-परिहारार्थं वा ज्ञाननिष्ठैरपि स्ववर्णाश्रमोचितं कर्मोपसंहर्तव्यम् । अकरणनिमित्त-प्रत्यवायपरिहारादेः करणमन्तरेणान्यतोऽसम्भवात् । न तु स्वयमेव कर्मयोगादिरूपाः एते । अत एव भक्तियोगावस्थस्यापि तदनुवृत्तिः । तदेतत्सर्वं वर्णाश्रमधर्माणां यावज्जीवमनुष्ठेयत्वप्रतिपादकेन भाष्येण व्यञ्जितम् । विस्तरस्तु तत्रैव ॥

[वस्तुतस्तु – वर्णाश्रमादिरूपं कर्म अन्यत् , प्राणायामार्चनादिरूपः कर्मयोग श्चान्यः । सन्यासिनामप्याश्रमित्वात् उक्तोभयविधंकर्मानुष्ठानमवर्जनीयमेव । अत्या-श्रमास्तु न सन्त्येव । ]

**अधिकृताधिकारः** — यज्ञादिष्वधिकारवत एव उपासनायामधिकारः ।

एवमेव उपनयनाधिकृतस्यैव वेदेऽधिकारः इत्यादिकमप्यूह्यम् ॥

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्** — (ब्र. सू. 3-4-8) (पुरुषार्थाधिकरणेऽष्टमं सूत्रम्)

विद्यात एव पुरुषार्थः कर्तुरर्थान्तरभूतस्य परस्यैव फलप्रदत्वोपदेशात् इति सिद्धान्तयति । तुशब्दात् पक्षो व्यावृत्तः । बादरायणस्यैवं विद्यातः फलमिति मतम् ; कुतः ? अधिकोपदेशात् — कर्मसु कर्तुः प्रत्यगात्मनोऽधिकस्य अर्थान्तरभूतस्य वेद्यस्य वेदनभूतविद्यायाः फलसाधनत्वोपदेशात् । तद्दर्शनात् — दृश्यते हि वेदान्तवाक्ये अधिकविषयत्वं विद्यायाः । एवमेव हि 'तदैक्षत बहु स्यां प्रजायेयेति', 'सोऽकामयत बहु स्यां प्रजायेय' इत्यादिषु बहुभवनसङ्कल्पपूर्वकसृष्ट्यादेः कर्तुः सर्वेश्वरस्य करणाधिपाधिपस्यानवधिकातिशयज्ञानानन्दैकस्वरूपस्य निखिलहेयप्रत्यनीकस्य वेद्यस्य विद्या ब्रह्मप्राप्तिफलाय विधीयते । अतः विद्यात एव पुरुषार्थः । न तु कर्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशेन कर्मण एव फलमित्यवगम्यते ।

विद्यातः पुरुषार्थस्तु बादरायणसम्मतः ।
जीवाधिकपरस्यैव वेद्यत्वाच्च तथा श्रुतेः ॥

(ब्र. प. मा. 426)

**अधिगमः** — विचारः ।

'वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति वृत्तिकारवचनम् । अधिगम्यते अनेनेत्यधिगमः । (त. टी. 27)

1. ज्ञानम् । 2. प्राप्तिः । 3. स्वीकारः । 4. निध्यादेः प्राप्तिरिति व्यवहारज्ञाः । 5. व्याख्यानादिरूपपरोपदेशजनितं ज्ञानमधिगम इत्यार्हता आहुः ।

(न्या. को.)

**अधिदैवम्** — दैवेषु इति ॥

**अधिदैवतम्** — 1. अधिदैवतशब्दनिर्दिष्टः (पुरुषः) ।

'पुरुषश्चाधिदैवतम्' (गी. 8-4) दैवतोपरि वर्तमानः, इन्द्रप्रजापतिप्रभृतीनां भोग्यजातात् विलक्षणशब्दादेर्भोक्ता पुरुषः । (गी. भा.) दैवतोपरिवर्तमानम — दैवतोपरीति सम्बन्धसामान्यषष्ठ्या समासः । दैवतशब्दस्य अत्र सर्वेश्वरात् संकोच

देवतान्तरेष्वभिव्याप्तिं चाह इन्द्रेति । उपरिवर्तमानत्वमिह न केवलं देशाद्यपेक्षया, किन्तु भोगप्रकर्षादपीत्यभिप्रायेणेत्याह इन्द्रेत्यादिपुरुष इत्यन्तम् । (ता. चं.)

2. 'अधिभूतमादित्यस्तत्राधिदैवतम्' (सु. उ. 5-1) देवेषु वर्तमानं; देवतासु अन्तर्भूतत्वेन वेद्यम् । (ब्रह्म) (श्रु. भा.)
3. दैवतासु इति । स्वार्थेऽण् । विभक्त्यर्थेऽव्ययीभावः । एतत्पर्याय एवाधिदैव-शब्दोऽपि ॥

**अधिपतिः** — 1. स्वामी ।

'स वा अयमात्मा सर्वेषां भूतानामधिपतिः' (बृ. उ. 4-5-15) 2. शेषी । 'पतिशब्दः शेषिणि रूढः' इति व्यासार्यैः प्रथमसूत्रे प्रतिपादितत्वात् चेतनाचेतन-विलक्षणः आत्मा सर्वेषां भूतानामधिपतिः । (रं. भा.) 3. इन्द्रियम् । 'अधिपति-सहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ हेतवः' (श्री. भा. 2-2-20) [इदं बौद्धमतम् ] 4. अधिकः पतिः – अधिपतिः । पतिशब्देन पालनकर्तृत्वरूपनिमित्त-त्वमुक्त्वा तस्यैवोपादानत्वरूपमाधिक्यम् अधिशब्देन प्रतिपाद्यते ॥ (द्र. उ. व्या. 1)

**अधिपत्नी**— लक्ष्मीः ।

अधिकस्य भगवतः पत्नी, आश्रितसंरक्षणयज्ञे सहधर्मचारिणी । ''पत्युर्नो यज्ञसंयोगे' इति पाणिनिः ।' (वि. को.)

**अधिपूरुषः** — हिरण्यगर्भः ।

'त्वत्तश्चाप्यधिपूरुषः' (वि. पु. 1-12-57) अधिकारिपुरुषो ब्रह्मा; अथवा त्वां (भगवन्तं) अधिकरणीकृत्य पुरुषः आत्मसमष्टिरूपः हिरण्यगर्भः । (वि. चि.)

**अधिभूतम्** — 1. भूतेषु – पृथिव्यादिषु, वर्तमानम् – वेद्यं (उपास्यरूपं) अधिभूतम् । (श्रु. भा.) 'अधिभूतं आदित्यस्तत्राधिदैवतम्' (सु. उ. 5-1) 2. भूतेषु इति अधिभूतम् । 'अधिभूतं क्षरो भावः' (गी. 8-4) वियदादि भूतेषु वर्तमानः । (गी. भा.) भूतशब्दस्यात्र जन्तुविषयत्वव्यवच्छेदाय वियदादिशब्दः । (ता. चं.) अधिभवतीति व्युत्पत्तेः प्राणिजातम् इति कैश्चित् । अस्य प्रकरणस्य परमात्म-परत्वप्रतिपादनार्थं वर्ण्यते । सिद्धान्ते तु अस्य श्लोकस्य प्रश्नत्रयप्रतिवचनरूपतया ऐश्वर्यार्थिनां ज्ञातव्यतया निर्दिष्टं अधिभूतम् – वियदादिभूतेषु वर्तमानः, क्षरो भावः–

क्षरणस्वभावः इन्द्रप्रजापतिप्रभृतीनां भोग्यजातात् विलक्षणः शब्दस्पर्शादिविशिष्टभावः प्राप्यत्वेन अनुसन्धेयः इति भाषितम् । (ता. चं. 8-14)

**अधिमात्रम्** — मात्रासु वर्तमानः ।

'सोऽयमात्मा अध्यक्षरमोंकारोऽधिमात्रम्, पादा मात्राः मात्राश्च पादाः अकार उकारो मकार इति' (मां. उ 3-1) मात्रासु वर्तमानः यः ओंकारो नादात्मकः स एव अयमात्मेत्यर्थः । समस्तप्रणवे ब्रह्मदृष्टिं कृत्वा प्रणवमात्रासु अकारादिषु चतुर्षु चानिरुद्धादिचतुष्टयदृष्टिः कर्तव्येत्यर्थः । अकार उकार मकारेति नादस्याप्युपलक्षणम् । (रं. भा.) अधिकाः मात्राः अंशाः यस्य तदधिमात्रम् । मात्राः काः इत्यत आह 'पादा मात्रा' इति । पद्यन्त इति पादाः । विश्वादिरूपाणि मात्रा इत्युक्ता इत्यर्थः । पादाः कीदृशा इत्यतोऽकारादिप्रतिपाद्या विश्वादय इत्याह 'मात्राश्च पादा अकार' इति । 'अ' इत्याक्रियते प्रतिपाद्यते इत्यकारः विश्वः एवं उक्तदिशा उकारः तैजसः मकारः प्राज्ञः उपलक्षणमिदं नादबोध्यस्तुरीयोऽपि वाक्यशेषोक्त्या ग्राह्यः । एते विश्वतैजसप्राज्ञ-तुरीयाः पादाः मात्राशब्देन अधिमात्रमित्यत्रोक्ता इत्यर्थः । (कू. भा.)

**अधियज्ञम्** — यज्ञे इति सप्तम्यर्थेऽव्ययीभावः ॥

**अधियज्ञः** — यज्ञाराध्यः ।

'अधियज्ञोऽहमेवात्र' (गी. 8-4) अधियज्ञशब्दनिर्दिष्टः अहमेव । अत्र अधियज्ञः यज्ञैराराध्यतया वर्तमानः । (गी. भा.) यज्ञे सम्बध्यमानः । तत्र च सर्वेश्वरस्याराध्यतया सम्बन्धः । (ता. चं.) नाध्यात्मशब्दवदधियज्ञशब्देऽव्ययीभावः; तदा हि नपुंसकत्वं स्यात् । किन्तु 'अधिगतो यज्ञ'मिति प्रादिसमासः, अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा ॥

**अधिराजम्** — स्वामित्वम् ।

'देवराजमधिराजमाश्रये' (व. स्त. 2)

'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्'

इत्युक्तप्रकारेण देवतासार्वभौमत्वमत्र विवक्षितम् । 'अधिरीश्वरे (पा. सू. 1-4-97) इति सूत्रेण स्वस्वामिभावसम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञो भवति । 'यस्मादधिकं यस्य

च ईश्वरवचनं तत्र सप्तमी' (पा. सू. 2-3-9) इति सूत्रेणैतद्योगे 'राजन्'शब्दात् सप्तमी भवति। अधि राज्ञि, ततः विभक्त्यर्थेऽव्ययीभावे 'अनश्च' (पा. सू. 5-4-108) इति सूत्रेण समासान्त'टच्'प्रत्यये कृतेऽधिराजम् इति रूपम्। ईश्वरभावः अधिना द्योत्यते इति सूचनाय स्वामित्वमित्युक्तम् ॥

**अधिष्ठाता** — अधिष्ठाय कर्ता।

निर्गुणात्मवादे अधिष्ठाता स्वतन्त्रः। सगुणात्मवादे तु कार्यविशेषप्रयोजकसङ्कल्पवत्त्वेन निमित्तकारणमुच्यते। 2. प्रेरकः। (वि. को.)

1. अध्यक्षः। 2. नियन्ता। 3. अधिदेवः। यथा आमेन्द्रियाद्यधिष्ठाता इत्यादौ ॥ (न्या. को.)

**अधिष्ठानम्** — 1. शरीरम्।

'अधिष्ठानं तथा कर्ता' (गी. 18-14) अधिष्ठानं – शरीरम्, अधिष्ठीयते जीवात्मनेति महाभूतसङ्घातरूपं शरीरमधिष्ठानम्। (गी. भा.) 'अधिष्ठानं क्षेत्रमाहुः' इति करालायाह वसिष्ठः, तदनुसारेणाह अधिष्ठानं शरीरमिति। श्रुतिश्च 'मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम् इति शरीरेऽधिष्ठानशब्दं प्रयुङ्क्ते। 'कृत्यल्युटो बहुलम्' इति कर्मार्थतया शरीरेऽधिष्ठानशब्दं व्युत्पादयत्यधिष्ठीयत इति। (ता. चं.)

2. निवासः। 'स्वमधिष्ठानं परित्यज्य' (वि. पु. 4-12-16) अत्र अधिकरणार्थे प्रत्ययो विवक्षितः। 3. परकीयेषु निर्वाहकत्वादिरूपेण संसर्गः। (ता. चं. 6-11) 4. उपादानद्रव्यस्य कर्त्रावष्टम्भो हि अधिष्ठानम्। तच्चाभिमतकार्यविशेषानुगुणमध्यमावस्थाप्रापणम्। (ता. चं. 9-7) 5. कार्याभिमुखीकरणलक्षणं प्रेरणम्। (श्रु. प्र. 1-1-27) 6. यदधिकरणतया अध्यस्तं प्रतीयते तत् तस्याधिष्ठानम्। यथा 'इदं रजतम्' इत्यादौ अध्यस्तरजतस्य शुक्तिरधिष्ठानम्। (श्रु. प्र. 1-4-28) भ्रमधर्मी। (वि. को.) आश्रयोऽधिष्ठानम् ॥ (रं. भा.)

**अधिष्ठानम्** — (स. ना. 326)

'मन्दराद्रेरधिष्ठानं भ्रमतोऽभून्महामुने' (वि. स. भा.)

मन्दरोऽनधिष्ठानतया भ्रमन् सोऽयमधितिष्ठत्यस्मिन् इति । (वि. स. निर्व.)

भ्रममाणमन्दराद्रिं धृतवान् यो महाजले ।
अधिष्ठानं तमेवाहुः अधिष्ठानप्रदो मनुः ॥
(वि. स. नि.)

**अधिष्ठानस्फुरणाधीनमध्यस्तस्फुरणम् — (जगन्मिथ्यात्वमते)**

'न तत्र सूर्यो भाति न चन्द्रतारकम् नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिद विभाति' (क. उ. 5-15)

अत्र तृतीयपादे चाधिष्ठानस्फुरणाधीनम् अध्यस्तस्फुरणमुच्यते । अनेन जगतः ब्रह्मणि अध्यस्तत्व सिद्ध्यतीति परे वदन्ति ।

तदयुक्तम् । तमिति पुल्लिङ्गान्तस्य तच्छब्दस्य चिदचिद्व्यावर्तकानन्तगुणविशिष्ट-परमपुरुषपरत्वात् तस्मिन् भासमानेऽध्यासानुपपत्तेः अध्यस्तवस्तुस्फुरणायोगात् । सर्वज्ञत्वादिगुणको निर्दोषः परमपुरुषो हि मुण्डके प्रकृतः । कठवल्ल्याञ्च अकर्मवश्योऽनन्त-महिमा सर्वनियन्ता सर्वाधारो विष्णुशब्दवाच्यः सर्वस्मात्परः स एव हि पुरुषः प्रकृतः । श्वेताश्वतरे च सहस्रशीर्षत्वसहस्राक्षत्वादिमान् स्वाभाविकपरज्ञानशक्त्यादिगुणकः सत्त्व-प्रवर्तको महापुरुषः प्रकृतः । सर्वज्ञत्वादयश्च गुणाः समस्तचिदचिद्व्यावर्तकाः, तैर्विशिष्ट एव तच्छब्देन परामृश्यते । न वस्तुमात्रम् ; तच्छब्दस्य प्रकृतपरामर्शित्वस्वारस्य-भङ्गात् ; पुल्लिङ्गनिर्देशस्य प्रकृतपुरुषविषयत्वज्ञापकत्वाच्च । यद्यधिष्ठानस्फुरणाधीनं अध्यस्तस्फुरणमुच्येत, 'तस्य भासा सर्वमिद भाति' इति पुनरुक्तिश्च स्यात । तस्य वृत्तिरूपज्ञानेन सर्वं भातीत्यर्थ इति चेन्न; भाश्शब्दस्य वृत्तिज्ञानवाचित्वाभावात् । अतो भगवत्तेजसः सर्वतेजोऽनुग्राहकत्वमेव 'तस्य भासा सर्वमिद्द विभाति' इति चतुर्थपादस्यार्थः । अतः प्रकरणस्थरुक्मवर्णश्रुति-पुरुषशब्दप्रत्यभिज्ञापितादित्यवर्णश्रुति-प्रसिद्धदिव्यविग्रहद्वारकदीप्तिविशिष्टः अनेन मन्त्रेण प्रतिपाद्यते । (श्रु. प्र. 1-3-41)

तथा च मन्त्रे पूर्वार्धेन सूर्यादिसर्वतेजसां छादकत्वम्, तृतीयपादस्थेन 'अनुभाति'इत्यनेन सर्वतेजसां कारणभूतत्वम्, 'तस्य भासा सर्वमिदं विभाति' इत्यनेन चतुर्थपादेन सर्वतेजोऽनुग्राहकत्वं च परज्योतिषः परब्रह्मण प्रतिपाद्यते । न तु जगतः अध्यस्तत्वम् ॥

**अधिष्ठानादेः पारमार्थिकत्वम् — भ्रमविशेष्यादेः सत्यत्वम् ।**

यच्च कैश्चित् निरधिष्ठानभ्रमासम्भवात् सर्वाध्यासाधिष्ठानस्य सन्मात्रस्य पारमार्थिकत्वमुक्तम् । तदपि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि भ्रमोपपत्तिवत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेर्निरस्तम् । अथाधिष्ठानापारमार्थ्ये न क्वचिद्भ्रमो दृष्टः इति सन्मात्रस्य पारमार्थिकत्वम् अवश्याश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि न क्वचिद्भ्रमो दृष्ट इति दर्शनानुगुण्येन तेषामपि पारमार्थ्यमवश्याश्रयणीयमिति न क्वचित् विशेषोऽन्यत्र तत्संरम्भात् । (श्री. भा. 2-1-15)

अत्रायमभिप्रायः – अधिष्ठानस्यापारमार्थ्ये तस्याप्यधिष्ठानान्तरापेक्षयानवस्थेति अधिष्ठानस्य पारमार्थ्यमिति चेन्न । दोषस्यापारमार्थ्ये तस्यापि दोषान्तरामित्यनवस्था स्यात् । तत्र स्वरूपानादित्वेन परिहारस्तुल्यः । प्रवाहानादित्वेन परिहारश्चेत् सोऽपि तुल्यः । दुर्घटत्वेन परिहारश्चेत् सोऽपि तुल्यः । परमार्थत्वप्रयुक्तोपपत्तिः अपरमार्थत्वप्रयुक्तोपपत्तिः इति द्विधा; तत्र परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वं दुर्घटत्वम् । इयञ्चापरमार्थत्वप्रयुक्तोपपत्तिरधिष्ठानपारमार्थ्यापेक्षेति चेत् दोषपरमार्थत्वमपि अपरमार्थत्वप्रयुक्तोपपत्तिरित्यपि तुल्यम् ॥ (श्रु. प्र.)

**अधिष्ठानानुपपत्तेश्च — (ब्र. सू. 2-2-36) (पशुपत्यधिकरणे द्वितीयसूत्रम् )**

पशुपतेरशरीरस्य प्रधानाधिष्ठानं नोपपद्यते । वेदबाह्यानामनुमानादिकेवलनिमित्तेश्वरकल्पना । तथा सति दृष्टानुसारेण कुलालादिवदधिष्ठानं कर्तव्यम् ; न च कुलालादेः मृदाद्यधिष्ठानवत् पशुपतेः निमित्तभूतस्य प्रधानाधिष्ठानमुपपद्यते, अशरीरवत् ; सशरीरणामेव हि कुलालादीनामधिष्ठानशक्तिर्दृष्टा ।

न चेश्वरस्य सशरीरत्वमभ्युपगन्तव्यम् ; तच्छरीरस्य सावयवस्य नित्यत्वेऽनित्यत्वे च 'शास्त्रयोनित्वात्' इत्यत्र दोषस्योक्तत्वात् । अतः पशुपतेः जगत्कारणत्वं न युक्तम् ।

अशरीरस्येश्वरस्य जगत्सृष्टिर्न सिद्ध्यति ।
कुलालवदधिष्ठानानुपपत्तेः विरोधतः ॥

(ब्र. प. मा. 210)

**अधीतवेदः** — कृतसाङ्गसशिरस्काध्ययनः ॥

**अधीतवेदान्तः** — उपनिषद्भागमात्राध्यायी (परमते)।

अधीतवेदान्तस्य अनधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। (श्री. भा. 1-41) अवयुत्याध्ययने (एकदेशाध्ययने) मानाभावेऽपि आपदि वेदान्तमात्राध्यायी-त्यर्थः। (त. टी. 47)

अधीतवेदान्तः इति पदमयोगव्यवच्छेदपरम्; नान्ययोगव्यवच्छेदपरम्। कृत्स्न-वेदाध्ययनादपेक्षितवेदान्तभागोऽप्यधीत एवेत्यर्थः ॥ (श्रु. प्र. 1-41)

**अधृतः** — (स. ना. 846)

छायानुप्रवेशेन परचित्तवशीकारः अनुध्यानेन तच्चित्ताधिष्ठानं सजीवस्य उत्थित-जीवस्य वा शरीरानुप्रवेशनम् इष्टापूर्ताधिष्ठानम् इति चतुर्विधम् यत्र कामावसायित्व-माहुः, तादृशवैश्वरूप्यप्रकर्षेण क्वचित् धृतो न नियमितो इति। (वि. स. भा.)

'यश्चानियाम्यः केनापि ह्यधृतः स तु कीर्तितः' (वि. स. नि.)

**अधोक्षजः** — (स. ना. 416)

अमृतोदधिवत् सर्वैः सदोपयुज्यमानोऽपि

'अधो न क्षीयते जातु यस्मात् तस्मादधोक्षजः' इति। (वि. स. भा.)

अमृतोदधिवत् सर्वैः सदा उपयुज्यमानोऽपि निरुक्तानुसारात् अधो न क्षीयते जातु इति वा जातु अधोऽक्षीयमाणः प्रादुर्भूत इति वा ॥ (वि. स. निर्व.)

**अधोक्षजः** — परमात्मा।

अधः कृतम् अक्षजम् (इन्द्रियजं ज्ञानम्) यस्य इत्यधोक्षजः।

अधोमुखानि – अन्तर्मुखानि, अक्षाणि – इन्द्रियाणि येषां तेऽधोक्षाः, तेषु जायते – प्रादुर्भवतीति अधोक्षजः। उपासकहृदयकमलवासी। (वि. को.)

[जितेन्द्रियाणां मनसि सन्निधत्त इति यावत्] यद्वा अधोक्षेभ्यो रामकृष्णादि-रूपेण जायत इति। (वि. को. प.)

**अधोनिनीषा** — तत्त्वज्ञानप्रतिबन्धक कर्मकारयितृत्वेच्छा ।

एष एवासाधुकर्मकारयति तं यमधो निनीषति । (कौ. उ. 3-65)

यं पुरुषमेभ्यो लोकेभ्यः अधःपातयितुमिच्छति, तमसाधुकर्म कारयति । यथा साधुकर्मणां ब्रह्मोपासननिष्पादनद्वारा उन्नयनहेतुत्वम्, एवमसाधुकर्मणामप्युपासन-प्रतिबन्धद्वारा अधोनयनहेतुत्वम् । उक्तञ्च भगवता भाष्यकृता, 'पापस्य ज्ञानोदय-विरोधित्वम्', 'एष एवासाधुकर्मकारयति तं यमधो निनीषति' इति श्रुत्यावगम्यते' इति । विवृतञ्च व्यासार्यैः, 'कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीत-मधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते' इति । (रं. भा.)

किञ्च यद्यप्युन्नयनाधोनयने स्वर्गनरकप्रापणरूपे, तथाप्यसाधुकर्मणां ज्ञान-विरोधित्वं सिद्ध्यति । तथा हि उन्निनिनीषाधोनिनीषयोर्निर्हेतुकत्वे परमात्मनो वैषम्य-नैर्घृण्यप्रसङ्गात् नेतव्यचेतनगोचरं यद्वृत्तद्वयं गतिद्वयनिनीषानिमित्तभूतातिप्रभूतपुण्यपाप-कर्तृविषयं विज्ञायते । तत्र च गतिद्वयपर्यासोत्तरोत्तरसाध्वसाधुकर्मकारयितृत्वमीश्वरस्य न भूतावेशादिवत् जीवबुद्ध्यनपेक्षितं भवति; तथा सति ज्ञानचिकीर्षाद्यभावात् वायू-दकादिनुन्नतृणादिरिव संसारिणां शास्त्रवश्यत्वाभावेन कर्मफलभोगानुपपत्तेः । एवं संसारिणां कर्मफलभोक्तृत्वान्यथानुपपत्तिरूपन्यायानुगृहीतम् एष एवेत्यादिकं वाक्यद्वयं ज्ञानप्रदानद्वारककारयितृत्वविषयमवसीयते । तथा सति स्मृत्यनुग्रहश्च भवति;

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यावकर्षन्ति सोऽपनीतो विनश्यति ॥

इति हि उच्यते । तथा

पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥
पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥

इति च ॥ (श्रु. प्र. 1-68)

**अध्यक्षः** — 1. अधिष्ठाता (परमात्मा)।

'त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारकृत्' (भाग. 10-10-31)

देहप्रभृति जीवपर्यन्तानामधिष्ठाता। निमित्तकारणमित्यर्थः। भगवतः उपादानत्वं प्रतिपाद्य, तस्यैव निमित्तत्वञ्चाह। (भाग. सी.)

अधिकमश्नुते इति। स्वरूपस्वभावविभूतिनिर्वाहकः॥ (वि. को.)

2. जीवः – करणाधिपः। (श्री. भा.)

'सोऽध्यक्षे तदुपगमादिभ्यः' (ब्र. सू. 4-2-4)

**अध्यक्षम्** — 1. प्रत्यक्षम्। यथा उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् इत्यादौ।
2. प्रत्यक्षविषयः। यथा अध्यक्षो विशेषगुणयोगतः इत्यादौ। (न्या. को.)

**अध्यक्षाधिकरणम्** — (अधि. सं. 4-2-3)

सोऽध्यक्षे तदुपगमादिभ्यः। प्रधानार्थवाचिपदोल्लेखनेन इदमेकं सूत्रम् अध्यक्षाधिकरणमिति व्यवह्रियते।

उत्क्रान्तिकाले प्राणस्तेजसीति श्रवणात् प्राणस्य तेजसि संपत्तिः इत्याशङ्क्य – आत्मानमन्तकाले सर्वे प्राणा अभिसमायन्तीति जीवोपगमश्रवणात् जीवेन संयुज्य तेन सह तेजस्संपत्तावपि प्राणस्तेजसीति निर्देशोपपत्तेश्च प्राणो जीवेन सम्पद्यत इत्युक्तम्।

प्राणो भवेत्तेजसि योगभागी तथैव शब्दश्रवणात् इतीदम्।
न स्यात्तु जीवोपगमादिशब्दात् प्राणस्य तेजः श्रवणं तु पश्चात्॥
(न्या. क. सं. 4-17)

**अध्ययनम्** — वेदाख्याक्षरराशेर्ग्रहणम्।

आचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलम् अध्ययनमित्यवगम्यते। अध्ययनञ्च स्वाध्यायसंस्कारः। 'स्वाध्यायोऽध्येतव्यः' इति स्वाध्यायस्य कर्मत्वावगमात्।
(श्री. भा. 1-32)

(जपविलक्षणं) उच्चैरुच्चारणम्। वेदाभ्यासः। सनियमकोच्चारणम्। स्वतन्त्र-उच्चारणशक्तिफलकगुरुमुखोच्चारणानूच्चारणरूपम्। (वि. को.)

आचार्योच्चारणमनूच्चारणमित्यनेन स्वतन्त्रोच्चारणं विचारस्याध्ययनशास्त्रार्थानुप्रवेशशङ्का चापास्यते। उपनयनस्य यथा अध्यापनानुगुणशिष्यासत्तिः दृष्टफलतयोपकारिका मतान्तरे, तथा अनूच्चारणानुगुणप्रत्यासत्तिरस्मिन्मते स्यादिति च भावः। अक्षरराशिग्रहणफलमित्यनेन अक्षरग्रहणकामत्वमधिकारिविशेषणमित्यपि व्यञ्जितम्। (त. टी. 33) उक्तञ्च बृहट्टीकायाम् —

संस्कारगणनायां च युक्तैवाक्षरसंस्क्रिया।
स्वाध्यायो हि स्फुटं कर्म साक्षात् संस्क्रियते हि सः॥

इति। (त. टी. 36)

अध्ययनस्याध्यापयितृसापेक्षत्वेन परतन्त्रोच्चारणरूपत्वं स्वविधिप्रयुक्तत्वम् उपनयनाङ्गकत्वञ्चोक्तं भवति। इदं चाध्ययनं ग्रहणधारणजपादिभेदेन त्रिविधम्।

1. उच्चारणोत्तरकालिको नियमपूर्वको ग्रन्थस्वीकारानुकूलो व्यापारः। यथा उपाध्यायादधीत इत्यादौ धात्वर्थः। 2. पठनम्। तच्च गुरुमुखोच्चारणानुसार्युच्चारणम्। 3. सार्थाक्षरग्रहणमिति मीमांसकाः। यथा 'साङ्गो वेदोऽध्येतव्यो ज्ञेयश्च' इत्यादौ। 4. अक्षरमात्रपाठोऽध्ययनमिति वेदाक्षरपठनकर्तार इदानीन्तना-वैदिकम्मन्या मन्यन्ते॥ (न्या. को.)

**अध्ययनञ्च स्वाध्यायसंस्कारः** — स्वाध्यायः अध्ययनसंस्कार्यः। [आयुर्घृतमितिवन्निर्देशः]

'स्वाध्यायोऽध्येतव्यः' इति स्वाध्यायस्य कर्मत्वावगमात्। संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्। संस्कार्यत्वं च स्वाध्यायस्य युक्तम्, धर्मार्थकाममोक्षपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्चेति। (श्री. भा. 1-33) यद्यपि सत उत्कर्षाधानं संस्कार इति भूतभाव्युपयोगिसंस्कारानुगतलक्षणम् — तथापि स्वाध्यायस्य भूतोपयोगित्वासम्भवात् भाव्युपयोगिसंस्कारलक्षणं [कार्यान्तरयोग्यताकरणम्] अत्रोक्तम्। (श्रु प्र.)

अध्ययनञ्चेति। अयं भावः। अध्ययनस्य नियोगविषयत्वलक्षणप्रधानकर्मत्वे 'सकृत्कृतः शास्त्रार्थः' इति न्यायेन अध्ययनेन स्वाध्यायग्रहणासम्भवात् तत्र संशयानुदयाच्च तदर्थविचारे प्रवृत्तिरेव नोत्पद्येत। संस्कारकर्मत्वे तु अधीतसाङ्गसशिरस्कवेदानां त्रिवर्गप्रवणानां प्रथमं स्वरसतः कर्मविचारप्रवृत्तिः। ततश्च स्वारसिकी ब्रह्मविचारप्रवृत्तिः।

स्वाध्यायोऽध्ययनसंस्कार्यः उत्पाद्यत्वप्राप्यत्वविरहसहकृतकर्मत्वात् प्रोक्षणीयव्रीह्या-दिवत् इति न्यायोऽभिमतः । इदमवधेयम् –

उत्पत्तिराप्तिर्विकृतिस्संस्कृतिश्चेति भज्यते ।
आधानाधीत्यवाघातप्रोक्षणानीत्युदाहृतिः ॥

इति मीमांसकमतेन यद्यपि स्वाध्यायस्याप्यत्वं युक्तम् । तथापि फलान्तरे सम्भवति तावन्मात्रपर्यवसानमयुक्तमिति भावः । अध्ययनस्य स्वाध्यायसंस्कारत्वं शालिकनाथेनापि वाक्यार्थमातृकायां संप्रदायतः प्रोक्तम् –

संस्कार्यगणनायां च युक्तैवाक्षरसंस्क्रिया ।
स्वाध्यायो हि स्फुटं कर्म साक्षात्संस्क्रियते हि सः ॥ इति ।

अध्ययनसंस्कार्यत्वानुमाने बाधं परिहरति धर्मार्थेति । भाविदृष्टादृष्टविविध-प्रयोजनप्रयोजकत्वात् उपयोक्ष्यमाणसंस्कारः इति भावः । (द्र. उ॰ 298) अक्षरराशि-ग्रहणकामना तु वैतुष्यकामनावत् अधिकारिविशेषणमिति भावः ।

**अध्ययनमात्रवतः** — (ब्र. सू. 3-4-12) (पुरुषार्थाधिकरणे द्वादशं सूत्रम्)

'वेदमधीत्य' इत्यध्ययनमात्रवत एव कर्मविधानात् विद्यायाः न कर्माङ्गत्वम् । अध्ययनविधिर्हि आधानवत् नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति । गृहीतस्य स्वाध्यायस्य फलवदर्थावबोधित्वदर्शनात् तन्निर्णयफलमीमांसाश्रवणेऽधीतवेदः पुरुषः स्वय-मेव प्रवर्तते ।

अर्थावबोधपर्यन्तत्वेऽपि अर्थज्ञानादर्थान्तरभूता स्मृतिप्रत्ययावृत्तिरूपा 'विद्यात्' 'उपासीत' इति शास्त्रविहिता विद्या न कर्माङ्गम् । अतः विद्यावतः कर्मविधानात विद्या कर्माङ्गमिति पक्षः निरस्तः ।

'श्रुतिर्वेदमधीत्येति विद्यावत्पुरुषं न हि ।
केवलाधीतिनं प्राह नातः कर्माङ्गता मता ॥

(ब्र. प. मा. 430)

**अध्ययनविधिः** — स्वाध्यायोऽध्येतव्यः इति विधिः ।

प्रथमं तावत् 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्या-क्षरराशेर्ग्रहणं विधीयते । (श्री. भा. 1-29)

लौकिकाक्षरराशिव्यावृत्त्यर्थः वेदाख्यशब्दः, एवकारेण नियमविधित्वं द्योतितम्, न तु पुस्तकनिरीक्षणादिनेत्यर्थः। (श्रु. प्र.)

गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात् तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्तते। ततः कर्मार्थी कर्मज्ञाने, मोक्षार्थी च ब्रह्मज्ञाने, इति। (श्री. भा. 3-4-12)

'अग्नीनादधीत' इत्यत्र आधानेनाग्नेः सम्पाद्यत्वमात्रमुक्तम्; न तु उत्तरक्रतु-विनियोगः। तस्य मानान्तरबोध्यत्वात्। एवमेव वेदस्य नियमवदक्षरराशिग्रहणेन संस्कार्यत्वमात्रमुच्यते न तु कार्यान्तरप्रयोजकत्वमपि। (श्रु. प्र.)

ब्रह्मचर्याद्याश्रमविहितकर्मानुष्ठानहेतुभूतार्थावबोधतया अध्ययनं पक्षतः प्राप्तमिति 'स्वाध्यायोध्येतव्यः' इत्ययं नियमविधिरेव। (वे. मं. दी. 39)

अत्रायमाशयः– अध्ययनस्य स्वयं प्रयोगानुगुणाक्षरग्रहणार्थतैव, लौकिकवाक्याध्य-यनस्येव युक्ता। 'यो ह वा, अविदित्वा ऋषिं, यदधीतं, स्थाणुरयं; यश्च मीमांसतेऽ-ध्वरम्' इत्यादिभिस्तु, अर्थज्ञानप्रशंसया स्वतः प्रवृत्तिरुत्तभ्यते, यथा रागप्राप्तऋतुगम-नादेः अकरणे दोषः, विधिवत्करणे सन्तत्यादिलाभश्च फलत्वेन स्मर्यते, एवमिहापीति। (द. उ. 299) 'स्वाध्यायोऽध्येतव्यः' इति विधिः अत्र अक्षरराशेर्ग्रहणं विधीयते – फलत्वेन बोध्यत इत्यर्थः। 'स्वाध्यायोऽध्येतव्यः' इति स्वाध्यायस्य प्राप्यत्वरूपकर्मणो बोधनात्।

परमते अर्थज्ञानपर्यन्त एवायम् अध्ययनविधिः। सिद्धान्ते तु – अक्षरराशिग्रहण मात्रपर्यन्तः॥

## अध्ययनविधेः अक्षरग्रहणमात्रत्वेऽपि मीमांसाश्रवणस्यावकाशः —

अध्ययनविधेरर्थज्ञानपर्यन्तत्वे एव 'वेदमधीत्य स्नास्यन्' इत्यध्ययनानन्तरं समा-वर्तनस्मृतेः बाधितत्वात् मीमांसाश्रवणस्यावसरः स्यात्; रागतः प्राप्तौ नावसरः इति चेत् [न]। क्त्वाप्रत्ययः समानकर्तृकत्वपूर्वकालत्वमात्रपरः, नत्वानन्तर्यपरः। अतो न विरोधः। आनन्तर्येऽपि, स्वोपयोग्यर्थज्ञानस्यावसरप्रद एव विधिः; यथा क्रतु-विधिरर्थार्जनादेः। . . . . . किञ्च समावृत्तस्यापि मीमांसाश्रवणस्यावसरः श्राव-यितुरिव स्यादेव। (श्रु. प्र. 3-4-12)

'स्वाध्यायोऽध्येतव्यः' इत्यनेन अक्षरराशिग्रहणफलकं साङ्गमध्ययनं विधीयते साङ्गाध्ययनेनच व्युत्पन्नशब्दस्तु पुरुषः वेदानां प्रयोजनवदर्थावबोधित्वं दृष्ट्वा रागतः तदर्थविचारे प्रवर्तते।

नन्वेवं 'अधीत्य स्नायादि'ति श्रुतिविरोधः। अक्षरराशिग्रहणाव्यवहितोत्तरकाले स्नातकव्रताभिधानात् अर्थविचारे अवसरस्यैवाभावात्। अर्थज्ञानपर्यन्तत्वे तु अध्ययनशब्दार्थस्य नैष दोषः। अर्थग्रहणपर्यन्तं कृत्स्नमधीत्य तदनन्तरं स्नातकव्रतानुष्ठानसम्भवादिति पूर्वपक्षिणामाशयः। क्त्वाप्रत्ययस्य समानकर्तृकत्वं पूर्वकालत्वं चार्थः। अक्षरराशिग्रहणाव्यवहितोत्तरकालिकत्वाभावेऽपि स्नानस्य व्यवहितोत्तरकालिकत्वसम्भवात् व्यवहितकाले मीमांसाश्रवणसम्भवाच्च अध्ययनविधेः अर्थज्ञानपर्यन्तत्वाभावेऽपि अस्त्येव मीमांसाश्रवणस्यावकाश इति न कोऽपि विरोधः इति सिद्धान्तिनामाशयः। एवञ्च वेदान्तश्रवणात्पूर्वं कर्ममीमांसाश्रवणाधीननित्यानित्यवस्तुविवेकादेरसंभवात् साधनचतुष्टयस्य ब्रह्ममीमांसापूर्ववृत्तत्वं न संभवति।

## अध्ययनविधेः अर्थचतुष्टयम् —

'स्वाध्यायोऽध्येतव्यः' इत्यत्र मीमांसकाः एवमाहुः; तत्राध्ययनस्य सक्तुहोमवत् प्रधानकर्मत्वम्, स्वरूपेणविधेयत्वम्, अध्ययनविधिप्रयुक्तत्वम्, उपनयनस्याध्यापनाङ्गत्वं च प्राभाकरमतमनादृत्य, अध्ययनस्यावघातवत् गुणकर्मत्वम्, नियमस्य विधेयत्वम्, अध्ययनस्य स्वविधिप्रयुक्तत्वम् उपनयनस्याध्यापनाङ्गत्वं चेति कौमारिलाभिमतम् अर्थचतुष्टयम्। अक्षरराशिग्रहणमात्रपर्यन्तत्वम् उभयानभिमतम्।

सिद्धान्ते गुणकर्मत्वं, भावार्थस्यान्यनिष्ठत्वप्रतीतेः। यदि प्रधानकर्ममविवक्षिष्यत् तदा हि स्वाध्यायेनाध्ययनं संपाद्यमिति वचनव्यक्तिरभविष्यत्। नियमविधित्वम्, न तु पुस्तकनिरीक्षणादिना इत्यर्थः। 'स्वाध्यायोऽध्येतव्यः' इति अध्ययनविधिवाक्योपादानेन स्वविधिप्रयुक्तत्वम्। 'अष्टवर्षं ब्राह्मणमुपनयीत' इति द्वितीयाश्रुत्या माणवकशेषत्वावगमात् उपनयनस्य तद्गताध्ययनाङ्गत्वं च सिद्धम्॥

## अध्ययनविधेः नित्यत्वम् — अकरणे प्रत्यवायफलकत्वम्।

[अध्ययनविधेः न काम्यत्वम्। 'स्वाध्यायोऽध्येतव्यः' इति विधिः नित्यो वा काम्यो वेति विचारे] विधिः नित्यः अकरणे प्रत्यवायदर्शनात् निमित्तादर्शनाच्च।

तथापि दृष्टफलस्यापरित्याज्यतया तदंशे नियमः – यथा जपादिः; अनुष्ठानौपयिकं विज्ञानं चाध्ययनगृहीतेनैवेति । अक्षरराशिग्रहणकामना तु वैतुष्यकामनावत् अधिकारिविशेषणम् । अतो न काम्यत्वशङ्का । (द. उ. 296, 297) तथा च अध्ययनविधिः अवहननविधिवत् नियमविधिरूपः ॥

**अध्ययनस्याध्यापनविधिप्रयुक्तत्वशङ्कानिरासः —**

ननु वृत्त्यर्थाध्यापनात् अन्यदेव धर्मार्थमध्यापनमस्ति । तद्विधिप्रयुक्तम् अध्ययनं स्यादिति चेदुच्यते । स च नित्यो नैमित्तिकः काम्यो वा? नाद्यः, लघुविषयाध्ययनविधिनान्तरीयकत्वात् । न द्वितीयः, नियतनिमित्तादर्शनात् । न तृतीयः, दृष्टे सम्भवत्यदृष्टफलकल्पनानौचित्याच्चेति । (द. उ. 297)

तथा च अध्यापनविधिप्रयुक्तम् अध्ययनमिति न वक्तव्यम्; किन्तु स्वविधिप्रयुक्तमेव । 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेदित्यादयस्तु याजनादिवत् वृत्त्यर्थतया प्राप्तत्वात् 'द्वादशाहेन प्रजाकामं याजयेत्' इत्यादिवत् स्युः इतिभावः ॥

**अध्ययनाधिकारी** — वेदाध्ययनाधिकारी ।

अष्टवर्षो ब्राह्मणः, स्वाध्यायग्रहणकामः उक्तप्रकार [सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेत] आचार्योपनीतः, सदुपसत्त्या यथोक्तव्रतनियमवान् अधीयीतेति सोपबृंहणाद्यध्ययनाधिकारी ॥ (द. उ. 297)

**अध्ययनोपक्रमः** — अध्ययनारम्भः ।

'हरिः ओम्' इति हरिशब्दविशिष्टप्रणवोच्चारणस्यैव अध्येतृसम्प्रदायसिद्धत्वे, तत्र 'वेदैश्च सर्वैरहमेववेद्यः', 'हरिः परायणं परं' इत्याद्युक्तरीत्या 'हरिरेव सर्ववेदप्रतिपाद्यः' इत्यभिप्रायेण, 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते अध्येतारश्च सिद्धार्था यथा स्युः' इति महाभाष्यवचनप्रामाण्यात्, 'स्मृतो यच्छति शोभनम्' इत्युक्तरीत्या मङ्गलार्थं हरिनाम्ना भगवत्स्मरणवत्, 'प्रणवार्थ एव सर्ववेदार्थः' इत्यभिप्रायेण मङ्गलार्थं ज्ञातृभिः संग्रहेण सर्ववेदसारार्थानुसन्धानसम्भवेऽपि, बालैरपि हितैषिवचनानुसारेण 'स वाग्विसर्गो जनताघविप्लवः' इत्याद्युक्तरीत्या मङ्गलार्थं हरिनामोच्चारणवदेव, सर्ववेदान्तसारार्थपरतया त्रयीसारस्य प्रणवस्यापि उच्चारणोपपत्तेः (रह. मी. भा. 20:)

'हरिः ओम्' इत्युच्चारणपुरस्सरमेव वेदोपक्रमः समापनञ्चास्तिकैः क्रियते। परन्तु उपक्रमोपसंहारयोः—

आदौ हरिपदं सर्वं उदात्तं चेष्यते बुधैः।
अन्ते 'रि' शब्दः स्वारः स्यात् विसर्गः प्रचयः स्मृतः॥

इति वचनाच्च स्वरभेदो दरीदृश्यते। (व्यासशिक्षा, अङ्गप्रकरणम्) स्वारः-स्वरितः।

**अध्यर्धः** — अधिकवृद्धिप्रापकः वायुः।

"तदाहुः यदयमेक एवेव पवते, अथ कथमध्यर्ध इति। यदस्मिन्निदं सर्वं मध्याध्नोत् तेनाध्यर्ध इति" (बृ.उ.5.9.9)

कतमोऽध्यर्ध इति प्रश्नः। उत्तरं योऽयं पवत इति। वायुरेवेत्यर्थः। यस्मादयं वायुरेक एव पवते, तत् कथमिवाध्यर्ध इति शङ्कायामेवमुत्तरमाहुः इत्यर्थः। तदेवोत्तरमाह— "यदस्मिन्निदं सर्वमध्यार्ध्नोत् तेनाध्यर्ध इति। अध्यार्ध्नोत्। ऋधु वृद्धौ। अधिकवृद्धिं यस्मिन्नायाविदं जगत्प्राप्तं तेनायं वायुरध्यर्ध इत्युच्यते इत्यर्थः। (रं.भा.)

**अध्यवसायः** — 1. निर्णयात्मिका बुद्धिः।

2. मनः। अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैः व्यपदिश्यत इत्येकादशेन्द्रियाणि। (श्री. भा. 2.4.5) महदनुगृहीतं मनोऽध्यवसायं अहङ्कारानुगृहीतं मनोऽभिमानं, पूर्वसंस्कारविशेषानुगृहीतं मनः चिन्तां करोति तत्तत् तदानीं बुद्ध्यादिशब्दैः व्यपदिश्यते इत्यर्थः। (श्रु. प्र.)

3. महत्तत्त्वम्। अध्यवसायात्मकबुद्ध्युत्पत्तौ मनसः सहकारितया महत्त्वमपि बुद्धिपदेन व्यपदिश्यते। (द. उ. 203)

आलोच्य मया इदं कर्तव्यमिति योऽयं चितिसन्निधानात्; आपन्नचैतन्याया-बुद्धेः निश्चयः सः। (सांख्यमते) (वि. को.)

1. इदमेवमेव इति विषयपरिच्छेदो निश्चयः।
उपात्तविषयाणां इन्द्रियाणां वृत्तौ सत्यां बुद्धेः रजस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽयमध्यवसाय इति वृत्तिरिति च सांख्या आहुः। 3. स चाध्यवसाय आत्मधर्म इति नैयायिकाः। 4. बुद्धिधर्मः (बुद्धेर्व्यापारः) इत्यन्ये। (न्या. को.)

**अध्यात्मम्** — 1. शरीरे (उपासनं)।

'अथाध्यात्मम्' (उपदिश्यते इति शेषः) अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक् तत्साम' (छां. उ. 1. 7. 1.) आत्मनि इति विभक्त्यर्थे अव्ययीभावसमासः। आत्मशब्दः देहवाची।

'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः।

2. जीवात्मन्यधिवसनात् सम्बध्यमानं भूतसूक्ष्मादिकं।

'स्वभावोऽध्यात्ममुच्यते' (गी. 8.3) अनात्मभूतं आत्मनि सम्बध्यमानं भूतसूक्ष्मतद्वासनादिकं पञ्चाग्निविद्यायां ज्ञातव्यतयोदितम्। (गी. भा.)

इन्द्रियमनःप्राणादिसंघातरूपात्मविषयं उद्गीथोपासनम्। (वि. को.)

**अध्यात्मचेतः** — आत्मस्वरूपविषयकज्ञानम्।

'सन्यस्याध्यात्मचेतसा' (गी. 3.30) आत्मनि यच्चेतः तत् अध्यात्मचेतः। (अध्यात्मं इति सप्तम्यर्थे समासः। चेतश्शब्दः तत्कार्यज्ञानपरः) 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा', 'अन्तः प्रविष्टं कर्तारमेतं' [कर्तात्र प्रयोजकः, यद्वा प्रेरणक्रिया-कर्ता] 'स त आत्मा अन्तर्याम्यमृतः' इत्येवमाद्याः श्रुतयः परमपुरुषप्रवर्त्यं तच्छरीरभूतमेनमात्मानं, परमपुरुषं च प्रवर्तयितारमाचक्षते। (गी. भा.)

आत्मनि परमात्मनि यच्चेतः तत् अध्यात्मचेतः। (ता. चं. 12.6) परशेषत्वादिविशेषितयथावस्थितात्मगोचरबुद्धिः। (ता. चं. 18.57)

अध्यात्मचेतसा-विवेकबुद्ध्या 'अहंकर्ता ईश्वराय भृत्यवत् करोमि इत्यनया बुद्ध्या'। (शं. भा.)

**अध्यात्मज्ञाननित्यत्वम्** — आत्मज्ञाननिष्ठता। (आत्मावलोकनसाधनम्)

'अध्यात्मज्ञाननित्यत्वं . . एतज्ज्ञानमिति प्रोक्तम्' (गी. 13.11)। आत्मनि ज्ञानं अध्यात्मज्ञानं, तन्निष्ठत्वं आत्मज्ञानसाधनमित्यर्थः। (गी. भा.) नित्यशब्देन अविच्छिन्नानुवृत्तिः विवक्षिता इत्याह तन्निष्ठत्वमिति। आपातप्रतीत्यादेः पूर्व-सिद्धत्वात् अपरोक्षादिज्ञानमिह विवक्षितम्। (ता. चं.)

**अध्यात्मदीपः** — स्वाभाविकासंकुचितज्ञानवान् परमात्मा।

'सत्तामात्रं निर्विशेषं . . . . . विष्णुरध्यात्मदीपः' (भाग. 10.3. 23)

आत्मनि अध्यात्ममिति विभक्त्यर्थे अव्ययीभावः। आत्मनि दीपः दीपवत्स्वप्रकाशं नित्यमसंकुचितं धर्मभूतज्ञानं यस्य सः विष्णुः।

अनेन मुक्तजीवव्यावृत्तिः; तेषां संसारदशायां संकुचितज्ञानत्वात्। ब्रह्म स्वरूपेण गुणैश्च निरतिशयबृहत्। अनेन नित्यसिद्धव्यावृत्तिः, तत्स्वरूपस्याणुत्वात्। (भाग. वी.)

नित्यानां असंकुचितज्ञानं परमात्मनित्येच्छासिद्धमिति, अत्र उपाध्यनिर्देशात् स्वाभाविकज्ञानाश्रयत्वोक्तेः नित्येष्वतिव्याप्तिवारणं सुशकमित्यपि भाव्यम्।

**अध्यात्मनित्याः** — आत्मज्ञाननिरताः।

'निर्मानमोहा जितसङ्गदोषाः अध्यात्मनित्याः . . . .' (गी. 15. 5.) आत्मनि यत् ज्ञानं तत् अध्यात्मम्। आत्मज्ञाननिरताः। (गी. भा.) [अत्र नित्य शब्दः 'नित्यवीप्सयोः' (पा. सू. 8.1.4) इत्यत्रेव पौनःपुन्यपरः] जितसङ्गत्वफलं अध्यात्मनित्यत्वं, तच्च 'अध्यात्मज्ञाननित्यत्वं' इति प्रागुक्तम्; तदाह आत्मनि यज्ज्ञान मिति। योगकाले नैरन्तर्येण, उत्थानकालेऽपि प्राचुर्येणाध्यात्मज्ञाननिरतत्वम्। (ता.चं.)

**अध्यात्मयोगः** — जीवात्मविषयकयोगः।

'अध्यात्मयोगाधिगमेन देवं मत्वा' (क. उ. 2. 12) विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानम्। 'यच्छेद्वाङ्मनसी प्राज्ञः', 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह' इत्यादिना वक्ष्यमाणः। (रं. भा.) बाह्येभ्योऽर्थेभ्यः प्रतिसंहृत्यात्मस्वरूपे प्रवर्तितो मनसो योगः अध्यात्मयोगः। (सुबो.) अध्यात्मयोगाधिगमेनेति परोपासनस्य जीवोपासनमङ्गत्वेन विधीयते। (श्रु. प्र. 1.2.11)

2. परमात्मविषयको योगः — आत्मानमधिकृत्य प्रवर्तितो योगः परमात्मैक चिन्तनस्वरूपः। अनेन उपायस्वरूपं उक्तं भवति।

केचन आत्मनि जीवस्वरूपे इति अध्यात्मम्; तत्र योगः बाह्यविषयेभ्यः प्रत्याहृतस्य मनसः समाधानं इति वदन्ति। (रा. भा.)

**अध्यात्मविदः** — 1. वेदान्तार्थवेदिनः।

'ये च वेदविदो विप्राः ये चाध्यात्मविदो जनाः'
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्॥ (भारतं)

वेदविदः कर्मभागवेदिनः । अध्यात्मविदः वेदान्तार्थवेदिनः, कृष्णं महात्मानं सनातनं धर्मं वदन्ति इत्यन्वयः । (ता. चं. 10.13) पूर्वमाराधनभूतकर्मभागवेदनोक्तेः सर्वकर्माराध्यपरमात्मज्ञानमिह विवक्षितमन्यथा पौनरुक्त्यं स्यात् ।

**अध्यात्मविद्या** — 1. जीवपरमात्म याथात्म्यविद्या ।

'अध्यात्मविद्या विद्यानां' (गी. 10.32.) सा विषयतः फलतश्च विद्यान्तरेभ्यः उत्कृष्टा । (ता. चं.) 2. भगवत्स्वरूपरूपगुणविभूतिविषया विद्या । 'तुभ्यमध्यात्मविद्या विधेया' (ग. द.) आत्मा–परमात्मा; तमधिकृत्यप्रवृत्ता विद्या । (व्या.)

**अध्यात्मशास्त्रम्** — औपनिषदं दर्शनम् ।

इदन्तु प्राधान्येन नैरात्म्यवादस्य निराकरणार्थमेव प्रवृत्तम् । अत एव अध्यात्मशास्त्रं इति एतस्य प्रसिद्धिः । तस्य तु नैरात्म्यशास्त्रमिति । (द. उ. 83) आत्मनि इति अध्यात्मम् ।

आत्मविषयकशास्त्रमिति शब्दार्थेन जीवपरमात्म-तत्संबन्ध-तत्प्राप्ति-तदुपाय-फल विशेष-तद्विरोध्यादिप्रतिपादकं वेदान्तशास्त्रमेव ।

**अध्यात्मसंज्ञितम्** — आत्मनि वक्तव्यं वचः ।

"मदनुग्रहाय परमं गुह्यं अध्यात्मसंज्ञितं" (गी. 11. 1) आत्मनि प्रतिपादकत्वेनाधिवसनात् वचसोऽध्यात्मत्वमित्यभिप्रेत्यात्मनि वक्तव्यमित्युक्तम् । (ता. चं.)

**अध्यात्मसंबन्धभूमा** — 1. परमात्मगतसंबन्धबहुत्वम् ।

आत्मनि आधेयतया संबध्यमानानां बहुत्वेन संबन्धबहुत्वम् । संबन्धबहुत्वनिबन्धनमाह संबध्यमानानामिति । संबन्धः कीदृश इत्यत्राह आधेयतयेति । 2. परमात्मासाधारणधर्मसम्बन्धः अध्यात्मसम्बन्धः; तस्य भूमा बहुत्वम् । (श्री. भा. 1.1.30) प्रथमे अध्यात्मशब्दस्य आत्मनीत्यर्थः । [विभक्त्यर्थेऽव्ययीभावः] द्वितीये आत्मनि वर्तमानपरोऽध्यात्मशब्दः । (श्रु. प्र.)

**अध्यायः** — 1 ग्रन्थभागविशेषः ।

"इत्युक्तः शीक्षाध्यायः" (तै. शि. 2)

2. अध्ययनार्हः वेदः । 3 श्रुतिपुराणादिषु एकार्थविषय समाप्तिद्योतको विश्रान्तिस्थानमंशविशेषः । यथा श्रीभागवतस्य पञ्चमोध्याय इत्यादौ । (सं. अ.)

**अध्यायद्विकविभागः** — शारीरकाध्यायद्विकविभागः ।

"तत्राद्यं वक्ति सिद्धं विषयमपि परं तत्प्रतिद्वन्द्वियुग्मम्" (अ. सा.17) इत्युक्तेः पूर्वद्विकं सिद्ध-विषयनिरूपणपरं, ब्रह्मणः सिद्धत्वात् । (प्राधान्येन प्रतिपादयतीति सिद्ध-विषयनिरूपणपरं) उत्तरद्विकप्रतिपाद्योपासनप्राप्त्योः विषयत्वाच्च ब्रह्मणः । उत्तरद्विकं साध्य-विषयिनिरूपणपरं । उपासनप्राप्त्योः पुरुषसाध्यत्वात् परब्रह्मविषयकत्वेन विषयित्वाच्च । (चिं. म.) तथा च सिद्धरूपं विषयरूपञ्च ब्रह्म पूर्वद्विकं प्रतिपादयति । उत्तरन्तु साध्यभूतोपासनप्राप्ती, ब्रह्मविषयतया विषयिरूपे चेति भावः ।

**अध्यायविभागः** — ब्रह्ममीमांसाध्यायविभागः ।

समन्वय- अविरोध- साधन- फलविचार प्रधानैः चतुर्भिरध्यायैः युतं शारीरकं शास्त्रम् । षोडशाङ्घ्रि विषयद्विकं विषयिद्विकं (सिद्धसाध्यद्विकं) इति द्विकद्वययुतम् ।

**अध्यायशेषसाफल्यम्** — ईक्षत्यानन्दमयान्तरधिकरणत्रयेण भगवतः अचेतनात्, जीवविशेषाच्च वैलक्षण्यं–प्रत्यपादि । अत एतावता कृत्यं कृतमेवेति शिष्टभागः व्यर्थ इति चेत् आह– "इत्थं विद्यात्रयेण स्थिरचर चिदचिद्देहिनः . . . अधिकरणगणैस्तद्गुणानुद्गृणाति" (अ. सा. 66) इति ।

अयमत्र भावः । यथा युद्धेषु पदात्यश्व गजरथानां पूर्वपूर्वदुर्बलानां दुर्बलभङ्गे प्रबलयोधनम्, एवमस्पष्टतरजीवादिलिङ्गानां पूर्वपूर्वभङ्गे पुनरुत्तरोत्तरपरिग्रहेण पूर्वपक्षः प्रवर्तते । तत्प्रवृत्तिकुण्ठनमन्तरेण जातमपि तत्त्वज्ञानं न प्रतितिष्ठतीति तेनाध्यायशेष आरंभणीय एव । ततः अस्पष्टतर-अस्पष्ट-स्पष्ट-स्पष्टतरं चेत्युक्तक्रमेण उत्थानद्वारभेदात् क्रमेणोत्थितान् मृदूपक्रमक्रूरनिष्ठान् प्रतिवादिनः अस्मिन् अध्याये निरुन्धन्सन् शिष्टैः अधिकरणैः भगवद्गुणानपि विशेषतः प्रकाशयति । तथा तेषां गुणानां साकल्येनानुसन्धानं अध्यायशेषप्रयोजनं इत्यास्माको मार्गः । निर्विशेषवादिनां तु एकेनैवाधिकरणेन निर्विशेषं प्रतिपन्नमिति प्रतिपाद्यगुणविशेषाभावात् उत्तरेषां अधिकरणानां नैष्फल्यमेवेति हृदयम् ॥

**अध्यायार्थसाङ्कर्यपरिहारः** — अध्यायार्थसङ्कलनजनितदोषनिवृत्तिः ।

प्रथमाध्यायतृतीयपादस्थ प्रमिताकधिरणमध्ये मनुष्याधिकारत्वप्रसङ्गात् अधिकरणत्रयकथनं तेनात्र तृतीयाध्यायप्रसाध्याधिकारचिन्तनादध्यायसाङ्कर्यप्रसङ्ग इत्यत्राह ।

सर्वव्यासे परस्मिन् ब्रह्मण्यङ्गुष्ठप्रमितत्वकथनं क्वचिन्मनुष्याधिकारापेक्षयेति मन्तव्यं। तेनाधिकारप्रसङ्गेनास्मिन्नधिकरणे सूत्रचतुष्टयात्मके द्वयोर्द्वयोः सूत्रयोः मध्ये त्रिभिरधिकरणैरधिकारविशेषः चिन्त्यते। न पुनरत्र तृतीयाध्यायस्थैरधिकरणैः स्थापनीयाधिक्रिया अवगन्तुमिष्टा। तेन नाध्यायसङ्करप्रसङ्गः। (चिं. म. 117) तदुक्तं 'न ह्यङ्गुष्ठप्रमाणं . . . तार्तीयैः स्थापनीयात्वव जिगमिषिता नेति कर्तव्यताऽत्र' इति। (अ. सा. 117)

अयं भावः। अधिकारविशेषविचारमात्रमत्र प्रसङ्गात् क्रियते। तद्भिन्नः सर्वोऽपि अधिकारविचारभागः तत्तदाश्रमभेदभिन्नाङ्गकलापविचारसहितः तृतीयाध्याय एव करिष्यते इति न साङ्कर्यम्। 'शब्दादेव प्रमितः' 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' 'कम्पनात्' 'ज्योतिर्दर्शनात्' इति सूत्रचतुष्टयात्मके प्रमिताधिकरणे पूर्वमेकं सूत्रद्वन्द्वं, उत्तरमेकं सूत्रद्वन्द्वं। तयोः मध्ये देवताधिकरण, मध्वधिकरण, अपशूद्राधिकरणसूत्राणि प्रवृत्तानि सङ्गतिविशेषात्। एतादृशी शैली पूर्वकाण्डेऽपि दरीदृश्यते।

एकं विषयं प्रस्तुत्य तदपरिसमाप्यैव मध्ये विचारान्तरं तत्सम्बन्धि प्रस्तुत्य ततः 'स्थितादुत्तरं' इति प्रतिज्ञाय पूर्वप्रस्तुतस्य विचारः तृतीयध्यायद्वितीयपादे इन्द्रपीताधिकरणे, एवं दशमद्वितीयपादे च भगवता जैमिनिना विचारितः— एतादृशविचारस्य 'अन्तरागर्भिणी' इति नाम।

**अध्यायिकः** — अध्ययनवान्; अध्यापको वा।

युवा स्यात् साधुयुवाध्यायिकः (तै. आ. 32) साधु यथाविधि, सम्यक्संप्रदायसिद्धतया, स्वरवर्णादिभ्रंशरहितं वा। युवशब्देन प्रत्यग्रत्वं विवक्षितम्। अविस्मरणान्नित्यं नवं यथा भवति तथा अध्ययनवान् इत्यर्थः। यद्वा स्वसमवयस्कानां सर्वेषां अध्यायिकः—अध्यापकः। तदधिकज्ञानः इत्यर्थः। (रं. भा.) अध्यायिकः इति छान्दसम्॥

**अध्यारोपापवादन्यायः**— [परमते]

ननु ब्रह्मणो निर्विशेषत्वात् आनन्दप्रदायकत्वमनुपपन्नम्, 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चितमिति पूर्वाचार्योक्तन्यायमनुसृत्य प्रपञ्चस्य व्यवहारमात्रसत्यत्वांगीकारात् इति चेन्न – (अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते इति हि न्यायः) वस्तुनि

अवस्त्वारोपोऽध्यारोपः' यथा असर्पभूतायां रज्जौ सर्पारोपः। अरजतभूतायां शुक्तौ रजतारोपश्चेति। अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववत् वस्तुविवर्तस्याव-स्तुनोऽज्ञादेः प्रपञ्चस्य वस्तुमात्रत्वमिति ताभ्यामध्यारोपापवादाभ्यां निष्प्रपञ्चं सच्चिदानंदा नन्ताद्वयं ब्रह्म प्रपञ्चयते–विस्तार्यते इति [परेषां] भावः। (मी. को.)

**अध्यासः**— 1. अन्यस्मिन् अन्यधर्मानुसन्धानम्। (प्रथमभ्रमः)

साक्षित्वद्रष्टृत्वभोक्तृत्वादयो नित्यनिर्विकारस्याकर्तुरुदासीनस्य कैवल्यैकस्वरूपस्य न संभवन्ति। एवंरूपस्य तस्य अध्यासमूलो भ्रमोऽपि न संभवति, अध्यासभ्रमयोरपि विकारत्वात्। प्रकृतेश्च तौ न संभवतः। तयोश्चेतनधर्मत्वात्। अध्यासो हि नाम चेतनस्यान्यस्मिन् अन्यधर्मानुसन्धानम्। स च चेतनधर्मो विकारश्च। न च पुरुषस्य प्रकृतिसन्निधिमात्रेणाध्यासादयः संभवन्ति; निर्विकारत्वादेव। सम्भवन्ति चेत् नित्यं प्रसज्येरन्। (श्री. भा. 2-2-9) प्रथमभ्रम अध्यासः, तन्मूला अन्ये भ्रम शब्दवाच्याः। (श्रु. प्र.) देहे आत्मभ्रमः प्राथमिकः अध्यासपदवाच्यः। अनन्तरं जायमानः 'कृशोऽहं' इत्यादयस्तु नाध्यासपदवाच्याः, किन्तु भ्रमपदवाच्याः।

2.) आह कोऽयमध्यासो नामेति। उच्यते; स्मृतिरूपः परत्र पूर्वदृष्टावभासः। तं केचित् अन्यत्रान्यधर्माध्यासः इति वदन्ति। केचित्तु यत्र यदध्यासः तद्विवेका-ग्रहनिबन्धनो भ्रम इति। सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति। तथा च लोके अनुभवः 'शुक्तिका रजतवदवभासते' इति। एवं अविरुद्धः प्रत्यगात्मन्यपि अनात्माध्यासः तमेतमेवं लक्षणं अध्यासं पण्डिता अविद्येति मन्यन्ते। (शं. भा. जिज्ञा) अविद्याकार्यत्वादविद्येति मन्यन्ते इत्यर्थः। विद्यानिवर्त्यत्वाच्चास्याविद्यात्वं इति। (र. प्र.)

1.) अयथार्थज्ञानम्। 2.) स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति शङ्कर-भारती वक्ति। यथा शुक्तौ इदं रजतमिति ज्ञानम्। स चाध्यासो द्विविधः। अर्थाध्यासो ज्ञानाध्यासश्चेति।

तदुक्तम् —

प्रमाणदोषसंस्कारजन्मान्यस्य परमात्मता।
तद्धीश्चाध्यास इति हि द्वयमिष्टं मनीषिभिः॥

इति (न्या. को.)

**अध्याहार:** — विवक्षितवाक्यार्थपूरकाश्रुतपदानुसन्धानम् ।

यथा 'द्वारं' इत्युक्ते यथाप्रकरणं 'पिधेहि' इत्यादि पदस्याध्याहारः ।

अध्याहारो द्विविधः । शब्दाध्याहारः, अर्थाध्याहारश्च । शब्दाध्याहारो नाम आकांक्षितार्थबोधकपदानुसन्धानम् । अर्थाध्याहारो नाम आकांक्षितार्थानुसन्धानम् ।

अत्रेदं बोध्यम् — नैयायिकैः शब्दाध्याहार एव स्वीक्रियते न त्वर्थाध्याहारः । मीमांसकैस्त्वर्थाध्याहारोऽपि स्वीक्रियत इति । 2.) तर्कः । 3.) अपूर्वोत्प्रेक्षणमित्यपि केचित् । (न्या. को.)

अश्रुतपदान्तरकल्पनम् अध्याहारः अनुषङ्गेण बाध्यते । स्वस्थानस्थितस्य पुनरनुसन्धानं आवृत्तिः । नेदीयःस्थानान्तरस्थस्य अनुसन्धानमनुषङ्गः । दवीयःस्थानान्तरस्थस्यानुसन्धानं अनुवृत्तिः । सा च सिंहावलोकितमण्डूकप्लुतिगङ्गास्रोतवदिति त्रिधा । आवृत्त्यनुषङ्गानुवृत्तिसाधारणं लक्षणं श्रुतपदस्यानुसन्धानम् । अश्रुत पदस्यानुसन्धानं अध्याहारः । स च सर्वापेक्षया जघन्यः इति । अध्याहाराद्वरमनुषङ्गः । (मी. को.)

**अध्युपदेशः** — आधिक्येन उपदेशः ।

'भूमा संप्रसादादध्युपदेशात्' (ब्र. सू. 1-3-7) सम्प्रसादात् प्रत्यगात्मनो जीवादधिकतया भूमविशिष्टस्य सत्यशब्दाभिधेयस्य उपदेशः । 'आत्मनः ऊर्ध्वं अस्योपदेशात्' इति हि वृत्तिकारः आह । अत एव अन्यत्रेव शारीरादिति नोक्तं, येन मुक्तस्वरूपपरः न स्यात् । संप्रसादपदस्य 'सम्यक् प्रसीदति अस्मिन्नच्युतः' इति व्युत्पत्त्या मुक्तेः भगवदनुग्रहमूलत्वं, मुक्तावपि भेदश्च सूच्यते । अतश्चान्यत्र । नात्र संप्रसादशब्दः सुषुप्तावस्थपरः ॥

**अध्येषणा** — गुर्वाद्याराधनम् ।

'सनिस्त्वध्येषणा' इत्यमरः । षणुदाने–औणादिकः ।

1. लिङर्थः या श्रोतरि पूजा संमानव्यञ्जिका सा । 2. अध्येषणीये प्रयोक्तुरनुग्रहद्योतिका इच्छा । 3. इच्छाविशेषः । यथा पाकं कुर्यामित्यादावुत्तमपुरुषार्थः । सत्कारपूर्वकमाचार्यादेः प्रेरणमिति केचित् । (न्या. को.)

अध्रुवम् — 1 अनित्यफलसाधनं (कर्म) । (कर्मसामान्यस्य स्वरूपतः अनित्यत्वात् एवं विवक्ष्यते) ।

जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।
ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्॥

(क. उ. 2.10)

ध्रुवं, तत्- आत्मतत्त्वम् । अध्रुवैः—अनित्यफलसाधनभूतैः अनित्यद्रव्यसाध्यैर्वा कर्मभिः न प्राप्यते । 'ततो मया नाचिकेतश्चितोऽग्निः अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्' । एवं ज्ञातवता मया ब्रह्मप्राप्तिसाधनज्ञानोद्देशेन अनित्यैरिष्टकादिद्रव्यैर्नाचिकेतोऽग्निश्चितः । तस्माद्धेतोर्नित्यफलसाधनं ज्ञानं प्राप्तवानस्मीत्यर्थः । अतः ब्रह्मप्राप्तेर्ज्ञानैकसाध्यत्वस्य न विरोधः । (रं. भा.) ज्ञानस्य नित्यत्वाभावेऽपि नित्यानुवर्त्यनुमानत्वात् नित्यत्वम् । सात्विकत्यागयुक्तानां कर्मणान्तु ज्ञानद्वारा नित्यफलप्राप्तिरिति भावः । अत एवानित्यैः द्रव्यैः प्राप्तवानस्मि नित्यमिति श्रुतिरुपपद्यते ।

अध्रुवत्वम् — क्षयिष्णुत्वम् ।

'राजसं चलमध्रुवं' (गी. 17-18) । चलत्वं—पातभयेन चलनहेतुत्वं, अध्रुवत्वं—क्षयिष्णुत्वं । (गी. भा.)

अध्वरः — यज्ञः ।

अध्वानं—सन्मार्गं राति ददाति इति । 'आतोऽनुपसर्गे' (पा. सू. 3.2.3.) अनेन कर्मण्युपपदे कर्तरि 'कः' आतो लोपश्च ।

'अध्वर इति यज्ञनाम । ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः' (यास्क. नि. 1.8)

'अध्वर इति यज्ञनाम' । अध्वर इत्यधुना निर्वक्तव्यः । 'ध्वरतिर्हिंसाकर्मा' । ध्वरति धूर्वतीति हिंसार्थेषु पठितौ । 'तत्प्रतिषेधः' अध्वरः । अहिंस्र इत्यर्थः । आह नन्वत्र हन्यन्ते पशवश्छिद्यन्ते तृणवनस्पतयोऽथ कथमहिंस्रः ? उच्यते । अभ्युदय एव हि सः । एवं हि श्रूयते । 'न वा उ एतन्म्रियसे' इति । तथा च । 'कुशत्वमिच्छन्ति तृणानि राजन्' इति । तस्मादभ्युदययोगादहिंस्र इत्युपपद्यते ।

अत एव सूत्रे (3.1.25) भाषितम् । अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेव । तथा च मन्त्रवर्णः 'न वा उ एतन्म्रियसे' इत्यादिकः । चिकित्सकञ्च तात्कालिकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति, पूजयन्ति च तज्ज्ञाः इति ।

**अध्वर्यवः** — ऋत्विग्विशेषाः ।

'चक्रुराध्वर्यवं ते तु चरणान्मुनिसत्तम' (वि. पु. 3.5.14.)

यजुश्शाखाध्यायिनः । यजुश्शाखाध्ययनादध्वर्युत्वम् । (वि. चि.)

**अध्वा** — मार्गः । (शास्त्रोक्तः त्रिविधः) ।

'अथैतमेवाध्वानं पुनर्निवर्तन्ते' (छां. उ. 5.10.5.) अयं धूमादिः, अर्चिरादिः निरयः इति त्रिविधः । विस्तरस्तु तत्तत्पदे द्रष्टव्यः ॥

**अनः** — प्राणः ।

'तद्वा एतदनस्यान्नम् । अनो ह वै नाम प्रत्यक्षम्' (छां उ. 5.2.1.) अदनादि विविधचेष्टायुक्तत्वात् प्राणस्य अन इति प्रत्यक्षं नाम । देवानां परोक्षप्रियत्वात् (परोक्षप्रिया इव हि देवाः इत्युक्तेः) प्रत्यक्षं अन इति नाम परित्यज्य प्राण इति परोक्षेण नाम्ना व्यवहारः । ततश्च अदनचेष्टायाः अपि तदीयत्वात् सर्वप्राणिजातेनाद्यमानमन्नं सर्वं तेनैवाद्यते इति प्राणस्य सर्वमन्नमित्यर्थः । अत्र प्राणविद्यानिष्ठेन सर्वप्राण्यन्नादनस्य कर्तुमशक्यत्वात् नास्य सर्वान्नात्यन्नादनकर्तव्यत्वमर्थः , अपि तु सर्वप्राणिजातान्नप्राणान्नत्वचिन्तनं कर्तव्यमित्यर्थः । (रं. भा.) 'तस्माद्यदनेनान्नमत्ति, तेनैतास्तृप्यन्तीति' (बृ. उ. 3.3.18.) 'एतमेव तदनं अनग्नं कुर्वन्तो मन्यन्ते' (बृ. उ. 8.1.14) अत्रापि अनशब्दः प्राणवाची ॥

**अनघः** — (स. ना. 148)

पापप्रतिस्पर्धी । (वि. स. भा.) संसारमध्ये जनित्वापि, अघविरोधी-पापप्रतिस्पर्धी । (वि. स. निर्व.)

**अनघः** — (स. ना. 835)

अकर्मवश्यत्वेन तन्मग्नजीवविलक्षणः । (वि. स. भा.) अकर्मवश्यत्वेन तन्मग्नजीवविलक्षणतया नास्त्यघमस्य । (वि. स. निर्व )

**अनघः** — परमात्मा ।

1. रम्यः । 2. अघं पापं तद्विरुद्धः । 3. सकलपापक्षयकारी । 4. अघ दुःखं दुःखविरोधी । (वि. को.)

**अनड्वान्** — सूर्यः । (कालचक्रपरिवर्तनहेतुः)

'सर्वा दिशः ऊर्ध्वं अधश्च तिर्यक् प्रकाशयन् भ्राजते यन्वनड्वान्' (श्वे. उ. 5-4) कालचक्रपरिवर्तनहेतुतया अनडुच्छब्दवाच्यः सूर्यः । (रं. भा.) अनड्वान् हि अनसि युक्तः चक्रपरिवर्तनहेतुः । तथा सूर्यः, दिनमासर्त्वयनादिकालात्मकचक्रपरिवर्तकत्वात् अनड्वान् इति । अनडुहः साम्यात् तद्व्यपदेशः । (टि.) यद्वनन्वान् इति च पाठः ॥

**अनणु** — अकृशम् (ब्रह्म)

'अस्थूलमनणु' (मु. उ. 3) स्थूलताप्रतिसम्बन्धिनो निषेध्यत्वात् ॥ (श्रु. भा.)

**अनतिप्रश्न्या** — आक्षेपमुखेन ज्ञातुमयोग्या (परा देवता) ।

'अनतिप्रश्न्यां वै देवतामतिपृच्छसि' (बृ. उ. 5-6-1) इति । नियमाद्युपेतप्रश्नमर्यादामतिक्रम्य वर्तमानः प्रश्नः अतिप्रश्नः । आक्षेप इति यावत् । अतिप्रश्नमर्हतीत्यतिप्रश्न्या, आक्षेपार्हेत्यर्थः । सा न भवतीति अनतिप्रश्न्या ॥ (रं. भा.)

**अनधिकृतक्रिया अनाचारः** — स्वानुचितक्रिया नाचरितव्या ।

यस्मिन् कर्मणि स्वस्याधिकारोऽस्ति तत् स्वापेक्षया अधिकृतं कर्म । न अधिकृतं अनधिकृतं स्वाधिकाराविषयभूतं कर्म अनधिकृतं तस्य क्रिया करणं, कर्तृपरं वा अनधिकृत पदम् । अनधिकृतेन क्रिया अनधिकृतक्रिया ।

यथा कश्चित् श्वा रात्रौ स्वामिगृहरक्षणं कुर्वन् चोरमागतं दृष्ट्वापि न बभाष । (भष-भर्त्सने, श्वरवः) । कुत एतदिति गर्दभेन पृष्टः कुक्कुरो बभाषे अहमत्राधिकृतः त्वया नात्र किञ्चिद्वक्तव्यमिति । तच्चायुक्तं मन्यमानो गर्दभः स्वामिनं जागरयामीति बुद्ध्या उच्चैः कर्णकटु रराट, स्वामिनः सकाशाच्च लगुडप्रहारान् लेभे इति । (मी. को.)

अनेन शास्त्रवश्यैरवश्यम् स्वाधिकृतकर्मैवाचरितव्यं, न त्वन्यदीयमिति शिक्षितं भवति । अत्राचारपदे कर्मणि घञ् विवक्षितः । नाचरितव्येत्यर्थः । उद्देश्य

विधेयभावस्थले विधेयानुसारेणापि लिङ्गं भवति । अत एवोक्तमभियुक्तैः—

यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य ।
तल्लिङ्गं तद्वचनं सैव विभक्तिर्विशेषणस्यापि ॥
यत्रोद्देश्यं विधेयत्वं तत्रायं नियमो न वा ।
लिङ्गसंख्याविभेदेऽपि विशेषणविशेष्यता ॥
विभक्तिः पुनरेकैवेत्यादिना ॥

**अनधिगतार्थगन्तृत्वम्** — प्रामाण्यम् ।

स्वसमानविषयकज्ञानानपेक्षोत्पत्तिकज्ञानत्वञ्च । तत् अनुमितेरपि वह्निविशिष्टः पर्वतो विषय इत्यनधिगतार्थगन्तृत्वम् । एवमुपमितावपि । लौकिकशब्दजन्यज्ञानन्तु न प्रमा, अनधिगतार्थगन्तृत्वाभावात् ।

(मी. को.)

एवञ्च वेदजन्यज्ञानसामान्यस्यापि प्रामाण्यं स्थापितं, 'वेदाः प्रमाणम्' इत्यभियुक्तोक्तेश्च सर्वत्रैकरूपमेव प्रामाण्यं सिद्ध्यतीति भेदबोधकवेदवाक्यानां लौकिकप्रमाणाधिगतार्थगन्तृत्वोक्तिः न घटते, ईश्वरनियाम्यत्वादीनां प्रमाणान्तरानधिगतत्वादिति भावः । सिद्धान्ते तु नात्र नैर्भयम् । (अधिकं प्रमाणपदे द्रष्टव्यम्)

**अनधीते महाभाष्ये व्यर्था सा पदमञ्जरी (स्यात्पदमञ्जरी) ।**
**अधीतेऽपि महाभाष्ये व्यर्था सा पदमञ्जरी (स्यात्पदमञ्जरी) ॥**

यथैवेश्वरमनाराध्य आराध्य चान्यदेवं, अपवर्गेच्छा व्यर्था । आराध्य चान्यदेवं अनाराध्य परमेश्वरं मुक्तीच्छा व्यर्था । (पदमञ्जरी नाम काशिकायाः टीका) (मी.को.) अनेन अपवर्गेच्छायां सकलफलप्रदसर्वेश्वराराधने सति देवतान्तराराधना व्यर्थैवेति बोधितम्,

आरोग्यं भास्करादिच्छेत् श्रियमिच्छेत् हुताशनात् ।
शङ्करात् ज्ञानमन्विच्छेत् मोक्षमिच्छेत् जनार्दनात् ॥

इति हि प्रसिद्धिः ॥

**अनध्यवसायः** — विशिष्याज्ञानं । यथा इदं किञ्चित् इति ज्ञानम् । अयं विशेषादर्शनेन जन्यत इति विज्ञेयम् ।

2. यस्तु ज्ञानविशेषः स्यादसाधारणधर्मजः ।
जिज्ञासाजनकः सोऽनध्यवसाय इहोच्यते ।।

भवति हि नित्यानित्यव्यावृत्तं शब्दत्वं शब्दे उपलभ्यमानस्य शब्दः किं नित्यः आहोस्विदनित्यः इति जिज्ञासा । अयञ्च वैशेषिकमते अविद्याप्रभेदः । 3. अविद्याविशेषः । 4. वेदान्तिनस्तु किंसंज्ञकोऽयं वृक्षः इति संज्ञाविषयकं जिज्ञासामात्रमित्याहुः । 5. हेतुदोषविशेषः ।। (न्या. कों.)

**अनध्यवसितः** — दोषविशेषः ।

असाधारणोऽनैकान्तिकभेदः । (न्या. प. 199) हेत्वाभासः । यश्चानुमेये विद्यमानसमानजातीययोरसन्नेव सोऽन्यतरत्रासिद्धः अनध्यवसायहेतुत्वादनध्यवसितः । यथा सत् कार्यमुत्पत्तेः इति । (न्या. को.)

**अनध्यायः** — [ग्रहणे चाध्यापने च - अध्ययनयोग्यभिन्नदिवसः ।

अधीते यस्मिन्निति व्युत्पत्तेः अधिकरणार्थे घञ् । क्रतौ अनध्यायेऽपि, अस्ति मन्त्रयोगः । अनध्यायफलं 'पर्वणि नाध्येयं' इति विद्यार्थो यः प्रयोगः, तं प्रति एतद्धर्मं विधानं । स एष ग्रहणस्य धर्मः । ग्रहणं गुणवत्करोति । कः पुनः ग्रहणस्य गुणः ? अविघ्नेन निर्वृत्तिः । (मी. को.) अयन्तु दोषः स्वीयधारणाध्ययने नास्ति किन्तु आद्याध्ययने अध्यापन एवेति बोध्यम् ।

**अननुभाषणम्** — निग्रहस्थानविशेषः ।

त्रिभङ्ग्यन्तरोक्तस्य प्राश्निकविदितस्य अर्थस्य अनुद्भावितस्याज्ञानेन यथोचितानुभाषणाभावः अननुभाषणम् । (न्या. प. 152) प्रतिवादिना दूष्यांशानुवादपूर्वकमेव वादिदूषणं कार्यम्, तदननुवादः अननुभाषणरूपनिग्रहस्थानम् । (टि.)

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् । तदिदं चतुर्धा । एकदेशानुवादात्, विपरीतानुवादात्, केवलदूषणोक्त्या, स्तम्भेन वेति । सर्वनामपदेनानुवादात्पञ्चममित्याचार्याः ॥ (न्या. को.)

**अननुष्ठापकत्वम्** — शास्त्राप्रामाण्यापादकदोषविशेषः ।

अनुष्ठानप्रयोजकत्वाभावः । अनुष्ठापनार्थं हि शास्त्रं प्रवृत्तम् । तदभावे शास्त्रस्य अननुष्ठापकत्वलक्षणं अप्रामाण्यं प्रसजेत् ।।

**अनन्तः** — (स. ना. 665)

नास्य देशकालवस्तुतोऽवधयस्सन्तीति, सदा सर्वत्र सर्वथा च प्रवृत्तस्वभाव इत्यर्थः। न च वस्तुपरिच्छेदाभावो वस्त्वभेदः, देशकालयोरतथात्वप्रसङ्गात्। (वि. स. भा.) मन्त्रवर्णादिना सदा सर्वत्र सर्वथा च प्रवृत्तस्वभावतया नास्त्यन्तो देशकालवस्त्ववधिः अस्येति। (वि. स. निर्व.)

देशतः कालतो वापि गुणतो वस्तुतोपि वा।
अवधिर्यस्य नास्तीति सोऽनन्तस्समुदाहृतः॥ (वि. स. नि)

2. कालत्रयवर्तिनिखिलजगदाश्रयतया देशकालपरिच्छेदानर्हः। (गी. भा.) 'देवं अनन्तं विश्वतोमुखम्' (गी. 11.11.) देशकालवस्तुपरिच्छेदराहित्यं नाम सर्वदेशसर्वकालव्यापित्वसर्वान्तर्यामित्वरूपम्। वस्तुपरिच्छेदराहित्यं हि समस्तवस्तुसामानाधिकरण्ययोग्यत्वादिकम्; न पुनः मिथो विरुद्धविविधवस्तुतादात्म्यम्; स्वव्यतिरिक्तसमस्तवस्तुमिथ्यात्वं वा; तयोरत्यन्तासंभावितत्वात्। विस्तरस्तु शतदूषण्यां ! (ता. चं.)

**अनन्तः** — नारायणः। 'सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां' (तै. उ. आ. 1)

अयं योगरूढः। अतः नारायणादिशब्दपर्यायः त्रिविधानन्त्ययोगिनि भगवति मुख्यो वर्तते। अत्र वाक्ये अनन्तमिति पदं पुलिंङ्ग द्वितीयान्तम्; यो वेदेति वेदन शब्देनान्वयात्। प्रथमान्तत्वे तद्यो वेदेति तत्पदाध्याहारः स्यात्; वाक्यभेदगन्धश्च स्यात्। अतस्तत्र यथोक्त एवार्थः। तस्मात् तदनुसारेणात्रापि अपरिच्छेदकथन समये देवताविशेषो निर्णीतः। (श्रु. प्र. 1.217) अत एव 'अनन्तश्चात्मा विश्व रूपो ह्यकर्ता' इति हि श्रूयते।

अनन्तशब्दश्च 'नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते' इति निर्वचनात् गुणपरिपूर्णत्वं दर्शयति। देशपरिच्छेदाभावबोधनेन बृहत्वञ्चाविष्कृतम्। रूढशक्त्या नारायणमाह। (ह. गु. द. 6)

3. अवधिरहितः नाशरहितश्च। न विद्यते अन्तः यस्य अन्तः--अवधिः नाशश्च। स्वरूपगुणविभूत्यादिभिः सीमानीतः स्वरूपगुणेषु नाशरहितः परमात्मा। (सं. अ.)

4. आदिशेषः

**अनन्तम्** — देशकालवस्तुपरिच्छेदरहितं ब्रह्म ।

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र स्वरूपमाह–सगुणत्वात् स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम् । तेन पूर्वपदव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणाः नित्या व्यावृत्ताः । विशेषणानां व्यावर्तकत्वात् । (श्री. भा. 1. भा. 2.116)

देशकालवस्तुपरिच्छेदरहितं ब्रह्म ।

'इहेदं नान्यत्र' इति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः । इदमिदानीं नान्यदेति' परिच्छेदायोग्यत्वं कालापरिच्छेदः । इदं इदं नेति परिच्छेदानर्हत्वलक्षणं सर्ववस्तुसामान्याधिकरण्यार्हत्वं वस्त्वपरिच्छेदः । यद्वा वस्तुस्वभावतः परिच्छेदो वस्तुपरिच्छेदः । तथा तुल्यकालत्वेऽपि तुल्यपरिमाणत्वेपि दशवर्णसुवर्णापेक्षया कलधौतादेरपकर्षः; तद्राहित्यं वस्त्वपरिच्छेदः । समाभ्यधिकराहित्यनिदानभूतो गुणैर्निरतिशयप्रकर्षो वस्त्वपरिच्छेदः इत्युक्तं भवति इति व्यासार्यैर्व्याख्यातम् ।

(तै. उ. रं. भा.20.21)

अनन्तशब्दस्य योगरूढत्वे पुल्लिङ्गता–यौगिकत्वे तु नपुंसकलिङ्गतेति भावः ।

**अनन्तजित्** — (स. ना. 308)

परिमितशिशुरूपस्याप्यस्य कश्चित् कदाचित् कथञ्चिदपि महिमावधिप्रकर्षो नास्तीति । (वि. स. भा.) अन्तं परिमितशिशुरूपस्य महिमावधिं जयति अभिभवति प्रधर्षयति इति । (वि. स. निर्व.)

मतस्य शिशुरूपस्य कदाचित्कश्चिदेव हि ।
कथञ्चिदवधिर्नास्ति महिम्नः परमात्मनः ।
तस्मादनन्तजिदिति वस्वर्णो जयदो मनुः ॥ (वि. स. नि.)

**अनन्तत्वम्** — परिच्छेदरहितत्वम् । (ब्रह्मणोऽसाधारणधर्मः)

यत्तु भिन्नत्वे वस्तुतः परिच्छेदात् देशकालाभ्यामपि परिच्छेदो ब्रह्मणः प्रसज्यत इत्यनन्तत्वं ब्रह्मणो न सिद्ध्यतीति तदयुक्तम् । वस्तुतः परिच्छिन्नानामपि देशकालपरिच्छेदस्य न्यूनाधिकभावेनानियमदर्शनात् देशकालसंबन्धेयत्तायाः प्रमाणान्तरायत्तनिर्णयत्वेन ब्रह्मणः सर्वदेशकालसंबन्धस्यापि प्रमाणान्तरादापाततो विरोधाभावात् ।

वस्तुतः परिच्छेदमात्रादपि सर्वप्रकारपरिच्छेदरहितत्वाभावात् आनन्त्यासिद्धिरिति चेत् तत् भवतोप्यविद्याविलक्षणत्वं ब्रह्मणोऽभ्युपयतः समानम् । अतः सतोऽविद्याविलक्षणत्वाभ्युपगमात् ब्रह्मणोऽपि भिन्नत्वेन भेदप्रयुक्ता दोषाः सर्वे तवापि प्रसज्येरन् । यद्यविद्याविलक्षणत्वं नाभ्युपेयते तर्हि अविद्यात्मकमेव ब्रह्म स्यात् . . . . . . । आनन्त्यप्रसिद्धिश्च देशकालपरिच्छेदरहितत्वमात्रेण, न वस्तुतोऽपि परिच्छेदरहितत्वेन, तथाविधस्य शशविषाणायमानस्यानुपलब्धेः । भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात् स्वतः परतोऽपि परिच्छेदो न विद्यते । (श्री. भा. 2.1.15) स्वतः इति स्वतः परिमितत्वाभाव उक्तः । अयं वस्त्वपरिच्छेदः । तत्कार्यपरिमितदेशकालसंबन्धाभाव उक्तः परत इति ! (श्रु. प्र.) कृत्स्नवर्तित्वम् । (श्रु. प्र. दी. 198)

इहलोके ब्रह्मभिन्नं सर्वमपि वस्तु यथायोगं तिसृभिः परिच्छित्तिभिः, द्वाभ्यां परिच्छित्तिभ्यां एकया वा परिच्छित्या प्रमितं परिच्छिन्नम् । तिसृभिः परिच्छिन्ना घटादयः देशतः कालतः वस्तुतश्च परिच्छिन्नत्वात् । द्वाभ्यां परिच्छिन्नः परमाणुरूपो जीवः, अणुत्वेन, सर्ववस्त्वनन्तर्यामित्वेन च । एकया परिच्छिन्नः कालो विभुत्वे नित्यत्वे च सति केवलमनन्तर्यामित्वेन वस्तुपरिच्छिन्नत्वात्, सर्वदेशसंबन्धित्वात्, सर्वकालसंबन्धित्वात्, सर्ववस्त्वन्तर्यामित्वाच्च तिसृभिरपि देशकालवस्तुरूपाभिः परिच्छित्तिभिर्वियोगात् परिच्छेदरूपसंबन्धाभावात् परब्रह्मणः आनन्त्यं सिद्धम् । (प. यो. 335)

त्रिगुणद्रव्यस्यानन्तत्वमधःप्रभृतिदेशेषु ऊर्ध्वे हि भोगविभूत्य-वच्छिन्नम् ।

असंख्यातत्वम् । त्रिविधपरिच्छेदरहितत्वम् । त्रिविधपरिच्छेदरहितत्वरूपमिदं श्रियोऽपि । स्वरूपरूपगुणविभूतिभिः अपरिच्छेद्यत्वम् । (वि. को.)

**अनन्तरः** — 1. अन्तरवयवव्यतिरिक्तः जीवात्मा ।

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः' (बृ. उ. 6.5.13)

अन्तरवयवव्यतिरिक्तः अबाह्यः—बाह्यावयवव्यतिरिक्तश्च सर्वोऽप्यवयवः यथा रसघनोभवति । अत्र अन्तरो बाह्यश्च रसघन इति वक्तव्ये अन्तरत्वबाह्यत्वशून्यानां मध्यवर्तिनामपि ग्रहणं यथा स्यादिति अनन्तरोऽबाह्य इति व्यतिरेकमुखेन निर्देशः ।

एवञ्च सति निरवयवात्मसाधारण्यमपि फलितं भवतीति द्रष्टव्यम् । एवमेवायमात्मा सर्वत्र प्रज्ञानघनः स्वरूपतो धर्मतश्च । (रं. भा.)

2. नाशरहितः परमात्मा । 'अपूर्वोऽनन्तरः' (मां. उ. 4.26) नाशाभावादनन्तरः, अन्तशब्दपर्यायोऽत्रान्तरशब्दः । (कू. भा.)

**अनन्तरम्** — 1. बहिः ।

'अनन्तरमबाह्यं न तदश्नाति किंचन' (सु. उ. 3) बहिः आदित्यमण्डलादौ प्रकाशते ब्रह्म । (श्र. भा.)

**अनन्तरूपः** — (स. ना. 932)

ईदृंशि सद्यः सम्पाद्यानि रूपाण्यस्येति । (वि. स. भा.)

सद्यः सम्पाद्यानि च अनन्तानि बहूनि रूपाण्यस्येति । (वि. स. निर्व.)

'अनन्तरूपः स स्याद्वै यस्यासंख्येयविग्रहाः ।' (वि. स. नि.)

**अनन्तरूपः** — 1. अन्तरहितरूपवान् ।

'सर्वतोऽनन्तरूपम्' (गी. 11.16)

नान्तं न मध्यं न पुनस्तवादिं पश्यामि'

'नान्तं न मध्यं, इत्यादौ विद्यमानस्यादर्शनं न विवक्षितम्; अर्जुनस्य दिव्यचक्षुर्लाभेन तदयोगात् । अतोऽत्र अनन्तरूपमिति हेतुगर्भविशेषणात् विषयाभावादेव शशश्रृङ्गादेरिवादर्शनमुक्तमित्यभिप्रायेणाह—यतस्त्वमनन्ता, अतः तव नान्तं न मध्यं न पुनस्तवादिं च पश्यामीति । (ता. चं.)

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।

नानाविधानि दिव्यानीत्युक्तरीत्या वा अनन्तरूपः ।

शतशस्सहस्रशश्चेत्यनेन परव्यूहविभावाद्यवच्छेदक्रोडीकृतानन्ताप्राकृतविग्रहवत्त्वं दर्शितम् । यत् एकादित्यमण्डलवर्तिरूपं, तत्समानमनन्तब्रह्माण्डेषु आदित्यमण्डलवर्ति असंख्यातं रूपम् । (ता. चं. 11.5)

2. देवादिनानाशरीरकः ।

**अनन्तलोकः** — विष्णुलोकः ।

'अनन्तलोकाप्तिमथो प्रतिष्ठाम् ' (क. उ. 1.14) अनन्तस्य विष्णोः लोकः ।
(रं. भा.)

**अनन्तवीर्यः** — अनवधिकातिशयवीर्यः परमात्मा ।

'अनन्तवीर्यामितविक्रमः' (गी. 11.19)

वीर्यशब्दः प्रदर्शनार्थः । अनवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधिः इत्यर्थः । वीर्य–सर्वोपादानत्वेऽपि विकाररहितत्वम् । (गी. भा.)

**अनन्तश्रीः** — (स. ना.933)

प्रपन्नेभ्यः देयाः स्वप्राप्तिपर्यन्ताः अनन्ताः श्रियोऽप्यस्येति । (वि. स. भा.)

ततो गजेन्द्रमस्मात् कलेवराद्धि प्रमोक्ष्य दिव्यं च वपुः प्रापय्य तस्य स्वसायुज्य प्रदानात् तेभ्यो देयाः ऐहिकाद्याः स्वप्राप्तिपर्यन्ताः अनन्ताः बह्व्यः श्रियः संपदोऽप्यस्येति । (वि. स. निर्व.)

देयाः स्वप्राप्तिपर्यन्ताः श्रियोऽनन्ताश्च नित्यशः ।
प्रपन्नेभ्यो यस्य सन्ति सोऽनन्तश्रीरिति स्मृतः ।। (वि. स. नि.)

**अनन्तहुतभुग्भोक्ता** — (स. ना.889)

सप्ततन्तुषु हुतं भुंक्ते इति इन्द्रो हुतभुक्, प्रजाः भुनक्ति–पालयतीति प्रजापतिः, भोक्तातौ महान्तौ अस्येति । (वि. स. भा.)

अनन्तौ–अनवधिकमाहात्म्यतया महान्तौ हुतभुग्भोक्तारौ यस्य सः, प्रकरणात् सप्ततन्तुषु हुतं भुक्तं इति हुतभुक्–इन्द्रः स च भुनक्ति प्रजाः पालयतीति भोक्ता–प्रजापतिः, स च इति द्वन्द्वः तावस्येति । एकं नाम (वि. स. निर्व.)

मरुत्वान् हुतभुग्भोक्ता भुनक्तीति प्रजा विधिः ।
सोऽनन्त हुतभुग्भोक्ता महान्तौ यस्य तौ सदा । (वि. स. नि.)

आहत्य इन्द्रप्रजापतिशरीरकः इत्यर्थः । इन्द्रः त्रिलोकाधिपतिः । प्रजापतिः अंडाधिपतिः यस्येति स्वस्वामिभावे षष्ठी । तथा च उभावपि यत्स्वामिकौ सः अनन्तहुतभुग्भोक्ता ।।

**अनन्तात्मा** — (स. ना.521)

तदुपरिजगदाधारस्तम्भभोगीन्द्रस्य आत्मतया तिष्ठतीति । (वि. स. भा.)
तदुपरितनजगदाधारस्तम्भभूतभोगीन्द्रात्मतया, अनन्तस्य नास्तितमगुणान्तस्य आधारतया सर्वप्राणनस्य वा शेषस्यात्मा अन्तरात्मा इति । (वि. स. निर्व.)

कमठस्योपरिजगदाधारस्तम्भभोगिनः ।
स्वरूपेण स्थितो योऽसौ अनन्तात्मा प्रकीर्तितः ॥

(वि. स. नि.)

**अनन्ताश्चर्यत्वम्** — नित्यमपूर्वतयानुभाव्यत्वम् ।

'अनन्ताश्चर्यानन्तमहाविभव . . . . . . . श्रीवैकुण्ठनाथ' (श. ग. 152)

स्वरूपगुणसंस्थानादिवैचित्र्यातिशयेन नित्यमपूर्ववत् अनुभाव्यतया अनन्ताश्चर्यत्वम् । (र. रक्षा.)

स्वोचितविविधविचित्रानन्ताश्चर्य . . . . . (गी. भा. उपो.)

अनवधिकाश्चर्यरसावहत्वम्, अथवा अनन्तानि आश्चर्याणि संस्थानविशेष-सौगन्ध्यसुखस्पर्शत्वादीनि येषां भूषणानां तानि । (ता. चं. 6)

भगवत्स्वरूपस्येव तदायुधभूषणादीनामप्याश्चर्यत्वं विवक्षितम् ॥

**अनन्तेश्वरकल्पनापत्तिः** — अनुमानेन जीवातिरिक्तेश्वरकल्पने अनन्तेश्वरापत्तिः ।

तदुक्तं 'क्लृप्तावन्यस्य कर्तृद्वयमुपनमति त्वत्सपक्षे तथा स्यात्' इति ।
पक्षेऽपीत्यव्यवस्था यदि विफलतया व्यक्तिः आद्येऽपिसा स्यात् ॥ (त. मु. 164)

अयं भावः–क्षित्यादि कर्तरि साध्यमाने विश्वकर्त्रा तेन घटादेर्द्विकर्तृकत्वमायातम् । ततः तद्दृष्टान्तेन पक्षस्य द्विकर्तृकत्वमायातम् ; ततस्सपक्षस्य त्रिकर्तृकत्वं स्यात्, एवं क्रमेण उपर्युपरि क्लृप्तावनन्तेश्वरापत्त्या 'द्यावापृथिवी जनयन् देव एकः' 'एकश्शास्ता न द्वितीयः' इति व्यवस्था भज्येत । एकेनेश्वरेण विश्वकार्यसिद्धौ द्वितीयक्लृप्तेः निष्फलत्वात् तत्र गौरवभिया त्यागे एकस्मिन्नपि (ईश्वरे) स्यात् । उक्तं हि जीवैरेव कर्तृभिः अदृष्टद्वारा सर्वकार्यं सिध्येदिति । (स. सि.)

अतः अनुमानेन न साधनीयः, अपितु आगमैकसिद्धः ईश्वरोऽभ्युपगमनीयः ॥

**अनन्दाः** — सुखलेशशून्याः ।

अन्धतमसावृताः केचन लोकाः । 'अनन्दा नाम ते लोकाः' (बृ. उ. 6.4.11)

**अनन्नम्** — वागादिकम् ।

'महान्तमस्य महिमानमाहुः अनद्यमानो यदनन्नमत्ति' (छां. उ. 4.3.7) स्वयमन्यैः अनाश्यमानः (नृसिंहः) वागादिकं नाशयति इत्यर्थः । (रं.भा.)

अन्नशब्दः भोग्यपरस्सन् तद्भिन्नं तदासन्नं वागाद्युपकरणमभिधत्ते ।।

**अनन्यगतिः** — शरण्यान्तरप्राप्यान्तररहितः ।

'अकिञ्चनोऽनन्यगतिः' (स्तो. र. 22) गतिशब्दस्य कर्मणि व्युत्पत्तेः उपायतया उपेयतया गम्यपुरुषान्तररहितः इति भावः ।

**अनन्यगतित्वम्** — परमात्मभिन्नगतिशून्यत्वं ।

नारायणादन्यत्साधनं साध्यं नास्ति मम इति मतिः । (दि. सू. च. 133)

अत्र गतिशब्दः साधनवाची, साध्यवाची च । साधनान्तरं साध्यान्तरं च नास्तीति मतिमान् इति अनन्यगतिशब्देन बोधे तदुत्तरभावप्रत्ययेन प्रकृतिजन्यबोधेप्रकारभूता मतिः विशेष्यतया विवृता ।।

**अनन्यचेताः** — अनन्यमनाः ।

अनन्यचेताः सततं यो मां स्मरति नित्यशः (गी. 8.14)

अत्यर्थमत्प्रियत्वेन मत्स्मृत्या विना आत्मधारणमलभमानः । (गी. भा.) अनन्यचेतश्शब्देन स्मृतेः भक्तिरूपापन्नत्वं अभिप्रेतमिति दर्शयति—अत्यर्थमत्प्रियत्वेनेत्यादिना। (ता. चं.)

2. भगवदेकान्तधीः । (वि. को.)

**अनन्यत्वम्** — अपृथक्सिद्धत्वकृतोऽभेदः ।

'सर्वं खल्विदं ब्रह्म', 'ब्रह्मैवेदं सर्वम्', 'आत्मैवेदम्' इत्यादिभिः अनन्यत्वं प्रतीयते, तथाऽन्यत्वं च निषिध्यते, 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' 'नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति । तथा 'यत्र हि

द्वैतमिति भवति, तदितरः इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इत्यविदुषः द्वैतदर्शनं विदुषश्चाद्वैतदर्शनं प्रतिपादयत् अनन्यत्वमेव तात्त्विकं इति 'तदनन्यत्वमारम्भणशब्दादिभ्यः इत्यादिना प्रतिपादयति . . . . . . . . ।
अत्रेदं तत्त्वं-चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्वशब्दवाच्यम् । तत् कदाचित् स्वस्मात् स्वशरीरतयापि पृथग्व्यपदेशानर्हसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तत्कारणावस्थं ब्रह्म । कदाचिच्च विभक्तनामरूपव्यवहारार्हस्थूलदशापन्नचिदचिद्वस्तुशरीरम्; तच्च कार्यावस्थमिति कारणात्परस्माद्ब्रह्मणः कार्यरूपं जगत् अनन्यत्, शरीरभूतचिदचिद्वस्तुनःशरीरिणो ब्रह्मणश्च कारणावस्थायां कार्यावस्थायां च श्रुतिशतसिद्धया स्वभावव्यवस्थया गुणदोषव्यवस्था च 'नतु दृष्टान्तभावात्' इत्यत्रोक्ता । ये तु कार्यकारणयोरनन्यत्वं कार्यस्य मिथ्यात्वाश्रयेण वर्णयन्ति, न तेषां कार्यकारणयोरनन्यत्वं सिध्यति । सत्यमिथ्यार्थयोः ऐक्यानुपपत्तेः । तथा सति ब्रह्मणो मिथ्यात्वं जगतः सत्यत्वं वा स्यात् ॥
(श्री. भा. 2-25-5)

कार्यकारणभावविषये कार्यकारणयोरभेदः, भेदः, उभयं, अनन्यत्वं चेति चतस्रो विधाः वादिभिरंगीकृताः । अत्र तु अवस्थायाः आगन्तुकत्वमंगीकृत्य सूक्ष्मावस्थाविशिष्टस्य कारणस्य स्थूलावस्थाविशिष्टस्य कार्यस्याभेदः स्वीकृतः । इदं लोकदृष्ट्यनुगुणं पातञ्जलादिभिः अभ्युपगतं विलक्षणं माध्यस्थ्यम् । ततश्च अवस्था, विकारः, शक्तिः, अंशः इत्यादयः शब्दाः यथायथं समानार्थाः कृता इति संग्रहः । चिदचिद्वस्तुनोः शक्ति शब्देन सांख्ययोगव्यवहारः बहुलोऽस्ति । (द. उ. 195)

शरीरभूतचिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च भेदः विशिष्टयोरेवाभेदश्चेति स्थापनेनैव भेदाभेदात्मकत्वं नास्तीति स्थापितं ।

न विद्यते अन्यत् अशरीरभूतं वस्तु यस्य । (वि. को.)

अत्र सांख्यमताभिप्रायेण कार्यकारणयोरभेदः ; सिद्धान्तानुसारेण अनन्यत्वं चेति विभागः कृतः । अभेदः इत्यत्र उपादानकारणे अवस्थानामपि सद्भावः स्वीकृतः सांख्यैः । सिद्धान्ते तु अवस्थानामुपादानकारणे सत्त्वं नाङ्गीकृतम् । ततश्च अवस्थाश्रयद्रव्यस्य परं पूर्वं सत्त्वं, न तु अवस्थाविशिष्टरूपेणेत्येतावतैव सत्कार्यवाद व्यवहारः ॥

**अनन्यत्वाधिकत्वे** — जीवस्य ब्रह्मणोऽनन्यत्वं, ब्रह्मणस्तस्माद्विलक्षणत्वञ्च।

यावद्धि जीवस्य ब्रह्मांशत्वं न निर्णीतं तावज्जीवस्य ब्रह्मणोऽनन्यत्वं, ब्रह्मणयस्त-स्मादधिकत्वं च न प्रतितिष्ठति। (श्री. भा. 2.3.42) इति जीवस्य ब्रह्मणोंशत्वस्थापने-नोभयं समर्थितम्।

अपृथक्सिद्धप्रकारत्वनिर्णयेनोभयव्यपदेशमुख्यत्वम्; प्रभाप्रभावतोरिवापृथक्सिद्धां-शांशित्वनिर्णयेन जगद्ब्रह्मणोरनन्यत्वसिद्धिः, विशेषणतया अंशत्वनिर्णयेन विलक्षणत्व-सिद्धिरिति भावः। (श्रु. प्र.)

अनेनोभयविधव्यपदेशयोरविरोधः प्रादर्शि। अंशवाचकस्य (शरीरवाचकस्य शरीरिपर्यंततया शक्तेः आकृत्यधिकरणन्यायेनोपपादितत्त्वात्। एतेन भेदाभेदयोः स्वीकार इति भ्रान्तिः निरस्ता।

**अनन्यथासिद्धत्वम्** — अनवकाशत्वम्।

अनन्यथासिद्धत्वं नाम तदर्थप्रमाणतां विना अनुदयत्वम्। विरुद्धार्थप्रमाणा वाधेनानुदयत्वमिति यावत्। तच्चानवकाशत्वात्। (श्रु. प्र.)

कानिचित्प्रमाणं बाधित्वैव प्रवर्तन्ते। तत्प्रसक्तिरहितं तु अन्यथासिद्धं भवति। तत्र कारणं अनवकाशत्वमेव। तथा च विषयान्तरालाभात् प्रबलं बाधकम्। इदं च प्रामाण्योपपादकम्।

अन्यथासिद्धित्रैविध्यराहित्यन्तु कारणत्वोपपादकम्। (मी. को.)

**अनन्यथासिद्धः प्रयोगः शक्तिं कल्पयति** — कश्चन न्यायविशेषः।

अस्योपयोगस्तु सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयम्; सोऽस्य मुख्योऽर्थः। स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः! तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः; अनेकार्थकल्प-नायोगात्; भगवच्छब्दवत्। (श्री. भा. 1.19)

अतः अनवधिकातिशय बृहति ब्रह्मशब्दस्य मुख्यत्वात्, सर्वेश्वरस्यैव तादृश-बृहत्वगुणयोगित्वाच्चेत्यर्थः। कथं तत्रैव मुख्यवृत्तः, अन्यत्रापि हि ब्रह्मशब्दः प्रयुज्यत इत्यत्राह तस्मादिति। तस्मात्—ब्रह्मणः। सर्वत्र मुख्यः कुतो न स्यादित्यत्राह

अनेकार्थेति । परस्मात् ब्रह्मणोन्यत्र प्रयोगस्यान्यथासिद्धित्वान्न तत्र शक्तिकल्पनम्, 'अनन्यथासिद्धः प्रयोगः शक्तिं कल्पयती' ति न्यायादित्यनेन प्रादर्शि–

अनेकशक्तिकल्पनं गौणत्वं वा न स्यात्, बृहत्त्वगुणयोगिसर्वव्यक्तिष्वेकयैव शक्त्या मुख्यत्वसंभवादित्यत्राह भगवच्छब्दवदिति । तथा च श्रीमति वैष्णवे पुराणे भगवच्छब्दं प्रकृत्योक्तम्, 'तत्र पूज्यपदार्थोक्तिपरिभाषा समन्वितः । शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारितः । इति

अनेन प्रस्तुतचोद्यस्य कः परिहार उक्तो भवति ? उच्यते–बृहतिधातोर्मनिन्प्रत्ययान्तत्वेन निष्पन्नस्य ब्रह्मशब्दस्य प्रधानादिषु दृश्यमानः प्रयोगो नावयवशक्ति निबन्धनः । तथा हि सति बृहन्महच्छब्दादिवत् आपेक्षिकबृहत्त्वयोगिषु सर्ववस्तुषु प्रयोगः स्यात् । न च तथा प्रयुज्यते । त्रसरेणुमपि हि ततोऽणिष्ठतयाऽभिमतद्रव्यान्तरापेक्षया महिमगुणशालीति वदन्ति । न च त्र्यणुकादिषु ब्रह्मशब्दप्रयोगः । एवं सर्वत्र प्रयोगदर्शनात् पङ्कजशब्दव्यवस्थापककुमुदादिव्यावृत्ततामरसानुवृत्तपद्मत्वजातिवत् ब्रह्मशब्दप्रयोगविषयपञ्चषव्यक्त्यनुवृत्त–अन्यव्यावृत्ताकारादर्शनादनेकशक्तिकल्पने प्राप्ते–अनन्यथासिद्धस्य प्रयोगस्य शक्तिकल्पकत्वात्, ब्रह्मशब्दप्रयोगविषयेष्वन्येषु च बृहत्त्वलेशयोगेन प्रयोगस्यास्यान्यथासिद्धत्वाच्च नानेकशक्तिकल्पनं युक्तम् । तस्मात् पुरुषोत्तम एव प्रवृत्तिनिमित्तपौष्कल्यवति मुख्यत्वम् ; अन्यत्रौपचारिकत्वं च । औपचारिकस्तु प्रयोगः संकोचसह इष्टः, न तु सार्वत्रिक इति । तमिमं न्यायमभिप्रेत्य भगवच्छब्दस्य पुरुषोत्तम एव मुख्यत्वमन्यत्रामुख्यत्वं च भगवता पराशरेणोक्तम् ॥

(श्रु. प्र. 19)

**अनन्यदैवत्वम्** — अनन्यदेवताकत्वम् ।

अनन्यदैवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे । (श्रीरा–सुं)

सर्वेश्वरव्यतिरिक्ताराध्यदेवताशून्यत्वम् । न अन्यत् उत्तमं दैवं यस्य, तस्य भावः । (सं. अ.)

**अनन्यनिष्ठशब्दः** — असाधारणशब्दः ।

'शब्दश्चानन्यनिष्ठः श्रुतः' (अ. सा. 71)

यथा 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यादिषु ज्योतिश्शब्दः यदा निरतिशयदीप्तियुक्तज्योतिःपरो भवति तदा विशेषशब्दो भूत्वा अन्यबोधको न भवति। अन्यत्र तु यदा ज्योतिष्ट्वेन सामान्यरूपेण बोधयति तदा आदित्यादिज्योतिः परोऽपि भवतीति, अन्यनिष्ठोऽपि भवतीति भावः।

**अनन्यपरः** — 1. प्राप्यान्तरशून्यः।

2. तात्पर्यान्तरशून्यः शब्दः। न अन्यः परः–प्राप्यः यस्य। (सं. अ.)

**अनन्यपरायणः** — भगवद्व्यतिरिक्त प्राप्यरहितः।

न अन्यत् परायणं परं–अयनं प्राप्यं येषाम्, सर्वेश्वरेण विना अन्यत् प्राप्यं नास्तीति मन्वानः॥ (सं. अ.)

**अनन्यप्रयोजनः** — परमैकान्ती।

किञ्चिदपि प्रतिफलमनपेक्ष्य भगवति प्रीत्यतिशयवान्। तदुक्तं–'ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः' इति॥

**अनन्यभक्तिः** — अनन्यप्रयोजना भक्तिः।

न विद्यते भजनीयादीश्वरात् प्रयोजनं अन्यत् यस्याः सा अनन्या। प्रयोजन तयायादृशभक्तिसंबन्धि अन्यन्न भवति, तादृशीभक्तिः अनन्या; अनन्यदेवताका इत्येके॥ (वि. को.)

**अनन्यभाक्** — भजनैकप्रयोजनः–वैष्णवाग्रेसरः

अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥

(गी. 9.30)

प्रकरणानुरोधेन सततकीर्तनादिना भजनैकप्रयोजन इत्युक्तं; तेनैव देवतान्तर प्रसङ्गो दूरनिरस्तः।

ननु 'आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः' 'आचारहीनं न पुनन्ति वेदाः इत्यादिषु सत्सु दुराचारस्य केनाकारेण साधुत्वमित्यत्राह वैष्णवाग्रेसर इति। अनन्य-भजनं वैष्णवाग्रेसरत्वे प्रयोजकम्। (ता. चं.)

अस्य व्यवसायः सुसमीचीनः। भगवान् निखिलजगदेककारणभूतः परं ब्रह्म नारायणः चराचरपतिः अस्मत्स्वामी मम गुरुः मम सुहृत् मम परमं भोग्यमिति सर्वैः दुष्प्रापोऽयं व्यवसायः तेन कृतः। अतस्साधुरेव बहुमन्तव्यः तस्याचारव्यतिक्रमस्स्वल्प-वैकल्यमिति न तावताऽनादरणीयः, अपि तु बहुमन्तव्य एव। विरोध्याचारमिश्रोऽपि भजनमाहात्म्यादेव शाश्वतीं शान्ति प्राप्नोत्येव ॥ (गी. भा.)

**अनन्यभोग्यत्वम्** — भगवदेकभोग्यत्वम्।

परमात्मव्यतिरिक्तविषये भोग्यत्वबुद्धिशून्यत्वम् ॥ (दि. सू. च. 104)

**अनन्यलभ्यः शब्दार्थः** — न्यायविशेषः।

अन्येन लभ्यः अर्थः शब्दप्रतिपाद्यो नेत्यर्थः। अनेन न्यायेन ओदनपाकं पचतीत्यत्र पदान्तरेण पाकस्य लाभात् 'पच्'धात्वर्थः व्यापारमात्रमाश्रीयते। तद्वत् 'दृष्टेः द्रष्टारं' इति श्रुतावपि दृष्टिरूपपदान्तरेण दर्शनस्योक्तेः, द्रष्टारमित्यत्र 'दृशि' धातोः व्यापारमात्रमर्थः इति दृष्टिरूपव्यापाराश्रय इत्येवार्थो वक्तव्यः।

अत एवोक्तं 'दृष्टेर्द्रष्टारमिति व्यपदेशः, ओदनपाकं पचतीतिवदिति भावः॥'

(श्रु. प्र. 3-3-35)

अयं कर्त्रधिकरणन्यायः। स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते अनन्यलभ्यः शब्दार्थः इति न्यायात्। अत एव न गङ्गापदस्य तीरमर्थः। लक्षणयैव तत्प्रतिपत्तिसंभवात् इत्युक्तं मीमांसान्यायप्रकाशे। नियमतः शक्तिग्रहापेक्षे शब्दे अस्य न्यायस्याप्रवृत्तिः। अन्यथा पङ्कजादिपदे पद्मस्य लक्षणया प्रतीतिसंभवात् अवाच्यता स्यात्। (मी. को.)

तथा च प्रकारान्तरेण योऽर्थः लब्धुं शक्यः, न स शब्दार्थः। स प्रकारो द्विविधः, वृत्त्यन्तरं, पदान्तरं च। आद्यः–गङ्गायां घोष इत्यादौ। द्वितीयः ओदन-पाकं पचति इत्यादौ ॥

**अनन्यलभ्यः शास्त्रार्थः** — न्यायविशेषः

शास्त्रस्वरूपमुक्तं स्कान्दे–

ऋग्यजुस्सामाथर्वा च भारतं पाञ्चरात्रकम्।

तथा रामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यः शास्त्रविस्तरः नैव शास्त्रं कुवर्त्म तत् ॥

इति । तदनेनानन्यलभ्यः शास्त्रार्थ इति न्यायेन भेदस्य प्राप्तत्वेन तत्र न तात्पर्यं किन्तु अद्वैत एव वेदवाक्यानां तात्पर्यमिति न शङ्कनीयम्, अखिलजगत्स्रष्टृत्वादीनां अन्यलभ्यत्वाभावात् ॥ (मी. को.)

**अनन्यशरणः** — दुष्करोपायान्तराशक्तः ।

'अनन्यशरणः शरणमहं प्रपद्ये' (श. ग. 1) अन्यत् शरणं यस्य नास्ति सोऽनन्यशरणः । शरणं–उपायः ।

'उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् ।
वर्तते साम्प्रतन्त्वेषः उपायार्थैकवाचकः ॥'

इति व्यवस्थापनात् । उत्तमपुरुषेणैव स्वान्वये सिद्धे अहं इत्यधिकोक्त्या स्वस्य दुष्करोपायांतराशक्तिः सूच्यते । प्रपद्ये इत्यत्र यद्यपि गत्यर्थेन धातुना बुद्ध्यर्थेन सता अध्यवसायमात्रमुपस्थाप्यते, तथापि प्रमाणानुसारात् शरणशब्दतात्पर्या(नुसारा)च्च प्रार्थनाद्यन्वितभरन्यासं करोमीत्युक्तं भवति । प्रार्थ्यते चानन्तरं फलविशेषः । यस्तु परस्परोपकारेण दक्षिणादानेन प्रशासनेन वा भरन्यासः, नासौ प्रपत्तिः ।

(र. रक्षा. 103)

'सम्प्रत्युपायार्थैकवाचकः' इति मन्त्ररत्ने शरणशब्दस्य उपायवाचकत्वात् । आत्मनः सिद्धोपायभूतभगवदेकोपायत्वात् तदन्यभक्तिज्ञानादीनां अनुपायत्वम्, अतोऽनन्यशरणः ॥ (दि. सू. च. 104)

**अनन्यसाधनः** — स्वप्रकाशः आत्मा ।

'देहेन्द्रियमनःप्राणधीभ्योन्योनन्यसाधनः' (आ. सि.)

स्वस्य प्रकाशे ज्ञानांतरनिरपेक्षः । (श्री. भा. 1.74) (स. सि. 76) साधन शब्दस्योत्पादकज्ञापकसाधारणत्वात् तत् व्याचष्टे–अनन्यसाधनः स्वप्रकाश इति ।

(श्रु. प्र.)

**अनन्यसाध्यम्** — भक्तियोगरूपोपायान्तरेण साधयितुमशक्यम् ।

'अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ।

तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः '॥ (प्र. पा. 25)

**अनन्याः** — प्रयोजनान्तररहिताः ।

'अनन्याश्चिन्तयंतो मां ये जनाः पर्युपासते' (गी. 9.22)

अनन्यप्रयोजनाः मच्चिन्तनेन विना आत्मधारणालाभात् मच्चिन्तनैकप्रयोजनाः । (गी.भा.) अनन्यत्वविशेषणात् चिन्तनस्य निरतिशयसुखरूपत्वसिद्धिः ॥ (ता. चं.)

**अनन्याधारत्वम्** — परमात्मनो धर्मविशेषः ।

'स भगवः कस्मिन् प्रतिष्ठितः इति स्वे महिम्नि यदि वा न महिम्नि' इति श्रुतिसिद्धः परमात्मासाधारणधर्मः । स्वे महिम्नीति अनन्याधारत्वं । (श्री. भा. 1.3.8) इह न महिमनिषेधः, अपि तु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेधः । (श्रु. प्र.)

सर्ववस्तूनामाधारसापेक्षत्वं दृष्ट्वा शिष्यः पृच्छति—स भगवः कस्मिन् प्रतिष्ठित इति । उत्तरमाह स्वे महिम्नीति । 'सः स्वीयमहिमाधारक इत्यर्थः । 'स्वयं दासास्तपस्विन' इतिवत् अनाधार इत्यभिप्रायः ।

स्वशब्दस्यात्मात्मीयवचनत्वात् आत्मीये नियाम्यतया महिमभूते गवाश्व . . .लक्षणे प्रतिष्ठित इत्यभिप्रायं शिष्यो गृह्णीयात् । अथवा स्वशब्दस्य स्वात्मपरतया आत्माधार इत्यभिप्राय इति वा बुध्येत । न च तदुभयमपि संभवति । परमात्मन उभयविभूतिलक्षणात्मीयमहिमसद्भावेऽपि अनाधारस्य परमात्मनः तत्प्रतिष्ठितत्वासंभवात् । 'न ह्यतिशिक्षितोऽपि नटवटुः स्वस्कन्धमारुह्य नरीनर्ति ' इति न्यायेन स्वस्य स्वाश्रितत्वासम्भवाच्च । अतो न द्वयमपि युज्यते । अतः शिष्यस्य सा बुद्धिः निवर्तनीया इति मत्वा पुनराह यदि वा न महिम्नीति । स्वविवक्षितानाधारत्वाभिप्रायातिरिक्ते पूर्वोक्तपक्षद्वये त्वया आशंकिते न स्वे महिम्नि प्रतिष्ठित इति ब्रूमः इत्यर्थः ॥ (छां.उ.र.बा.भा. 7-24-2)

**अनन्याधिपतिः** — अकर्मवश्यः ।

'अत एवचानन्याधिपतिः' (ब्र. सू. 4.4.9)

यतो मुक्तः सत्यसङ्कल्पः अत एवानन्याधिपतिश्च । अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम् । तत्त्वे हि प्रतिहतसंकल्पत्वं भवेत् । अतः सत्यसंकल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव । 'स स्वराड्भवति इत्युच्यते । (श्री. भा.)

2. भगवद्व्यतिरिक्ताधिपतिशून्यः ।

न पुनरनाथत्वम् । तथासत्यनधिपतिरित्येतावदुच्येत, न त्वनन्याधिपतिरिति । न च पतिव्रतायाः प्रियतमस्वपतिपारतन्त्र्यमपुरुषार्थः ।

'संकल्पादेव तच्छ्रुतेः' 'अत एव चानन्याधिपतिः' इति सूत्रद्वये मुक्तोऽनन्याधिपतिः कथितः । तेन (अन्यः) तस्य शेषी न स्यात् । किञ्च 'स स्वराट् भवति' इति श्रुत्यैव मुक्तः स्वतन्त्रत्वेनोक्तः । अतः पूर्वप्रतिष्ठापितानां परमपुरुषशेषित्व पारतन्त्र्यादीनां सर्वेषामप्यर्थानां विहतिः स्यात् । अत्रोत्तरं–

मैवं नाथेतरान् प्रत्यघविहित इह क्षिप्यते शेषभावो ।
विश्वस्यात्मेश्वरो यः पतिरिति पठितः तत्पतित्वन्त्ववाध्यम्' इति ।। (अ. सा. 533)

अतः भगवद्व्यतिरिक्तान् प्रति पापकृतश्शेषभावः जीवस्य प्रतिक्षिप्यते, तथैव तत्पारतन्त्र्यमपि । 'पतिं विश्वस्यात्मेश्वरं' इति यः पठितो विश्वस्य पतिः तस्य पतित्वं वाध्यमेव न भवति । अतः मुक्तस्य भगवच्छेषत्वपारतन्त्र्ययोः न कोपि विरोध इति ।। (चिं. म. 533)

**अनन्याधीनत्वम्** — स्वातन्त्र्यम् ।

इदं श्री, श्रीशसाधारणं लक्षणम् । श्रियोऽपि स्वतः तदधीनत्वाभावात् । (वि.को.)

न अन्यस्मै अधीनः, तस्य भावः । स्वव्यतिरिक्तनिरूपितनिरुपाधिकवश्यतभाववत्त्वम् । सर्वेश्वरैकसमवेतगुणोऽयम् । (सं. अ.)

**अनन्याधीनप्रकाशत्वम्** — प्रकाशकान्तरनिरपेक्षतया स्वयंप्रकाशमानत्वम् ।

न अन्यस्य अधीनः प्रकाशः अनन्याधीनप्रकाशः, तस्य भावः अनन्याधीनप्रकाशत्वम् । ज्ञानात्मदीपादिषु अयं गुणः दृश्यते । घटादयः दीपादिरूप प्रकाशकवस्त्वन्तरसहकारेण विना न प्रकाशन्ते । दीपादयस्तु दीपान्तरनिरपेक्षतयैव प्रकाशन्ते । तथैव ज्ञातुरात्मनः ज्ञानं स्वाश्रयं प्रति ज्ञानान्तरनिरपेक्षतयैव स्वयमेवप्रकाशते ; आत्मापि तथैव स्वयं प्रकाशते ।। (सं. अ.)

**अनन्यार्हशेषत्वम्** — भगवदेकशेषत्वम् ।

भगवदायत्तस्वरूपस्थितिप्रवृत्तितया भगवच्छरीरत्वम् । (त. दी. 3.)

शेषः—दासः । चेतननिष्ठशेषत्वं दासत्वविशेषरूपमेव । अन्यशेषत्वानर्होऽयं जीवः । भगवदेकशेषः इत्यर्थः । भगवद्व्यतिरिक्तस्य अन्यस्य वा स्वस्य वा शेषः अयं न भवतीति भावः । (दि. सू. च. 103)

'आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर' इत्युक्तेः भगवच्छेषत्वे भागवतशेषत्वमप्यन्तर्भूतम् ।

राज्ञः गर्भदासः कश्चित् राजभृत्यस्य भृत्यो भवेच्चेत् एवं गर्भदासं स्वभृत्यत्वेन स्वीकृतवतः पुरुषस्य राजद्रोहो भवेदेव । तथा सति अनन्यार्हभगवच्छेषत्वं, जीवशेषत्वञ्च विरुद्धं कथं घटेत इति चेदुच्यते राजा स्वस्वातन्त्र्येण स्वभृत्यं स्वीयजनसेवकं करोति चेत् न दोषः । तथात्रापि भगवत्सङ्कल्पात् एकस्य जीवस्य अपरो जीवः दासो भवेच्चेत् दोष एव नास्ति । 'दासानां स्वात्मानं सेवकं कृतवान् विमलः' इत्युक्तरीत्या भागवतविषये दासत्वं तु अनुग्रहविशेषनिबन्धनमेव । भागवतव्यतिरिक्तेभ्यः दासत्वं तु निग्रहफलमेव । तेन नरकादिकं भवेत् । (सं. वि. 369)

**अनन्योपायः** — सिद्धोपायनिष्ठः ।

न अन्यः उपायः यस्य । भगवव्द्यतिरिक्तोपायशून्यः ।। (सं. अ.)

**अनन्योपायता** — प्रपन्नासाधारणधर्मः ।

'प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः ।'

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥

इत्यनन्योपायत्वश्रवणात् । (श्री. भा. 3-2-34) प्राप्यस्यैव उपायत्वश्रवणात्, अनेन प्रापकत्वं प्राप्यत्वं च परमात्मनः सिद्धं न तु प्रापकादन्यदेवोपेयमिति भावः ।

तस्मात्त्वमुद्धव . . . . मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन यास्यसि ह्यकुतोभयम् ॥ (भाग. 11-12-15)

मामित्यनेन सार्वज्ञ्यसर्वशक्त्याद्याश्रयणसौकर्यापादकाश्रितकार्यापादकवात्सल्यसौशील्यस्वामित्वज्ञानशक्तिपूर्त्यादिकल्याणगुणयोगित्वमभिप्रेतम् । एकमित्यनेन फलोपाययोरैक्यं विवक्षितम् । एवकारेण प्रपदने स्वस्य कर्तृत्वव्यावृत्तिः । एकवचनेन

स्वानुष्ठितशरणागतियोगेऽप्युपायत्वबुद्धिव्युदासः । तत्र हेतुत्वेनात्मानं विशिनष्टि 'आत्मानं सर्वदेहिनामिति' सर्वान्तरात्मभूतेन मनःपर्यन्तसर्वेन्द्रियप्रचोदयित्रा मयैव प्रकृतोपायानुष्ठानस्य कारितत्वात्तत्रोपायताबुद्धिर्न कार्येति भावः । मामेवेत्येवकारोऽन्वेतव्यः । तेनासर्वज्ञत्वादिगुणयोगिचतुर्मुखादिजीवव्यावृत्तिः । एवकारस्य स्वसमभिव्याहृतपदार्थविपरीतपदार्थव्यावृत्तिपरत्वात् । सर्वात्मभावेन शरणं याहि ।

'उपाये गृहरक्षित्रोश्शब्दः शरणमित्ययम्' ।

इत्युक्तेरत्रोचितत्वादुपायपरश्शरणशब्दः । याहि, 'या प्रापणे' प्राप्तेर्गतिपूर्वकत्वाद्गत्यर्था बुद्ध्यर्था इति न्यायादध्यवस्येदित्यर्थः । सर्वात्मभावेन, यस्सर्वः—आत्मनः स्वस्य, भावः उपेयत्वपितृत्वरक्षकत्वशेषित्वादिनिरूपितोपेतृत्व पुत्रत्व रक्ष्यत्व शेषत्वादि संबन्धज्ञानं, तेन एवं चेत्, कुतोऽपि भयं नास्ति यस्य सः अकृत्यकरणकृत्याकरणादिमत्प्राप्तिप्रतिबन्धकभयरहितः, मां मुक्तभोग्यं यास्यसि प्राप्स्यसि ॥ (भाग. वी.)

अनेन स्वानुष्ठितशरणागतेरुपायत्वबुद्धित्यागः प्राप्यब्रह्मण्येवोपायत्वाध्यवसायश्च स्थापितः । प्राप्यस्यैवोपायत्वम् । (श्रु. प्रदी. 463) 'प्राप्यादनन्यः उपायः' इति हि विवक्षा ॥

**अनन्वितम्** — उचितान्वयशून्यम्–दोषविशेषः ।

तत् द्विधा, पदवाक्यभेदात्; यथा स्तम्भः कुम्भः कुड्यं कुसूलमित्यादि । यथा च–'पर्वतो वह्निमान्, महाह्रदोऽवकोटवान्' इत्यादि । व्यवहितान्वयमप्यनन्वयम्; प्रतीत्यभावाविशेषात् ॥ (न्या. प. 146) (अवकोटः–बकः)

**अनपायिनी** — विश्लेषरहिता लक्ष्मीः ।

'नित्यैवेषा जगन्माता विष्णोः श्रीरनपायिनी' (वि. पु. 2-8-17)

'पश्यतां सर्वदेवानां ययौ वक्षस्स्थलं हरेः'

'मया विना शुष्यति शोकदीनम्' । इत्यादिभिः आगन्तुकसंश्लेषादिव्यपदेशात् कथमपराधभीतानां तत्तदवस्थासु तत्पुरस्कारेण भगवदाश्रयणं स्यात् इत्यत्राह नित्यानपायिनीमिति । श्रीवत्सवक्षा नित्यश्रीः इत्यादिभिः अनयोः न कदाचिदपि विश्लेषः । अवतारेष्वपि कदाचिद्विश्लेषः शोकादेरभिनयमात्रमेव । इदं च रामायणान्ते सूचितम् ।

'रामस्य सव्यपक्षेतु पद्मा श्रीः समवस्थिता ।
दक्षिणे ह्रीः 'विशालाक्षी व्यवसायस्तथाग्रतः'

इति । नित्यानपायिनीमित्यत्र मतुवर्थो नित्ययोगे बोध्यः । (र. रक्षा. 101)
अतएवोक्तमन्यत्र

'कृष्णाजिनेन संवृण्वन् वधूं वक्षस्स्थलालयाम्'

इति । अतः सर्वकाल,सर्वदेश,सर्वावस्थासु च संश्लिष्टत्वं सिद्धं श्रियः ।

न अपायः अस्याः अस्ति । कदापि परमात्मानं न जहाति । सा लक्ष्मीः परमात्माऽविनाभूता ॥

**अनपावृतम्** — तिरोहितम् (ब्रह्म) ।

अनपावृतमप्रकाश्यमसंवृतम्' (सु. उ. 3)

सर्वगतत्वात् सर्वत्र दृश्येत ब्रह्मेत्यत्राह–असंवृतमिति । तिरोहितमित्यर्थः । अत्र हेतुमाह अप्रकाश्यमिति चक्षुरादिभिः प्रकाशयितुमशक्यस्वादित्यर्थः । प्रमाणागोचरत्वे शून्यत्वं स्यादित्यत आह–असंवृतमिति योगिनामतिरोहितमित्यर्थः ॥ (श्रु. भा.)

**अनभिधानज्ञः** — व्यधिकरणसमानाधिकरणवाक्ययोरभिधानविशेषानभिज्ञः ।

शब्दस्वरूपप्रवृत्तिक्रमानभिज्ञ इति भावः ॥ (श्रु. प्र. 1-90)

**अनभिध्या** — परकीये स्वस्वबुद्धिरहितत्वम् ।

'सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि' इति निर्वचनम् ।
परकीये स्वत्वबुद्धिः अभिध्या यद्वा-निष्फलचिन्ता; अथवा परकृतापकारचिन्ता; तद्राहित्यमनभिध्या । (श्रु. प्र. 1.65)

**अनभिभवञ्च दर्शयति** — (ब्र. सू. 3-4-35) विहितत्वाधिकरणेचतुर्थसूत्रम् ।

'धर्मेण पापमपनुदति यज्ञेन दानेन' इत्यादिभिः तानेव यज्ञादिधर्मान् निर्दिश्य तैर्विद्याया अनभिभवं–पापकर्मभिः उत्पत्तिप्रतिबन्धाभावं दर्शयति ।

तथाचाहरहरनुष्ठीयमानैः यज्ञादिभिः विशुद्धेऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्या विशदतरावभासोत्पद्यते । अतो यज्ञादिभेदाभावात् विद्यार्थप्रयोगैरेव प्रसङ्गादाश्रमार्थ सिद्धेः सकृदेवानुष्ठानम् इति सिद्धम् ।

धर्मेण पापमित्यादिश्रुतिर्विविधपाप्मभिः ।
विद्यायास्त्वनभिभवं धर्ममूलं ब्रवीति च ॥ (ब्र. प. मा. 143)

**अनभिष्वङ्गः** — अत्यासक्तिरहितत्वम् ।

'असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु' (गी. 13-9) पुत्रदारगृहादिषु शास्त्रीय कर्मोपकरणत्वातिरेकेण श्लेषरहितत्वम् ।। (गी. भा.)

**अनभिसंहितफलं** — निष्कामकर्म ।

स्वर्गादिफलकामनारहिततया आज्ञावैङ्कर्यबुध्या च क्रियमाणयज्ञदानादिकम् ।। (सं. अ.)

**अनभ्यासदशापन्नज्ञानम्** — विशेषदर्शनाजन्यं ज्ञानम् ।

यथा स्थाणुर्वा पुरुषो वा इति संशयादिकम् ।।

**अनभ्युपगतप्रारब्धम्** — अभ्युपगतप्रारब्धफलकव्यतिरिक्तं कर्म ।

अनभ्युपगतञ्च तत् प्रारब्धञ्चेति । फलप्रदानोन्मुखीभूतं, वर्तमानजन्मव्यतिरिक्तभाविजन्मन्यपि अनुभूयमानसुखदुःखहेतुप्राचीनकर्म ।। (सं. अ.)

**अनमीवम्** — अशुभरहितम् ।

'अपि स्वज्ञातिबन्धूनां अनमीवमनामयम्' (भाग. 10-39-4)
अम-रोगे इति धातोः औणादिके प्रत्यये कृते ईडागमः; अशुभवाची ।।

**अनयः** — (स. ना-401)

असुहृद्भिः न नयोऽस्यासीदिति, अयः शुभावहो विधिः सोऽस्मादन्यो जगतां नास्तीति वा । (वि. स. भा.) स एव दुर्हृद्भिर्नास्ति नयः-प्रणयः अस्येति वा, जगतामन्यो नास्ति अयः-शुभावहो विधिरस्मात् इति वा । (वि. स. निर्व.)

असुहृद्भिर्नयो यस्य नास्तीत्यनय उच्यते ।
अथवा जगतां यस्मान्नान्योऽस्तीत्यनयोऽथवा ।। (वि. स. नि.)

**अनर्थः** — (स ना. 432)

मंदसुकृतेनार्थार्थिना निर्व्याजं नार्थ्यत इति । स ह्यर्थव्याजेनैनं अर्थयते ।(वि. स. भा.)
मंदसुकृतेनार्थार्थिना तद्व्याजेन अभ्यर्थनात् निर्व्याजं नार्थ्यते न प्रार्थ्यत इति ।
(वि. स. निर्व.)

अर्थार्थिनाल्पभाग्येन निर्व्याजं नार्थ्यते यतः ।
तस्मादनर्थनामासौ वेदविद्भिः प्रकीर्तितः ॥ (वि. स. नि.)

पूर्वं 'अर्थः' इतिनाम्नि एकभक्तेः विशिष्टाधिकारिणः सम्यग्ज्ञानिनः स्वयंप्रयोजन तया अर्थ्यते प्राप्यते इति व्याख्यामात् अत्र तद्व्यतिरिक्ताधिकारिविषयतया व्याख्यातम् ॥

**अनर्थः** — 1. प्रयोजनरहितः व्यापारः ।

2. प्रत्यवायकरः ।

कोऽनर्थः ? यः प्रत्यवायाय ; श्येनः, वज्रः, इषुः, इत्येवमादिः । कथं पुनरसौ अनर्थः ? हिंसा हि सा, हिंसा च प्रतिषिद्धेति । कथं पुनरनर्थः कर्तव्यतयोपदिश्यते ? उच्यते–नैव श्येनादयः कर्तव्यतया विज्ञायन्ते । यो हि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः । 'श्येनेनाभिचरन् यजेत' इति हि समामनन्ति । न अभिचरितव्यमिति । (मी. कौं.)
क्वचित् साधुपरित्राणाद्यर्थं शिष्टैरनुष्ठीयते च ॥

3. व्यसनम् (वि. को.)

**अनर्थकम्** — व्याहतार्थकम् ।

तदित्थम्—'यतो वाचो निवर्तन्ते' इति यच्छब्दनिर्दिष्टमर्थं 'आनन्दं ब्रह्मणो विद्वान्' इत्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य तदेव वाङ्मनसागोचरं, विद्वानिति तद्वेदनमभिदधत् वाक्यं जरद्गवादिवाक्यवत् अनर्थकं वाच्यनन्तर्गतं च स्यात् । (श्री. भा. 1.1.17) ब्रह्म न शब्दवाच्यमितीदं समुद्रघोषादिवत् वाक्यमेव न स्यात् इत्यर्थः । वाक्यत्वे व्याहतिरनिवार्येति भावः । ब्रह्मणोऽशब्दगोचरत्वे ब्रह्म न शब्दगोचरः इत्यनेनापि शब्देन व्याहतं स्यादिति चाभिप्रायः ॥ (श्रु. प्र.)

**अनर्वाचीनम्** — प्रत्यक्षविशेषः ।

अनर्वाचीनं प्रत्यक्षम् । युगपदशेषविषयसाक्षात्कारक्षमम् । तत् योगिमुक्तेश्वराणां प्रभावविशेषाधीनम् । (न्या. प. 79.)

अर्वाचीनमिन्नम् । इन्द्रियानपेक्षं मुक्तनित्येश्वरज्ञानम् । (य. दी. 10)

अनलः — (स. ना. 294)

बहुमुखमुपकृत्य च नालं न पर्याप्तं अस्यानुग्रहमहिमेति । अतन्द्रो देवः ।
(वि. स. भा. )

बहुमुखमुपकृत्यापि अनुग्रहमहिम्नो नालम् – न पर्याप्तम् , अस्येतिवा, अलः-पर्याप्तो नेति वा । (वि. स. निर्व.)

अपर्याप्तो हि भक्तेभ्योऽप्युपकृत्य पुनः पुनः ।
अनुग्रहं यः करोति सोऽनलः परिकीर्तितः ॥ (वि. स. नि.)

'अल-भूषणपर्याप्तिवारणेषु' इत्यस्माद्धातोः पचाद्यच् ॥

अनलः — (स. ना. 716)

तेषामेव सर्वकर्मकरत्वेऽपि गोपानां न क्वचित् कृतम् मयेत्यवितृप्तः । स्वभक्त-विषयापराधं सोढुं नालमिति वा । (वि. स. भा.)

सर्वकर्मकरत्वेऽपि न तेषां किंचित्कृतम् मयेत्यवितृप्ततया वा, स्वभक्तविषयान्य-कर्तृकापराधान् सोढुं वा अलः पर्याप्तो नेति । (वि. स. निर्व.)

सर्वं कृत्वापि गोपानां न च किंचिन्मया कृतम् ।
इत्येवमवितृप्तो यो हि अनलः परिकीर्तितः ॥ (वि. स. नि.)

अनलः — पर्याप्तिरहितः (कामः) ।

'दुष्पूरेणानलेन च' (गी. 3.39)

अपर्याप्तः । यद्वा अनलशब्दोऽग्निपर्यायः । कामे गौणः, न ह्यग्नेर्विषय-विभागः पर्याप्तिर्वा स्यात् तद्वदिति भावः । (ता. चं.)

अनवकाशत्वम् — विषयान्तरालाभः ।

अप्रमाणकोटिनिवेशाभावो वा । (श्रु. प्र. 1-84)

अनध्यवसितः — असिद्धिः [हेत्वाभासविशेषः] ॥

अनवद्यकर्म — प्रत्यक्षश्रुतिसिद्धं कर्म ।

'यान्यनवद्यानि कर्माणि' (तै. शि. 20) दोषरहिततया लोकशास्त्राभ्यां अनिन्दितं कर्म । सावद्यं कळञ्जभक्षणादि ।

**अनवधारणम्** — अनिश्चयात्मकं ज्ञानम् ॥

**अनवधिकत्वम्** — उत्कृष्टावधिराहित्यम् ।

'अनवधिकातिशयासंख्येयकल्याणगुणगणां' (श. ग. 100) अनवधिकत्वमिह स्वापेक्षयोत्कर्षावधिराहित्यम् ।

ननु भगवत एव ऐश्वर्यमनवधिकातिशयम् 'तमीश्वराणां परमं महेश्वरं' 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिभिस्तथोक्तेः । 'पुंप्रधानेश्वरेश्वरी, इति नाम तु स्त्रीप्रत्ययानुपपत्तेः श्रुत्यादिविरोधाच्चान्यथा नेयम् पुंप्रधानयोः गोवलीवर्दन्यायेन विशेषत उक्तानां ब्रह्मादीश्वराणाञ्च भगवान् ईश्वरः तत्पत्नीयं इति । पुंयोगादाख्याया-मिति· स्त्रीप्रत्ययोपपत्तिः । पुंप्रधाने स्वशक्त्यैव नियच्छति, ईश्वरञ्च वाल्लभ्येनेति निर्वाहो विरूपः क्लिष्टश्च । ईश्वरीं सर्वभूतानामित्येतदप्येतेन गतार्थमिति ।

अत्रोच्यते; यद्यपि नाम्नि तथा निर्वाहः; तथापि श्रुतौ न तथा स्यात् ; 'सर्वभूतानाम्' इति षष्ठ्यन्वयवैघट्यप्रसङ्गात् । स्त्रीप्रत्ययस्तु बाहुलकेन नेयः । 'अस्ये-शाना जगतो विष्णुपत्नी' इति च मन्त्रान्तरेणोक्तम् ; तदपि हितद्विभूतिभूतभूमिविषय-त्वात् तत्पर्यवसाय्येव । श्रीवैकुण्ठगद्ये च शेषादीनामपि तदाज्ञानुविधायित्वमुक्तम् । आहुश्च यामुनार्याः 'यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुः . . . नित्यानुकूलं स्वतः' इति ।

वेदार्थसंग्रहे चोक्तं– 'स्वाभिमतस्वानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिक-महिममहिषी' इति । उक्तञ्च श्रीवत्साङ्कमिश्रैः

'देवि त्वन्महिमावधिः न हरिणा नापि त्वया ज्ञायते' इति ।

न चैतावता भगवतो निस्समाभ्यधिकत्वविरोधः प्रत्युत तत्प्रतिष्ठापनमेव । ह्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतेः । न ह्येवंविधपत्नीविशिष्टत्वं कस्यचित्तदन्य-स्यास्ति, येन तत्साम्यादिशङ्का स्यात् । उपबृंहितञ्च–

'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इति ।

एवमस्याः शीलादीनामनवधिकातिशयत्वेऽप्यविरोधः ॥ (र. रक्षा. 100)

भगवत इव श्रियोऽपि ऐश्वर्यातिशयस्य अनवधिकत्वमेव । अनवधिकत्वमत्रापि स्वापेक्षया उत्कृष्टावधिरहितत्वम् ॥ (वि. को.)

**अनवधिकबृहत्त्वम्** — स्वरूपतो गुणतो विभूतितश्च निरवधिकत्वम् ॥

**अनवधिकातिशयस्वाम्यम्** — अनवच्छिन्नसर्वविषयस्वामित्वम् ॥

**अनवधिकातिशयासंख्येयकल्याणगुणगणः** — गुणपरिपूर्णः पुरुषोत्तमः ।

'ते ये शतम्' इत्यत्र पूर्वपूर्वगुणेभ्यः उत्तरोत्तरगुणानां अतिशयः सावधिकः इति तद्व्यावृत्त्यर्थं अनवधिकातिशयशब्दः । तत्र हि ब्रह्मगुणातिशयस्य वाङ्मनसागोचरतयाऽनवधिकत्वमुक्तम् । सत्यसङ्कल्पत्वान्तर्भूताः वशित्वादिगुणाः इति हि वक्ष्यते । अतः कस्मिंश्चिद्गुणे तद्विधाभेदरूपतया गुणानां बहूनामन्तर्भावाभिप्रायो गणशब्दः ।

नन्वनवधिकातिशयशब्दस्य गुणविशेषणत्वे गणशब्दसामानाधिकरण्याभावात् बहुव्रीहिर्न स्यात् । गणविशेषणत्वमप्ययुक्तम्; गुणस्वरूपस्य ह्यनवधिकातिशयत्वम्; न तु गणस्वरूपस्य । नैवम् । गण एव विशेष्य इति बहुव्रीहिसिद्धिः । तथाप्यर्थवशात् गणान्तर्भूतैकैकगुणव्यक्तेरनवधिकातिशयत्वं फलितं स्यात्; यथा 'एषा परिषदभिजनवती श्रुतशीलशालिनी' इत्यत्र श्रुतशीलादीनां परिषद्विशेषणत्वे प्रतीतेऽपि तदन्तर्भूतानामेव श्रुताद्यन्वयः, न तु समूहस्य; ततो निर्गतानां श्रुताद्यभावप्रसङ्गात् । असंख्येयत्वमपि गुणविशेषणं युक्तं; गणासंख्येयत्वे गुणासंख्येयत्वं कैमुत्यसिद्धम् । अनवधिकातिशयशब्देन नित्यसिद्धव्यावृत्तिश्च; तद्गुणानां जगद्व्यापारानुनुगुणत्वेन भगवद्गुणापेक्षया सातिशयत्वात् । तेषां ईश्वरतद्गुणविभूतिसाक्षात्कारस्यात्यन्तानुकूलस्य निरवधिकातिशयत्वेऽपि तादृशासंख्येयगुणाभावात् तद्व्यावृत्तिः ॥ (श्रु. प्र. 1.17)

**अनवधिकानन्दः** — अनवधिकानन्दवान् परमात्मा ।

अन्येषामानन्दो यदधीनः तस्य आनन्दः अनवधिकः इत्यर्थसिद्धम् । यथा अन्येषां विद्यां धनं वा ददतः पुरुषस्य ज्ञानाधिक्यं धनाधिक्यंचार्थसिद्धम् । 'स एको ब्रह्मण आनन्दः' 'यतो वाचो निवर्तन्ते' रसं ह्येवायं लब्ध्वानन्दी भवति' इत्यादि श्रुत्यन्तरेषु च तत् स्पष्टमभिहितम् ॥ (श्रु. प्र. 1.4.19)

**अनवमं ब्रह्म** — दोषरहितं दोषाश्रितवस्तुभिन्नं वा ब्रह्म ।

अत्र कश्चिदाह– व्यावर्त्यानां अनन्तत्वात् व्यावृत्तिरप्यनन्ता । तस्याः पुनरानन्त्ये तद्व्यावर्तकमप्यनन्तमेव वाच्यम् । तथा च कर्तुमेव न शक्यते । नह्यशक्यं सागरतरणं कैश्चिदुपदिश्यते । अशक्यविधाने वाक्यस्याननुष्ठानलक्षणाप्रामाण्यप्रसङ्गादिति शङ्कायां आह । नैवम्–

'तत्तत्सामान्यधर्मानुगतिकबलिताशेषभेदोपदेशे
तादृक्किंचन्तोपपत्तेः अनवममिति वा गृह्यतां संगृहीतिः' ।।
इति । (अ. सा. 360)

द्रव्यत्वगुणत्वकर्मत्वादिसामान्यधर्मोपादानेनानन्तानामपि व्यक्तीनां यथा लोके निरासः, एवमत्रापि प्रतिक्षेप्याणां तत्तत्सामान्यधर्माणां अनुगत्या, यावद्व्यक्तिव्यास्या संगृहीताः ते अशेषभेदाः तेषामुपदेशे कृते सति द्रव्यत्वाश्रयव्यक्तीनां, गुणत्वाश्रयव्यक्तीनां, कर्मत्वाश्रयव्यक्तीनां चानन्त्येपि तावद्व्यक्तिव्यावृत्तिसौकर्याय, द्रव्यमिन्नं, गुणमिन्नं, कर्म-भिन्नं सामान्यमित्यनन्तव्यक्तिभेदानां द्रव्यत्वादिधर्मत्रयानुगत्या ग्रहणवत् स्थूलत्वादि-सामान्यधर्मानुगत्या निखिलभेदानां कतिपयरूपत्वेन चिन्तनोपपत्तेः । अथवा अवमानि दोषाश्रितानि यावन्ति वस्तूनि तद्भिन्नमित्येकविशेषणरूपेण संगृहीतिः—सर्वभेदसंग्रहः परि-गृह्यताम् । एतदर्थमेव हेयप्रतिभटमित्युच्यते । (प. यो.)

**अनवरतनित्यानुभवः** — अविच्छिन्नावधिरहितपरमात्मानुभवः ।

भगवदनुभवस्य सकृत्त्वव्यावृत्यर्थमिदं अनवरतत्वम् ।
अविरतेच्छावधिमत्त्वव्युदासाय नित्यत्वम् । (र. रक्षा. 8)

**अनवसरग्रहणम्** — निग्रहस्थानम् ।

1. अकालएवोद्भावनम् । 2. अवसरमतीत्य कथनम् । इदं निग्रहस्थानं च गौतमोक्तनिग्रहस्थानस्य निरनुयोज्यानुयोगस्य प्रभेद इति वृत्तिकारेणाङ्गीकृतमिति विज्ञेयम् । (न्या. को. )

**अनवसादः** — दैन्याभावः ।

देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यं अभास्वरत्वं मनसोऽव-सादः इति । तद्विपर्ययोऽनवसादः । निर्वचनं 'नायमात्मा बलहीनेन लभ्यः' इति ।
(श्री. भा. 1-65)

**अनवस्था** — दोषविशेषः ।

अपर्यवसिताप्रामाणिकप्रवाहप्रसक्तिः । यथा संबन्धस्य संबन्धान्तरे, विशेषस्य विशेषान्तरे, सामान्यस्य सामान्यान्तरे । (न्या. प. 223)

उपर्युपरिकल्पना । उपर्युपर्यपेक्षा । (य. दी. 18) अप्रामाणिकानन्तपदार्थपरंपरा कल्पनाऽविश्रान्तिः ।

उपपाद्योपपादकयोरविश्रान्तिः इति मीमांसकाः । अनवस्थितपरंपरोपाधिना अनिष्टप्रसङ्गरूप इत्यन्ये । एक-द्वि-त्रि-अनन्त-व्यक्तिविषयकतया आत्माश्रया-न्योन्याश्रय-चक्रक-अनवस्थाश्चत्वारो दोषाः परिगणिताः । (मी. को.)

**अनवस्थितेः असम्भवाच्च नेतरः** — (ब्र. सू. 1-2-18) अन्तराधिकरणे षष्ठं सूत्रम् ।

परस्मादितरो जीवादिः नाक्ष्याधारः ; चक्षुषि नियमेनानवस्थितेः, अमृतत्वाद्यसंभवाच्च ।

प्रतिबिम्बस्य तावत् पुरुषान्तरसन्निधानायत्तत्वात् न नियमेनावस्थानसंभवः । जीवस्यापि सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम् । देवतायाश्च सर्वेंद्रियव्यापारानुगुणत्वाय 'रश्मिभिरेषो ऽस्मिन् प्रतिष्ठित' इति रश्मिद्वारेणावस्थान-वचनात् देशान्तरावस्थितस्यापि इन्द्रियाधिष्ठानोपपत्तेः न चक्षुष्यवस्थानम् । सर्वेषां एषां निरुपधिकामृतत्वादयो न संभवन्त्येव, तस्मात् अक्षिपुरुषः परमात्मा ; नत्वितरो जीवादिः ।

नियमेनाक्ष्यवृत्तेर्न जीवोऽक्षिगतस्त्विह ।
नियन्तृत्वामृतत्त्वादिपूर्वोक्तासंभवाच्च हि ॥ (ब्र. प. मा. 50)

**अनसूया** — गुणादिषु द्वेषराहित्यम् ।

'न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता' ॥

**अनसूयुः** — असूयारहितः ।

'प्रवक्ष्याम्यनसूयवे' (गी. 9-1) मद्विषयं सकलेतरविसजातीयं अपरिमितप्रकारं माहात्म्यं श्रुत्वा एवमेव संभवतीति मन्वानः । (गी. भा.) गुणेषु दोषाविष्करण-चित्तवृत्तिविशेषो ह्यसूया ; तद्विपर्ययश्च गुणेषु गुणाध्यवसाय एव हीति भावः ॥ (ता. चं.)

**अनस्सूरिः** — विपश्चित् ।

'हिरण्यदंष्ट्रो बभसोऽनस्सूरिः' (छां. उ. 4-3-7)

बभसः–भक्षणशीलः, असुरसंहारकः इति यावत् । असूरिः– (अविपश्चित्) न भवतीत्यनसूरिः विपश्चित्–(श्रीनृसिंहः) इति यावत् ॥ (रं. भा.)

**अनहंकारः** —अभिमानशून्यता । (आत्मज्ञानसाधनभूतगुणविशेषः)

'इन्द्रियार्थेषु वैराग्यं अनहंकार एव च' (गी. 13-8)

अनात्मनि देहे आत्माभिमानरहितत्वं ; प्रदर्शनार्थमिदं ; अनात्मीयेषु आत्मीयाभिमानरहितत्वं च विवक्षितम् । (गी. भा.) गर्वरूपस्याहङ्कारस्य पूर्वं निषेधात् अत्राहङ्कारशब्देन देहात्मभ्रमो निवार्यत इत्याह–अनात्मनीति ॥ (ता. चं.)

**अनहंवादी** — कर्तृत्वाभिमानरहितः ।

'मुक्तसङ्गोऽनहंवादी' (गी. 18-26) अहंवदनशीलः–अहंवादी ; [ताच्छील्ये णिनिप्रत्ययः] तदन्योऽनहंवादी । तत्र मनःपूर्वा हि वागित्यभिप्रायेणाह–कर्तृत्वाभिमानरहित इति ॥ (ता. चं.)

**अनाकुलत्वम्** — चित्तस्थिरता ।

आगामिदुःखशङ्कया मनःक्षोभः–आकुलत्वम् । तदभावोऽनाकुलत्वम् ॥

(श्रु. प्र. 1-170)

**अनात्मतन्त्रः** — अस्वतन्त्रः ।

'त्वदेकशेषोऽहमनात्मतन्त्रः' (अ. अ. 2) आत्मा तन्त्रं – प्रधानं यस्य सः, आत्मतन्त्रः आत्मप्रधानः इत्यर्थः । 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः । न आत्मतन्त्रः, अनात्मतन्त्रः– अस्वतन्त्र इति यावत् । (व्या.)

**अनात्मत्वम्** — आत्मत्वाभावः ।

पुरुषार्थप्रतिसंबन्धित्वं, देहं प्रति नियन्तृतया व्यापित्वं वा आत्मत्वम् ; तदभावोऽनात्मत्वम् ॥ (श्री. भा. 1-109)

**अनादरः** — 1. आदररहितः ।

'अवाक्यनादरः' । (छां. उ. 3-14-2)

अवाप्तसमस्तकामत्वेनादर्तव्याभावात् आदररहितः । (श्री. भा. 1-2-2, रं. भा.)

2. तात्पर्याभावः । (श्रु. प्र. 1.1.13) यत्र तात्पर्यं तत्रैव आदरसद्भावात् ।

**अनादिः** — (स. ना. 941)

अन्यपरैः न स्वामित्वेनादीयत इति । (वि. स. भा.) कुतोऽयमेवं तिर्यक्ष्वपि भक्तेषु विवशो ब्रह्मादिषु फल्गुपदमेव प्रयच्छति तत्रोच्यते–यतः तैरन्यपरैर्न स्वामित्वेनादीयत उपादीयत इति आदिः स नेति । (वि. स. निर्व.)

देवतान्तरभक्तैर्यः कुत्सितैश्चापि सर्वदा ।
नादीयते स्वामिमतं अनादिः परिकीर्तितः ॥ (वि. स. नि.)

**अनादिः** — आदिमदजत्वरहितः परमात्मा ।

'यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम्' (गी. 10-3) संसारिचेतनस्य हि कर्मकृताचित्संसर्गो हि जन्म । अनादिमित्यनेन पदेन आदिमतोऽजान्मुक्तात्मनो विसजातीयत्वमुक्तम् । मुक्तात्मनो ह्यजत्वमादिमत्; तस्य हेयसंबन्धस्य पूर्ववृत्तत्वात् तदर्हतास्ति । अतोऽनादिमित्यनेन तदनर्हतया तत्प्रत्यनीकतोच्यते; 'निरवद्यमित्यादिश्रुत्या च । (गी. भा.) मुक्तस्यापि स्वरूपानादित्वमस्ति; ततः कथं व्यवच्छेद्यत्वं इत्यत्राह– मुक्तात्मनो ह्यजत्वमादिमदिति । अजत्ववेषेणानादित्वमिह विवक्षितम् । स्वरूपानादित्वविवक्षायां तु पौनरुक्त्यमिति भावः । मुक्तदशायामचित्संसर्गो नास्ति, प्राचीनसंसर्गविवक्षायां बद्धादेः व्यवच्छेदः स्यात्; अतः तदानीन्तनस्वरूपाद्व्यावृत्तिः कथमुक्तास्यादित्यत्राह–तस्येति । सहकारिसन्निधौ कुर्वत्स्वभावत्वं सहकार्यभावप्रयुक्तकार्याभाववत्त्वमपि हि योग्यतेत्यभिप्रायः । कालविशेषावच्छेदरहितनिरवद्यत्वविधायक श्रुत्या चायमर्थसिद्ध इत्याह निरवद्यमिति ॥ (ता. चं. )

**अनादित्वम्** — इदंप्रथमताशून्यता ।

इदं द्विविधम् । स्वरूपतः प्रवाहतश्चेति । (ता. चं. 2.12) आत्मस्वरूपे स्वरूपतः अनादित्वम्, संसारस्य तु प्रवाहतः ॥

**अनादिनिधनः** — (स. ना. 42)

यौवनतया जनिजरादिदुरितदूरनित्यविग्रहः । (वि. स. भा.) दिव्यनामरूपविशिष्ट एव नित्ययौवनजनिजरादिदुरितदूरनित्यविग्रहतया न विद्येते आदिनिधने, आद्यन्तौ अस्येति । (वि. स. निर्व.)

यस्यादिनिधनं नास्ति अनादिनिधनश्च सः ।
अनादिनिधनोपास्यो नित्ययौवनविग्रहः ॥ (वि. स. नि.)

**अनादिनिधनं ब्रह्म** — आद्यन्तरहितं ईश्वरतत्त्वम् ।

अनादिनिधनं ब्रह्म शब्दतत्त्वं व्यवस्थितम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।। (हरिकारिका)

इति वदद्भिः शब्दब्रह्मैव स्वीक्रियते शब्दव्यतिरिक्तार्थनिरासात् । जगत् मिथ्या (शब्दः अर्थश्च) इति मते तु 'ब्रह्मैव जगद्रूपेण विवर्तते' इति स्वीकारात् अशेषविशेषप्रत्यनीकं चिन्मात्रमेव । (मी. को.)

'चिदचिदीश्वरात्मकं जगत् सत्यं, चिदचितौ ब्रह्मापृथक्सिद्धौ तदेकनियाम्यौ' इति सिद्धान्ते चिदचिदशेषप्रकारं अनन्तकल्याणगुणविशिष्टं ब्रह्मैव तत्त्वम् ।।

**अनादिपापवासना** — पापजन्यसंस्कारः ।

'अनादिपापवासनादूषिताशेषशेमुषीकाणाम्' (श्री. भा. 1-113)

वासनाशब्देन पापस्य दृढमूलत्वेन दुर्निवारत्वमुक्तम् । 'वासनया पापं, पापेन वासना ; अज्ञानेन पापवासना, पापवासनया अज्ञानं' इत्यन्योन्याश्रयपरिहारायानादिशब्दः ॥ (श्रु. प्र.)

**अनादिशुद्धाः** — नित्यमुक्ताः । (नित्यसूरयः)

अन्ये चानादिशुद्धाः श्रुतिसमधिगताः सूरयस्सन्त्यसंख्याः ।
कर्माभावादनादेः न तु भवति कदाप्येषु संसारबन्धः ।। इति ।
(त. मु. 136)

यत्तु तन्त्रान्तरस्थैः उच्यते—

मुक्तात्मानोऽपि शिवाः किन्त्वेते यत्प्रसादतो मुक्ताः ।
सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः ॥ इति ।

तत्र श्रुतिविरोधमाह—अन्य इति । श्रुतिसमधिगताः -'सदा पश्यन्ति सूरयः' इति श्रुत्या निर्बाधमधिगताः इत्यर्थः । न ह्यसौ श्रुतिः मुक्तविषया, मुक्तानां एकैकशः सदादर्शनाभावात् । इयं हि दर्शनं सदेति विशिंषत्यपि सदादर्शनविशिष्टान् सर्वान्

स्वरसतोऽवगमयति । नत्वादिमद्दर्शनप्रवाहसातत्यम्, तत्र बहुवचनस्य संकोचकादृष्टेः । उपबृंहणतश्च कपिञ्जलन्यायानवतारादसंख्याः इत्युक्तम् ।

ननु परतन्त्रचेतनानां अस्मदादिवत् संसृतिः अवर्जनीया । अथ कथमनादिसिद्धत्वं इत्यत्राह–कर्माभावात् इति । उक्तहेतुना कर्मापि अवर्जनीयमिति चेन्न ; सदादर्शनश्रुत्यैव मिथ्याज्ञानादिपूर्वकस्य कर्मणः प्रत्यासेधात् । अन्यथा कथमीश्वरोप्यङ्गीक्रियते ? माभूदिति चेत्, श्रुतिबाधः इति शेषं पठ । सर्वप्रशासितुः शास्त्रवश्यत्वाभावात् न कर्मवश्यत्वमिति चेन्न, पारतन्त्र्येऽपि अनादिसर्वज्ञानामपि तदभावं पश्य । (स. सि.) अनेन अनादिमुक्तानां बहुत्वं तेषां कर्मात्यन्ताभावश्च सिद्धः ॥

**अनादिषट्कम्** — अनादयः षट् । (परमतरीत्या)

जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥

इति मायावादिवेदान्तिनो मन्यन्ते ॥ (न्या. को.)

**अनादिसिद्धः विवादः** — जीवपरयोः अनादिभूतः विवादः ।

त्वं मे,अहं मे, कुतस्तत्? तदपि कुतः? इदं वेदमूलप्रमाणात् ;
एतच्चानादिसिद्धादनुभवविभवात्,सोऽपि साक्रोश एव ।
क्वाक्रोशः? कस्य? गीतादिषु मम विदितः, कोऽत्र साक्षी? सुधीः स्यात् ;
हन्त! त्वत्पक्षपाती सः, इति नृकलहे मृग्यमध्यस्थवत् त्वम् ॥ इति ।

त्वं मे– त्वं मच्छेषभूतः इति ईश्वरेणोक्तौ, अहं मे–अहं स्वतन्त्रः, न त्वच्छेषभूतः, इति जीवेनोच्यते । तत् कुतः कस्माद्धेतोः इति पृष्टे, तदपि कुत इति प्रतिबन्धोक्तम् । 'वेदमूलप्रमाणात् इदं' इत्युत्तरिते अनादिसिद्धादनुभवबलात् अहं नान्यशेषः इति प्रत्युत्तरितम् । (केवलप्रमाणापेक्षया अनुभवस्य हि प्राबल्यम्) सोऽप्यनुभवः साक्रोश एव । पूर्वमेव वारितः इति भावः । (आक्रोशः–वारणं) 'विरुद्धचिन्तनं आक्रोश' इति वाचस्पत्यम् । कस्य कुत्र इति प्रश्ने, गीतादिषु 'अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते' इत्यादिना आक्रोश इति चेत् तत्र साक्षी कः ? इति प्रश्ने, सुधीः– अर्जुन एवेत्युक्ते, सः तव पक्षपातीति कलहे दृढे सति, ईश्वर एव मृग्यमध्य-

स्थवत् (प्रमाणारूढवत्) अभवत् । साक्षिणोऽभावात् मध्यस्थानां च अभावात् जल-मध्यस्थः प्रमाणारूढः अभवत् इति भावः । लोके पुरुषः प्रमाणावसरे जलमध्यस्थः, आर्द्रवस्त्रधरः, पुष्पमालाधरश्च सन् प्रमाणं करोति ; अभिषेककाले ईश्वरस्यापि तथैव स्थित्या एवं वर्णितम् । अभिषेकारूढभगवद्दर्चारूपसन्दर्शनकाले भट्टपराशरपादानां स्फूर्तिमारूढोऽर्थः कश्चन विषयस्वभावानुगुणः अनेन मुक्तकश्लोकेन स्पष्टीकृतः इति सांप्रदायिकाः ॥

**अनादेशिकम्** — उपदेशागम्यम् ।

'तद्वाक्यात् सिद्धवेदी प्रयतत इति चेत् अस्त्वनादेशिकं तत्' (अ. सा. 31)

'पुत्रस्ते जातः' इति वाक्यश्रवणानन्तरं जातकर्मप्रवृत्त्यादिकमस्तु, तत् वाक्योपदेशवाच्यं न भवति, किन्तु स्वबुद्ध्या क्रियते ॥ (प. यो.)

**अनाद्यन्तवती** — 1. नित्या प्रकृतिः ।

'गौरनाद्यन्तवती' (मं. उ. 1-5) अनाद्यन्तवतीत्यत्र आद्यन्तवती न इति न समासः । किन्त्वनादिश्चासौ अन्तवती चेति कर्मधारयो बोध्यः । तथा च विनाशित्वमेवावगतम्, नाविनाशित्वमिति [भावरूपाज्ञानमेवात्रोच्यत इति] चेन्न । 'नित्या सततविक्रिया' इति वाक्यान्तरानुसारेण आद्यन्तवती न भवतीति नञ्समासस्यैवोचितत्वात् । अन्यथा तद्विरोधात्, 'अजामेकामि'त्येकत्वश्रुतिविरोधाच्च । अन्तवत्त्वे हि प्रतिसर्गं प्रकृतिभेदेनैकत्वासंभवात् । किं च अनादिरित्यत्र बहुव्रीहिसमासाश्रयणेन लक्षणाया अवश्यवाच्यत्वात्, लक्षणां विनैव नञ्समासाश्रयणमुचितम् । अन्यथा निषादस्थपत्यधिकरणविरोधात् । (वे. मं. दी. 175)

2. आदिश्च अन्तश्च आद्यन्तौ ; तौ अस्याः स्त इति आद्यन्तवती; न आद्यन्तवती । उत्पत्तिविनाशरहिता नित्या मूलप्रकृतिः । (सं. अ.) अस्याः स्वरूपतः नित्यत्वेऽपि, कारणावस्थाकार्यावस्थाभेदेनोत्पत्तिविनाशौ चाविरुद्धौ ॥

**अनाधारः** — 1. निरालम्बः (परमात्मा) ।

नास्ति आधारः यस्य । 2. मूलप्रमाणरहितं वाक्यम् । (सं. अ.)

**अनाम** — नामशून्यम् (परं ब्रह्म) ।

'त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत्' (वि. पु. 5-1-40)

देवमनुष्यादिनामरहितम् । (वि. चि.) अनेन सहस्रनामवतः अनामत्वोक्तिः कर्म-कृतनामविशेषराहित्यपरेति बोधितम् ॥

**अनामयः**— (स. ना. 694)

स्वसंस्पर्शदिव्यौषधेन संसारमहाव्याधिविरोधी । भवो हि व्याधिः, भगवदनुभवशक्तिप्रतिबन्धकत्वात् । (वि. स. भा.) स्वसंस्पर्शदिव्यौषधेन आमयस्य भगवदनुभवशक्तिप्रतिबन्धकतया महाव्याधिरूपस्य भवस्य विरोधीति । (वि. स. निर्व.)

'संसाराख्यमहाव्याधेः विरोधित्वादनामयः' (वि. स. नि.)

'अनामयः' इत्यत्र नञ् विरोधे ॥

**अनामयम्** — 1. आमयाख्यकार्याजनकम् (सत्त्वम्) ।

'तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्' (गी. 14-6)

आमयाख्यं कार्यं न विद्यते इति अनामयम् । अरोगताहेतुरित्यर्थः । (गी. भा.) अत्र कार्ये कारणोपचारः ।

2. दुःखशून्यम् ॥ (वि. को.)

**अनामयं पदम्** — निर्दुःखं प्राप्यम् ।

'पदं गच्छन्त्यनामयम्' (गी. 2-51) अनामयं पदं– स्थानविशेषः; परमप्राप्यं परमात्मस्वरूपं वा ; प्रकरणवशादत्र ब्रह्मपर्यन्तजीवस्वरूपं वा । पद्यते गम्यते इति पदम् । त्रयमपि हि साक्षादन्यथा वा मुक्तप्राप्यत्वात् पदशब्दवाच्यम् । (ता. चं.)

**अनामरूपः** — देवादिनामरूपरहितः । (परमात्मा)

'अनामरूपस्य सनातनस्य' (वि. पु. 4-1-84) कर्मकृतदेवादिनामरूपास्पृष्टः । (वि. चि.) प्रकृतिपुरुषविशिष्टस्यैव कारणत्वात् देवादिनामरूपयोः स्वविशेषणीभूतप्रकृतिगतत्वात् तद्द्वारा सनामरूपत्वेऽपि साक्षात् नामरूपाभावेन अनामरूपः । न विद्यते (देवादि) नामरूपे यस्य सः ॥

**अनायतिः** — गत्यन्तराभावः ।

यथा अनायत्या जीवनादृष्टमेव उद्बोधकं कल्प्यते इत्यादौ ॥ (न्या. को.)

**अनारब्धकार्ये एव तु पूर्वे तदवधेः** — (ब्र. सू. 4-1-15) (अनारब्धकार्याधिकरणम्)

विद्योत्पत्तेः पूर्वकृते अनारब्धफले एव पुण्यपापे नश्यतः; कर्मसंबन्धस्य शरीरमोक्षावधित्वश्रुतेः ।

विद्योत्पत्तेः पूर्वकृतयोः पुण्यपापयोः अविशेषेण विनाशः, उत अनारब्धकार्ययोरेवेति संशयः । 'सर्वे पाप्मानः प्रदूयन्ते' इति विशेषाभावात् अविशेषेणेति पूर्वः पक्षः ।

राद्धान्तस्तु 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति उत्पन्नविद्यस्याऽपि शरीरमोक्षावधित्वश्रुतेः । सर्वविनाशे शरीरस्थित्यनुपपत्तेश्च अनारब्धकार्ययोरेव विनाशः इति सिद्धान्तः ।

न हि पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति । द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि परमार्थदोषस्य ज्ञानबाध्यत्वाभावेन अनिवृत्तत्वात् मिथ्याज्ञाननिवृत्तिः अविरुद्धा, प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते एवेति भावः ।

अप्रवृत्तफले एव विद्यया न विनश्यतः ।
तस्य तावच्चिरमिति प्रारब्धस्यावधिश्रुतेः ।।

(ब्र. प. मा. 4८4)

**अनारब्धकाय ः** — अनुपक्रान्तफलाः– अपचाराः ।

'अनन्तापचारान् आरब्धकार्यान् अनारब्धकार्यान् - - - - अशेषतः क्षमस्व' (श. ग. 10) प्रारब्धकार्यकर्मनिरुद्धावसरतया अनुपक्रान्तफलाः । (र. रक्षा.) अत्र कार्यशब्दः फलवाची, क्रियते साध्यत इति व्युत्पत्तेः ।।

**अनारब्धकार्याधिकरणम्** — (4-1-9)

अनारब्धकार्ये एव तु पूर्वे तदवधेः ।

अनारब्धकार्यपदोपक्रान्तमिदमेवं व्यवह्रियते । विदुषः 'सर्वे पाप्मानः प्रदूयन्ते' इत्यविशेषेण श्रवणात् आरब्धकार्ययोरप्यश्लेषविनाशौ इत्याशंक्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यादिश्रवणात् अनारब्धकार्ययोरेवेति साध्यते ।

सर्वस्य वैशेषिकशब्दहानेः
अश्लेषनाशौ भवतो हि तस्य ।
नारब्धकार्यस्य हि नैव यस्मात्
'यावन्न मोक्ष्ये'ति विशेषशब्दः ॥ (न्या. क. सं. 4-9)

**अनारम्भमूलचतुष्टयम्** — उत्तरमीमांसाशास्त्रस्यानारम्भणीयत्वशङ्काप्रयोजकानि चत्वारि।

व्युत्पत्त्यभावः प्रतिपत्तिदौःस्थ्यं अन्येन सिद्धत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥ (श्रु. प्र. 1-108)

व्युत्पत्त्यभावः, प्रतिपत्तिदौःस्थ्यम्, अन्येन सिद्धत्वम्, अफलत्वम्, एतानि अनारम्भमूलानि चतुस्सूत्र्या निराकृतानि। (वे. मं दी. 50) सिद्धे वस्तुनि शक्तिसमर्थनात्, 'यतो वा इमानि भूतानि जायन्ते . . . . .' इत्यस्माद्वाक्यात् लक्षणतः ब्रह्मप्रतिपत्तेः स्थापनात्, अनुमानप्रमाणेनासिद्धेः, निरतिशयपुरुषार्थब्रह्मरूपफलवत्त्वाच्च शास्त्रमारम्भणीयमेवेति भावः ॥

**अनारभ्याधीतः** — उपासनादिविशेषं अप्रस्तुत्य पठितः मन्त्रविशेषः ।

'ब्रह्मज्येष्ठा वीर्या संभृतानि । ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्यादिः ॥
(श्रीं. भा. 3-3-23)

**अनार्षम्** — अवैदिकम् ।

'एतं ह वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो अस्थभिः' इत्यादौ ऋषिशब्दस्य वेदे प्रयोगोऽवगन्तव्यः । (प. यो. 118)

**अनावरणः** — कर्मरूपावरणरहितः आत्मा ।

एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः ।
देवादिभेदेऽपध्वस्ते नास्त्यनावरणो हि सः ॥ (वि. पु. 2-14-33)

कर्मवृतिः-कर्मजन्या वृतिः, देवादिशरीरम्, तत्सम्बन्धजः आन्तरभेदः । देवादिभेदेऽपध्वस्ते स नास्ति । कथं कर्मजन्यवृतिहेतुकान्तरभेदो देवादिभेदापध्वंसे नास्तीत्यत्राह – अनावरणो हि सः। कर्मावरणरहितोहीत्यर्थः । (श्रु. प्र. 1-255)

**अनाविष्काराधिकरणम् — (3-4-13)**

अनाविष्कुर्वन्नन्वयात् । इदमेकसूत्रात्मकम् ।

'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति बाल्यशब्देन कामचारादिकमप्युपादेयतया विधीयत इत्याशङ्क्य 'नाविरतो दुश्चरितात्' इत्यादिना निषेधात् स्वमहिमानाविष्करणमात्रमेव विद्यायाः सहकारितया विधेयमित्युक्तम् ।

विधेयहानेः विदुषस्तु बाल्यं
सर्वं च कामाचरणादि नैतत् ।
विशेषतो 'नाविरता' दिवाक्यैः
बाल्यं त्वनाविष्करणं कुलादेः ॥ (न्या. क. सं. 3-66)

**अनाविष्कुर्वन्नन्वयात् — (ब्र. सू. 3-4-49) (अनाविष्काराधिकरणम्)**

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्; बाल्यं च पाण्डित्यञ्च निर्विद्याथमुनिः' इत्यत्र विदुषा बाल्यमुपादेयतया श्रुतम्, तत्र बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयम्, उत विद्यामाहात्म्यानाविष्काररूपबालस्वभावः इति संशयः । 'बाल्येन तिष्ठासेत्' इत्यविशेषविधानात् कामचारादिकं सर्वमपि उपादेयमिति पूर्वःपक्षः । विदुषो विशेषविधानात् विद्यामाहात्म्याच्च निषेधशास्त्राणि बाधितानि भवेयुरिति ।

राद्धान्तस्तु पाण्डित्यप्रयुक्तस्वमाहात्म्यानाविष्कार एव विद्यान्वययोग्यतया उपादेयः । इतरस्य कामचारादेः 'नाविरतो दुश्चरितात्' इत्यादिशास्त्रात् विद्योत्पत्तिविरोधित्वावगमात् ।

अनाविष्करणमेव महिम्नो बाल्यमुच्यते ।
विद्यया चान्वयात्तस्य तथान्यस्याप्यनन्वयात् ॥
(ब्र. प. मा. 467)

**अनावृतः — ज्ञानसङ्कोचविकाररहितः परमात्मा ।**

'अनावृतत्वाद्बहिरन्तरं न ते' (भाग. 10-3-16)

नित्यासङ्कुचितापरिच्छिन्नज्ञानवत्त्वेन जीवस्येव कर्मायत्तज्ञानसंकोचविकाररहितः ।
(भाग. वी.)

**अनावृत्तिः शब्दात् अनावृत्तिः शब्दात् — (ब्र. सू. 4-4-22)**

(जगव्द्यापारवर्जाधिकरणे षष्ठं सूत्रम् )

शास्त्रपरिसमाप्तिद्योतनार्थैव सूत्रस्यावृत्तिः । अस्य मुक्तस्य अनावृत्तिः शब्दादवगम्यते । यथा 'यतो वा इमानि भूतानि जायन्ते' 'य आत्मानमन्तरो यमयति' इति शब्दात् परमपुरुषस्य स्रष्टृत्वं नियन्तृत्वं चावगम्यते ।

'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते'

'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥'

इति शब्दादेवैनं कदाचिदपि नावर्तयतीत्यवगम्यते । एतेन यदि नियन्तृत्वं परस्यैव, एवं तर्हि स्वतन्त्रत्वेन मुक्तं परः कदाचित् पुनरावर्तयिष्यतीति शङ्काया नावकाशः ।

अपि च 'यदि मुक्तोऽपि परतन्त्रः तर्हि स्वच्छन्दप्रवृत्तपरबुद्ध्या पुनरपि बन्धः किं स्यादिति शङ्काकलङ्कितः स्यात्' इत्यत्राह– तदधीनत्वेऽपि मुक्तस्य परमपुरुषेऽपि स्वाभाविकसौहार्ददर्शनादेव आवृत्तिशङ्का नोदेति । तदेतदुक्तम् –

तन्निघ्नत्वेऽपि मुक्तो न भवति पुनरावृत्तिशङ्काकलङ्की ।
तादृक् सौहार्ददृष्टेः वयमिह तदनावृत्तिशास्त्रेण विद्मः ॥

इति । (त. मु. 138)

तथा चोभयथापि पुनरावृत्तिः व्यावर्तिता । अत एव सामान्यतः 'अनावृत्ति-' रित्येव सूत्रितम् । 'सर्वेषु लोकेषु कामचारो भवति' । 'इमान् लोकान् कामान्नी-कामरूप्यनुसञ्चरन्' इत्यादीनां विधूतपुण्यपापस्य स्वच्छन्दवृत्तौ तात्पर्यम् ; अन्यथा महावाक्यविरोधात् ।

इदं च पृथगधिकरणमिति केचिदाहुः । तत्र च हेतुः सूत्रस्वारस्यात् इति । अनुग्राहकं च 'इमं मानवमावर्तं नावर्तन्ते' इति । अत्रेममितिपदेन एतल्लोकप्राप्ति-मात्रं नास्ति इति द्योत्यते । अन्यत्र स्यादेवेति शङ्कयाऽधिकरणस्योत्थानमिति ।

अत्रोच्यते-भाष्यादावेतन्न दृष्टम् ।- तर्हि कथं सिद्धान्ते पूर्वाधिकरणशेषत्वमिति चेत्, सत्यसंकल्पस्य मुक्तस्य पुनरावृत्तौ सत्यां पूर्वपक्षिणोक्तं परमसाम्यमाशङ्कितुं

शक्यते। परमपुरुषोऽपि कश्चित् सत्यसङ्कल्पोऽस्मिन् लोके वर्तते, अयमपि कश्चित् सत्यसङ्कल्प इति तयोः जगद्व्यापारेणात्यन्तसाम्यमिति, एतच्छङ्कानिवारणार्थं मुक्तस्य आगमनमेव निषिध्यते। केवलवैकुण्ठे भगवन्तं सेवित्वैव वर्तत इति पूर्वाधिकरणशेषत्व-सिद्धिरेव तस्य सूत्रस्येति।

अत्रायं निर्णयः— 'इमं मानवमावर्तं नावर्तन्ते' इत्यत्र इममितिशब्दः कृत्स्नस्य मानवावर्तस्योपलक्षणार्थः। सर्वकर्मविनिर्मुक्तस्य क्वचिदपि कर्माधीनपुनरावृत्तिप्रसङ्गा-भावात्; 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्यत्र स्वच्छन्दकैङ्कर्य-रूपानुगमनाङ्गतयोक्तं स्वच्छन्दपुनरावर्तनमपि सर्वत्र समानम्।

इमान् लोकान्' इत्यस्मिन्नेव लोके पुनरावृत्तिश्रवणात् इति। (चिं. म. 549) एतेनास्य पृथगधिकरणत्वपक्षस्य नावकाशः- इति सिद्धम्।

मुक्तस्यापुनरावृत्तिः शब्दादेवावगम्यते।
ब्रह्मणोऽपि हि सद्भावे प्रमाणं शब्द एव हि॥ (ब्र. प. मा. 545)

**अनावृत्तिः** — पुनरावृत्त्यभावः। मुक्तज्ञानस्य सङ्कोचाभावः।

'मुक्तबुद्धेः . . . . . . . अनावृत्तिरेवम्।' (अ. सा. 431)

'न च पुनरावर्तते' इति अबाधितप्रमाणानुसारात् आपवर्गिकज्ञानसन्तानस्य पूर्वावधिसद्भावेऽपि उत्तरावधिः नास्तीति यथाप्रमाणं यथान्याय्यञ्च कल्पनीयम्। किं च मृषावादिनः भावरूपाज्ञानस्य उत्तरावधिसद्भावेऽपि पूर्वावधिं प्रतिक्षिपन्ति। एवं वयं अस्य असंकुचितब्रह्मानुभवरूपज्ञानस्य भावरूपस्यापि पूर्वावधिसद्भावेऽपि अनन्तराव-धिर्नास्तीति यथाप्रमाणं कल्पयामः। (चिं. म.)

'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' 'सर्वेषु लोकेषु कामचारो भवति' इत्यादिश्रुतेः मुक्तस्य स्वेच्छया पुनरेतल्लोकागमनादेः सम्भवात्, प्राप्ता-प्राप्तविवेकन्यायेन विकसितस्य धर्मभूतज्ञानस्य पुनःसङ्कोचाभाव एव पर्यवस्यतीति भावः॥

**अनावृत्त्यधिकरणार्थः** — अनावृत्तिपदघटितसूत्रार्थः।

'विभेदजनके' इत्यादिश्लोकेन 'अनावृत्तिः शब्दात्' इति अधिकरणार्थ उच्यते; परस्मात् ब्रह्मणः आत्मनो देवादिभेदस्य प्रणष्टस्य पुनरावृत्तिं कः करिष्यतीत्युच्यते।

(श्रु. प्र. 1-255)

अधिकरणार्थः – अधिकृतसूत्रार्थः इत्यर्थः । सिद्धान्ते अनावृत्त्यधिकरणस्य पृथगधिकरणत्वाभावात् ।

एतेन अनावृत्त्यधिकरणार्थः इति व्यवहारः कथमिति शङ्कायाः नावकाशः । अधिकरणपदं अधिक्रियते अत्रेति, तद्घटितसूत्रपरमिति भावः ।

यद्वा किंचिन्न्यायप्रतिपादकशब्दसन्दर्भः अधिकरणमित्यभिप्रायेण प्रकृते अनावृत्तिन्यायप्रतिपादकं सूत्रम् अनावृत्त्यधिकरणं इत्यपि सूपपन्नम् ॥

**अनाशकम्** — अनशनम् । फलाभिसन्धिरहितं वा ।

'एतद्वै सत्येन दानेन तपसाऽनाशकेन' (सु. उ. 3) अनशनम् । यद्वा, फलाभिसन्धिरहितं यज्ञादिकम्, विनाशकेन फलभोगेन तदभिसन्धिकर्तृत्वममकारेण च रहितत्त्वात् । (श्रु. भा.)

'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ. उ. 6-4-22) आशः– अशनम् । भावे घञ् । अनाशः–अनशनम् । अनाशकम् स्वार्थेकः । तच्चा-नशनम् कामानशनात्मकम्; न तु सर्वात्मना अनशनम्, देहपातप्रसङ्गात् । यद्वा न विद्यते आशा फलेषु यस्य तदनाशम् । स्वार्थे कप्रत्ययः । अना-शकम् ॥ (रं. भा.)

**अनाशकायनम्** — नाशाभावरूपफलम्, अनशनलक्षणो मार्गश्च ।

'अथ यदनाशकायनमित्याचक्षते, ब्रह्मचर्यमेव तत् एष हि आत्मा न नश्यति, यं ब्रह्मचर्येणानुविन्दते' (छां. उ. 8-5) ब्रह्मचर्यसाध्यनाशाभावरूपफलस्य च अनशन-लक्षणमार्गस्य च अनाशकायनशब्दैक्यकृतोऽभेदः । आशः–अशनम्, न आशः अनाशः । नाशो न भवतीत्यनाशः इत्येकशब्दरूपितत्वम् । (रं. भा.)

अयनशब्दः आद्ये कर्मव्युत्पत्त्या फलवाची, द्वितीये करणार्थप्रत्ययान्ततया मार्गवाचीति भावः । स्वार्थे कप्रत्ययः ॥

**अनिकेतः** — निकेतनादिष्वसक्तः ।

'अनिकेतः स्थिरमतिः' (गी. 12-19) आत्मनि स्थिरमतित्वेन निकेतना-दिष्वसक्तः इत्यनिकेतः ॥ (गी. भा.)

**अनिकेताः** — व्यवस्थितगृहरहिताः ।

'अनिकेता ह्यनाहाराः यत्र सायं गृहाश्च ये ।' (वि. पु. 3-9-3)

यत्र सायं स्यात् तत्रैव गृहं स्थितिः येषां ते ज्ञानिनः । (वि. चि.)

येन केनचिदाच्छन्नः येन केनचिदाशितः ।

यत्र क्वचनशायी स्यात् तं देवा ब्राह्मणं विदुः ॥ इति हि स्मर्यते ॥

**अनिङ्गम्** — स्थावरम् ।

ईशं दरिद्रमथ जङ्गममप्यनिङ्गम्' (वै. स्त. 54) 'इगि–गतौ' इति धातुना निष्पन्नस्य इङ्गशब्दस्य चरम् इत्यर्थः । इङ्गं न भवतीत्यनिङ्गं स्थावरम् (व्या.)

**अनित्यत्वम्** — उत्पत्तिविनाशाख्यपरिणामविशेषास्पदत्वम् ।

प्राकृतस्य द्रव्यस्य स्वरूप एव नामान्तरभजनार्हावस्थावत्त्वात् अनित्यत्वम् । (चिं. म. 225)

1. प्रतियोगितासम्बन्धेन ध्वंसवत्त्वम् । ध्वंसप्रतियोगित्वं इत्यर्थः । 2. प्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वान्यतरवत्त्वम् । यथा ध्वंसप्रागभावयोः प्रतियोगिनः घटपटादेश्चानित्यत्वम् । (न्या. को.)

**अनिदंभोगः** — भगवदन्यभोगरहितः भक्तः ।

'यदिदमनिदंभोगजनताशिरश्श्रेणीजुष्टम्' (य. स. 59) इदंभोगः–ऐहिकभोगः । भगवदन्यभोगः इत्यर्थः, तद्रहितः ॥ (व्या.)

**अनिद्रनिद्रा** — योगनिद्रा (अनिद्रस्य विष्णोः) ।

निद्रा नाम विषमपरिणामसंकल्पराहित्यम् ॥ (वि. को.)

***अनिमित्तनिमित्तो धर्मः** — कामादिनिमित्तरहितः धर्मः ।

'योऽनिमित्तनिमित्तेन धर्मेणाराधयन् हरिम्' (भाग. 3-15-14) निमित्तम्–फलम्, कामादिरूपम् अनिमित्तम्–अप्रवर्तकं यस्मिन् । (भाग. वी.) हरेः आराधनभूतः धर्मः, अनिमित्तनिमित्तकः – त्रिवर्गफलापेक्षारहितः, मोक्षमात्रफलकः इति यावत ॥

**अनिमिषः** — (स. ना. 216)

सत्सु न निमिषति जागर्तीति अनिमिषः, दिव्यमीनतनुः । (वि. स.भा.)

सद्रक्षणे जागरूकः स्मृतो ह्यनिमिषश्च सः ॥ (वि. स. नि.)

**अनियतगुणाः** — आगन्तवः गुणाः ।

'ऐशानज्ञानधर्माः कतिचन नियताः केचिदागन्तवश्च ।' (त. मु. 457)

अनन्तकल्याणगुणस्य ईश्वरस्य निस्सीमानन्दादयः ज्ञानावस्थाभेदाः नियताः नित्यसिद्धाः ; केचित् तदा तदा संकल्पविशेषादयश्च आगन्तवः इति विभागोऽवगन्तव्यः । (स. सि.) एवं आगन्तवः अनियतगुणपदेन व्यवह्रियन्ते ॥

**अनियतनिमित्तकम्** — नैमित्तिकं कर्म ।

वैदिकं कर्म नित्य, नैमित्तिक, काम्यभेदेन त्रिविधम् । नियतनिमित्तकत्वा-नियतनिमित्तकत्वभेदेन नित्यनैमित्तिकयोर्भेदः । (मी. को.)

**अनियमः सर्वेषां अविरोधः शब्दानुमानाभ्याम्** । (ब्र. सू. 3-3-32)
(अनियमाधिकरणम्)

येषु अर्चिरादिगतिराम्नाता तेषामेवेति नियमो न । अपि तु सर्वेषां ब्रह्मोपासन-निष्ठानां अविरोधः । कुतः ? श्रुतिस्मृतिभ्याम् । अनुमानपदेन स्मृतिः विवक्षिता । येषु उपकोसलादिषु अर्चिरादिका गतिराम्नाता किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः, उत सर्वेषां ब्रह्मोपासननिष्ठानां इति संशये, तन्निष्ठानामेवेति पूर्वः पक्षः । इतरेषां तया ब्रह्मप्राप्तौ प्रमाणाभावात् । यत्तु पञ्चाग्निविद्यायां साधारणं वचनम्, तदप्युपकोसलादि-विषयमिति निश्चीयते । अन्यथोपकोसलादिष्वाम्नानानर्थक्यं स्यात् ।

राद्धान्तस्तु – पञ्चाग्निविद्यायां 'य एवमेतद्विदुः ये चामी अरण्ये श्रद्धां सत्य-मुपासते तेऽर्चिषमभिसम्भवन्ति' इति सामान्येन सर्वविषयं गतिश्रवणं उपकोसलादि-ष्वाम्नानं न बाधितुं क्षमम्, संकोचकं च न भवति, विद्यास्तुत्यर्थतयानुवादेनाप्यु-पपत्तेः । अतस्सर्वेषां तयैव ब्रह्मप्राप्तिः ।

सर्वेषामविशेषेण ह्यर्चिरादिकया गतिः ।
श्रुतिस्मृत्यविरोधाय निश्चिता मुनिसत्तमैः ॥

(ब्र. प. मा. 386)

**अनियमाधिकरणम्** (3-3-13)

अनियमः सर्वेषां अविरोधः शब्दानुमानाभ्यामिति अनियमपदोपक्रान्तमिदं एवं व्यपदिश्यते। उपकोसलविद्यादिषु आम्नातार्चिरादिगत्या तन्निष्ठानामेव ब्रह्मप्राप्तिः इत्याशङ्क्य 'ये चेमेऽरण्ये श्रद्धां सत्यम्' इत्यादिषु श्रुतिस्मृतिषु सर्वब्रह्मनिष्ठानां अर्चिरादिगतिप्रतिपादनात् सर्वेषां अर्चिरादिगत्यैव ब्रह्मप्राप्तिः इति निर्णीयते।

तद्विद्यानिष्ठानां तद्विद्योक्तार्चिरादिगतिचिन्ता स्यात्।
प्रकरणभेदान्नैतन् 'तद्य' इति तु, समानतावचनात्॥

(न्या. क. सं. 3-33)

**अनियाम्यः** — नियन्तुमयोग्यः (सर्वेश्वरः)।

'यस्यात्मा शरीरम् . . . . . य आत्मानमन्तरो यमयति' इति शरीरत्वेन नियाम्यत्वप्रतिपादनात्। (गी. भा. 9-5) 'गदमदचरयमश्चानुपसर्गे' इति हि पाणिनिसूत्रम्। अत्रानुपसर्गे सत्येव यमधातोः यत्प्रत्ययविधानात सोपसर्गात् ण्यदेव प्रयाम्यम्। निपूर्वात्तु यत्प्रत्यय एव। 'तेन न तत्र भवेत् विनियम्यं' इति वार्तिकप्रयोगात्। तथा च नियम्यमित्येवं साधु इति केचित्।

परे तु तत्रैव सिद्धान्तकौमुद्यां 'नियमे साधुः इति वा' इत्यनेन तद्धितान्ततया विनियम्यमिति वार्तिकप्रयोगस्य साधुत्वोपपादितत्त्वात् 'तेन तत्र न भवेद्विनियम्यं' इति वार्तिकबलादेव 'निपूर्वात्तु यदेवेति' कल्पनायाः नावकाशः, सूत्रस्वारस्यात्तु अनुपसर्गे यत्प्रत्ययः, उपसर्गे सति ण्यदेव भवतीति सिद्ध्या 'नियाम्यः' इत्येव प्रमाणप्रतिपन्नम् इत्याहुः॥

**अनियोज्यत्वम्** — अनितरचेतनप्रेर्यत्वम् (परमात्मधर्मः)

'अप्रमेयोऽनियोज्यश्च' (भार. 2-21- 605)

**अनिरस्तः** — द्रुतमनुच्चारितः।

'सर्वे ऊष्माणः अग्रस्ताः अनिरस्ताः विवृता (विवृत्ता) वक्तव्याः' (छां. उ. 2-22-5) अग्रस्तः — अन्तरप्रवेशिताः। अनिरस्ताः — बहिरक्षिप्ताः।

'लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम्' इत्यमरः । (रं. भा.)

**अनिरुक्तः** — 1. निर्वक्तुमशक्यः ।

'अनिरुक्तस्त्रयोदशः स्तोमःसञ्चरो हुङ्कारः' (छां. उ. 1-3-31) हाउकारादिभ्यो द्वादशभ्यः पूर्वोक्तेभ्योऽधिकः हुमिति त्रयोदशो यः स्तोमः, स इदमिति निर्वक्तुमशक्यः । (रं.भा.) अव्यक्ताक्षरगानम् अनिरुक्तगानमित्युच्यते । तथा गानात् हुमः अनिरुक्तत्वम् ॥ (टि.)

2. प्राकृतशरीरनिबन्धननामशून्यः – परमात्मा ।

'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते' (तै. आ. 7-2) अनामनिर्वचनीयः । (परमतरीत्या) (श्रु. प्र. 1-82)

सिद्धान्ते तु अनिरुक्ते इति मुक्तव्यावृत्तिः । स हि बद्धावस्थायां देवादिशब्दैरुक्तः । (श्रु. प्र. 1-208) कर्ममूलसत्त्वादिगुणनिबन्धनजातिवाचिदेवादिपदावाच्यः । न तु सर्वथा शब्दावाच्य इति भावः ॥

**अनिरुद्धः** — (स. ना. 187)

निर्धूतनिरोधनिरवधिकजीवलोकजीवातुदिव्यचेष्टितः । (वि. स. भा.) निरवधिकजीवलोकजीवातुदिव्यचेष्टिततया निरुद्धः–प्रतिरुद्धः नेति । (वि. स. निर्व.)

'अनन्तचेष्टायुक्तत्वात् अनिरुद्ध उदाहृतः ।' (वि. स. नि.)

**अनिरुद्धः** — (स. ना. 644)

अथ क्षेत्रविशेषेषु पूर्वोक्तव्यूहविभवानां स्थितिविशेषः प्रपञ्च्यते ।

जनार्दनाख्यया देवस्त्वनिरुद्धो जगत्प्रभुः ।
भूभागे वासुभाण्डाख्ये नित्यसन्निहितस्थितः ॥

इति । (वि. स. भा.)

तत्र च आर्षनिर्वचनात् वासुभाण्डाख्ये भूभागेऽनिरुद्धो जनार्दनाख्यो वसन् नित्यसन्निहिततया निरुद्धः प्रतिरुद्धो नेति अनिरुद्धः । (वि. स. निर्व.)

वसुभाण्डाख्यभूभागे नित्यं सन्निहितस्थितः ।
अनिरुद्ध इति ख्यातो वस्वर्णो मनुरुत्तमः ॥ (वि. स. निर्व.)

**अनिरुद्धः**— व्यूहविशेषः परमात्मा ।

अत्र भगवच्छास्त्राक्षराभिधानकोशवचनैः नमश्शब्दे विसर्गवाच्यस्य अनिरुद्धस्य शक्तितेजस्समुत्कर्षात् अनिरुद्धतनुरिति शक्तितेजःप्रधानत्वात् , तत्र

शक्त्या जगदिदं सर्वमनन्ताण्डं निरन्तरम् ।
विभर्ति पाति च हरिर्मणिसानुरिवाणुकम् ॥

इति शक्तिकार्यसर्वजगद्भरणादिना

'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'

इत्युक्त पुरुषोत्तमशब्दप्रवृत्तिनिमित्तपुष्कलत्वात् ,

'तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने'

इति तेजोगुणेन भगवत्कामवर्धकतया अनिरुद्धावस्थपरमेश्वरवाचकस्य विसर्गस्य अनादित्वादिविशिष्टपुरुषोत्तमपरत्वमुक्तमिति ध्येयम् । (रह. मी. भा. 418)

व्यूहवासुदेवात् द्वितीयो व्यूहः सङ्कर्षणसंज्ञकः प्रादुर्भवति । ततः प्रद्युम्नसंज्ञकः । ततः अनिरुद्धसंज्ञकः । अवयवसंस्थानविशेषविशिष्टविग्रहरूपेण विभज्य स्थित्या एतेषां व्यूहशब्दाभिधेयत्वम् । व्यष्टिस्थित्यादौ तु अनिरुद्धरूपात् साक्षात् जीवव्यवधानं विना विष्णुरूपो भूत्वा कारणीभवति ॥ (द. उ. 227)

**अनिर्दिष्टाश्चार्थाःप्रत्यया त्रिष्वपि कालेषु भवन्ति** —

यथा— 'पुराणानां कर्ता सत्यवतीसुतः' इत्यत्र कर्तरि 'तृच्'प्रत्ययश्रवणेनानिर्दिष्टाश्चार्थाः प्रत्ययाः त्रिष्वपि कालेषु भवन्तीति न्यायात् अतीतवर्तमानभविष्यत्पुराणानां कर्तृत्वं अविरुद्धम् । आसमाप्तेर्वर्तमानकालत्वाच्च । (मी. को.) एतेन प्रतिकल्पं पुराणकर्तृत्वं स्थापितम् ॥

**अनिर्देश्यम्** — देवादिशब्दावाच्यम् ।

'ये त्वक्षरमनिर्देश्यम्' (गी. 12-3) प्रत्यगात्मस्वरूपं, देहात् अन्यतया देवादिशब्दानिर्देश्यम् । (गी. भा.) यद्यपि देहादन्यस्मिन्नपि देहिनि देहद्वारा देवादिशब्दाः प्रवर्तन्ते; तथापि विविच्य निर्देष्टव्ये प्रकृतिसम्बन्धरहिते चापवृक्तात्मस्वरूपे तावत् तादृशवृत्तिरपि न सम्भवतीति भावः । (ता. चं.)

इतरसजातीयतया अचिन्त्यम् ।। (वि. को.)

**अनिर्देश्यवपुः**— (स. ना. 179)

ज्ञानशक्त्यादि षट्स्वेव सौशील्यवात्सल्यादयः अगणितगुणाः, केनापि प्रयोजनेनान्तर्भाव्यन्ते । एतत् षाड्गुण्यविग्रहत्वात् अनिर्देश्यवपुः । (वि. स. भा.)

ज्ञानशक्त्यादिषाड्गुण्यविग्रहत्वेनानुपमत्वात् अनिर्देश्यमीदृशमिति निर्देष्टुमशक्यं वपुः शरीरम् अस्येति । (वि. स. निर्व.)

ज्ञानादिषाड्गुण्यमयमुपमानविवर्जितम् ।
वपुर्यस्यातितेजिष्ठमनिर्देश्यवपुर्हि सः ।। (वि. स. नि.)

**अनिर्देश्यवपुः** — (स. ना. 662)

तत्तद्युगगुणानुग्राहकरूपवैचित्र्यात् अनिर्देश्यवपुः । युगानुसारिकान्तिश्च इति । (वि. स. भा.) तत्तत्युगगुणानुग्राहकरूपवैचित्र्यात् अनिर्देश्यमिदमीदृशमिति निर्देष्टुमशक्यं वपुः शरीरमस्येति । (वि. स. निर्व.)

युगानुसारिरूपत्वात् अनिर्देश्यवपुस्स्मृतः ।। (वि. स. नि.)

**अनिर्वचनीयख्यातिः**— ख्यातिपञ्चकेऽन्यतमा ।

'आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथाऽनिर्वचनख्यातिः इत्येतत्ख्यातिपञ्चकम् ।।'
योगाचारा माध्यमिकास्तथा मीमांसका अपि ।
नैयायिका मायिनश्च प्रायः ख्यातीः क्रमाज्जगुः ।।

(इत्यभियुक्तोक्तिः)

शुक्त्यादिषु रजतादिप्रतीतेः प्रतीतिकालेऽपि तन्नास्तीति बाधेन च अन्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात् जातं प्रतीयते । (श्री. भा. 1; भा. 2-25) इति परे वदन्ति ॥

**अनिर्वचनीयख्यातिनिरासः** —

सदसदनिर्वचनीयरजतकल्पनेऽपि, अन्यस्यान्यथाभानस्यावर्जनीयत्वात् ; अन्यथाभानाभ्युपगमादेव ख्याति-प्रवृत्ति-बाध-भ्रमत्वानामुपपत्तेः, अत्यन्तापरिदृष्टाकारणकवस्तु-

कल्पनायोगात् । कल्प्यमानं हीदमनिर्वचनीयम्, न तावदनिर्वचनीयमिति प्रतीयते; अपि तु परमार्थरजतमित्येव । अनिर्वचनीयमित्येव प्रतीतश्चेत् भ्रान्तिबाधयोः प्रवृत्तेरप्यसम्भवः । अतः शुक्त्यादिरेव रजताद्यात्मनावभासत इति भवताभ्युपगन्तव्यम् ।

किञ्च— अनिर्वचनीयमपूर्वरजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यं; न तावत्तत्प्रतीतिः, तस्याः तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात् । निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम् । अथेन्द्रियादिगतो दोषः, तन्न; तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात् । नापीन्द्रियाणि; तेषां ज्ञानकारणत्वात् । नापि दुष्टानीन्द्रियाणि तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम्, अनादिमिथ्याऽज्ञानोपादानत्वन्तु पूर्वमेव निरस्तम् । (श्री. भा. 1. भा. 2-28) अनादिभावरूपाज्ञानमेव शुक्तिरजताद्यपि जनयेदित्यत्राह अनादीति – तस्य स्वरूपानादित्वात् कार्यमपि प्रागेव स्यात् । सहकारित्वेन शङ्कनीयमिन्द्रियादिकन्तु निरस्तम् । मिथ्याभूतस्य चार्थक्रियाकारित्वमयुक्तम् । आश्रयानुपपत्त्यादयश्च पूर्वमेवोक्ता इति भावः ॥ (श्रु. प्र.)

**अनिर्वचनीयता**— दुरुपपादत्वम् ।

सदसद्विलक्षणस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात् । (श्री. भा. 1. भा. 2-6) विद्वत्सन्निधौ दुरुपपादत्वम् ॥ (श्रु. प्र.)

**अनिर्वचनीयतानुपपत्तिः**— अविद्याविषयकसप्तविधानुपपत्तिष्वन्यतमा ।

[सदसद्विलक्षणत्वमविद्याया परैरङ्गीकृतम् । तत्रेयमनुपपत्तिः । ] सर्वा च प्रतीतिः सदसदाकारा । सदसदाकारायास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यात् इति । (श्री. भा. 1. भा. 2-6) सदसद्विलक्षणं इति या प्रतीतिः, तत्रापि सदसदेव विषयः स्यात् इत्यर्थः । प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते । तस्मात् सदसदाकारायाः प्रतीतेः सदसदाकार एव विषयः, न सदसद्विलक्षणः । यथा ख्यातिविवेके, 'न ह्यन्यत् अवभास्यम्, अन्यो विषयः, अवभासनव्यवस्थाप्यत्वाद्विषयस्य' इति । एकस्य विषयस्य सदसदाकारत्वमनुपपन्नम्, व्याप्तिविरोधादिति चेत् सदसद्विलक्षणत्वं च व्याप्तिविरोधात् अनुपपन्नम् । . . . . सतो घटादेः सदसद्विलक्षणत्वं दृष्टमिति चेन्न, तथा सति ब्रह्मणोऽपि सदसद्विलक्षणत्व-

प्रसङ्गात् । . . . . . अस्तीति प्रतिपन्नत्वं सत्त्वं, नास्तीति धीविषयत्वं बाधितत्वमित्येकस्यैव सत्त्वासत्त्वविरोधः सदसद्विलक्षणत्वकल्पकश्चेत् सर्वत्र पूर्वपक्षसिद्धान्तप्रतीत्योः परस्परविरुद्धाकारविषयत्वात् उभयाकारविलक्षण एवार्थः साध्यत इति सिद्धान्तसमर्थनवैयर्थ्यं स्यात् ।

ततश्च भेदः सुनिरूप इति पूर्वपक्षीकृत्य, दुर्निरूप इति त्वया सिद्धान्तिते प्रतीतिद्वयविरोधात् सुनिरूपदुर्निरूपविलक्षणः स्यात् । एवं संवित्सत्यत्व-मिथ्यात्व-जडत्वाजडत्व-नित्यत्वानित्यत्वादिवादेषु पूर्वपक्षसिद्धान्ताकारविलक्षणत्वं संविदः स्यात् । तच्चानभिमतम् । अतः परस्परविरुद्धाकारप्रतीत्योः प्रतिपन्नाकारवैलक्षण्यकल्पकत्वं व्याप्तिविरुद्धमिति न सदसद्वैलक्षण्यसिद्धिः ॥ (श्रु. प्र. 1. भा. 2-7)

**अनिर्वचनीयत्वम्** — सदसद्विलक्षणत्वम् । (परमतरीत्या)

निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पितमीशेशितव्याद्यनन्तविकल्पं सर्वं जगत् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या । . . . . . सा तु न सती; भ्रान्तिबाधयोरयोगात् । नाप्यसती; ख्यातिबाधयोश्चायोगात् । अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद इति । (श्री. भा. 1. भा. 2-1) प्रतीति-भ्रान्ति-बाधान्यथानुपपत्त्या सदसदनिर्वचनीयत्वमित्यर्थः ॥ (श्रु. प्र.)

तदुक्तम् –

'न सत् नासत् न सदसत् न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥' इति ।

अत्रोक्तचतुर्थकोटिरेव स्वीकृता । सत्त्वे आत्मन इव भ्रान्तिबाधयोरयोगः । सदसत्त्वन्तु व्याहतम् । अतः सदसद्विलक्षणमेवेति भावः ॥

**अनिर्वचनीत्वनिरासः**— सदसद्विलक्षणत्वप्रतिषेधः ।

असतः शशविषाणादेः प्रतीत्यभावात् सतश्च आत्मनः बाधासंभवात् । ख्यातिबाधान्यथानुपपत्त्या सदसद्विलक्षणमनिर्वचनीयं स्वीकृतं परैः, तन्निरस्यते श्रीभाष्यकारैः । 'तथाविधस्य वस्तुनः प्रमाणशून्यत्वेन अनिर्वचनीयतैव स्यात् । एतदुक्तं भवति – सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वा च प्रतीतिः सदसदाकारा । सदसदा-

कारायास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेः विषयः स्यात् । (श्री. भा. 1. भा. 2-6)

सदसद्विलक्षणमिति या प्रतीतिः तत्रापि सदसदेव विषयः स्यादित्यर्थः । प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते । तस्मात् सदसदाकारायाः प्रतीतेः सदसदाकार एव विषयः, न सदसद्विलक्षणः । . . . . . तर्हि ख्यातिबाधान्यथानुपपत्तेः कः परिहारः उक्त इति चेत्, अन्यथैवोपपत्तिः उक्ता भवति । सत्त्वे सति अन्यथाख्यानादिभिः तत्तद्वाद्यभिमतैरेव ख्यातिबाधोपपत्तेः । मतः कथं बाधः अन्यत्र ख्यातत्वात् । नन्वन्यत्र सच्चेत् न बाधः, न सच्चेत् असत्ख्यातिप्रसङ्गः इति चेन्न । अन्यत्र सत्त्वात् अन्यत्र सतोऽन्यत्र ख्यातत्वं हि अन्यथाख्यातत्वम् । अन्यत्र सतोऽन्यत्र ख्यातिः दोषवशात्, दोषस्यान्यत्र ख्यातिहेतुत्वं न दृष्टमिति चेत् दोषस्यानिर्वचनीयावभासहेतुत्वञ्च न क्वचित् विमतिपदादन्यत्र दृष्टमिति तुल्यम् । मिथो विरुद्धप्रतिपन्नाकारद्वयवैलक्षण्यं एकस्या विरुद्धमित्येतत् तवाधिकम् । अख्यातिपक्षे सत्त्वे सति भेदाग्रहेण ख्यातिबाधोपपत्तिः । सत एवागृहीतभेदतया ख्यातिः ।

भेदग्रहस्य बाधः । बाध्यत्वं च प्रवृत्तेः । यथार्थख्यातिपक्षे तु शुक्तिरजतस्वाप्नार्थादौ सत्त्वात् प्राचुर्याभावात् अस्थिरत्वतदेकानुभाव्यत्वाग्रहाच्च ख्यातिबाधोपपत्तिः । पुरोवर्तिनि सत एव रजतस्य ख्यातिः । शुक्तिप्राचुर्यग्रहो बाधः । तेन प्रवृत्तिः बाध्या । तद्बाधश्च प्रवृत्त्यनुपपत्तिः । अलातचक्रादौ तु अख्यातिपक्ष इव तदुपपत्तिः । अतोऽन्यथैवोपपत्तिः सिद्धेत्यनिर्वचनीयत्वकल्पनमयुक्तम् ।। (श्रु. प्रं.)

**अनिर्वचनीयं ब्रह्म** — ब्रह्म इयद्गुणकमिति वक्तुं दुश्शकम् ।

'यतो वाचो निवर्तन्ते' इत्यादि श्रुत्यनुरोधेन शब्दागोचरमिति परे । सिद्धान्ते तु प्रकृतैतावत्त्वसूत्रन्यायेन गुणादीनां इयत्ताराहित्येन निर्वक्तुमशक्यमिति विवक्षितम् । अत एव अपरिच्छिन्नानन्दवतः 'सैषानन्दस्य मीमांसा भवती'त्यारभ्य ब्रह्मणः आनन्दं वक्तुं प्रवृत्ता श्रुतिरपि कार्त्स्न्येन वक्तुमसमर्था सती निवृत्तेति भावः ।।

**अनिर्वाच्यम्** — अनिर्वचनीयम् ।

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः ।। इति । (न्या. को.)

**अनिर्वाच्यत्वम्** — सत्त्वात्यन्ताभाव असत्त्वात्यन्ताभाव उभयवत्त्वम् ॥ (परमते)

**अनिर्विण्णः** — (स. ना. 436)

सृष्ट्यादेः तत्तदिष्टदानस्य चासकृत्प्रयुक्तस्यापि संसारिषु विपयोन्मादादसंमुखीनेषु वैफल्येऽपि, पुनस्तत्तदावर्जनदुराशया अनिर्विण्णः अनलसः । (वि. स. भा.) सृष्ट्यादेः तत्तदिष्टदानस्याप्यसकृत्प्रयुक्तस्य संसारिषु विपयोन्मादात् असंमुखीनेषु वैफल्येऽपि पुनस्तदावर्जनदुराशया अनुच्छिन्नजगद्व्यापारत्वेन निर्विण्णो अलसो नेति ।
(वि. स. निर्व.)

अनिर्विण्णो जागरूको जगद्व्यापारसंततौ ।
शिंशुमाराकृतितया ताराारूपेण सर्वदा ॥ (वि. स. नि.)

**अनिर्विण्णः** — (स. ना. 893)

आश्रितं महता प्रणिधानेन संसारगर्तादुत्तार्य आत्मानं प्रापय्य च तमशोच्यम् पश्यन् अनिर्विण्णः । (वि. स. भा.) आश्रितं महता प्रणिधानेन संसारगर्तादुत्तार्य आत्मानं प्रापय्य च तमशोच्यम् पश्यन् कृतकृत्यतया निर्विण्णो निर्वेदवान्नेति ।
(वि. स. निर्व.)

महता प्रणिधानेन ह्युत्तार्य भवगर्ततः ।
प्रापय्य च तमात्मानं कृतकृत्यश्च विज्वरः ॥
पश्यन्नशोच्यमेनं यो ह्यनिर्विण्णः स ईरितः ॥ (वि. स. नि.)

**अनिलः** — (स. ना. 236)

एषां बद्धमुक्तनित्यानां अननात्—उज्जीवनात् अनिलः । (वि. स. भा.) एतान् बद्धमुक्तनित्यान् , अनिति — अस्येहांतर्भावितण्यर्थतया उज्जीवयतीति अनिलः ।
(वि. स. निर्व.)

बद्धादेरननाद्योऽसौ अनिलः परिकीर्तितः ॥ (वि. स. नि.)

**अनिलः** — (स. ना. 818)

भक्तानुग्रहे प्रेरकनिरपेक्षत्वात् अनिलः । 'इल-प्रेरणे' प्रेरयतीति इलः सोऽस्य नास्तीति । यथा—

'तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः' इति । (वि. स. भा.)

अप्रार्थितसर्वार्थप्रदातुः स्वस्य तदनुग्रहे प्रेरकनैरपेक्ष्येण नास्ति इलः प्रेरकः अस्येति । 'इल-स्वप्नक्षेपणयोः' (चौरादिकः) क्षेपणं हि इह प्रेरणम् । (वि. स. निर्व.)

स्वस्य स्वस्मात्प्रेरकोऽन्यः प्रपन्नानुग्रहे सदा ।
नास्तीति सोऽनिलः प्रोक्तो मुन्यर्णो मनुरुत्तमः ॥ (वि. स. नि.)

**अनिलम्** — निलयनरहितं परिशुद्धात्मस्वरूपम् ।

'वायुरनिलममृतम्' (ई. उ. 17) निलयनरहितत्वात्क्वचिदपि व्यवस्थित-स्वाभावाच्च । (वे. भा; कू. भा.) अत्र निलशब्दस्यैव निलयनमित्यर्थः । 'अदृश्येऽनिलयने' इत्यादिना परमात्मन अनाधारत्वरूपानिलयनत्वोक्तेरत्रानिलत्वोक्तिः तद्भिन्नाधारशून्यत्वाभिप्रायेणेति बोध्यम् ॥

**अनिलयनम्** — आधारशून्यं- ब्रह्म ।

'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' । अनिलयनेति नित्यमुक्तव्यावृत्तिः । तेषामपि हि भगवान् आधारः ॥ (श्र. प्र. 1-208)

**अनिवर्ती** — (स. ना. 603)

तत्र प्रवृत्तिकर्मरतानां धूमादिपितृयाणपुनरावृत्त्या संसारान्न निवर्तयतीति । (वि. स. भा.)

पितृयाणप्रवृत्तानां संसारान्न निवर्तनात् ।
अनिवर्ती समाख्यातो ह्यष्टार्णोऽभयदो मनुः ॥ (वि. स. नि.)

**अनिष्कर्षकशब्दः** — निष्कर्षकभिन्नः शब्दः ।

शब्दो द्विविधः । 1. निष्कर्षकशब्दः 2. अनिष्कर्षकशब्दश्चेति । निष्कर्षकशब्दस्तावत् जातिः, गुणः, घटत्वं, नैल्यं, शरीरम्, आत्मा इत्यादिः । एषु शब्देषु जात्यादिशब्दाः घटपटादिरूपविशेष्यं परित्यज्य जातिगुणादिविशेषणमात्र-वाचकाः, व्यक्त्यादिशब्दाः जात्यादिरूपविशेषणं परित्यज्य विशेष्यैकवाचकाः । अतः एते निष्कर्षकशब्दाः ।

देवमनुष्यशब्दाः देवमनुष्यादितत्तदाकारकपिण्डविशेषवाचिनोऽपि तत्तत्पिण्डशरी-रकजीवपर्यन्तबोधकाः । अतः एते अनिष्कर्षकशब्दाः ।

निष्कर्षकशब्दाः द्विविधाः । 1. नियताः 2. अनियताश्चेति । तेषु पूर्वोक्तजातिगुणादिशब्दाः नियतनिष्कर्षकाः । नीलपीतादिशब्दाः अनियतनिष्कर्षकाः । 'नीलः पटः' इत्यादिस्थलेषु नीलादिपदं नीलादिगुणविशिष्टस्य आश्रयस्य वाचकम् । पटस्य नीलः इत्यत्र नीलादिपदमाश्रयं विना केवलरूपमात्रस्य वाचकम् । अतः एते शब्दाः अनियतनिष्कर्षकाः इति । तथैवाहं, त्वम् , सूर्यः, मनुः, इत्यादिशब्दाः न केवलं नियतनिष्कर्षकाः, अपि तु अनियतनिष्कर्षकाः । अतः तत्तच्छरीरयुक्तजीवान्तर्यामिपरमात्मवाचकाः ॥ (सं. अ.)

**अनिष्टनिवृत्तिः** — भगवन्निग्रहनिवृत्तिः ।

सैव हि सर्वकर्मनिवृत्तिरिति बन्धान्मुक्तिरित्युच्यते । सहजकृपोत्तम्भकभक्तिप्रपत्तिमूलकभगवत्प्रसादविशेषेणैवानिष्टनिवृत्तिः ॥ (द. उ. 240)

**अनिष्टप्रसङ्गः** — अनभिमतार्थापादनम् ॥

**अनिष्टादिकारिणः** — विद्याकर्मविधुराः ।

ये विहितं न कुर्वन्ति, निषिद्धञ्च कुर्वन्ति ते उभयेऽपि पापकर्माणः ॥

(श्री.भा. 3-1-12)

**अनिष्टादिकारिणामपि च श्रुतम्** — (ब्र. सू. 3-1-12) (अनिष्टादिकार्यधिकरणे प्रथमसूत्रम् )

केवलेष्टापूर्तदत्तकारिणश्चन्द्रमसं गत्वा सानुशया एव निवर्तन्त इत्युक्तम् ; इदानीमनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति, नेति चिन्त्यते ।

ये विहितं न कुर्वन्ति, ये च निषिद्धं कुर्वन्ति, ते उभयेऽपि पापकर्माणोऽनिष्टादिकारिणः । किं युक्तम् ? तेऽपि चन्द्रमसं गच्छन्तीति । कुतः तेषामपि हि तद्गमनं श्रुतं 'ये वै केचास्माल्लोकात् प्रयन्ति. चन्द्रमसमेव ते सर्वे गच्छन्ति' इत्यविशेषेण सर्वेषामेव गतिश्रवणात् इति पूर्वपक्षपरमिदम् । एतेषामनिष्टादिकारिणां चन्द्रप्राप्तिर्नास्तीति वक्ष्यते ।

गच्छन्ति ते सर्व इतिश्रुत्याऽनिष्टादिकारिणाम् ।
अपि चान्द्रमसप्राप्तिः भवतीति विशङ्कते ॥

(ब्र. प. मा. 299)

अनिष्टादिकार्यधिकरणम् — (3-1-3)

१. अनिष्टादिकारिणामपि च श्रुतम् ।
२. संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ।
३. स्मरन्ति च ।
४. अपि सप्त ।
५. तत्रापि तद्व्यापारादविरोधः ।
६. विद्याकर्मणोरिति तु प्रकृतत्वात् ।
७. न तृतीये तथोपलब्धेः ।
८. स्मर्यतेऽपि च लोके ।
९. दर्शनाच्च ।
१०. तृतीयशब्दावरोधस्संशोकजस्य ।

अत्रादितः पञ्चकं पूर्वपक्षपरं, तत ऊर्ध्वं सिद्धान्तपरम् । इत्थं दशसूत्रात्मकं, अनिष्टादिकारिपदादिमतया एवं व्यवह्रियते ।

'ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति अविशेषेण सर्वेषां गतिश्रवणात् पापकारिणोऽपि चन्द्रमसं गच्छन्तीत्याशङ्क्य– 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते' इत्युक्त्वा 'ते धूममभिसम्भवन्ति' इत्यादिना इष्टादिकारिणामेव पितृयाणवचनात्, 'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति वचनस्यापि इष्टादिकारिविषयतया नेयत्वात्, पापकारिणश्चन्द्रमसं न गच्छन्तीत्युक्तम् ।

'ये वै च केऽपी'त्यविशेषशब्दात्
धूमादिकं केवलपापिनाञ्च ।
इति त्वसत् स्यात् 'अथ ये'ति वाक्यात्
पुण्यावलम्बी तु विशेषशब्दः ॥ (न्या. क. सं. 3-3)

अनिह्नवपराः — प्रमाणप्रतिपन्नार्थस्वीकर्तारः ।

अनिह्नवः – अपलापाभाव विषयः मुख्यतात्पर्यविषयीभूतः येषां ते । सर्वेश्वरत्वव्यवस्थापकलक्ष्मीपतित्वमुमुक्षूपास्यतादीनि नापह्नुवन्ति ॥ (स. अ.)

**अनीडाख्यः** — आधाररहितः परमात्मा ।

'भावग्राह्यमनीडाख्यम्' (श्वे. उ. 5-14) अनीडत्वेन-अनिलयत्वेन-अनाधारत्वेन-आख्यायमानः [परमात्मा] । (रं. भा.)

आधारः शरीरादिः । नीडपर्यायः कुलायशब्दः शरीरे प्रयुक्तः 'बहिष्कुलायादमृतश्चरित्वा' इति । कर्ममूलशरीररहित इति यावत् ॥ (टि.)

**अनीशः** — (स. ना. 632)

भक्ताधीनस्नानपरिकर्मगोष्ठ्यादिसर्वावस्थत्वात् । (वि. स. भा.) भक्तपराधीनस्नानपरिकर्मगोष्ठ्यादि सर्वावस्थतया तेष्वीशो नेति । (वि. स. निर्व.)

'प्रोक्तो ह्यनीशो यश्चासौ तदायत्ताखिलक्रियः' । (वि. स. नि.)

**अनीशः** — 1. नियन्तृरहितः– परमात्मा । नास्ति ईशः यस्येति । 2. परतन्त्रः । ईशभिन्नः जीवः ।

'आत्माप्यनीशः सुखदुःखयोः' (श्वे. उ. 1–2) जीवस्य स्वातन्त्र्ये सुखभोक्तृत्वमेव स्यात् ॥

**अनीशा** — ईशभिन्ना प्रकृतिः ।

'अनीशया शोचति मुह्यमानः' (मुं. उ. 3-1–1) भोग्यभूता प्रकृतिः ॥ (रं. भा.)

**अनीश्वरः** — 1. असमर्थः ।

'पारं परं वरद गन्तुमनीश्वराणाम्' (व. पं. 31)

[संसारसागरस्य परं पारं गन्तुं] योगनिवर्तकदेहेन्द्रियपाटवरूपशक्तिरहितः । अथवा 'पारतीर-समाप्तौ' इति धातेर्निष्पन्नः पारशब्दः समाप्त्यर्थः । अत्यन्तदूरस्थितां प्रारब्धकार्यदेहस्य चरमदिवसभाविनीं भक्तियोगस्य समाप्तिं प्राप्तुमसमर्थः । (व्या.) अत्र समर्थशब्दपर्यायः ईश्वरशब्दः ।

2. सर्वेश्वरः ।

नास्ति अन्यः ईश्वरः यस्मात् ॥ (वि. को.)

**अनीहः** — 1. निष्कामः।

[ईहाशब्दः इच्छापरः]

2. भक्तिकार्यपरिचर्यारहितः।

'निस्नेहोऽप्यनीहोऽपि' (श्री. स्त. 5) ईह–चेष्टायामिति हि धातुः ॥ (व्या.)

**अनुकम्पा** — करुणा (परमात्मनिष्ठा)।

या दुःखापाचिकीर्षा परहितमनसः सैव तस्यानुकम्पा।' (अ. सा. 238)

परानुग्रहः करुणा, सा च स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षा। तस्याश्च प्रयोजनं सत्वोत्तरदेहप्रदानादिमुखेन परमपुरुषकैङ्कर्यसाम्राज्यलाभप्रदानपर्यन्तस्सर्वोऽपि उपकारविशेषः ॥ (चिं. म.)

**अनुकरणम्** — सदृशक्रियादिकरणम्।

तस्य गुणक्रियावयवादिभिः सदृशीकरणम् अर्थनिष्ठम्। यथा राजानमनुकरोतीत्यादौ। शब्दनिष्ठं अनुकरणत्वं च शब्दमात्रतात्पर्यकोच्चारणविषयकत्वम्। यथा इतिशब्दसमभिव्याहारे 'गौः इत्याह' इत्यादौ। इदं चानुकरणं पदार्थविपर्यासकृद्भवति। अर्थबोधकं न भवतीत्यर्थः ॥ (न्या. को.)

**अनुकरणं हि शिष्टस्य साधु भवति** — शिष्टानुकरणं श्रेयः।

"यथा लोके य एवामसौ ददाति, य एवमसौ यजते, य एवमसावधीते इति तस्य अनुकुर्वन् दद्याच्च, यजेच्च, अधीते च सोऽभ्युदयेन युज्यते' इति 'ऋलृक्' सूत्रमहाभाष्ये सूपपादितम्। (मी. को.)

अनेन रामाद्यनुकरणं श्रेयः, रावणाद्यनुकरणन्तु सर्वथा त्याज्यमिति बोधितम ॥

**अनुकल्पः** — 1. गौणः।

'मुख्यः स्यात् प्रथमः कल्पः अनुकल्पस्ततोऽधमः' इत्यमरः।

हीनकल्पः इति यावत्। प्रादिसमासः।

2. प्रतिनिधिः। यथा यवाद्यभावे गोधूमाः, मध्वाद्यभावे गुडादयः ॥

**अनुकूलः** — (स. ना. 344)

निसर्गमहत्त्वेन विस्मयमदमानवर्जनादनुद्वेलः। कूलमनुवर्तमान इति वा। भक्तभव्य इति वा। (वि. स. भा.)

स्वभावतो महत्त्वेऽपि मदविस्मयवर्जनात्।
भक्तैकप्रवणो नित्यं अनुकूल इति स्मृतः॥ (वि. स. नि.)

**अनुकूलत्वम्** — 1. सुखस्वरूपत्वम्।

न च प्रकाशमात्रस्य आनन्दता सम्भवति। सुखस्वरूपता हि आनन्दस्वरूपता। सुखस्वरूपत्वं च आत्मनोऽनुकूलत्वम्। (अनुकूलत्वं नाम सप्रतियोगिको धर्मविशेषः प्रकाशवत्) प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो भवेत् इति प्रकाशमात्रात्मवादिनः कथंचिदप्यानन्दस्वरूपता दुरुपपादा। (श्री. भा. 4-4-1)

2. स्वत इष्टत्वम्। तच्चानिष्टनिवृत्तिरूपतया इष्टसाधनतया च विनापि इष्टत्वम्। (श्रु. प्र. 1-3-7)

3. आनन्दरूपत्वम्। उभयलिङ्ग-उभयविभूतिविशिष्टं ईश्वरस्वरूपं सपरिवारं ईश्वरस्येव नित्यानां मुक्तानामपि अनुकूलत्वलक्षणानन्दत्वेनैव भासते इति सर्वं निरतिशयानन्दमित्युच्यते। (द. उ. 240)

1. प्रयोजकत्वम् – यथा फलानुकूलव्यापार इत्यादौ।

2. इच्छाविषयत्वम् – यथा निरुपाध्यनुकूलवेद्यं सुखमित्यादौ॥

(न्या. को.)

**अनुकूलत्वप्रतिकूलत्वादिना वस्तुनो भानम्** — एकमेव वस्तु अनुकूलतया प्रतिकूलतया च भासते।

कर्मस्वभावानुगुण्येन परमपुरुषसंकल्पादेकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति। वस्तुस्वरूपप्रयुक्ते तु तादृूप्ये सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वा स्यात्। न चैवं दृश्यते। तथा चोक्तम् –

नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम।
वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च॥

कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः ।
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ॥
तदेव कोपाय यतः प्रसादाय च जायते ।
तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् ॥ इति ।

(श्री. भा. 3-2-12)

बद्धानान्तु संसारदशायां कालदेशदशाभेदेन प्रतिकूलत्वानुकूलत्वादिना तत्तद्वस्तु भासते, सोऽयमवभासः न वस्तुस्वभावाधीनः; अपि तु कर्मलक्षणभगवत्सङ्कल्पाधीनः, कर्मफलप्रदानप्रकारः । कर्मरूपप्रतिबन्धकनिवृत्तौ स्वाभाविकं निरतिशयमानुकूल्यं आविर्भवति । सर्वेश्वरस्य इच्छावैचित्र्येण एकमेव वस्तु सहजागन्तुकप्रक्रियया उपादेयं त्याज्यं च भवति ॥ (द. उ. 241)

**अनुकूलत्वादीनाँ भानम्** — आत्मगतसुखत्व-स्वस्मैभासमानस्वरूपप्रत्यक्त्व-एकत्वानां भानम् ।

'सुखमहमस्वाप्सम्' इति परामर्शे सुखमित्यनेन (सुषुप्तौ) तदानीमपि अहमर्थस्यैवात्मनः अनुकूलतया भानमनुसंहितं भवति । अहमित्यनेन स्वस्मैभासमानस्वरूपं प्रत्यक्त्वं चानुसंहितं भवति । यथा 'मन्दमगच्छं' 'मधुरमगायं' इति परामर्शेन पूर्वं गमनगानाभ्यां सह तदानीन्तनमान्द्यं माधुर्यं चानुसंहितं भवति, [तथैव द्वित्वादीनामभानात् एकत्वमपि] तद्वत् ।

अत्र स्वस्मै स्वयमनुकूलमित्यानुकूल्यप्रतियोगित्वाभिप्रायेण सुखित्वमिति, स्वस्मै भासत इति, भासनप्रतिसम्बन्धित्वरूपप्रत्यक्त्वाभिप्रायेण च भाष्ये— 'अनेनैव परामर्शेन तदानीमपि अहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायत' इत्युक्तम् ; न तु धर्मभूतज्ञानस्फुरणात् । 'तत्तु विषयप्रकाशनवेलायां ज्ञातुः आत्मनस्तथैव; न सर्वेषां सर्वथा तथैव' इति भाष्यस्वारस्यविरुद्धम् । 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इति सूत्रस्वारस्यविरुद्धं । अस्मरणनियमाद्युपपत्तिविरुद्धं च । संसारदशायां मनोव्यापारविरहेऽपि ज्ञानस्यात्मविषयत्वं, तच्चेन्द्रियद्वारेण व्यवस्थितमिति भाष्यस्वारस्यविरुद्धञ्च । अन्यथैषां सूत्रभाष्यवचसां सङ्कोचः स्यात् । स च सङ्कोचकाभावादनुपपन्नः । तस्मात् तदानीमात्मा प्रत्यक्त्वेनानुकूलत्वेनाऽनुसंहित इति परामर्शफलितार्थः । (श्रु. प्र. 1-167)

अतः स्वापकाले सर्वथा धर्मभूतज्ञानस्यास्फुरणेपि धर्मिस्वरूपगतानुकूलत्व-प्रत्यक्त्व-एकत्वानां भानं सिद्धम् । तच्च धर्मिस्वरूपभास्यं वा स्वयंप्रकाशत्वात्सिद्धमिति वेति त्वन्यदेतत् अन्यत्र निरूपितञ्च ॥

**अनुकृतेस्तस्य च** — (ब्र. सू. 1-3-21) (दहराधिकरणे नवमं सूत्रम्) ।

अनुकृतिः–अनुकारः, तस्य परमात्मनोऽनुकाराद्धि जीवस्याविर्भूतस्वरूपस्य अपहतपाप्मत्वादिगुणकत्वम् । अतोऽनुकर्तुः जीवादनुकार्यः परब्रह्मभूतो दहराकाशोऽर्थान्तरभूत एव । तदनुकारः-तत्साम्यं । श्रूयते हि –

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' इति ।

तथाभूतस्य तथाभावाभिनयशङ्काप्रतिक्षेपार्थमाह – इह तद्वत् वृत्तिः अनुकारो विवक्षितः इति । तेन तन्मूलभूतं गुणसाम्यमपि लक्षितं भवति । वेदान्तसारे तु 'स्वच्छन्दवृत्तिरूपस्तदनुकारः श्रूयत' इत्युक्तिः गुणसाम्योपलक्षणार्था ।

परमं साम्यमित्यादिश्रुत्या साम्यानुकारतः ।
जीवोऽनुकर्ता दहरस्त्वनुकार्यः परः पुमान् ॥ (ब्र. प. मा. 86)

**अनुक्तमन्यतो ग्राह्यम्** — न्यायविशेषोऽयम् ।

[प्रकृतप्रकरणे अनुक्तम्] यथा– अन्तर्यामिब्राह्मणे माध्यन्दिनकाण्वपाठभेदः वर्तते । तत्र माध्यन्दिनपाठे अधिलोकाद्यधिकपर्यायश्रवणेन काण्वमाध्यन्दिनयोः विषयभेदशङ्कायां उभयसाधारणबहुपर्यायप्रदर्शनार्थेनाधिदैवशब्देनोभयत्रैकविषयत्वप्रत्यभिज्ञानार्थम्, न्यूनपर्यायेऽपि पाठे 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेनाधिकपर्यायपाठार्थविवक्षाज्ञापनार्थं चोभयपदोपादानम् । (अधिदैवाधिलोकेति)

तथा तैत्तिरीयोपनिषदि दहरविद्यायां उपास्यवस्तुनः अपहतपाप्मत्वादिगुणाः नोक्ताः । तथापि छान्दोग्ये दहरविद्यायां गुणाष्टकमुक्तमिति विद्यैक्यादत्रानुक्तमप्यनुसन्धेयमेव ॥

**अनुगमः** — 1. पूर्ववाक्यप्रवृत्तस्योत्तरवाक्यसम्बन्धः ।

'प्राणस्तथानुगमात्' (ब्र. सू. 1-1-29)

स्ववाक्यानभिव्यक्तस्य सिद्धान्तहेतोः उत्तरवाक्याभिव्यक्ततया अनुगमादित्युक्तम् ।
(श्र. प्र.)

2. अभिमतसर्वसङ्ग्रहणम् । प्रवृत्तिनिमित्तादि – यथा सर्वेषां घटानां घटत्वेन अनुगमः । (न्या. को.)

**अनुग्रहः** — अनुग्रहकर्ता (परमात्मा) ।

'त्वं सन्निधानं त्वमनुग्रहश्च' (भाग. 10-2-27) इष्टप्रदानेनानुगृह्णातीति अनुग्रहः । स्थितिकारणमित्यर्थः । (भाग. वी.) अनुग्रहशब्दस्य लोके भावार्थकत्वेन प्रसिद्धावपि अत्र कर्तरिप्रत्ययः ।

1. अभीष्टसम्पादनेच्छारूपः प्रसादः । 2. अनिष्टनिवारणपूर्वकेष्टसाधनेच्छारूपाभ्युपपत्तिः यथा – निग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयत इत्यादौ ॥ (न्या. को.)

**अनुग्राहकत्वम्** — 1. अनुग्रहकर्तृत्वम् (परमात्मधर्मः) ।

'तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः' (क. उ. 2-20) इति हि श्रूयते । धातुः प्रसादात् वीतशोको भवतीति ह्यन्वयः ।

प्रसीदत्यच्युतः तस्मिन् प्रसन्ने क्लेशसंक्षयः'

इति स्मृतेः । (रं. भा.) [अनेन चेतनविषये परमात्मनःअनुग्रहः प्रदर्शितः ।] तथा 'तस्य भासा सर्वमिदं विभाति', 'यस्यादित्यो भामुपयुज्य भाति' इत्यादि श्रुतिश्चानुग्राहकत्वे प्रमाणम् । उत्पन्नस्यापि तेजसः स्वकार्यकरणसामर्थ्यस्य तत्सम्बन्धापेक्षत्वात् तत् अनुग्राहकम् ; यथा चाक्षुषरश्मेः चन्द्रातपादिः । यथा शुष्ककण्ठस्य वाग्व्यवहारे पानीयास्वादनम् । यथा मनसो धारणग्रहणस्मरणादिपाटवे सम्यगाहारः । (श्रु. प्र. 2-86) अनेन च अचेतनविषयकानुग्रहोऽपि प्रत्यपादि ॥

2. अनुग्रहश्च तत्तदुपादाननिष्ठः तत्तत्कार्यानुकूलशक्तिविशेषः । तथा च अहङ्कारत्वावस्थाऽव्यवहितोत्तरक्षणे सात्त्विकाहङ्कारे तामसाहङ्कारे च राजसाहङ्कारात् तत्तत्कार्यानुकूलशक्तिविशेषोत्पत्तिः ततः तत्कार्योत्पत्तिः इति बोध्यम् । (र. पे. 67)

**अनुग्राह्यता** — प्रसादपात्रता ।

1. अनुग्रहीतुं योग्यः । तस्य भावः । अनुग्रहपात्रता । 2. उपपाद्यता । प्रमाणस्य तर्केणानुग्राह्यता उपपादनीयता ॥ (सं. अ.)

**अनुचरः** — शेषित्वानुगुणकैङ्कर्ययुक्तः ।

'कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते' (रा. अ. 31-24) स्वरूपानुरूप-शेषवृत्तियुक्तः । (गो. रा.)

**अनुच्छित्तिधर्मा** — नित्यधर्मभूतज्ञानवान् ।

'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' (बृ. उ. 6-5-14) अयमात्मा स्वयमविनाशी । (नित्यधर्मभूतज्ञानवांश्च) न विद्यते उच्छित्तिः यस्य सोऽनुच्छित्तिः, अविनाशीति यावत् । अनुच्छित्तिः धर्मो यस्य सोऽनुच्छित्तिधर्मा । एवं बहुव्रीहि-गर्भो बहुव्रीहिः । तस्य ज्ञानलक्षणधर्मोऽप्यविनाशीत्यर्थः । न तु उच्छित्तेरभावोऽनु-च्छित्तिः सः धर्मो यस्येति बहुव्रीहिः । अविनाशीत्यनेन पौनरुक्त्यप्रसङ्गात् । (रं. भा.)

आहुश्च यामुनाचार्याः –

तदेवं चित्स्वभावस्य पुंसः स्वाभाविकी चितिः ।
तत्तत्पदार्थसंसर्गात् तत्तद्वित्तित्वमश्नुते ॥ (आत्मसिद्धिः 23)

**अनुच्छिष्टम्** — उच्छिष्टभिन्नम् ।

'नक्ताहृतमनुच्छिष्टम्' (वि. पु. 3-6-10) अभिनवोदकम् । अथवा अवत्साया: पयः । (वि. चि.)

**अनुज्ञा** — 1. अभ्युपगमः ।

2. कैङ्कर्यप्रभेदः ।

'आज्ञानुज्ञाविभागेन द्विधा शास्त्रीयपद्धतिः' (सं. वि. 133)

1. या निवारणाभावव्यञ्जिका पूजा इच्छा वा सा । 2. निषेधाभाव-व्यञ्जिकेच्छा । 3. कर्तुरिष्टत्वे सति वक्त्रनुमतत्त्वम् । यथा पत्नी पचत्वित्यादौ लोडर्थोऽनुज्ञा ॥ (न्या. को.)

**अनुज्ञाकैङ्कर्यम्** — अकरणे प्रत्यवायरहितः भगवत्प्रीतिजनकव्यापारः ।

अनुज्ञामात्रसिद्धेषु कैङ्कर्येषु विचक्षणैः ।
अकृतौ तत्फलालाभो न तु दोष इतीरितम् ॥ (सं. वि. 132)

'स्वार्हानुज्ञातसेवाविधिषु च शकने' (न्या. विं. 20) अकरणे प्रत्यवायरहित-मनुज्ञाकैङ्कर्यम् । (व्या.)

अनुज्ञया प्रवृत्तेऽपि क्रमकोपादिसम्भवे ।
आज्ञातिक्रमदोषस्स्यात् नियमोऽतो दुरत्ययः ॥ (स. वि. 131)

इत्याद्युक्तरीत्या, अकरणे प्रत्यवायाभावेऽपि, स्वेच्छया कैङ्कर्यबुद्ध्या क्रियमाणेष्वपि, आज्ञाप्रवृत्तिष्विव नियमपरिपालनमावश्यकमेव । अन्यथा दोष एवेति बोध्यम् । पणबन्धराहित्येन, स्वेच्छाकारितेष्वपि क्रीडाव्यापारेषु तत्तन्नियमपरिपालनं दरीदृश्यते लोकेऽपि ॥

**अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्** — (ब्र. सू. 2-3-47) (अंशाधिकरणे षष्ठं सूत्रम्)

पूर्वं जीवस्य ब्रह्मांशत्वं साधितम् । एवं सति केषाञ्चिदेव वेदाध्ययनाधिकारः, केषाञ्चित्तु नेत्यादिवैषम्यं कथमिति आशङ्कायां – ब्राह्मणादिशुच्यशुचिदेहसम्बन्धात् अनुज्ञापरिहारौ उपपद्येते ज्योतिरादिवत् । ज्योतिः – अग्निः, यथा श्रोत्रियागारात् अग्निराह्रियते, श्मशानादेस्तु परिह्रियते, यथा चान्नादि श्रोत्रियादेरनुज्ञायते, अभिशस्तादेश्च परिह्रियते, तद्वत् ।

एवञ्च सर्वेषां जीवानां ब्रह्मांशत्वसाम्येऽपि, अनुज्ञापरिहारादिकमनुपपन्नमिति शङ्का पर्यहारि ।

ब्रह्मांशत्वेऽपि जीवानामनुज्ञापरिहारयोः ।
उपपत्तिर्देहभेदात् अग्न्यादेरिव युज्यते ॥ (ब्र. प. मा. 263)

**अनुतापः** — पश्चात्तापः ।

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम ॥

इत्यनुतापस्यापि प्रपत्त्यङ्गत्वमुक्तम ॥ (श्रीरं. स्त. उ. व्या. 89)

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥

इत्युक्तेः प्रायश्चित्तेषु परत्वेन परिगणितस्य कृष्णानुस्मरणरूपोपासनस्य सर्वप्रायश्चित्तरूपब्रह्मविद्यात्वं स्वीकृतम् । तथैव ब्रह्मविद्याविशेषप्रपत्तेः प्रत्यप्यङ्गताऽनुतापस्य युज्यते एतन्मूलत्वात् प्रायश्चित्तस्य । अत एवानुगृहीतमाचार्यवर्यैः –

अनुतापादुपरमात् प्रायश्चित्तोन्मुखत्वतः ।
तत्पूरणाच्चापराधाः सर्वे नश्यन्ति पादशः ॥ इति –

**अनुत्तमः** — (स. ना. 81)

उत्तमो नास्ति यस्मात् सः । (वि. स. भा.) निरभ्यधिकतया नास्त्युत्तमः अस्मादिति । (वि. स. निर्व.)

**अनुत्तमः** — स्वावधिकोत्तमरहितः – अप्राकृतलोकः ।

'अनुत्तमेषूत्तमेषु लोकेषु' । (छां. उ. 3-13-7)

**अनुत्तमगतिः** — परमप्राप्यम् – ब्रह्म ।

'मामेवानुत्तमां गतिम्' (गी. 7–18) गतिशब्दोऽत्र गन्तव्यपरः । (ता. चं.) गम्यते प्राप्यते इति व्युत्पत्तिः ॥

**अनुत्थितिः** — अनन्तरस्थितिः ।

प्रमाणापेक्षया पश्चात् स्थितिः ; अप्रामाण्यमिति यावत् । केचित्तु 'व्यर्थप्रवृत्त्यनुसरणमित्यर्थ' इत्याहुः ॥ (वि. को.)

**अनुदर्शनम्** — अनुसन्धानम् ।

'जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।' (गी. 13–8)

सशरीरत्वे जन्ममृत्युजराव्याधिदुःखरूपस्य दोषस्य अवर्जनीयत्वानुसन्धानं ॥ (गी. भा.)

**अनुद्धर्षः** — अतिसन्तोषाभावः ।

'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवात् निर्वचनाच्च' . . . . 'तद्वि(अवसादवि)पर्ययजा तुष्टिरुद्धर्षः' इति । तद्विपर्ययो अनुद्धर्षः । अतिसन्तोषश्च विरोधीत्यर्थः । निर्वचनमपि 'शान्तो दान्तः' इति । (श्री. भा. 1-65)

देशकालसादूगुण्यप्रियवस्त्वाद्यनुस्मृतिजा तुष्टिरुद्धर्षः, तद्विपर्ययोऽनुद्धर्षः । न केवलं असन्तोष एव विरोधी, अतिसन्तोषश्च विरोधी इति ॥ (श्रु. प्र.)

**अनुद्भूतत्वम्** — प्रत्यक्षत्वप्रयोजकधर्मविशेषः उद्भूतत्वम्, तद्भिन्नम् ॥

**अनुद्वेगकरम्** — भयादेरहेतुभूतम् ।

'अनुद्वेगकरं वाक्यम्' (गी. 17-15) पुरुषमर्मोद्घाटनापरिवादादिराहित्यादनुद्वेगकरत्वम् ॥ (ता. चं.)

**अनुध्यानम्** — 1. दिव्यात्मस्वरूपानुसंधानरूपः समाधिः (ध्यानानन्तरकालिकः) ।

'प्रत्यक्षतापन्नानुध्यानरूपभक्त्येकलभ्यः' (वे. सं. 228) स हि ध्यानसाध्यः ।

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ॥

इति वचनात् । उपेयविरोधिनिरासकत्वं समाधेरेव । ध्यानमपि समाधिविरोधिनिरासकम्

यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥

'मनसा ध्याननिष्पाद्यम्' इत्युक्तेः;

तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैष्षड्भिर्निष्पाद्यते नृप ॥' इति ।
'सेवेत योगी निष्कामो योग्यतां स्वमनोनयन् ।'

'यमनियमविधूतकल्मषाणाम्' 'सदा तद्भावभावितः' इति धारणापर्यन्तानां अङ्गानां ध्याननिष्पादकत्ववत् ध्यानस्य समाधिनिष्पादकत्वमेवेति समाधेरेवाङ्गित्वम् । ध्यानस्यैव प्राधान्यं यत्रोच्यते तत्र ध्यानशब्देन समाधिपर्यन्तध्यानं विवक्षितम् । समाधिनिष्ठेन व्युत्थानकाले क्रियमाणमर्चनादिकं अङ्गिकोटिनिविष्टम्,

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु मामेवैष्यसि'

इत्युक्त्या [समाधेः] प्राप्तेरव्यवहितोपायत्वप्रतीतेः। तेनानुष्ठीयमानो वर्णाश्रमादिधर्मस्त्वङ्गमेव ॥ (वे. सं. ता. दी. 229)

सांख्यमतनिराकरणपरेण कर्त्रधिकरणस्थेन 'समाध्यभावाच्च' (ब्र. सू. 2-3-38) इति सूत्रेण सिद्धान्ते एव समाधेरुपपन्नता असूचि भगवता बादरायणेन।

2. सङ्कल्पः। (वि. को.)

**अनुपपत्तिः** — उपपत्त्यभावः।

प्रमाणानुगुण्याभावः, परित्यागहेतुः। यथा धर्मभूतज्ञानस्य गुणत्वे संकोचविकासयोः अनुपपत्त्या गुणत्वत्यागः॥

**अनुपपत्तेस्तु न शारीरः** — (ब्र. सू. 1-2-3) (सर्वत्रप्रसिद्ध्यधिकरणे तृतीयं सूत्रम्)

मनोमयत्वप्राणशरीरत्वसत्यसंङ्कल्पत्वादिगुणानां अनन्तदुःखमिश्रपरिमितसुखलवभागिनि अज्ञे कर्मवशे शारीरे प्रत्यगात्मनि अनुपपत्तेश्च अयं न शारीरः जीवः, अपितु परमेव ब्रह्म।

अनेन शाण्डिल्यविद्याप्रकरणे शारीरपरिग्रहशङ्काया नावकाशः। अत्र शारीरपदेन तत्तच्छरीरप्रतिसम्बन्धिसुखदुःखभोक्ता जीवः विवक्षितः।

मनोमयो न जीवोऽत्र स्रष्टृत्वादेरसम्भवात्।
सङ्कल्पेनैव सर्वत्र बहुस्यामिति कीर्तनात्॥ (ब्र. प. मा. 35)

**अनुपपन्नम्** — उपपत्तिरहितं।

तर्कपराहतम्॥ (श्रु. प्र. 1-1-13)

**अनुपलब्धिः** — 1. उपलम्भाभावः।

या यत्र प्रतियोगिसत्त्वव्यतिरेकप्रयुक्तानुपलब्धिः सा तत्राभावग्राहिका, अस्ति च एषा घटादौ मनस्त्वाभावग्रहे, वायौ रूपाभावग्रहे च। (वे. मं. दी. 194) सिद्धान्ते तु अभावस्य अतिरिक्तस्य अनङ्गीकारात् अनुपलब्धेः पृथक्प्रमाणत्वं नास्ति।

यत्तु प्रातर्गजाद्यभावप्रतिपत्त्यर्थं प्रमाणान्तरं अपेक्ष्यते, तत्रापि प्रातर्गजाद्यभावः स्मर्तव्यस्य स्मरणाभावादनुमीयते। इदमिहानुमानम् 'विप्रतिपन्नः प्रदेशः प्रातर्गजवत्तया मया अननुभूतः, स्मर्तव्यत्वे सति तद्वत्तया इदानीं अस्मर्यमाणत्वात्' इति। तथा च स्मरणाभावात् अनुभवाभावाच्च विषयाभावः इति प्रातर्गजाद्यभावसिद्ध्यर्थं न प्रमाणान्तरं अन्वेषणीयम् ॥ (स. सि. 354)

2, ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम्।

(न्या. को.)

3. घटोपलब्धौ घटाभावाग्रहात् प्रतियोग्यनुपलब्धिः अभावप्रत्यक्षे, इन्द्रियस्यैव सहकारिणी। न तु प्रमाणान्तरम्। इन्द्रियेणैवाभावप्रत्यक्षोपपत्तेः। अन्यथा अभावप्रत्यक्षस्येन्द्रियजन्यत्वानङ्गीकारे इह घटो नास्तीति निर्णयानन्तरं 'इह घटाभावं साक्षात्करोमि' इति साक्षात्कारविषयकप्रतीत्यनुपपत्तेः। तथा चानुपलब्धिसहकृतेन्द्रियग्राह्यत्वात् अनुपलब्धिग्राह्य इत्युपचर्यते।

अनुपलब्धिः द्विविधा। अज्ञाता ज्ञाता च। तत्राज्ञातानुपलब्धिस्थले इन्द्रियेणैवाभावग्रहः। तावत्पर्यन्तमिन्द्रियव्यापारस्य विद्यमानत्वात्।

अभावग्राहकं मानान्तरम् इति (भाट्टानाम्) ॥ (मी. को.)

**अनुपलब्धिकारणानि** — अनुपलम्भहेतवः।

विद्यमानानामपि अनुपलम्भे हेतूनाह —

सौक्ष्म्यात् तुल्याभिघारात् सहकृदपगमात् छादकादान्यपर्यात्
अत्यासत्त्यातिदूरात् बलवदभिभवानुद्भवाक्षोपघातैः ॥
नेक्ष्यन्ते वर्तमानान्यपि . . . . . . (अ. सा. 123)

यदि देवतानां विग्रहादिकमस्ति तर्हि किमर्थमस्माभिः नोपलभ्यते इत्याशङ्क्य अनुपलब्धिकारणानां बहुत्वमाचष्टे-सौक्ष्म्यात्-परमाण्वादीनां अनुपलब्धिः, तुल्याभिघारात् —तैलसिक्तस्य तैलबिन्दोः, सहकृदपगमात्—सहकार्यभावात् अन्धकारवर्तिनो घटादेः, छादकात्—पटावारितानां पदार्थानाम्, आन्यपर्यात्—व्यासक्तहृदयस्य अग्रतः स्थितानां पदार्थानाम्, अत्यासत्त्या—स्वनयनगतस्य, अतिदूरात्—देशान्तरगतस्य, बलवदभिभवात् —मध्यन्दिनोल्काप्रकाशस्य, अनुद्भवात्—चाक्षुषकिरणसंघातरूपादेः, अक्षोपघातात्—

रुग्णनयनस्य पुरोवस्थितस्य वस्तुनः, अनुपलब्धिः इति सर्वत्रान्वयः। एतेभ्यः सर्वेभ्यः हेतुभ्यः पुरतो वर्तमानान्यपि नोपलभ्यन्ते। . . . किञ्च शास्त्रेषु जन्मना तपसा योगेन मन्त्रौषधादिभिश्च माहात्म्यात् सिद्धिविशेषाः प्रख्याताः। जन्मतः पिशाचादीनां, तपसो महर्षीणां, योगतो योगिनामन्तर्धिशक्तिरस्त्येव। मन्त्रौषधादिभ्यस्तच्च प्रसिद्धमेव। तेन देवादीनामन्तर्धानशक्तेः अनुपलम्भः इति सुष्ठूक्तम् ॥ (चिं. म.)

**अनुपलब्धिसमः** — (जातिः) दोषविशेषः।

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ (न्या. को.)

**अनुपश्यति** — 1. अनुभवति।

'अत्रैव देवः स्वप्ने महिमानमनुभवति। यद्दृष्टम् दृष्टमनुपश्यति' (प्र.उ. 4-5) जागरे प्राक् यद्दृष्टं तमेवाऽर्थं अनुपश्यति। अनु–पश्चात् पश्यति–अनुभवति। दृष्टं दृष्टं–भूयोदृष्टमित्यर्थः। (रं. भा.)

2. 'यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति' (ई. उ. 6)

अनुस्यूतं विशदं निध्यायति। (वे. भा.) अनुस्यूतं निदिध्यासति। (कू. भा.) विशदतमध्यानस्यैव दर्शनसमानाकारत्वात् अनुपश्यतीत्युक्तम् ॥

**अनुपसंहारी** — (हेत्वाभासः)

1. केवलान्वयिधर्मावच्छिन्नपक्षको हेतुः। 2. वस्तुमात्रपक्षको हेतुः। 3. अन्वयव्यतिरेकदृष्टान्तरहितो हेतुः। 4. केवलान्वयिधर्मसाध्यको हेतुः। इदं च नवीनमतम् ॥ (न्या. को.) सिद्धान्ते तु अयं नाङ्गीकृतः ॥

**अनुपसंहारित्वम्** — (हेतुदोषः)

विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वम् ॥ (न्या. को.)

**अनुपातकम्** — उपपातकम्।

महापातकसदृशं तदपेक्षया न्यूनं पापम्। (सं. अ.) अनुसरणार्थः अत्र न-विवक्षितः ॥

**अनुप्रवेशः** — परमात्मनः चेतनाचेतनेषु स्थितिविशेषः ।

ननु अचिन्मात्रेऽनुप्रवेशः उपपद्यते; 'तिस्रो देवताः अनुप्रविश्य' इति हि श्रूयते इति चेन्न; समानप्रकरणे, 'सोऽकामयत बहुस्यां प्रजायेय' 'यदिदं किञ्च तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवत् . . . . . 'विज्ञानं चाविज्ञानञ्च सत्यञ्चानृतञ्च सत्यमभवत्' इत्यचेतनवत् जीवेऽप्यनुप्रवेशश्रवणात् ।

परे तु एवमाहुः। जीवस्यानुप्रवेशकर्तृत्वं, नामरूपव्याकरणकर्तृत्वं तु परमेश्वरस्य इति । एतन्मते श्रुतिविरोधं प्रदर्शयति 'तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवत्' इति नामरूपव्याकरणसमभिव्याहृतानुप्रवेशस्य परमात्मकर्तृकत्वावगमात् । अनुप्रविश्य नामरूपे व्याकरवाणीति ल्यबन्तेनानुप्रवेशनामरूपव्याकरणयोः समानकर्तृकत्वं प्रतिपाद्यते । तादृशसमानकर्तृकत्वं च परमते न घटते । जीवस्यापीश्वराद्वस्तुतोऽनन्यत्वेन युक्तं समानकर्तृकत्वमिति चेन्न, जीवेश्वरयोरुभयोः ब्रह्मणि कल्पितत्वात् कुलालकुविन्दकर्तृकयोः घटपटयोरिव तदनुपपत्तेः । अधिष्ठानैक्यात्तदुपपत्तिरिति चेन्न, स्वाप्नकुलालकुविन्दयोः सन्मात्रकल्पितत्वेऽपि तन्निमित्तघटपटयोरेककर्तृकत्वाभावात् ।

(श्रु. प्र. 2-4-18)

अचिद्वस्तूनामिव चिद्वस्तूनामपि परमात्मशरीरत्वात् शरीरवाचिशब्दानां शरीरिपर्यन्तत्वात् 'सर्वं खल्विदं ब्रह्म' 'अयमात्मा ब्रह्म' 'तत्त्वमसि' इत्यादिसमानाधिकरणव्यवहारोपपत्तिः । अत एव 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यनुप्रवेशपूर्वकनामरूपव्याकरणं परमात्मनः उपपद्यते । जीवेनात्मनेत्यत्र जीवशरीरकेण मया इत्यर्थात् । अन्यथा श्रुत्यनुरोधात् जीवात्मन एवानुप्रवेशकर्तृत्वस्वीकारे 'तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्' इति परमात्मनोऽनुप्रवेशकर्तृत्वप्रतिपादकश्रुत्यन्तरविरोधापत्तिः । (वे. वा. 17-12)

अनुप्रवेशो हि अन्तस्संयोगावच्छिन्नक्रियारूपो गतिविशेषः । गतिश्च विभुत्वाभावसाधकतया सूत्रकारेणैव निर्दिष्टा 'उत्क्रान्तिगत्यागतीनाम्' इति । तस्मादणोर्जीवस्यैवानुप्रवेशो युक्तः, न विभोः परमात्मनः इति चेत्; उच्यते । अनुप्रवेशस्य गतिविशेषरूपत्वेऽपि तस्य जीवनिष्ठत्वात्, परमात्मकृतिजन्यत्वेन तत्कर्तृकत्वाच्च नानुपपत्तिः । यथा हि नैयायिकादिनये 'देवदत्तः ग्रामं गच्छति' इत्यत्र जीवस्य विभुत्वेऽपि शरीरनिष्ठा या संयोगानुकूला क्रिया तदनुकूलकृतिमत्त्वमेव देवदत्तशरीरान्-

च्छिन्नात्मनि प्रतीयते, न तु गमनादिरूपक्रियावत्त्वम् । सर्वत्र शरीरनिष्ठक्रियानुकूलकृते-रेवात्मनि भानाङ्गीकारात् । तथा 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्रानुप्रवेश-रूपधात्वर्थोत्तरकालीनत्वस्य ल्यबन्तार्थस्य स्वप्रकृत्यर्थसमानकर्तृकत्वविशिष्टाश्रयतासम्बन्धेन नामरूपव्याकरणेऽन्वयाङ्गीकारात्, परमात्मनि जीवस्वरूपशरीरनिष्ठानुप्रवेशानुकूलकृति-मत्त्वं भासते, न त्वनुप्रवेशवत्त्वमिति नानुपपत्तिः । (वे. वा. 17-16)

ननु सर्वदा सर्वव्याप्तस्य ब्रह्मणः कोऽसौ सृष्टिकालानुप्रवेशः इति चेदुच्यते – गोजठरगतवत्से गोत्वादिवत् सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलप्रतीत्यर्हस्थिति विशेष एवानुप्रवेशः । अनेन 'सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां' इति मन्त्रोक्तमनन्तस्य ब्रह्मणः हृदयगुहानिहितत्वमुपपादितं भवति ।

(तै. आ. 30. रं. भा.)

अन्तस्संयोगावच्छिन्नक्रियारूपः गतिविशेषः ॥ (वि. को.)

**अनुबन्धः** — 1. दुःखम् ।

'अनुबन्धं क्षयं हिंसां' (गी. 18-25) कृते कर्मण्यनुबध्यमानं दुःखम् । (गी. भा.) क्षयशब्देन तादात्विकार्थव्ययदोषविवक्षणादुपसर्गशक्त्याचानुबन्धशब्दः एतत्सम्बन्धितया पश्चाद्भाविदुःखपर इत्याह कृते कर्मणीति । (ता. चं.) 2. विपाकः । 'यदग्रे चानुबन्धे च सुखम्' । (गी. 18-39) अनुबध्यते इत्यनुबन्धः विपाकः ।

(ता. चं.)

1. अनुचरः । 2. अनुबध्नातीत्यनुबन्धः दोषोत्पादः । 'दोषोत्पादोऽनुबन्धः स्यात्' इत्यमरः । 3. पश्चाद्भावि दुःखम् । 4. हेतुः फलञ्च । (वि. को.) आरम्भ इति केचिदाहुः । (न्या. को.)

**अनुबन्धाः** — कर्मैकदेशधात्वर्थादयः ।

1. विधेयं साङ्गं प्रधानं कर्म, अनुबन्धाः तदेकदेशधात्वर्थादयः ।

(श्रु. प्र. 3-3-56)

यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः ॥ (वि. को.)

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम्** — (ब्र. सू. 3-3-48)
(पूर्वविकल्पाधिकरणे पञ्चमं सूत्रम्)

प्रहस्तोत्रशस्त्रेभ्यः यज्ञानुबन्धेभ्यः इष्टकचितान्वयिनः क्रतोः अत्र विधीयमान-विद्यामयक्रतुपृथक्त्वमवगम्यते; प्रज्ञान्तरपृथक्त्ववत्। यथा प्रज्ञान्तराणां दहरविद्यादीनां पृथक्त्वहेतुभ्यः पृथक्त्वम्; आदिशब्दात् पूर्वोक्तश्रुत्यादिः गृह्यते; श्रुत्यादिनाऽनुबन्धैश्च विद्यामयक्रतुविधिः कल्प्यते इत्यर्थः। दृष्टश्चानुवादसरूपेऽपि कल्प्यमानो विधिः 'यदेव विद्यया करोति' इत्यादौ। तदुक्तम् 'वचनानि त्वपूर्वत्वादिति'।

अनेन 'विधिप्रत्ययाश्रवणात् फलसम्बन्धाप्रतीतेश्च क्रियामयात् क्रतोः अन्योऽत्र विद्यामयः क्रतुर्न सम्भवनीति पूर्वपक्षः निरस्तः।

क्रियामयात्पृथगयं पृथक्स्तोत्रादितः श्रुतेः।
दह्रादिभेदवद्दृष्टोऽनुवादेऽपि विधिर्ननु॥ (ब्र. प. मा. 402)

**अनुबन्धिचतुष्टयम्** — विषय-प्रयोजन-सम्बन्ध-अधिकारि चतुष्टयम्।

'विषयश्च फलं चैव सम्बन्धश्चाधिकार्यपि।
ज्ञेयं श्लोके क्रमात्पादैः अनुबन्धिचतुष्टयम्॥'

यथा श्रीभाष्ये अखिलेत्यादिमङ्गलश्लोके तावत् प्रथमे पादे जगत्कारणरूपविषय-प्रदर्शनम्, द्वितीये रक्षालक्षणप्रयोजनसूचनम्। तृतीये श्रीभाष्यरूपप्रबन्धेनायोगान्य-योगाव्यवच्छेदात्मकसम्बन्धसूचनम्, तुरीये विशिष्टाधिकारिव्यञ्जनम् इति बोध्यम्॥
(द. उ. 290)

**अनुबन्धीनि** — बन्धकानि (कर्माणि)।

'कर्मानुबन्धीनि मनुष्यलोके' (गी. 15-2) कर्माण्येवानुबन्धीनि पुरुषं अनुबध्न-न्तीत्यनुबन्धीनि। यद्वा सुदृढाविच्छिन्नानीत्यर्थः॥ (ता.चं.)

**अनुभवः** — 1. स्मृतिभिन्नं ज्ञानम्।

2. आत्मस्फुरणम्। 'स्वापमदमूर्च्छासु च सविशेष एवानुभवः'। (श्री. भा. 1-116) आत्मस्फुरणम्। न हि तदा धर्मभूतज्ञानस्फुरणम्। (श्रु. प्र.) आत्मभावनम्। (त. टी. 121)

3. साक्षात्कारः । 'परभक्तिपरज्ञानपरमभक्तिकृत . . . . . . भगवदनुभव-जनितानवधिकातिशय' (श. ग. 104) अनुभवस्त्विहानुकूलतमत्वेन साक्षात्कार एव । (र. रक्षा.) भगवदनुभवेत्यनेन मुक्तौ पाषाणकल्पत्वपक्षः, स्वात्ममात्रानुभवनिर्गुणप्राप्त्या-दिवादश्च व्युदस्यते; सर्वविशिष्टब्रह्मानुभवे प्रधानानुभाव्यं च व्यञ्जितम् ।

(र. रक्षा. 105)

4. स्वप्रकाशप्रत्यक्षम् । (त. टी. 120) 'यस्तु स्वानुभवसिद्ध इति ।'

(श्री. भा. 1-119)

5. परमात्मानुभवः — सायुज्यम् । निरतिशयाभिनिवेशेन चेतनानुभवक्रमेण व्युत्क्रमेण वा प्रवृत्तं भगवन्तं प्रति तत्तदनुगुणं चेतनेन यत्प्रतिवीक्षणप्रदानं सोऽनुभव इत्युच्यते । स च ब्रह्मणा सह संलापसंश्लेषादिरूपः । अयमेव सायुज्यमित्युच्यते । ब्रह्मणा सह एकभोगान्वयस्यैव सायुज्यशब्दार्थत्वात् । (सि. तू. 2-13)

1. (बुद्धिः) स्मृतिभिन्नं ज्ञानम् । यथा अयं घटः इति चाक्षुषप्रत्यक्षमनु-भवः । अनुभवामि इत्यनुगतप्रतीतिसिद्धानुभवत्वजातिमान् । स द्विविधः । यथार्थः अयथार्थः । आद्यः तद्वतितत्प्रकारकानुभवः । स एव प्रमेत्युच्यते । यथार्थश्चतु-र्विधः । प्रत्यक्षम्, अनुमितिः, उपमितिः, शाब्दः । 2. विषयानुरूपा बुद्धि-वृत्तिरनुभव इति पातञ्जलाः, सांख्याः, केचिद्वेदान्तिनश्चाहुः ॥ (न्या. को.)

**अनुभवजनिता प्रीतिः** — अनुकूलविषयानुभवजन्या प्रीतिः ।

'भगवदनुभवजनितानवधिकातिशयप्रीतिकारिता . . . .' (श. ग. 105) अनुभवजनितप्रीतिर्नाम निरतिशयानुकूलोऽयं विषयः, मयानुभूयत इति स्वयमपि निर-तिशयानुकूल्यवती कृतार्थता बुद्धिः, 'कृतार्थोऽस्मीत्यमन्यत' इतिवत्; सा च सामग्र्य-नुवृत्त्या प्रतिक्षणभाविनी प्रवाहविच्छेदरहिता चेत्येके । अन्ये तु प्रीतेः स्वरूपतोऽ-नुवृत्तत्वेऽपि पूर्ववदनुभवस्यैव प्रयोज्यप्रयोजकाकारविभागेन जन्यजनकवाचोयुक्तिः इति । अस्याश्च प्रीतेः अनवधिकातिशयत्वं प्रीत्यन्तरापेक्षया निकृष्टत्वविरहात्; ईश्वरस्य नित्यानामपि हि न मुक्तेभ्योऽतिशयिता प्रीतिः, 'श्रोत्रियस्य चाकामहतस्य' भोगमात्र-साम्यलिङ्गाच्च' इति समानभोगव्यवस्थापनात्, ईश्वरनित्यमुक्तभोगानामुपचयतारतम्य-वादयोः अपन्यायमूलत्वाच्च ॥ (र. रक्षा.)

**अनुभवविनाश्यम्** — अनुभवेनैव नाशयितुं योग्यं पुण्यपापरूपं कर्म ।

'भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते' इति हि सूत्र्यते । भगवद्विमुखानां सञ्चित-प्रारब्ध-आगामिरूपसर्वविधं कर्म अनुभवविनाश्यम् । उपासकानां यावत्प्रारब्धम्, दृप्तप्रपन्नानां तु अभ्युपगतप्रारब्धमात्रं अनुभवविनाश्यम् इति विभागः ॥ (सं. अ.)

**अनुभानम्** — पश्चाद्भानम् ।

'न तत्र सूर्यो भाति . . . . . तमेव भान्तमनुभाति सर्वं' (क. उ. 5-15) [तेन सर्वतेजसां कारणत्वं निरतिशयदीप्तिमतः परमात्मनः सिद्धम् । पौर्वापर्यनियमो हि कार्यकारणभावः इति भावः ]

अधिष्ठानब्रह्मरूपभानव्यतिरिक्तभानशून्यत्वमध्यस्तप्रपञ्चस्य तृतीयपादार्थ इति यत् परैरुच्यते तदयुक्तम् । तथा हि सति भान्तमिति कर्त्रर्थशतृप्रत्ययस्य 'शिष्यज्ञानं प्रकाशते' इतिवदभेदेऽपि कथञ्चित्सम्भवेऽपि अनुभातीत्यस्य शब्दस्यायोगात् । न हि देवदत्तागमनक्रियाव्यतिरिक्तगमनक्रियाशून्ये तिष्ठति यज्ञदत्ते, गच्छन्तं देवदत्तं यज्ञदत्तः अनुगच्छतीति प्रयोगो दृष्टचरः । ननु वह्निमेव दहन्तं अयोऽनुदहतीति प्रयोगो दृष्टचर इति चेत्—न ; अयसः पृथक् दग्धृत्वाभावं निश्चितवतः तत्प्रतिपिपादयिषया तादृश-प्रयोगस्य सम्प्रतिपन्नत्वाभावात् । (रं. भा.) एतेन प्रपञ्चस्याध्यस्तत्वं दूरीकृतम् ॥

**अनुभावः** — प्रभावः ।

उपसर्गसमभिव्याहारेण अर्थविशेषः ॥ (सं. अ.)

**अनुभूतिः** — धर्मभूतज्ञानम् ।

अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनः व्यवहारानुगुण्यापादन-स्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषः 'घटमहं जानामि' 'इममर्थमवगच्छामि' 'पटमहं संवेद्मि' इति सर्वेषामात्मसाक्षिकः प्रसिद्धः । एतत्स्वभावतया हि तस्याः स्वयम्प्रकाशता भवताप्युपपादिता । अस्य सकर्मकस्य कर्तृ-धर्मविशेषस्य कर्मत्ववत् कर्तृत्वमपि दुर्घटमिति अनुभूतेः नात्मत्वसिद्धिः । (श्री. भा. 1-145) अस्य गुणत्वव्यवहारः नित्यतदाश्रयत्वतच्छेषत्वनिबन्धनः । (श्री. भा. 1-150)

संविदनुभूतिज्ञानादिशब्दाः सम्बन्धिशब्दाः इति च शब्दार्थविदः। न हि लोकवेदयोः जानात्यादेः अकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः। (श्री. भा. 1-155) सम्बन्धिशब्दत्वं शब्दस्वभावायत्तमित्याशङ्क्याह – 'न हि लोकवेदयोः' इति। यत्रार्थ-स्वरूपस्यान्यथात्वं दृश्यते; तत्र शब्दस्वभावायत्तत्वमाश्रयणीयम्। यथा दारा इत्यादिषु वहुत्वादेः। यत्र नान्यथात्वं तत्रार्थस्वभावायत्तत्वमेव; यथा भार्येत्यादिष्वेकत्वादेः। तथा लोकवेदयोः सकर्मकर्तृकत्वदर्शनादर्थस्वभावायत्तमेव सम्बन्धिशब्दत्वमित्यभिप्रायः।

यद्वा कर्मकर्तृसम्बन्धित्वं व्युत्पत्तिनिमित्तमस्तु; न प्रवृत्तिनिमित्तम्। तत्तु ज्ञप्ति-मात्रमित्यत्राह – न हि लोकेति। प्रयोगाधीनं हि प्रवृत्तिनिमित्तान्तरकल्पनम्। प्रयोगश्च सम्बन्धिन्येवार्थ इति नार्थान्तरकल्पना स्यात्। (श्रु. प्र.)

सिद्धान्ते ज्ञानपदं धर्म-धर्मि-उभयसाधारणम्। अनुभूतिपदन्तु धर्मभूतज्ञान-मात्रपरम्। परमते धर्मिस्वरूपमात्रपरमिति विभागः। अनुभवामीति प्रतीतिगोचर एव लोकेऽनुभूतिशब्देन व्यवह्रियते इति भावः। प्राभाकरमतेऽपि धर्मभूतज्ञानं संमतम्॥

## अनुभूतित्वम् —

वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्, स्वसत्तयैव स्वविषय-साधनत्वं वा। (श्री. भा. 1-134)

कस्यचित्प्रकाशरूपत्वमनुभूतित्वम्; स्वगोचरज्ञानमनपेक्ष्य स्वाश्रयाय प्रकाश-मानत्वञ्च॥ (त. टी. 141)

## अनुभूतेरवेद्यत्वे प्रत्यनुमानम् —

अनुभूतिरवेद्या न भवति, अनुभूतिर्वेद्या इति वा साध्यम्, वस्तुत्वात् व्यव-हारविषयत्वात्, घटादिवत्। न च अप्रयोजकत्वम्; स्वविषयप्रकाशाभावे स्वव्यव-हाराभावप्रसङ्गात् मोक्षदशायामानन्दप्रकाशाभावेनाऽपुरुषार्थत्वप्रसङ्गाच्च; प्रत्युतत्वदुक्ता-नुमानस्यैवाप्रयोजकत्वम्; विपक्षे बाधकाभावात्। (वे. मं. दी. 65-66) अनुभूतेः सिद्धान्ते वेद्यत्वाङ्गीकारेण अवेद्यत्वं निरस्यते॥

**अनुभूतेर्नानात्वम्** — अनुभूतेरनेकत्वम् ।

अनुत्पन्नेयमनुभूतिः आत्मनि नानात्वमपि न सहते ; व्यापकविरुद्धोपलब्धेः । न ह्यनुत्पन्नं नानाभूतं दृष्टम् । (श्री. भा. 1-108) नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेः इति । . . . . . अयमर्थः— यत् नानाभूतं तत् अनुत्पन्नं न दृष्टम् ; अपि तूत्पत्तिमदेव दृष्टमिति जन्मनो नानात्वव्यापकत्वं दर्शितम् । अनेनोत्पत्तिनिवृत्त्या नानात्वनिवृत्तिरित्यर्थसिद्धम् । (श्रु. प्र.)

परमते अनुभूतेरेवात्मत्वेन आत्मैक्यस्य च सम्मतत्वेन अनुभूतेर्नानात्वं न स्वीकृतम् । सिद्धान्ते तु—अनुभूतेरात्मधर्मतया, आत्मभेदस्य च स्वाभाविकत्वेन प्रत्यात्ममनुभूतिभेदस्य प्रामाणिकतया अनुभूतिनानात्वं स्थापितम् श्रीभाष्ये विस्तरेणेति बोध्यम् ।

एकस्मिन्नात्मनि तु देशकालविषयभेदेनानुभूतिस्वरूपभेदः सिद्धान्ते नाङ्गीक्रियते । अनुभूतेः इन्द्रियाधीनप्रसरणेनोत्पत्तिमत्त्वं, स्वाभाविकनित्यत्वञ्च न विरुद्धम् ॥

**अनुभूतेर्नित्यत्वं** — धर्मभूतज्ञानस्य नाशशून्यता ।

ज्ञानञ्चास्य नित्यस्यात्मनः स्वाभाविकधर्मत्वेन नित्यम् । नित्यत्वञ्चात्मनः, 'नात्मा श्रुतेः' इत्यादिषु वक्ष्यति । 'ज्ञोऽत एव' इत्यत्र 'ज्ञः' इति व्यपदेशेन ज्ञानाश्रयत्वञ्च स्वाभाविकमिति वक्ष्यति । अस्य ज्ञानस्वरूपस्यैव, मणिप्रभृतीनां प्रभाश्रयत्वमिव, ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम् । स्वयमपरिच्छिन्नमेव ज्ञानं सङ्कोचविकासार्हमित्युपपादयिष्यामः ।

अतः क्षेत्रज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम् । तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते । (श्री. भा. 1-160) कर्मणेति सङ्कोचकोपाधिः । क्षेत्रज्ञावस्थायामेव सङ्कोचः इत्यर्थः । प्रसरान्वयव्यतिरेकावपेक्ष्योदयास्तमयव्यपदेश इत्यर्थः । (श्रु. प्र.)

सर्वदा विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्यादावुपलभ्यते । (श्री.भा. 2-3-31) विषयसम्बन्धः उपलब्धिश्च जागर्यादावित्यर्थः । विषयसम्बन्धार्हत्वं प्रकाशार्हत्वञ्च तदानीमप्यस्तीति न स्वयंप्रकाशत्वहानिः । (श्रु. प्र.)

ननु सुषुप्तिकाले मनोवृत्तिर्यदि न स्यात् तदा स्वरूपज्ञानस्य सूक्ष्मरूपसंस्कार-त्वानुपपत्तेः नैयायिकवदात्मधर्मान्तराभावान्न परामर्शस्स्यादिति चेत्; अत्र केचित् — स्वरूपज्ञानेन धर्मभूतज्ञानस्य सूक्ष्मरूपो विकारस्संस्कारो नाम जायत इत्याहुः।

अपरे तु सुषुप्तिर्हि ज्ञानाभावरूपो धर्मभूतज्ञानस्यात्मस्वरूपमात्रगोचरोऽवस्था-विशेषः। स चात्मरूपानुकूलवस्तुगोचरतयाऽनुकूलसुखरूपत्वात् सुषुप्तेरेव सुखमहमस्वाप्स-मिति परामर्शश्चोपपन्न इति वदन्ति। (त. मु. आ. 76)

**अनुभूतेस्स्वयंप्रकाशत्वसमर्थनम्** — ज्ञानस्य सजातीयान्तरनिरपेक्षतया भानसमर्थनम्।

अनुभूतिरनन्याधीनस्वधर्मव्यवहारा, स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्।
(श्री. भा. 1-104)

अनुभूतिः अनन्याधीनस्वधर्मा, स्वसम्बन्धादर्थान्तरे तद्धर्महेतुत्वात्; अनुभूतिः अनन्याधीनस्वव्यवहारा, स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वात् इत्येवं विभागः। .... प्राकट्यमभ्युपगम्य तदुपजीवनेन प्रथमानुमानमुक्तम्; तदनुपजीव्य तु द्वितीयम्। प्राकट्याभ्युपगमस्य न स्वप्रकाशताविरोधित्वम्; तदस्य ज्ञानानुमापकत्वानभ्युपगमात्। अन्यशब्दश्च स्वात्यन्तसजातीयान्तरपरः॥ (श्रु. प्र.)

अनुमानद्वयेनापि अनुभूतेः स्वयंप्रकाशत्वं साधितम्॥

**अनुभूत्यादिशब्दानां सम्बन्धिशब्दत्वम्** — ज्ञानसामान्यस्य कर्तृकर्मविशिष्टतया तच्छब्दस्य ससम्बन्धिकता।

[ननु] स्वरूपभूतज्ञानवाचिशब्दानां सम्बन्धिशब्दत्वं त्वन्मतेऽपि [विशिष्टाद्वैतमते] अनुपपन्नमिति चेन्न; स्वरूपगोचराणां स्वयम्प्रकाशत्वे रूढानां ज्ञानादिशब्दानामनुभूत्यादिश ब्देभ्यः शब्दान्तरत्वात्। अतः सम्बन्धिशब्दत्वोपदेशस्तु धर्मभूतज्ञाने सावकाशोऽस्मन्मते। विषयाश्रयसम्बन्धिज्ञानस्यैव विषयाश्रयसम्बन्धबाधेन निराश्रयत्वनिर्विषयत्वाभ्युपगमात् त्वन्मते [निर्विशेषाद्वैतमते] सम्बन्धिशब्दत्वोपदेशो निरर्थक इति भावः। (श्रु.प्र. 1-155)

अत एवानुभूतिज्ञानसंविदादिशब्दाः सम्बन्धिशब्दा इति शब्दार्थविदः आहुः। तथा च ज्ञानमित्युक्तौ यद्विषयकं यत्कर्तृकमिति नियमेनाकांक्षोदयात् प्रतिसम्बन्धिविषय-कर्तृनिबन्धनतया सम्बन्धिशब्दा इति व्यवह्रियन्ते।

इदं च धर्मभूतज्ञानवाचिज्ञानपदविषयकम् । स्वरूपवाचिज्ञानपदे च 'ज्ञा'धातुः अन्य एव । तस्य च स्वयंप्रकाशत्वमात्रमर्थः । अत एव व्याकरणग्रन्थेषु 'देवदत्तः पचति' 'स्थाली पचति' 'काष्ठानि पचन्ति' इत्यादिषु भिन्नभिन्नार्थकधातुः अन्य एव । अत एव एतेषां प्रयोगाणां मुख्यार्थतैव इति स्थापितम् ।

अयं भावः – 'देवदत्तः पचति' इत्यत्र अधिश्रयणप्रभृत्यधश्श्रयणान्तव्यापारः धातुना उच्यते । 'स्थाली पचति' इत्यत्र धारणं धात्वर्थः । तच्च स्थालीनिष्ठम् । 'काष्ठानि पचन्ती'त्यत्र ज्वलनं धात्वर्थः इति धातुः भिन्नभिन्न एव । चेतनाचेतन-साधारणं प्रकृतधात्वर्थव्यापाराश्रयत्वं कर्तृत्वमिति, वैयाकरणमते प्रदर्शितस्थलेषु सर्वत्र तत्तद्व्यापाराश्रयत्वेन कर्तृता मुख्यतैव । आनुपूर्व्याः ऐक्यात् एकत्वव्यवहारः । तद्वदेव 'देवदत्तो जानाति' इत्यादौ सकर्तृकसविषयकाववोधः धात्वर्थः । स्वरूपवाचि 'ज्ञा' धातोस्तु स्वयंप्रकाशत्वमेवार्थः । अतः न चोदनाया अवकाश इति 'शब्दान्तरत्वात्' इत्यभिदधतामाचार्याणामाशयः । तथा च धर्मिबोधकज्ञानादिपदव्यतिरिक्त-ज्ञानपदमेव सम्बन्धिपदम् ॥

**अनुमन्ता** — प्रवृत्तस्य प्रवर्तकः ।

'उपद्रष्टानुमन्ता च' (गी. 13-22) अस्मिन् देहेऽवस्थितोऽयं पुरुषः देह-प्रवृत्त्यनुगुणसङ्कल्पादिरूपेण देहस्योपद्रष्टा अनुमन्ता च भवति । (गी. भा.) प्रकरण-वशादत्र जीवो गृह्यते ॥

**अनुमन्तृत्वम्** — परमात्मधर्मः ।

प्रवृत्तस्य प्रवर्तकत्वम् । (श्रु. प्र. 2-3-41) अनुमन्तृत्वं नाम प्रवृत्तिशैथिल्य-परिहारार्थकः, तत्फलपर्यन्तत्वहेतुव्यापारः ॥ (वे. सं. ता. दी. 191)

**अनुमन्तृत्वादीनामविरोधः** — 1. परस्पराविरोधेन समन्वयः ।

ईश्वरस्यैव सर्वकर्तृत्वे तत्र तत्र प्रमाणेषु उच्यमानं साक्षित्वानुमन्तृत्वादिकं कथमुच्यते इत्याशङ्क्याह – 'साक्षिताद्यञ्च सुस्थम्' इति । (अ. सा. 239)

2. तुलायां प्रमाणप्रमेयव्यवहारन्यायेन एकस्यैवेश्वरस्य कर्तृत्व-कारयितृत्व-साक्षि-त्वानुमन्तृत्वादिसर्वलक्षणसमन्वयात् सर्वोऽपि व्यवहारो युक्तः इत्यर्थः ।

स्वतन्त्रः कर्ता, प्रयोज्यकर्तुर्जीवस्य कारयितृत्वात् प्रेरकः। प्रवृत्तस्योत्तरोत्तरं प्रवर्तकत्वात् अनुमन्ता, अङ्कुरादिषु सलिलवत् सर्वेष्वपि कार्येषु सामान्यहेतुत्वात् उदासीनः, सर्वावस्थायां सर्वद्रष्टृत्वात् साक्षी, विशेषकार्येषु तत्तत्कर्मानुरूपं प्रवर्तकः, कर्मभिः सर्वं करोतीति सहकारी, सर्वस्वामित्वेन समाश्रितसंरक्षणरूपफलस्यापि स्वफलत्वात् फली, 'फलमत उपपत्तेः' इति फलप्रदत्वात् फलदः इति न कोऽपि विरोधः।
(चिं. म.)

यथा एकस्यां तुलायां मानकरणत्वमानविषयत्वभेदेन प्रमाणप्रमेयव्यवहारः, तद्वदेकस्मिन्नेवेश्वरेऽनुमन्तृत्वादीनां समन्वयः सिद्ध इति भावः॥

**अनुमानम्** — 1. त्रिविधप्रमाणेषु द्वितीयं प्रमाणम्।

अनुमित्यात्मविज्ञानेऽनुमानं करणं स्मृतम्। (वे. का. 1)

अनुमितिरूपे ज्ञाने करणमनुमानमित्यर्थः। अनुसृत्य प्रवर्तमानं मानमनुमानम्। लिङ्गप्रत्यक्षमनुसृत्य प्रवर्तमानत्वात्। (व्या.) अत्र करणार्थे ल्युट्।

2. लिङ्गम्। 'स्मर्यमाणमनुमानं स्यादिति' (ब्र. सू. 1-2-26) इत्थम्भूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं– लिङ्गमित्यर्थः (श्री. भा. 1-2-26) अनुमानशब्दः करणार्थकल्युडन्तः श्रुतिलिङ्गवाक्येत्यादिसूत्रपठितलिङ्गपरश्चेति भावः।
(श्रु. प्र.)

3. स्मृतिः। 'दर्शयतश्च प्रत्यक्षानुमाने' (ब्र. सू. 4-4-20) प्रत्यक्षानुमाने– श्रुतिस्मृती। (वे. दी.)

4. प्रधानम् (प्रकृतिः)। अनुमीयत इत्यनुमानं परोक्तं प्रधानमुच्यते। (श्री. भा. 1-3-3) जगत्कारणतयानुमीयत इति कृत्यल्युटोबहुलमिति कर्मणि ल्युट्।
(श्रु. प्र.)

5. तर्कः। तर्कस्य अनुमानशब्दवाच्यत्वं व्याप्तिसापेक्षत्वात्। 'ऊहस्तर्कोऽनुमानोक्तिः' इति हलायुधः। (श्रु. प्र. 2-1-15)

6. अनुमितिः। [अत्र भावार्थकः ल्युट्]

व्याप्यस्य व्याप्यत्वानुसन्धानात् व्यापकविशेषप्रतीतिः। (न्या. प. 84)

7. मननम् ।

आगमेनानुमानेन ध्यानाभ्यास(रसेन)वशेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥

इत्याप्तोक्तौ श्रवणमननध्यानानां योगहेतुत्वं विवक्षितम् । मननं चात्र अनुग्राहकयुक्तिभिः स्थिरीकरणं; तदेवात्र श्रवणानन्तरभावितया अनुमानशब्देन ग्रहीतुमुचितम् ; अनुग्राहकयुक्तय एव वा, 'यस्तर्केणानुसन्धत्ते' इति स्मरणात् । तर्कानुमानयोरदूरविप्रकर्षात्समाख्याविपर्यासश्च दृष्ट इति । (स. सि. 168)

अन्वयव्यतिरेकि-केवलान्वयिभेदाच्च द्विविधम् । व्याप्तिद्वयविशिष्टं यत् तदन्वयव्यतिरेकि । यदन्वयव्याप्तिमात्रयुक्तं तत् केवलान्वयि । यथा, पर्वतो वह्निमान् धूमवत्त्वात् इत्यादावपरम् । केवलव्यतिरेकिणि साध्याप्रसिद्धेः तद्व्यतिरेकव्याप्तिः दुर्ग्रहा । अतः केवलव्यतिरेकिनिरासः । केवलान्वयिनि अन्वयव्यतिरेकिणि च अत्यन्तातीन्द्रियार्थगोचरता निरस्ता ।

तदेतदनुमानं स्वार्थं परार्थञ्चेति द्विधा विभज्य केचिदाहुः । सर्वेषामेवानुमानानां स्वप्रतिसन्धानादिबलेन प्रवृत्ततया स्वव्यवहारमात्रहेतुत्वमिति स्वार्थानुमानमेवेत्यपरे । (य. दी. 44)

8. प्रमाज्ञानविशेषः । यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम् । अत्र मितेन लिङ्गेनार्थस्य पश्चान्मानमनुमानमिति व्युत्पत्तिः । अनुमानस्य द्वे अङ्गे । व्याप्तिः पक्षधर्मता चेति । तत्र व्याप्त्या साध्यसामान्यसिद्धिः । हेतोः पक्षधर्मताबलात् साध्यस्य पक्षधर्मवत्त्वविशेषः सिध्यति । पक्षधर्मेण धूमवत्त्वेनाग्निरपि पर्वतसम्बद्ध एवानुमीयते । (न्या. को.)

केचित्तु देशकालातिरेकेण प्रत्यभिज्ञानरूपं अनुमानमाहुः । तदयुक्तम् । लिङ्गस्य हि देशकालौ अतिरिच्येते । अशेषदेशकालवर्तिनस्तु लिङ्गस्य लैङ्गिकसम्बन्धः सम्बन्ध नियमावधारणसमय एवावधृतः । अन्यथा सम्बन्धनियम एव अनवगतः स्यात् ।

एतेन

'विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता'

इति प्रत्युक्तम् । धूमवता ह्युपलक्षितानां देशकालविशेषाणां सम्बन्धनियमाव-
धारणात् 'यो यो धूमवान् सोऽग्निमान्' इति । (मी. को.)

**अनुमानापेक्षा** — करणकळेबरावस्थाचित्संसर्गापेक्षा ।

'कामाच्च नानुमानापेक्षा' (ब्र. सू. 1-1-19)

इह च 'सोऽकामयत बहुस्यां प्रजायेय' इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्र-
चिदचिद्वस्तुनः सृष्टिः इत्याम्नायते । अतोऽस्यानन्दमयस्य जगत्सृजतो, नानुमानिका-
चिद्वस्तुसंसर्गापेक्षा प्रतीयते । (श्री. भा.) अत्यन्तमचिदनपेक्षत्वे स्वरूपपरिणाम-
प्रसंगः । देहातिरिक्ताचिदनपेक्षत्वं देवादिसृष्टौ चतुर्मुखादीनामप्यस्ति । अतस्तत्प-
रिहारार्थमाह 'इहचेति' । संकल्पहेतुभूतकरणकळेबरावस्थाचित्संसर्गापेक्षा नास्ती-
त्यर्थः । (श्रु. प्र.) कार्यकारणयोरभेदात् करणकळेबरावस्थस्यानुमानिकप्रधानशब्द-
वाच्यत्वमबाधितम् ।

**अनुमितिः** — व्याप्यज्ञानजन्यं ज्ञानम् ।

अनुमितिर्व्याप्यतो व्यापके धीः' (त. मु. 256) व्याप्यतया प्रतिसंधीयमानात्
तद्व्यापकतया सामान्यतः प्रसिद्धस्यार्थस्य विशेषतः अवगतिः । (स. सि.) व्याप्यस्य
व्याप्यत्वानुसन्धानात् व्यापकविशेषप्रमितिः ॥ (य. दी. 21)

**अनुमितिसाधनम्** — अनुमितिकारणम् ।

अनुमितिसाधनम् द्विविधम्—व्याप्तिः पक्षधर्मता चेति । तयोरेव प्रपञ्चनात्
पंचरूपाणि सन्ति । पक्षव्यापकत्वं, सपक्षे सत्त्वम्, विपक्षवृत्तिरहितत्वम्, अबाधित-
विषयत्वम्, असत्प्रतिपक्षत्वं चेति ॥ (न्या. प. 104)

**अनुयागः** — अष्टाङ्गयागेष्वन्यतमः ।

प्राणाग्निहवनं नाम्ना त्वनुयागस्तदष्टमम्' (पा. र. 2-49)

तत्र शयनाध्याये निवेदितान्नेन सह पाकपात्रावशिष्टेन साम्बुफलादिना यो
यागः क्रियते सोऽनुयागः । अ(णु)नुभूतजीवात्मसिद्ध्यर्थत्वाच्चायम(णु)नुयाग इत्यपि

ग्राह्यः। तस्मिंश्च यागे हार्दानलशरीरको भगवानेव भोक्ता। तच्छक्त्यनुग्रहाच्चा-यमणुभूतः, अहंस्वभावः पुमान् भोगापवर्गरूपपुरुषार्थप्राप्त्यनुरूपपुंस्त्ववान् भवतीति स्पष्टमुच्यते।

अध्यात्मतत्त्वं विज्ञेयं विहितं तस्य सर्वदा।
आत्मनैवात्मसिद्ध्यर्थं यागमन्त्रेन तेन च॥

सह यज्ञावशिष्टेन साम्बुना च फलादिना हुतशेषेण वै सह।
अनुयागं च तं विद्धि आत्मनाऽऽत्मनि यत्कृतम्॥ इति॥ (सच्च. र. 3)

यागः – भगवदाराधनम्। तदनुसृत्य क्रियमाणः भगवन्निवेदितप्रसादस्वीकार-रूपः। (सं. अ.)

तथा च आत्मज्ञानिना क्रियमाणानुदिनभोजनं भगवत्पूजारूपत्वात् अनुयाग-शब्देन व्यवह्रियते।

2. भोज्यासनम्॥ (जि. स्तो. 2)

**अनुरागः** — ज्ञानावस्थाविशेषः।

'ज्ञानानुरागमहिमातिशयान्तसीम्ने' (स्तो. र. 2) अनुरागः इह अवतार-प्रकाशितगुणविशेषकृतः सुहृन्मित्रादिष्विव स्नेहः। वयोविशेषानङ्गीकारेण स्वहितैषिणः। सुहृदः – सवयसः, हितैषिणः मित्राणि। (र. रक्षा.)

अनुग्रहावहप्रसादः॥ (वि. को.)

**अनुरूपत्वम्** — सम्बन्धे सति प्रकृष्टं सादृश्यम्।

'भगवन्नारायणाभिमतानुरूप . . . . . गुणगणाम्। (श. ग. 97) यथा 'परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः' इति। रत्नकाञ्चनमणिप्रवालादेरिव स्वसम्बन्धेन शोभातिशयहेतुत्वरूपमौचित्यं वा; यथा 'अतीव रामश्शुशुभेऽतिकामया विभुश्श्रिया विष्णुरिवामरेश्वरः' इति।

'तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा॥' इति च।

अत्र वयोलक्षणयोः तुल्यशब्दः औचित्यपरः; दम्पत्योः न्यूनाधिकवयस्कत्वात्, स्त्रीपुंसलक्षणानां च भिन्नप्रकारत्वात्, तत्सहोक्त्या शीलादिष्वपि औचित्यपर एव, तुल्यशब्दोक्तार्थस्यार्हतीति समुदायनिर्देशाच्च। (र. रक्षा.) अनुगुणत्वम्, निर्वाहकत्वमिति यावत्॥ (रह. मी. भा. 177)

**अनुलोमः** — क्रमानुसरणम्।

क्रममनुसृत्य व्यवहारः। तथैवानुष्ठेयश्च। (सं. अ.) एतद्व्यतिरेके प्रतिलोम इति व्यवहारः॥

**अनुवाक्या** — अनुवचनम्।

अनुवाक्या, पुरोनुवाक्या, अनुवचनमिति पर्यायाः। अध्वर्युर्यदा हविर्जुह्वा गृह्णाति तदा 'अनुब्रूहि' इति प्रैषं ददाति, तदा होता क्वचिन्मैत्रावरुणो वा मन्त्रं मन्त्रौ वा पठति, स तौ वा मन्त्रौ अनुवाक्या नाम॥ (मी. को.)

**अनुवादः** — प्राप्तस्यानु पश्चात् वादः – सप्रयोजनं कथनम्।

यथा – 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्ति . . . . . तद्ब्रह्मेति' इत्यत्र यतः येन यदिति यद्वृत्तयोगात् सदादिवाक्यैः प्राप्तस्य जगत्कारणस्य ब्रह्मत्वविधानायानुकथनम्।

ज्ञातस्य कथनं शब्दोपाधिको धर्मः। अनुवादः – ज्ञानपूर्वकः पश्चात् वादः॥ (मी. को.)

**अनुवाद्यता** — प्रमाणान्तरसिद्धस्य किञ्चिद्धर्मविधानार्थं पुनरुपन्यस्यता।

यथा पर्वतो वह्निमानित्यादौ पर्वतरूपोद्देश्यस्य सिद्धत्वेऽपि वह्निमत्वरूपधर्मविधानार्थमुपन्यासः॥ (न्या. को.)

**अनुवित्तः** — उपास्यः प्राप्यो वा।

'यस्यानुवित्तः प्रतिबुद्ध आत्मा' (बृ. उ. 6-4-13) अत्र 'विद-ज्ञाने' इत्यस्मात् 'क्त'प्रत्ययः। यस्य-जीवस्योपास्य इत्यर्थः। यद्वा 'विदिः-लाभे' इत्यस्मात् 'क्त'प्रत्यये, प्राप्यः इत्यर्थः। (श्रु. प्र. 2-3-25)

अनुभूतः। सम्बद्धः। अवगतः॥ (वि. को.)

**अनुविद्य** — 1. उपास्य ।

'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां ..... कामचारो भवति' (छां. उ. 8-1-6) ये तु आत्मानमपहतपाप्मत्वादींश्च काम्यमानान् कल्याणगुणान् उपास्य परलोकं व्रजन्ति, ते ब्रह्मविभूतिभूतान् विकारलोकान् अनुभूय यथाकामं तृप्ताः न पारतन्त्र्यमनुभवन्तीत्यर्थः । (रं. भा.) सगुणब्रह्मोपासनमेव मुक्तिसाधनं श्रुतिसिद्धमिति सूच्यते ।

2. ज्ञात्वा । 'अनुविद्य विजानाति' ॥ (छां. उ. 8-12-6)

**अनुविद्य विजानाति** — ज्ञात्वा उपासीत ।

'अनुविद्य विजानाति' 'विज्ञाय प्रज्ञां कुर्वीत' इत्येवमादिभिः वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् 'अनुविद्य' 'विज्ञाय' इत्यनूद्य 'प्रज्ञां कुर्वीत' 'विजानाति' इति ध्यानं विधीयते । (श्री. भा. 1-53) न तु वाक्यार्थज्ञानम् । अनुवादः किमर्थमिति चेत् ध्यानोपकारत्वादिति । (श्र. प्र.) वाक्यद्वयोपपादनस्य फलम् उपसर्गभेदेऽपि विधिप्रत्ययान्तत्व, तद्राहित्ययोः अर्थभेदो नास्तीति ज्ञापनमेव । एवं च 'प्रज्ञां कुर्वीत' इत्यत्र विधेः दर्शनात् तदनुरोधेन 'विजानाति' इत्यत्रापि विधिः कल्पनीयः । उपासीत इति यावत् ॥

**अनुविद्य व्रजन्ति** — उपास्य प्राप्नुवन्ति ।

'अथ य इहात्मानमनुविद्य व्रजन्ति' (छां. उ. 8-1-6) दहराकाशं तद्गुणांश्च उपास्य परलोकं ये व्रजन्ति तेषां सर्वेषु लोकेषु कामचारो भवति ॥

**अनुविधानम्** — नामरूपव्याकरणम् ।

'विश्वस्मिन् नामरूपाण्यनुविहितवता' (अ. सा. 1)

'सर्वाणि रूपाणि विचित्य धीरः ।
नामानि कृत्वाऽभिवदन् यदास्ते' ॥

इत्युक्तरीत्या नामरूपव्याकरणं कृतवान् देवः । (प. यो.) अनुवित्तः ॥ (वि. को.)

**अनुवृत्तत्वम्** — अनुगतधर्मवृत्त्यसाधारणधर्मः ।

1. सामानाधिकरण्यं — यथा धूमानुवृत्तो वह्निरित्यादौ वह्नौ धूमानुवृत्तत्वम् ।

2. धारातः प्राप्तत्वम् । यथा विज्ञानवादिबौद्धमते विज्ञानसन्तानस्यानुवृत्तत्वम् ॥ (न्या. को.)

**अनुवृत्तिः** — अनुवर्तमानता ।

सर्वासु प्रतिपत्तिषु सन्मात्रं अनुवर्तमानं दृश्यत इति तदेव परमार्थः । विशेषास्तु व्यावर्तमानतया अपरमार्थाः, रज्जुसर्पादिवत् , इति पारमार्थ्यापारमार्थ्यसाधकतया अनुवृत्तिव्यावृत्ती स्वीकुर्वन्ति परे । (श्री. भा. 1-99)

सिद्धान्ते तु अनुवृत्तिर्नाम अविरोधित्वकृतः विषयतया अन्वयः । पुरोवर्तिनि सद्भावो वा । (श्रु. प्र.)

अबाधितत्वफलभूता हि अनुवृत्तिः । रज्जुसर्पादौ . . . . . . बाधितत्त्वात् सर्पादेरपारमार्थ्यं . . . . . . रज्वादेरपि पारमार्थ्यं नानुवर्तमानतया , किन्त्वबाधितत्त्वात् । घटादीनामबाधितानां कथं अपारमार्थ्यम् ? अतः व्यावृत्त्यनुवृत्त्योः परेषां साधकत्वं न युज्यत इति भावः ।

प्रथमयोजनायां अर्थस्यानुवर्तमानत्वविवक्षया तथा व्यवहारः । द्वितीये तु पदविवक्षया ।

दवीयः स्थानान्तरस्थितस्य (पदस्य) सर्वत्रानुसन्धानम् । तच्च व्याकरणादौ पूर्वसूत्रस्थपदस्योत्तरसूत्रे आकांक्षापूरणार्थमनुसन्धानम् । यथा 'इको यणचि' इत्यतः अचीति सप्तम्यन्तपदस्य आद्गुणः इत्यादावनुवृत्तिः । अनुवृत्तिस्त्रिधा । सिंहावलोकितवत् , मण्डूकप्लुतिवत् , गङ्गास्रोतोवत् इति ॥ (न्या. को.)

**अनुव्यवसायः** — व्यवसायगोचरं प्रत्यक्षम । (न्यायमते)

सिद्धान्ते तु व्यवसायानुव्यवसाययोः भेदो नास्ति, विषयसाम्यात् । विषयमनुसृत्य जायमानत्वादेव व्यवसायस्यैवानुव्यवसाय इति व्यवहारः ।

यथा घटज्ञानानन्तरं 'घटमहं जानामि' इति मानसं ज्ञानम् । ज्ञाततावभासकं ब्रह्मचैतन्यमिति मायावादिनः ॥ (न्या. को.)

**अनुशयः** — 1. उपभुक्तशिष्टं कर्म ।

'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च । (ब्र. सू. 3-1-8)

[फलोदयपर्यन्तमात्मनि अनुशेते इति व्युत्पत्तिः योगरूढश्च ।]

कर्मान्तरमनुशयः; न तु स्वर्गार्थकर्मणः एकदेशः इति । फलदानप्रवृत्तकर्मविशेषविषयमिति हि भाष्यम् ; न तु कर्मांशविषयमिति । वक्ष्यति च, इष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वादिति । स्वर्गार्थकर्मैकदेशस्य तत्रामुक्तत्वञ्च, 'स्वर्गकामो यजेत' इति श्रुतिस्वारस्यविरुद्धम् । यत्र तु स्वर्गनरकाद्युपभुक्तकर्मशेषेण योन्यन्तरप्राप्तिर्वचनसिद्धा, तत्रानेकशरीरारम्भफलकत्वमेकस्य कर्मण इति वचनबलादवगन्तव्यम् । तस्मादामुष्मिके कर्मजाते उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयः ॥ (श्रु. प्र.)

**अनुशंसनम्** — ऋग्भिः शंसनम् ।

उद्गातृगणैः स्तुतायाः देवतायाः हौतृगणैः ऋग्भिः शंसनम् । (वि. को.)

**अनुशासनम्** — 1. विविच्य ज्ञापनम् ।

'एतदनुशासनम्' (तै. उ. 1-22) शिष्यं प्रति आचार्यस्य कर्तव्यमनुशासनम् । (रं. भा.)

अनुपूर्वः शासिः विविच्य ज्ञापनार्थो दृष्ट इति हि शाब्दिकाः ।

1. गमकम् । ज्ञापकं शास्त्रम् । यथा 'अथ शब्दानुशासनं' इत्यादौ । अनुशासनमिति हि शास्त्रमाह । अनुशिष्यते व्याख्यायते लक्षणभेदोपायफलसहितो योगो येन तदनुशासनमिति व्युत्पत्तेः । 2. यथार्थज्ञापनम् ॥ (न्या. को.)

**अनुशासिता** — आज्ञापयिता ।

'कविं पुराणमनुशासितारं . . . . . . आदित्यवर्णं तमसः परस्तात्' (गी. 8-9) विश्वस्य प्रशासिता । (गी. भा.)

शासु-अनुशिष्टौ । अनुशासनम् – नियमनम् । अनुपूर्वः शासिः विविच्य ज्ञापनार्थः । इत्येतावन्मात्रपरत्वव्युदासाय विश्वस्य प्रशासितारमित्युक्तम् । ईश्वरस्य सत्त्वेऽनुशासनमाज्ञापनमेवेति भावः ॥

**अनुश्रवः** — वेदः ।

अनुसृत्यैव श्रूयते इति व्युत्पत्तिः । आचार्योच्चारणात् अनुश्रूयते इति अनुश्रवः । (वि. को.)

**अनुषङ्गः** — अन्यार्थं प्रवृत्तस्य नान्तरीयकविधयान्यसिद्धिः ।

1. अविनाभावः । यथा सुखं दुःखानुषङ्गाद्दुःखमेवेत्यादौ । 2. नेदीयः स्थानान्तरस्थितस्य (पदस्य) क्वचिदनुसन्धानम् । यथा पञ्चावयववाक्येषूपनयवाक्यस्थस्य अयमिति पदस्य तस्माद्वह्निमान् इति निगमनवाक्येऽनुषङ्गः । 3. प्रसङ्गः । (न्या. को.)

पुरस्तादनुषङ्गः, परस्तादनुषङ्गश्चेति द्विविधः । पुरस्तात् श्रूयमाणस्योत्तरत्र सम्बन्धः आद्यः । द्वितीयस्तु उत्तरत्र श्रूयमाणं पूर्वमनुषज्यते । यथा – 'अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः', एतेन 'सहस्रदक्षिणेन यजेत' इत्यत्र एतेन इत्यादिपूर्ववाक्यत्रयेऽनुषज्यते ॥ (मी. को.)

**अनुष्ठानम्** — शास्त्रविहितकर्माचरणम् ।

इष्टमर्थं प्रति भवति ॥ (मी. को.)

**अनुष्ठानतन्त्रम्** — उभयार्थं सकृत्करणम् ।

'तत्रानुष्ठानतन्त्रं विदुषि तु घटते कर्तृकालाद्यभेदात्' (त. मु. 108) ज्योतिष्टोमाग्निहोत्रादौ विनियोगपृथक्त्वतः नित्यकाम्यस्वरूपं दृष्टम् , वसन्तादिनिमित्तसद्भावात् । 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादौ त्रिरूपत्वमपि दृष्टम् । तत्र विद्यार्थमाश्रमार्थञ्च द्विरनुष्ठानं प्रसज्यत इत्यत्राह – तत्रेति । उभयार्थं सकृत्करणमेव तत्र कर्तृकालाद्यभेदात् । तथा च विद्याङ्गत्वमाश्रमाङ्गत्वञ्च सिद्धम् ॥ (स. सि.)

**अनुष्ठाने विकल्पः** — यथारुचि अनुष्ठानम् ।

'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' 'उदिते जुहोति' 'अनुदिते जुहोति' 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इत्यादिष्वधिकारिभेदेन कालभेदेन फलभेदेन विकल्पः सम्भवत्यनुष्ठाने । सिद्धवस्तुनि तु विकल्पासम्भवेन विरोधादेकमेव प्रमाणं स्यात् ॥ (श्रु. प्र. 2-2-42)

**अनुष्ठापकत्वम्** — अनुष्ठानप्रवर्तकत्वम् ।

अनुष्ठापकत्वं हि करौ प्रगृह्य न कारयितृत्वम् । किन्तु चिकीर्षाप्रयोजकेच्छा-विषयत्वम् । तच्च साध्यस्यैव साधनं प्रति स्यात् । (वे. मं. दी. 38) शास्त्रोक्त-क्रमविशिष्टप्रवृत्तिप्रयोजकत्वमिति यावत् ॥

**अनुष्ठेयं बादरायणः साम्यश्रुतेः** — (ब्र. सू. 3-4-19) (पुरुषार्थाधिकरणे एकोनविंशतितमं सूत्रम्)

गृहस्थाश्रमवत् आश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते; कुतः? तस्यापि तत्साम्यश्रुतेः ; उपादेयतया अभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते । (अत्राश्रमशब्दः धर्मपरः) 'त्रयो धर्मस्कन्धा' इत्यादिवाक्येषु तेषामाश्रमाणां अनुवादमात्रं क्रियते; अविधानात् । अतोऽन्यार्थमनुवादमात्रमत्र क्रियते तेषामाश्रमाणां न तु विधानम् । अपवदति हि श्रुतिराश्रमान्तरं 'वीरहा वा एष देवानां योऽग्निमु-द्वासयत' इत्यादिका । अतः ऊर्ध्वरेतसः आश्रमा न सन्तीति पूर्वपक्षः । अस्मिन् सूत्रे गृहस्थधर्मसाम्यात् आश्रमान्तरधर्माणामपि अनुष्ठेयतैवेति साधितम् ।

गृहस्थाश्रमसाम्याच्चाप्यनुष्ठेयं बुधैरिह ।
अन्याश्रमं श्रुतिश्चाह धर्मस्कन्धास्त्रयस्त्विति ॥ (ब्र. प. मा. 437)

**अनुसन्धानम्** — 1. उपासनम् ।

त्रिविधमनुसन्धानम् ; 1. निखिलकारणभूतस्य ब्रह्मणः स्वरूपेणानुसन्धानम् । 2. भोक्तृवर्गशरीरकत्वानुसन्धानम् । 3. भोग्यभोगोपकरणशरीरकत्वानुसन्धानञ्चेति । तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्याश्रितम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्म' इत्यादिषु स्वरूपेणानुसन्धानम् । 'तत्सृष्ट्वा तदेवानुप्राविशत्,

तदनुप्रविश्य सच्च त्यच्चाभवत् , निरुक्तं चानिरुक्तञ्च, निलयनं चानिलयनं च, विज्ञानं चाविज्ञानं च, सत्यञ्चानृतं च सत्यमभवत्' इत्यादिषु भोक्तृशरीरतया, भोग्यभोगोपकरणशरीरतया चानुसन्धानम् । (श्री. भा. 1-1-32)

'सत्यं ज्ञानमनन्तं' इति देशकालवस्तुपरिच्छेदरहितस्य ब्रह्मणः 'ब्रह्मविदाप्नोति' इति वेद्यत्वविधानात् प्रकरणस्य वेद्यब्रह्मप्रतिपादनपरत्वात् 'स य एवंवित्' इति निगमनवाक्येऽपि पूर्वोक्तसमस्तप्रकारविशिष्टवेदनप्रतीतेश्च । चिदचिच्छरीरकत्वानुसन्धानमत्र विवक्षितमिति भाष्याभिप्रायः । (श्रु. प्र.)

1. स्मरणम् । 2. प्रत्यभिज्ञा । 3. ज्ञानम् ॥ (वि. को.)

**अनुसवम्** — 1. कर्मविशेषः ।

सवे सवे अनुसवम् । प्रतियागं क्रियमाणं कर्म । (सवमनुसृत्य जातम्) यागानन्तरं तदङ्गतया क्रियमाणम् ॥ (सं. अ.)

**अनुस्मरणम्** — 1. अनुस्मृतिः ।

'प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ (वि. पु. 2-6-39)

अनुर्हीनार्थे, स्वस्य शेषत्वानुसन्धानपूर्वकं स्मरणम् । यथोक्तम् –

'आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर' इति ।

इदमनुस्मरणं कीर्तनस्याप्युपलक्षणम । (वि. चि.)

2. उपासनम् ।

'तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च' (गी. 8-7)

अनुस्मरणमेवात्र मनसोऽर्पणम् । अन्तिमप्रत्ययप्रसङ्गात् तद्धेतुतयाऽनुस्मरेत्युपासनं विहितम् । (ता. चं.) 3. पूर्वानुभूतवस्तुविषयकं ज्ञानम् । प्रत्यभिज्ञानमित्यर्थः । तदेवेदमिति सर्वं वस्तुजातमतीतकालानुभूतं प्रत्यभिज्ञायते । (श्री. भा. 2-2-24) स्मृतिसादृश्यात् अनुस्मृतिशब्देनाभिधानम् । (श्रु. प्र.) 4. तत्तत्प्रायश्चित्तनिवर्त्यपापनिवृत्त्युपायत्वाध्यवसायः ॥ (त. दी. 405)

**अनुस्मृतिः** — उपासनम् ।

'अनुस्मृतेर्बादरिः' (ब्र. सू. 1-2-31) 'तथोपासनार्थमिति बादरिराचार्यो मन्यते' (श्री. भा.) 'अनुस्मृतिः उपासनम्'॥ (श्रु. प्र.)

**अनुस्मृतेर्बादरिः** — (ब्र. सू. 1-2-31) (वैश्वानराधिकरणे सप्तमं सूत्रम्)

अनुस्मृतिः – उपासनं । ब्रह्मप्राप्तये तथोपासनार्थं ब्रह्मणः मूर्धप्रभृतिपादान्तदेहपरिकल्पनमिति बादरिराचार्यो मन्यते । अत्र फलस्य हेतुत्वविवक्षया हेतौ पञ्चमी ग्राह्या । वैश्वानरविद्यायां परस्य ब्रह्मणः मूर्धप्रभृतिपादान्तावयवपरिकल्पनं उपासनार्थमेवेति बोध्यम् ।

द्युलोकप्रभृतीनान्तु मूर्धत्वादिप्रकल्पनम् ।
तथैवोपासनं वक्तुमिति बादरिरब्रवीत् ॥ (ब्र. प. मा. 63)

**अनुस्मृतेश्च** — (ब्र. सू. 2-2-24) (समुदायाधिकरणेऽष्टमं सूत्रम्)

अनुस्मृतिः – अनुसरणम् । पूर्वानुभूतवस्तुविषयकं ज्ञानं–प्रत्यभिज्ञानमित्यर्थः । प्रत्यभिज्ञानाच्च न घटादेः क्षणिकत्वम् । प्रत्यभिज्ञानं हि नाम अतीतवर्तमानकालवर्त्येकविषयमेकं प्रत्यक्षज्ञानम् । तस्य कालद्वयसम्बन्धविशिष्टमेव वस्तु विषयः ।

न च तदित्यंशस्स्मरणम्, इदमित्यंशश्च ग्रहणम् । अतीतकालसम्बन्धिनः इन्द्रियसंप्रयोगाभावात् इति वाच्यम्, तदिदमिति सामानाधिकरण्येन ग्रहणस्यैकत्वस्फुरणात् । पूर्वकालानुभवजनितसंस्कारसहकृतेन्द्रियसंप्रयोगयुक्तस्य पुरुषस्य तथा ग्रहणमुपपद्यत एव । अन्वयव्यतिरेकाधीनं हि सर्वत्र सामग्रीपरिकल्पनम् ।

न च ज्वालादिवत् सादृश्यनिबन्धना प्रत्यभिज्ञेति त्वया वक्तुं शक्यम्, कालद्वयवर्तिनोः द्वयोः सादृश्यस्यानुसन्धातुः ज्ञातुरेकस्यानभ्युपगमात् । न ह्यन्यानुभूतेनैकत्वं सादृश्यं वा स्वानुभूतस्यान्योऽनुसन्धत्ते । अतोऽभिन्नकालवस्त्वाश्रयसादृश्यानुभवनिबन्धनमेकत्वव्यामोहं वदद्भिः ज्ञातुरेकत्वमवश्यमाश्रयणीयम् । न च ज्ञेयेष्वपि घटादिषु ज्वालादिष्विव भेदसाधनप्रमाणमुपलभामहे, येन सादृश्यनिबन्धनां प्रत्यभिज्ञां कल्पयेम । एतेन समुदायाधिकरणे प्रस्तुतं वस्तुनः स्थिरत्वमेव स्थापितम् ।

स एवायं घट इति प्रत्यभिज्ञा च जायते ।
अतो घटादिकार्याणां क्षणिकत्वं न सिध्यति ॥ (त्र. प. मा. 198)

**अनूचानः** — अङ्गाध्यायी, साङ्गाध्यायी वा ।

'गार्ग्यो ह वै बालाकिरनूचानः संस्पष्ट आस' (कौ. उ. 4-1) अङ्गाध्याय्यनूचानः' इति स्मृतेः । (रं. भा.) [अङ्गिभूतस्वाध्यायाध्ययनमर्थसिद्धम् ]

'अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः'

इत्यमरः । 'उपेयिवान् अनाश्वान् अनूचानश्च' इति पाणिनिसूत्रेण 'अनु'-पूर्वात् वचेः कर्तरि कानच्प्रत्ययः । वेदस्यानुवचनं कृतवान् अनूचानः ।

वेदानां किञ्चिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः । अङ्गाध्यायी अनूचानः इति कल्पसूत्रकारः । (श्रु. प्र. 1-37)

अमीमांसितवेदार्थः । ब्रह्मविद्यानुवचनकुशलः ॥ (वि. को.)

**अनूचानतमः** — अतिशयेन वेदस्यानुवचनं कृतवान् ।

'कः स्विदेषां ब्राह्मणानामनूचानतमः' इति । (बृ. उ. 5-1-1) अतिशयेन ब्रह्मविद्यानुवचनकुशलः ॥ (रं. भा.)

**अनूचानमानी** — आत्मानं साङ्गवेदाध्यायिनं मन्यमानः ।

'महामना अनूचानमानी' (छां. उ. 6-1-2) आत्मानमनूचानं मन्यत इत्यर्थे 'आत्ममाने खश्च' इति पाणिनिसूत्रेण 'णिनि'प्रत्ययः ॥

**अनूच्यम्** — पर्यङ्कस्यानूचीनदारु ।

'बृहद्रथन्तरेऽनूच्ये' (कौ. उ. 1-44) बृहद्रथन्तराख्ये सामनी अनूचीनदारुणी । (रं. भा.) अप्राकृतलोकस्थदिव्यमणिमण्टपस्य दारुविशेषौ ॥

**अनृणः** — ऋणाभावविशिष्टः ।

'देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः' (रा. अ. 4-14)

अत्र अनृण शब्दार्थः; देवानामनृणः क्रतुशतैः; ऋषीणामनृणोऽध्ययनेन; पितॄणामनृणोऽपत्योत्पादनेन; विप्राणामनृणो दत्तेन; आत्मनोऽनृणः सुखानुभवेन। यद्यपि ब्रह्मचर्यादिऋणत्रयं श्रुतिसिद्धम्। 'जायमानो वै ब्राह्मणस्त्रिभिः ऋणवा जायते; ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः' इति। तथापि ऋणपञ्चक-मिति मतान्तरम्। यद्वा ऋणत्रयव्यपदेशः प्राधान्यात् इतरयोरुपलक्षणत्वाद्वा।

ननु देवादीनां पञ्चानां कथमुत्तमर्णत्वं अत्राहुः – देवानामिन्द्रियाधिष्ठातॄणां जितेन्द्रियताकारकत्वेनोपकारकत्वात्, ऋषीणां वागुपकारकत्वात्, पितॄणां तनूपकार-कत्वात्, विप्राणां कर्माधीनसर्वसंस्कारसाधनेनाघनाशकत्वात्; आत्मनः शरीरेन्द्रिय-सङ्घातरूपस्य ज्ञानप्रकाशहेतुत्वेनोपकारकत्वाच्च तदप्रत्युपकारः पुरुषस्य ऋणमेव। अन्यत्र चोक्तम् –

'अनिषिद्धसुखत्यागी पशुरेव न संशयः' इति॥ (गो. रा.)

अनृतम् — मोक्षविरोधि कर्म।

'अनृतेन हि प्रत्यूढाः' इति वचनात् ऋतेतरविषयो ह्यनृतशब्दः। ऋतमिति कर्मवाचि, 'ऋतं पिबन्तौ' इति वचनात्। ऋतं – कर्मफलाभिसन्धिरहितं परमपुरु-षाराधनवेषं तत्प्राप्तिफलम्। अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्म अनृतं ब्रह्मप्राप्ति-विरोधि। (श्री. भा. 1. भा. 2-38)

अनृतमित्यस्यानिर्वचनीयमिति परैरुक्तम्। तत्राह – पूर्वनिरस्तप्रकारेणानिर्व-चनीयस्याप्रामाणिकत्वात् तत्र व्युत्पत्तिर्नास्तीति भावः। अनृतशब्दं व्याचष्टे–'ऋतेतर-विषयो ह्यनृतशब्द' इति। हिशब्देन ऋतेतरविषयत्वसंप्रतिपत्तिः सूचिता। ऋता-भावस्यं ऋतविरोधिनश्च ऋतभूतब्रह्माश्रयत्वानुपपत्त्या तदन्य एव नञर्थः त्वयापि वक्तव्यः इति भावः।

अनृतशब्दार्थं निष्क्रष्टुं ऋतशब्दार्थमाह, 'ऋतमिति' इति। कर्मवाचि – पुण्यकर्मवाचीत्यर्थः न तु सत्यवाचीति भावः। कुतः इत्यत्राह 'ऋतं पिबन्ताविति'। अस्मिन् वाक्ये 'सुकृतस्य लोके' इति ह्युक्तमिति भावः।

एवं विविधवाक्यान्तरेषु प्रसिद्धिश्चाभिप्रेता, 'यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वाति' 'एवं पुण्यस्य कर्मणो दूराद्गन्धो वाति' इत्युक्त्वा, 'एवमनृतादात्मानं जुगुप्सेत्' इति पुण्यप्रतियोगिनि अनृतशब्दः प्रयुक्तः। तस्मात् ऋतशब्दः पुण्यवाची। पुण्यमपि हि मोक्षविरोधि; तत्कथमनृतशब्दोक्तपापमात्रप्रत्यूढत्वमिति शङ्कायां मोक्षप्रकरणोक्तं पुण्यं विविनक्ति 'ऋतं कर्मेति'। मुमुक्षोः सुकृतं दुष्कृतमुभयं हि विरोधीत्यतस्तदुभयं पापम्। अतो नञ्समासान्तर्गतऋतशब्दोऽनभिसंहितफलकर्मपरः इत्यर्थः। (श्रु. प्र.)

अनृतशब्दो हि ऋतान्यवाची, ऋतशब्दश्च सत्यवाची। तथा च असत्यं (सत्यभिन्नं) वस्तु अनृतशब्देनोच्यते। तच्च न भावरूपाज्ञानम्। प्रपञ्चमात्रस्यासत्यत्वात्। तथा च 'प्रत्यूढाः' इति ज्ञानप्रतिबन्धकत्वोक्त्या तादृशमेवानृतशब्देनोच्यते, तच्च शरीरसम्बन्धादिकमेव।

वस्तुतस्तु अनृतशब्दः पापकर्मपरः, 'प्रत्यूढाः' इति ज्ञानप्रतिबन्धकत्वश्रवणात्। तच्च पापकर्मणः सुप्रसिद्धम्। (वे. मं. दी. 155)

1. हिंसा भार्या त्वधर्मस्य तयोर्जज्ञे तथाऽनृतम्। 2. अशास्त्रीयं प्रमाणमिति भाषणम्। 3. कर्म। 4. कृषिकर्म। 5. प्राकृतम् ऐश्वर्यादिकम्। 6. भगवत्तिरोधायकं कर्म। 7. विकारि॥ (वि. को.)

**अनेकत्वम्** — एकभिन्नत्वम्।

1. एकत्वभिन्नसंख्याविशिष्टत्वम्। यथा अनेके ब्राह्मणाः सन्तीत्यादौ ब्राह्मणानामनेकत्वम्। 2. अपेक्षाबुद्धिविशेषविषयत्वम्। यथा – अस्मिन्द्रव्येऽनेके गुणाः सन्तीत्यादावनेकत्वम्॥ (न्या. को.)

**अनेकमूर्तिः** — (स. ना. 726)

असाधारणानेकमूर्तित्वात् अनेकमूर्तिः। (वि. स. भा.)

कृष्णत्वेऽप्यग्रजहद्वासुदेवादिचतुर्मूर्तितया शताधिकषोडशसहस्रदिव्यमहिषीभोगानुगुणासाधारणतावन्मूर्तितया च अनेकाः मूर्तयोऽस्येति। (वि. स. निर्व.)

षोडशस्त्रीसहस्राणि शतमेकं ततोऽधिकम्।
अनेकमूर्तिरित्युक्तः तत्संख्यादेहधारणात्॥ (वि. स. नि.)

कृष्ण एव वासुदेवः, बलरामः—संकर्षणः, प्रद्युम्नानिरुद्धौ प्रसिद्धौ इति चतुर्मूर्तित्वं विवक्षितम् ॥

**अनेकशरीरैकात्मवादः —**

परशरीराण्यपि एकेनैव जीवेनाधिष्ठितानीति अनेकशरीरेषु एकजीववादः सौभरिवत् इति केचित् ; तन्न ; सर्वतः प्रतिसन्धानप्रसंगात् । तच्च वेदार्थसंग्रहे, सर्वार्थसिद्ध्यादौ च दूषितम् ।

न च स्वेनान्यदेहादेः अधिष्ठानादिसम्भवः ।
सौभरिन्यायतस्तत्तत्प्रतिसन्धिप्रसंगतः ॥ इति ।

अतः प्रतिशरीरं जीवभेदः सिद्धः ।

परदेहस्य लिंगानां अन्यथासिद्धिकल्पने ।
स्वदेहेऽपि तथैवेति नैरात्म्यमवशिष्यते ॥
आगमादात्मनां सिद्धौ ईश्वरस्य तु किं पुनः ।
परात्मनिश्चयाभावेत्वागमोऽपि न सेत्स्यति ॥ (स. सि. 167)

इत्युक्तेः बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं स्वव्यतिरिक्तात्मनः सद्भावः प्रतिशरीरं अंगीकार्य एवेति भावः ॥

**अनेकान्तवादः** — जैनसम्मतो वादः ।

अनियतवादिनां हि स्वपक्ष एव परपक्षः; दूषणमेव भूषणम् ; विजय एव पराजयः; व्यवहार एव मौनमिति सर्वो व्याघातः संपनीपद्येत । (स. सि. 372)

परस्परव्याहता धर्माः एकत्र संमिलन्तीति ते वदन्ति । अस्यैव स्याद्वाद इति नामान्तरम् । वस्तुनि विकल्पायोगात् अयं वादो न युक्तः, एकान्तवाद एव आश्रयणीयः ॥

**अनेकान्तानुमानभङ्गः —**

'सर्वमनेकान्तं सत्त्वात् घटाकाशमहाकाशवत्' इति जैनाः वदन्ति । तत् धीविरुद्धम् , सामान्याकारेणाभेदः इति विरोधं परिहराम इति चेत् न; अनवस्थादोष-

प्रसङ्गात् । व्यक्तीनामभेदनिर्वाहार्थं जातिः परिगृह्यते । जातिव्यक्त्योः अत्यन्त-विरुद्धस्वभावयोः अभेदनिर्वाहार्थं धर्मान्तरस्वीकारेऽनवस्था, अस्वीकारे विरुद्धाकारेण प्रतिभासमानयोः कथमभेदः ?

अपि च सर्वत्रानेकान्तवादे व्यापारनियमः, व्यवहारनियमः, सिद्धान्तनियमः, इत्यादयः सर्वे नियमाः व्याकुलीभवेयुः । आकाशेऽपि घटकरकाद्यवच्छेदकभेदेनैव स्थूलसूक्ष्मादिव्यवहारः । तत्रोपाधीनां भिन्नत्वमेव, उपाधिमतः पुनरभिन्नत्वमेव, केवलमुपाधिगतो भेदः उपाधिमत्पर्यन्तं उपाधिद्वारेण व्यवह्रियते इति विरोधः ।

(स. सि. 370)

ननु अनेकान्तवादानभ्युपगमे वादिभिः सर्वैरपि एकस्मिन् सिद्धान्ते पक्षद्वयोपवर्णनं कथं इति चेत्, तत्र हेतुमाह – भिन्नाशयोक्तेरिति । तत्तच्छास्त्रप्रवक्तॄणामाशय-भेदेन पक्षभेदोपवर्णनं न्याय्यमित्यर्थः । परिहारान्तरमप्याह मन्तव्येति । एकस्यैव वक्तुः क्वचिद्वैभवोक्तिः, क्वचित् परमार्थोक्तिः, क्वचिदनभिमते संशयोक्तिः । अतो नानेकान्तवादप्रसङ्गः । तदुक्तम् –

सिद्धे वस्तुन्यशेषैः स्वमतमुभयथा वर्ण्यते तत्र तत्र
स्यादर्थस्यैकरूप्ये कथमिदमिति चेत्तन्न भिन्नाशयोक्तेः ।
मन्तव्या वैभवोक्तिः क्वचिदनभिमते संशयोक्तिः क्वचिद्वा
भागद्वैतान्नृसिंहप्रभृतिषु घटते चित्रसंस्थानयोगः ।। इति । (त.मु. 371)

नृसिंहादिरूपेषु विरुद्धाकारेषु अंशभेदादविरोधः इत्याह – भागद्वैतादिति ।।

(स. सि.)

**अनेकेश्वरपक्षः** — सृष्टिस्थितिप्रलयादिकार्यभेदेन ब्रह्मरुद्रादीनां तुल्यतयेश्वरत्ववादः ।

अयन्तु त्रैकालिकसर्वनिर्वाहकेश्वरप्रतिष्ठापकैः प्रमाणगणैः निरासि । अतः 'पतिं विश्वस्यात्मेश्वरम्' इत्यादि प्रसिद्धानन्यार्थानैश्वर्यः 'योऽसावसौ पुरुषः' इति अनुवदि-ष्यमाणः ब्रह्मेशानजनकतया अनन्यथासिद्धवाक्यनिर्धारितः । 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादिषु प्रसिद्धः एक एव सर्वेश्वरत्वेन स्वीकरणीयः ।। (ई. उ. वे. भा. ।)

**अनेजत्** — अकम्पमानं ब्रह्म ।

(एजृ-कम्पने) 'अनेजदेकं मनसो जवीयः' (ई. उ. 4)

ननु इदं न जाघटीति निष्कम्पत्वं वेगवत्तरत्वञ्चेति । मैवं, तात्पर्यवृत्त्या सुघटितत्वात् । सर्वस्य स्वेननित्यव्याप्तत्वात् अनेजत्, सर्वदा मनसो गोचरदेशमतिक्रम्य-वृत्तेः मनसो जवीय उपचर्यते ।। (वे. भा.)

**अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि** —

अनेन जीवेन – जीवसमष्टिविशिष्टेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि – देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि ।

सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वमिश्रानवधिकातिशया-संख्येयकल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म 'बहु स्याम्' इति सङ्कल्प्य तेजोबन्न-प्रमुखं कृत्स्नं जगत् सृष्ट्वा, तस्मिन् देवादिविचित्रसंस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य, स्वयञ्च स्वेच्छयैव जीवान्तरात्मतयाऽनुप्रविश्य, एवम्भूतेषु स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु नामरूपे व्याकरोत् । एवं स्वरूपसङ्घातस्यैव वस्तुत्वं शब्दवाच्यत्वं चाकरोदित्यर्थः । (श्री. भा. 1-1-13)

एवम्भूतेषु – द्वारद्वारिभावेन व्यवस्थितेषु चिदचिदात्मकेष्वित्यर्थः । स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु तत्तद्देवाद्यवस्थाः तच्छ्वाचिशब्दांश्चाकरोदित्यर्थः । 'नामरूपे व्याकरोत्' इत्युक्ते नामरूपव्याकरणस्य परमात्मपर्यन्तत्वस्यास्फुटत्वात् तत् विशदयति एवमिति । पूर्वं ल्यबन्तनिर्दिष्टानां क्रियाणां क्रमविवक्षाराहित्यं चानेन प्रदर्श्यते । (श्र. प्र.)

अनेन जीवेनात्मना – जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति । ब्रह्मात्मकत्वञ्च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते; 'इदं सर्वमसृजत । यदिदं किं च । तत् सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इति । अत्र सर्वमिति निर्दिष्टं चेतनाचेतनवस्तुद्वयं 'सत्' 'त्यत्' विज्ञानाविज्ञान-शब्दाभ्याञ्च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात् । अत एवं

नामरूपव्याकरणात् सर्वे वाचकाः शब्दाः अचिज्जीवविशिष्टपरमात्मवाचिनः इत्यवगत-मिति । (श्री. भा. 1-1-13)

'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वं गम्यते; 'तत् सृष्ट्वा तदेवानुप्राविशत्' इत्यनुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते, तस्मान्नात्र पौर्वापर्यविवक्षा; समानकर्तृकत्वमेवात्र विवक्षितम् । 'तस्य त्वष्टा विदधद्रूपमेति' इति वाक्ये सृष्ट्यनुप्रवेशयोः समानकालीनत्वावगमात् । तस्मात् भाष्येऽप्यनुप्रविश्येति ल्यबन्तनिर्देशोऽनुप्रवेशसृष्ट्योर्विविच्य ज्ञापनार्थ इत्यवगन्तव्यम् । (श्रु. प्र.) तथा च जीवशरीरकेणात्मना मयानुप्रविश्येत्यर्थः ॥

**अनेन सर्वगतत्वमायामशब्दादिभ्यः** — (ब्र. सू. 3-2-36) (पराधिकरणे सप्तमं सूत्रम्)

अनेन – जगत्कारणभूतब्रह्मणा सर्वस्य जगतः व्याप्तत्वं सर्वव्याप्तिवाचिशब्देभ्यः अवगम्यते । जगत्कारणस्यैव सर्वव्यापकतया तदतिरिक्तस्य शङ्का व्यावर्तिता । 'तेनेदं पूर्णं पुरुषेण सर्वम्' 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यायामशब्देभ्यः – सर्व-व्याप्तिवाचिशब्देभ्यः अवगम्यते । एवमवगम्यमानं एतस्मात्परं वारयतीत्यर्थः । आदि-शब्दात् 'आत्मैवेदं सर्वं' इत्यादयो गृह्यन्ते । अतः 'यतो वा इमानि भूतानि' इत्यादिनावगतजगन्निमित्तोपादानकारणात् ब्रह्मणोऽन्यत्परमुत्कृष्टं न विद्यते इति पूर्वप्रस्तुतं दृढीकृतम् ।

ब्रह्मणाऽनेन सर्वस्य व्याप्यत्वमवगम्यते ।
सर्वव्याप्तेर्वाचिशब्दैः पूर्णमित्यादिकैरिह ॥ (ब्र. प. मा. 350)

**अनैकान्तिकः** — सव्यभिचारः ।

स द्विविधः – साधारणोऽसाधारणश्चेति । साधारणः पक्षत्रयव्यापी । उत्तरः पक्षमात्रनिष्ठः । यथा क्षित्यादिकं सकर्तृकं प्रमेयत्वात्, घटादिवत् । (न्या. प. 199)

हेत्वाभासविशेषः । स द्विविधः, साधारणासाधारणभेदात् । पक्षसपक्षविपक्ष-वृत्तिः साधारणानैकान्तिकः । यथा शब्दो नित्यः प्रमेयत्वात् कालवत् । असा-धारणस्तु सपक्षविपक्षव्यावृत्तः । यथा भूर्नित्या गन्धवत्त्वात्; व्योमादिवदिति ॥
(य. दी. 32)

एकस्य साध्यस्य तदभावस्य वा योऽन्तः सहचारः अव्यभिचरितसहचार एकान्तः तद्वान् ऐकान्तिकः। न ऐकान्तिकः अनैकान्तिकः। अनैकान्तिकः सव्यभिचारशब्देन व्यवह्रियते ॥ (न्या. को.)

अन्तः — 1. अन्तर्वर्ति ।

'तस्मिन् यदन्तः तदन्वेष्टव्यम्' (छां. उ. 8-1-1)

2. अवधिभूतः। 'यत्रासौ केशान्तो विवर्तते' (तै. उ. 6) यत्र — यस्मिन् मार्गे। केशान्तः — कः ब्रह्मा; ईशः — रुद्रः। 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्' इति केशवशब्दनिरुक्तौ तथा वर्णनात्। तयोः अन्तः — अवधिभूतः; कारणमिति यावत्। संहर्ता। स्थानभूत इति वा। (रं. भा.)

3. निश्चयः। 'लोकानामन्तानपृच्छाम' (बृ. उ. 5-3-1) 4. अन्तशब्दो मध्यवचनः। 'स्वप्नान्ते उच्चावचमीयमानः रूपाणि देवः कुरुते बहूनि'। (बृ. उ. 6-3-13) अन्तशब्दः इह लोकद्वयमध्यभूतस्थानवाची ।

5. स्थितिकालसमाप्तिः। (श्रु. भा.) 'सोऽन्ते वैश्वानरो भूत्वा' (सु. उ. 2) 6. नरकः। 'इतः स्वर्गश्च मोक्षश्च मध्यं चान्तश्च गम्यते' (वि. पु. 2-3-5) स्वर्गमोक्षादिगणनायामन्ते विद्यमानत्वात् अन्तश्शब्देन नरकः उच्यते। (वि. चि.) 7. निर्णयः। 'उभयोरपि दृष्टोऽन्तः' (गी. 2-16) निर्णयान्तत्वात् निरूपणस्य निर्णयः इह अन्तश्शब्देनोच्यते। (गी. भा.) 8. फलम्। 'यं यमन्तं अभिकामा भवन्ति' इत्यत्र साधनानुष्ठानावसानभावित्वात्, यं यमन्तं फलं क्षेत्रजनपदादिकं प्रति अभिकामाः — अभ्यर्थिनो भवन्ति। तत्तत्फलं तथोपजीवन्ति इति। (श्रु. प्र. 1-3-13) 9. पर्यवसानम्। 'यज्ञान्तकृत् यज्ञगुह्यम्' (स. ना. 981)

1. अवसानम्। 2. पारभूतम्। 3. मरणम्। 4. राष्ट्रसीमा। 5. स्थानम्।

'अन्तस्समाप्तौ स्थाने च निर्णयेऽभ्यन्तरेऽपि च' इति निघण्टुः।

6. विनाशः। 7. अन्तिकम्। (वि. को.)

1. सम्बन्धः । यथा 'ते विभक्त्यन्ताः पदम्' इत्यत्र विभक्तिर्नाम वृत्तिः शक्तिः । 2. ध्वंसः । 3. चरमावयवः इति शाब्दिकाः । 4. निर्णय इति वेदान्तिनः । 5. स्वरूपम् । 6. स्वभावः । 7. सीमा । 8. निकटम् । 9. मनोहर इति काव्यज्ञाः । (न्या. को.)

सामीप्यवाची च; 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इत्यादौ ॥

**अन्तकः** — (स. ना. 523)

सर्वस्य अन्तं करोतीति । (वि. स. भा.)

अन्तयति – सर्वस्यान्तं करोतीति अन्तकः । (वि. स. निर्व.)

अन्तं करोति जगतो योऽसावन्तक ईरितः ॥ (वि. स. नि.)

**अन्तःकरणम्** — मनः ।

सांख्यास्त्वाहुः – अन्तःकरणं त्रिविधम् । मनः, अहङ्कारः, बुद्धिः इति । अन्ये तु चित्ताख्यमप्यन्तःकरणं अन्यदाहुः । (स. सि. 37) सिद्धान्ते मन एकमेवान्तःकरणम् । सङ्कल्पाध्यवसायादयः तद्व्यापारभेदा एव इति नान्तःकरणवैविध्यम् । तथा च भाष्यम् 'अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैः व्यपदिश्यते' इति । (न्या. सि. 36) सिद्धान्ते मनोवृत्तिर्नाम मनोद्वारा प्रसृतधर्मभूतज्ञानावस्थाविशेष एव न तु परमतरीत्या अन्तःकरणपरिणामः ।

मिथुनीकरणम् ॥ (वि. को.)

**अन्तःप्रविष्टः शास्ता** — अन्तः प्रविश्य नियन्ता परमात्मा ।

विशेषणद्वयेन नृपनभोव्यावृत्तिः । (श्रु. प्र. 1-1-13) अन्तःप्रविश्य नियन्तृत्वं परमात्मनः असाधारणधर्मः । नभसः अन्तःप्रवेशसद्भावेऽपि नियन्तृत्वं नास्ति । नृपस्य नियन्तृत्वेऽपि अन्तःप्रवेशो नास्तीत्यर्थः ॥

**अन्तरः** — 1. अन्तर्व्याप्तः (परमात्मा) ।

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' इत्यारभ्य 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरः' (बृ. उ. 5-7-7) इत्यादिषु श्रूयमाणः अन्तरः तदन्तर्गतपरमात्मपरः ।

पृथिव्यां तिष्ठन् इत्यादिषु बहिर्व्याप्तेः कथनात् पृथिव्याः अन्तरः इत्यादिषु अन्तर शब्देन अन्तर्व्याप्तिः उच्यते । (रं. भा.)

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविना बहिरवसरमध्येऽन्तरात्मनि च ॥ (नानार्थवर्गः)

2. अवकाशः । अन्तरशब्दश्चावकाशपरः । निरन्तरं सान्तरमिति प्रयोगात् ।
(श्रु. प्र. 1-208)

अन्तरम् — विच्छेदः ।

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । (तै. आ. 7)
अन्तरश्च देशतः कालतश्च भवति । कालकृतं चान्तरं विच्छेद एव ।
(श्रु. प्र. 1-207)

एतस्मिन् परमात्मनि ध्यानस्यान्तरं विच्छेदं अरं स्वल्पमपि यः कुरुते तस्य भयं उद्भवतीत्यर्थः । पूर्ववाक्ये प्रतिष्ठाशब्देन निरन्तरध्यानवाचिना, ध्यानगतनैरन्तर्यस्य विहितत्वात् , अत्र अन्तरशब्देनापि तस्यैव ध्यानगतनैरन्तर्यस्य विरोधिनो ध्यानविच्छेदस्य ग्रहणमुचितम् ; न तु परोक्तरीत्या, 'ब्रह्मणि अन्तरं भेदं यः कुरुते जानाति' इत्यर्थः उचितः इति द्रष्टव्यम् । (रं. भा.)

1. अतिशयितः भेदः । 2. अवसरः । 3. अवस्थानायावकाशः । 4. छिद्रम् । 5. तारतम्यम् । 6. भेदः । 7. विशेषः । 8. वैषम्यम् ॥
(वि. को.)

अन्तर उपपत्तेः — (ब्र. सू. 1-2-13) (अन्तराधिकरणे प्रथमं सूत्रम् )

अक्ष्यन्तरः परमात्मा, संयद्वामत्वादीनां गुणानां अत्रैवोपपत्तेः । छान्दोग्ये 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच, एतदमृतमभयमेतद्ब्रह्म' इत्यत्र अक्ष्याधारः पुरुषः किं प्रतिबिम्बात्मजीवदेवताविशेषान्यतमः उत परमात्मेति संशयः । एष्वन्यतम इति पूर्वपक्षः; कुतः? 'य एष दृश्यते' इति प्रसिद्धवत्साक्षात्कारनिर्देशात् ।

राद्धान्तस्तु – परमात्मैवायमक्ष्याधारः पुरुषः, अक्षिपुरुषसम्बन्धितया श्रूयमाणा हि निरुपाधिकात्मत्वामृतत्वाभयत्वब्रह्मत्वसंयद्वामत्वादयः परमात्मन्येवोपपद्यन्ते। प्रसिद्ध-वन्निर्देशश्च 'यश्चक्षुषि तिष्ठन्' इत्यादि श्रुत्यन्तरप्रसिद्धेरुपपद्यते। साक्षात्कारश्च तदुपासननिष्ठानां योगिनाम्। एतेन अक्ष्याधारतया निर्दिश्यमानस्य परमात्मत्वं साधितम्।

अक्ष्यन्तर्वर्तिपुरुषो जीवबिम्बसुरात्परः।
अमृतत्वाभयत्वादिगुणानामुपपत्तितः॥ (ब्र. प. मा. 45)

अन्तरङ्गोपायः — प्रत्यासन्नसाधनम्।

विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह; 'शान्तो दान्तः' इति। (श्री. भा. 1-46)

कर्मणः शमादिवैषम्यमाह अन्तरङ्गोपायतामिति। 'तस्मादेवंवित् शान्तो दान्तः . . . . . पश्येत्' इत्यन्तरङ्गत्वं स्पष्टम्। विविदिषायाः पूर्वं हि कर्मोपयोगः, शमादि तु पश्चादप्युपयुज्यते इत्यभिप्रेत्य 'जातायाम्' इत्युक्तम्। (श्रु. प्र.) इदन्तु परमतानुरोधेन।

सिद्धान्ते तु यावदुपासनं तदङ्गतया कर्म कर्तव्यमेव। एतदपेक्षया शमदमाद्य-ङ्गानामन्तरङ्गसाधनत्वं सम्मतमेवेति भावः॥

अन्तरत्वाधिकरणम् —(3-3-15)

1. अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्।

2. व्यतिहारो विशिंषन्ति हीतरवत्।

3. सैव हि सत्यादयः।

इति सूत्रत्रयात्मकं एवं निर्दिश्यते। बृहदारण्यके उषस्तकहोळप्रतिवचनश्रुत्योः विद्याभेद इत्याशङ्क्य प्रश्नैकरूप्यात् विधिपदैक्याच्च विद्यैक्यमिति उक्तम्।

प्रष्टृभेदेऽपि तथा व्यतिहारः प्राणनाशनायाद्योः ।
वाक्यं सद्विद्यावत् 'यत्साक्षात्' इति समानतः प्रश्ने ॥ (न्या. क. सं. 3-35)

अन्तरधिकरणम् — (1-1-7)

1. अन्तस्तद्धर्मोपदेशात् ।

2. भेदव्यपदेशाच्चान्यः ।

अन्तश्शब्देनोपक्रान्तं सूत्रद्वयात्मकमिदम् । यद्यपि शरीरमात्रेण सम्बन्धमात्रं परमात्मनि सम्भवति ; तथापि करचरणादियुक्तशरीरविशेषण-उपकरणोपकरणिभाव-लक्षणसम्बन्धस्य जीवासाधारणत्वात्, अन्तरादित्यविद्यायां 'हिरण्यश्मश्रुः' इत्यादिना शरीरविशेषसम्बन्धश्रवणाच्च आदित्यमण्डलान्तर्वर्तिनो जीवत्वावगमात्, 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्यानन्दमयस्य आदित्यमण्डलान्तर्वर्तिनश्च एकत्वावगमात् आनन्दमयो जीव एवेत्याशङ्क्य अन्तरादित्यविद्यायामेव अपहतपाप्मत्वादीनां जीवेष्व-सम्भावितधर्माणां श्रवणात्, परमात्मनोऽपि करचरणादियुक्ताप्राकृतनित्यविग्रहसद्भावाच्च आदित्यमण्डलान्तर्वर्ती परमात्मापि तदभिन्नः आनन्दमयः इति सिद्धान्तितम् ।

देहित्वतश्चेतन एव कश्चित् पुण्योत्तरो मण्डलमध्यवर्ती ।
इत्येवमुत्सारयते स शङ्कां लोकेशताद्यैः परमात्मधर्मैः ॥
(न्या. क. सं. 1-14)

अन्तरा चापि तु तद्दृष्टेः — (ब्र. सू. 3-4-36) (विधुराधिकरणे प्रथमं सूत्रम्)

'तु'शब्दात् पक्षो व्यावृत्तः, च-शब्दः अवधारणे । अन्तरा चापि – आश्रमा-न्तरा वर्तमानानां अनाश्रमिणामपि अधिकारोऽस्त्येव; कुतः ? तद्दृष्टेः – रैक्वभीष्मसं-वर्तादिषु विद्यानिष्ठत्वदृष्टेः, विधुरः – मृतदारः । आदिशब्दोपात्तोऽकृतदारः । (अनाश्रमी)

विधुरादीनां अनाश्रमिणां ब्रह्मविद्यायां अधिकारोऽस्ति, नेति संशयः; आश्रम-धर्मेतिकर्तव्यताकत्वात् विद्यायाः, अनाश्रमिणां तदभावात् तेषामनधिकारः इति पूर्वः पक्षः ।

राद्धान्तस्तु ऊर्ध्वरेतस्स्विव रैक्वादिषु अनाश्रमिषु विद्यानिष्ठत्वदर्शनात् आश्रमानियतैः जपोपवासदानादिभिरेव तेषां विद्यानुग्रहो भवतीति अस्त्येवाधिकारः। एतेन विधुरादीनामपि विद्यायामधिकारः प्रसाधितः॥

अनाश्रमाणामपि च ब्रह्मविद्या विधीयते।
रैक्वभीष्मादिकानां तु विद्यानिष्ठत्वदर्शनात्॥ (ब्र. प. मा. 454)

**अन्तरात्मदृक्** — परमात्मा।

'न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक्' (भाग. 10-31-4)
पश्यति सर्वमिति दृक्। कर्तरि क्विप्। अन्तः प्रविष्टः शुभाशुभसाक्षी परमात्मा॥ (भाग. वी.)

**अन्तरात्मा** — 1. अन्तःप्रविश्य सर्वनियन्ता नारायणः।

'एष सर्वभूतान्तरात्मा' (सु. उ. 7) 'प्रद्युम्नायान्तरात्मने' (भाग. 4-23-35)
सर्वदेशकालावस्थासु युगपत्सर्वजगदन्तःप्रवेशपूर्वकप्रशासिता। (भाग. वी.)

1. अन्तर्यामी। 2. अन्तःकरणम्। (वि. को.)

1. देहान्तर्वर्तिमनः। 2. तत्तद्देहस्य नियन्ता जीवात्मा॥ (सं. अ.)

**अन्तरादन्तरप्रवेशः** — 1. परमात्मकर्तृकजीवात्मकर्मकानुप्रवेशः।

'सोऽन्तरादन्तरं प्राविशत् . . . . . सोऽहं नित्यानित्यो ब्रह्म अहं ब्रह्म' (अ.शि.उ. 1) 'सोऽन्तरादन्तः प्राविशदित्यधीतविधया तद्वामदेवादिवत्' (तत्त्वसा. 80)

सः परमात्मा शरीरादन्तरस्य प्राणादेरप्यन्तरं जीवं प्राविशत् इत्यर्थः। यत्पुनः अथर्वशिरसि रुद्रेण स्वसर्वैश्वर्यं प्रपञ्चितम्, तत् सोऽन्तरादन्तरं प्राविशत्' इति परमात्मप्रवेशादुक्तम् इति, श्रुत्यैव व्यक्तम्; 'शास्त्रदृष्ट्या तु उपदेशो वामदेववत्' इति सूत्रकारेणैवमादीनामर्थः प्रतिपादितः। (वे. सं. 283)

अत्र 'सः' इति परमात्मोच्यते, बुद्धिस्थत्वात् परमात्मनः . . . . . सर्वसामानाधिकरण्यस्यात्र वक्ष्यमाणत्वात्। अतः को भवान् इति पृष्टेन प्रथमं 'अह-

मेकः प्रथममासं वर्तामि' इत्यादिना सर्वात्मकत्वे उक्ते परमात्मनो हि सर्वात्मकत्वम् ? कथं तद्भवतः ? इत्यपेक्षायां 'सोऽन्तरादन्तरं' इति वक्ष्यमाणप्रकारेणेत्यर्थः विवक्षितः। अतः 'शास्त्रदृष्ट्या' 'अहमेव प्रथममासं' इत्युक्तिः न विरुध्यते। एवं रुद्रवाक्यत्वमेव युक्तम्।

2. रुद्रकर्तृकपरमात्मकर्मकबुद्ध्यवगाहनरूपानुप्रवेशः।

यद्वा श्रुतिवाक्यमस्तु, तदायमर्थः – 'सः रुद्रः अन्तरादन्तरं जीवादन्तरं परमात्मानं प्राविशत् बुद्ध्याऽवगाहत' इति। अनुप्रवेशशब्दस्य सम्यग्बोधनार्थत्वं लोकोक्तिसिद्धम्। तथा चाणक्यप्रयोगश्च –

'यस्य यस्य हि यो भावः तेन तेन तदन्तरम्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्॥' इति।

सः – रुद्रः स्वान्तर्यामिणं सर्वपदार्थान्तर्यामिणञ्च परमात्मानं तच्छरीरकं बुद्ध्यानुसंहितवान् इत्यर्थः। एवं निर्वाहद्वयमभिप्रेत्य परमात्मप्रवेशादित्युक्तम्। तथा च परमात्मनः प्रवेशात् इति षष्ठीसमासः। परमात्मकर्तृकप्रवेशात्, परमात्मकर्मकप्रवेशाच्चेति भावः॥ (ता. दी)

**अन्तरादित्यपुरुषः** — आदित्यान्तर्वर्ती नारायणः।

छान्दोग्ये अन्तरादित्यविद्या श्रूयते – 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्यः उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति।

अकर्माधीनः-गम्भीराम्भस्समुद्भूत-सुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः दिव्यमङ्गलविग्रहविशिष्टः परमात्मा प्रतिपाद्यते। विग्रहसम्बन्धमात्रेण जीवविशेषप्रतिपादनन्तु परमपुरुषविद्वेषिणां पापिष्ठानां प्रलाप एव। (चिं. म. 62)

अत्र पुरुषश्रुतेः भगवदसाधारणपुण्डरीकाक्षत्वाक्षिद्वित्वापहतपाप्मत्वसर्वपापविनाशकत्वोपास्यत्वधर्मप्रतीतेश्च भगवत्परत्वसिद्धिः। तथा हि पुरुषशब्दस्य भगवदसाधा-

रणत्वं बहुशः प्रतिपादितम् । पुण्डरीकाक्षत्वस्य भगवदसाधारणत्वं स्पष्टमेव । अक्षिद्वयमपि नारायणस्यैव । रुद्रस्य त्र्यक्षत्वेन यथा कप्यासं पुण्डरीकमेवमक्षिणी इति अक्षिद्वयानुवादेन पुण्डरीकसादृश्यविधानासम्भवात् ॥ (वे. मं. दी. 96)

**अन्तरादित्याक्षिविद्या** — आदित्यमण्डलान्तर्वर्ति चेतनान्तर्यामिणः उपासनम् । एवमेव अक्ष्यन्तर्वर्तिजीवान्तर्यामिणः परमात्मनः उपासनम् ।

इमे छान्दोग्ये 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्यः उदितः' इत्यादिवाक्यैः, 'अथ य एषः अन्तरक्षिणि पुरुषः दृश्यते' इत्यादिवाक्यैश्च प्रत्यपादिपाताम् ।

इमे अन्तरधिकरणेन न्यरूपिषातां च । उभयोः संग्रहार्थमेव आदित्याक्षिशब्दं विहाय 'अन्तस्तद्धर्मोपदेशात्' इति सामान्यतः अभ्यधायि सर्वस्ववेदिना सूत्रकारेण॥

**अन्तरादित्ये कृष्णः** — आदित्यान्तर्वर्ती कृष्णः ।

अन्तरादित्यविद्यायां 'अथ यन्नीलं परः कृष्णः तदमस्तत्साम' इत्यादित्यान्तर्वर्ती भगवानेवेति स्पष्टमवगम्यते । अथ यन्नीलमित्यत्र नीलशब्देनोक्तस्य आदित्यान्तर्वर्तिनः कृष्णशब्देनोक्तेः । अन्यथा कृष्णपदवैयर्थ्यात्, नीलपदेनैव कृष्णद्रव्याभिधानात् । नीलपदोक्तस्य भगवतः कृष्णत्वोपपादनार्थत्वे हि कृष्णपदस्य सप्रयोजनत्वम् । 'परं कृष्णं' इति पाठे लिङ्गव्यत्ययः छान्दसः । (वे. मं. दी. 97) यद्यपि श्रुतौ परः कृष्णमिति पाठो दृश्यते, तथापि 'परः कृष्णः' इति पाठाभिप्रायेणायं ग्रन्थः प्रवृत्तः ॥

**अन्तराधिकरणम्** — (1-2-3)

1. अन्तर उपपत्तेः । 2. स्थानादिव्यपदेशाच्च । 3. सुखविशिष्टाभिधानादेव च । 4. अत एव च स ब्रह्म । 5. श्रुतोपनिषत्कगत्यभिधानाच्च । 6. अनवस्थितेरसम्भवाच्च नेतरः ।

'य एषोऽक्षिणि पुरुषः दृश्यते' इत्यादिवाक्ये चक्षुर्व्यवस्थितस्य प्रसिद्धवन्निर्देशात् क्षद्मप्रसिद्धेश्च प्रत्यक्षयुक्त्यागमैः प्रतिबिम्बजीवादित्यादिषूपपत्तेः अक्षिपुरुषस्तेष्वन्यतम इत्याशङ्क्य – संयद्वामत्वादीनां परमात्मन्येवोपपत्तेः, तस्य च चक्षुष्यवस्थानस्य 'यश्चक्षुषि तिष्ठन्' इत्यादिषु प्रसिद्धत्वात् अक्षिपुरुषः परमात्मेत्युक्तम् ।

अक्ष्यन्तरस्त्वेष इति प्रसिद्ध्या जीवोऽथवा बिम्बमथापि दैवम् ।
इत्यप्यसत् स्यादमृतत्वशब्दात् सुखश्रुतेश्चाप्यनवस्थितेश्च ॥
(न्या. क. सं. 1-23)

अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेन्नोपदेशवत् — (ब्र. सू. 3-3-35)
(अन्तरत्वाधिकरणे प्रथमसूत्रम्)

अन्तरा – 'य आत्मा सर्वान्तरः' इति सर्वान्तरत्वेन प्रथमप्रतिवचनम् । भूतग्रामवत्स्वात्मनः (भूतग्रामवान् – तदन्तरः – स्वात्मा प्रत्यगात्मा सर्वान्तरः तस्य) इत्युपगन्तव्यः । अन्यथा यः प्राणेन प्राणिति, योऽशनायापिपासाद्यतीतः इति प्रतिवचनभेदानुपपत्तिरिति चेत् ; नात्र प्रत्यगात्मपरमात्मविषयं प्रश्नद्वयम् , प्रतिवचनद्वयञ्च परमात्मन्येकस्मिन्नेवोपास्ये सम्भवतीत्यर्थः । उपदेशवत् – 'स्तब्धोऽस्युततमादेशमप्राक्ष्यः' इति 'प्रक्रान्तायामेकस्यामेव सद्विद्यायां 'भगवांस्त्वेव मे तद्ब्रवीत्विति' 'भूय एव मा भगवान् विज्ञापयतु' इत्यादिका प्रश्नावृत्तिः प्रतिवचनभेदश्चोपास्यमाहात्म्यविशेषप्रतिपादनपरत्वेन दृश्यते तद्वत् ।

बृहदारण्यके उषस्तप्रश्नः एवमाम्नायते – 'यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व' इति । तस्य प्रतिवचनम् 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः योऽपानेनापानिति स त आत्मा' इत्यादि 'अतोन्यदार्त'मित्यन्तमाम्नातम् । तथानन्तरं कहोळप्रश्नप्रतिवचनम् 'यदेव साक्षात् अपरोक्षाद्ब्रह्म . . . . . . तन्मे व्याचक्ष्व' 'योऽशनायापिपासे शोकं मोहं . . . . . अत्येति' इत्यादि । किमुभयत्र विद्यैक्यं उत विद्याभेदः ? इति संशयः, पूर्वत्र प्राणनादिहेतुः प्रत्यगात्मा उत्तरत्राशनायाद्यतीतः परमात्मेत्युपास्यभेदात् विद्याभेद इति पूर्वपक्षः ।

राद्धान्तस्तु – 'यत्साक्षात् अपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व' इति उभयत्र प्रश्नस्य परमात्मविषयत्वात् एकरूपत्वाच्च सर्वप्राणिप्राणनादिहेतुत्वस्य

अशनायाद्यतीतत्वस्य च प्रतिवचनद्वयावगतस्य परमात्मन्येकस्मिन्नेव उपास्यें सम्भवाच्च न विद्याभेदः ।

अन्नान्तरेति भावप्रधाननिर्देशः । 'पूर्वसवर्णाच्छे . . .' (पा. सू. 7-1-39) इत्यनेन छन्दसि पूर्वसवर्णदीर्घे कृते इदं रूपम् । अतः अन्तरत्वेन सर्वान्तरत्वेनेत्यर्थः । अपरोक्षात् – अपरोक्षमित्यर्थः । 'सुपां सुलुक्' इत्यादिना आत्-आदेशः । ब्रह्मणः अपरोक्षत्वं नाम सर्वदेशकालसन्निहितत्वम् । देशकालसन्निकर्षे हि अपरोक्षदर्शनात् – यदपरोक्षं साक्षाद्ब्रह्म अव्यवधानेन ब्रह्म अगौणं – मुख्यमिति यावत् । अनेनोषस्त-प्रश्नप्रतिवचनयोः जीवविषयकत्वशङ्का अपाकृता ॥

सर्वान्तरस्तु जीवात्मा प्रत्युक्तेश्च विभेदतः ।
मैवं सः परः इत्येव सद्विद्यावत्प्रतीयते ॥ (ब्र. प. मा. 389)

**अन्तराराम:** — आत्मैकोद्यानः ।

'योऽन्तस्सुखोऽन्तराराम:' (गी. 5-24) स्वगुणैरात्मैव सुखवर्धको यस्य सः तथोक्तः । (गी. भा.) आरामो हि भोगस्थानभूतः छायापल्लवपुष्पफलादिभिः स्वगुणैः सुखवर्धकः । तद्वदत्रापि स्वगुणैः अपहतपाप्मत्वज्ञानानन्दादिभिः स्वविषयवादकरण-(संवादकरण)ग्रन्थकरणादिक्रीडोत्थापकैः आत्मैव सुखवर्धकः इत्यारामशब्देनोपचर्यते ॥ (ता. चं.)

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्** — (ब्र. सू. 2-3-16)
(तेजोधिकरणे सप्तमं सूत्रम् )

विज्ञानसाधनत्वादिन्द्रियाणि प्राणश्च विज्ञानमित्युच्यते ।

एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च ।
खं वायुः ज्योतिः . . . . . ॥

इत्यादिवाक्यं भूतप्राणयोरन्तराले विज्ञानमनसी-इन्द्रियमनसी क्रमेणोत्पद्येते इत्येतत्परम् । खादिषु तावत् श्रुत्यन्तरसिद्धः क्रमः अत्रापि प्रतीयते । तैः सह पाठ-लिङ्गात् (अग्र्यप्रायन्यायादिति भावः) इति चेन्न । 'एतस्माज्जायते' इत्यस्य प्राणादि

पृथिव्यन्तेषु सर्वेषु प्रत्येकमन्वयाविशेषात् । अतः अव्यक्तादिशरीरकात् परस्मात् ब्रह्मण एव सर्वकार्याणामुत्पत्तिः । तेजःप्रभृतयश्च शब्दाः तदात्मभूतं ब्रह्मैवाभिदधति ।

तन्मात्रभूतयोर्मध्ये चेन्द्रियाणीति लिङ्गतः ।
क्रमोत्पत्तिश्चेति चेन्न साक्षादेवाविशेषतः ॥ (ब्र. प. मा. 232)

अन्तराळाभावः — संयोगः ।

ननु नैरन्तर्यं संयोगः; स च अन्तराळाभावः । अभावश्च शून्यमेवेति चेन्न, (न तु संयोगः अतिरिक्तः इति बौद्धाः) अभावस्यापि भाववदशून्यत्वात् । निषेधक-प्रमाणगोचरो हि अभावः ; स कथं शून्यतामनुभवति? किञ्च भावान्तराभाववादिना-मस्माकं पक्षे नैरन्तर्यमपि भाव एव । किं तर्हि अन्तरम्? तदपि भाव एव । द्वयोरपि पदार्थयोर्मध्यमेव नन्वन्तरमित्युच्यते । अतोऽन्तराळम्, अन्तराळाभावरूपतया भवत्परिकल्पितसंयोगोऽपि भावरूप एवेति न शून्यगन्धावकाशः ॥ (स. सि. 412)

अन्तरिक्षक्षित् — वायुः ।

अन्तरिक्षनिवासी । (वि. को.)

'क्षि-निवासगत्योः' अस्मात् निवासार्थकात् धातोः कर्तरि क्विप्, तुगागमश्च ॥

अन्तरिक्षलोकः — भुवर्लोकः ।

'वागेवायं लोको मनोऽन्तरिक्षलोकः' ॥ (बृ. उ. 3-5-4)

अन्तरिक्षसत् — अन्तरिक्षगतः वायुः ।

'वसुरन्तरिक्षसत् . . . . . ऋतं बृहत्' (क. उ. 5-2; तै. ना. 71) सर्वत्र वसतीति वसुः – वायुः । अन्तरिक्षे वर्तमानो वायुरपि स एवेत्यर्थः । (तै. ना; रं. भा.) अन्तरिक्षगतो वायुः अपरिच्छिन्नसत्यरूपब्रह्मात्मक इत्यर्थः ।

'पद्लृ-विशरणगत्यवसादनेषु' इत्यस्माद्धातोः गत्यर्थकात् कर्तरि क्विप् प्रत्ययः ॥

अन्तरिक्षोदरः कोशः — कृत्स्नजगदाश्रयभूतं ब्रह्म ।

'अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति ।
. . . . . तस्मिन् विश्वमिदं श्रितम् ॥ (छां. त. उ. 3-15-1)

अन्तरिक्षमुदरं यस्य सः अन्तरिक्षोदरः । मध्यवर्तित्वात् अन्तरिक्षस्य उदरत्वम् । कोश इव कोशः । कोशसादृश्यात् कोशः । . . . . कर्मकर्तृफलात्मकमिदं परिदृश्यमानं कृत्स्नमस्मिन् कोशे श्रितमित्यर्थः ॥ (रं. भा.)

**अन्तरेमि** — अतिक्रमामि ।

'न तमन्तरेमि' (यजु. आ. 3-7) अन्तः — अतिक्रममेमि । 'इण्-गतौ' कर्तरि लट् । (सं. अ.) 'न तमन्तरेमि' इत्यत्र परमात्मनः शेषभूतः अहं; तदाज्ञामतिक्रम्य न चरामीत्यर्थः ॥

**अन्तर्ज्योतिः** — 1. परमात्मा ।

'यदिदमस्मिन् अन्तःपुरुषे ज्योतिः' (छां. उ. 3-13-7) 'अन्तर्ज्योतिः किमपि यमिनां' (भ. सो. 1)

अत्र शरीरस्यान्तर्ज्योतिः । कौक्षेयज्योतिश्शरीरकं परं ब्रह्म एवेत्यर्थः ।

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' ॥

इति स्मरणात् । ततश्च परब्रह्मात्मकत्वानुसन्धानं कर्तव्यमित्यर्थः । (रं. भा.)

2. आत्मैकज्ञानः ।

'योऽन्तस्सुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः' (गी. 5-24)

भोग्यं भोगस्थानञ्च आत्मैवेत्युक्तम् ; अथ भोगोपकरणादिकमपि स एवेति अन्तर्ज्योतिश्शब्देनोच्यते इत्यभिप्रायेणाह — 'आत्मैकज्ञानः' इति । अन्येषां हि भोग्यानां स्वरूपादुपकरणस्य भिन्नत्वादुपकरणमपि हि तदर्थतया पृथक् ज्ञातव्यम् ; अतः तेषु तदेकज्ञानत्वं नास्तीति भावः । (ता. चं.)

3. स्वप्रकाशः । आत्मज्योतिरित्यपि हि श्रूयते ॥ (वि. को.)

**अन्तर्ज्वरः** — विपरीतार्थप्रतिपादनसमुद्भूतव्याकुलत्वम् ।

तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥ (श्रु. प्र. 1-1)

अन्तर्दीपिकान्यायः —

अयं मुण्डकोपनिषदीयशाङ्करभाष्ये, तथा हि 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' इति। नित्यं – सदा, नित्यं सत्येन, नित्यं तपसा, नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दः अन्तर्दीपिकान्यायेनानुषक्तव्य इति। (मी. को.) 'मध्यमणि'न्यायपर्यायोऽयं कश्चन न्यायः, एकस्यैव पदस्य बहुषु स्थलेष्वन्वयतात्पर्यप्रदर्शकः॥

अन्तर्धानशक्तिः — वस्तुनः सद्भावेऽपि अनुपलम्भहेतुभूता शक्तिः।

देवानां विग्रहादिकमस्ति चेदुपलभ्येत, उपलम्भाभावात् नास्तीत्याशङ्का परिह्रियते।

देवतागणोऽन्तर्धानशक्त्या नोपलभ्यते। जन्मतः पिशाचादीनां, तपसो महर्षीणां, योगतो योगिनां, अन्तर्धिशक्तिरस्त्येव। मन्त्रौषधिभ्यः अन्तर्धानं प्रसिद्धमेव। अतः यथा सौक्ष्म्यात् परमाणोः अनुपलम्भः तथा अन्तर्धानशक्त्या देवादीनामनुपलम्भः। (चिं. म. 123) तदुक्तम् –

'नेक्ष्यन्ते वर्तमानान्यपि हि सुरगणाः यद्वदन्तर्धिशक्तेः
. . . . . जननतपोयोगमन्त्रौषधिभ्यः'। (अ. सा. 123)

विद्यमानान्यपि वस्तूनि नोपलभ्यन्ते खलु। न हि कारणान्तरप्रयुक्तानुपलब्धिमात्रेण वस्स्वभावो निश्चेयः इति भावः॥

अन्तर्मुखः — आन्तरप्रत्यगात्मपरमात्मासक्तः।

'अन्तर्मुखैरात्मविदो मनोभिः' (पा. स. 98) बाह्यविषयपराङ्मुखः सन् स्वात्मविषयकप्रवणतावान्॥ (सं. अ.)

अन्तर्यामित्वम् — अन्तःप्रविश्य नियन्तृत्वम्।

द्विविधं खलु भगवतोऽन्तर्यामित्वम्। परव्यूहविभवान्तर्याम्यर्चावतारप्रक्रियया हृत्पुण्डरीकमध्यवर्तिना विग्रहेण कश्चित्प्रकारः। अयमेव 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' इत्यादिश्रुत्या च प्रतीयते। प्रकारान्तरं तु चेतनाचेतनविभागा-

भावेन सर्वेष्वपि वस्तुषु प्रेरकतया भगवत्स्वरूपस्य सन्निहितत्त्वम् । इत्थं द्विविधमप्य न्तर्यामित्वं भगवतः श्रीनिवासस्य 'शान्तानन्ता' इत्यादिना प्रतिपन्नस्वरूपस्य, वास-स्थानवाचिना अयनशब्देन बहुव्रीहौ विवक्ष्यते । नारायणशब्दे नारं – चेतनाचेतना-त्मकं विश्वं यस्यायनं व्याप्यं संस्थानं वेति विग्रहात् सर्वव्यापकत्वं सर्वान्तर्यामित्वञ्च भगवतः इत्युक्तं भवति ॥ (र. सा. सं. 12)

अन्तर्यामिब्राह्मणम् — बृहदारण्यके पञ्चमप्रपाठके सप्तमं ब्राह्मणम् ।

काण्वमाध्यन्दिनपाठभेदेन 'याज्ञवल्क्य अन्तर्यामिणं ब्रूहि' इति उद्दालकप्रश्ने – 'यः पृथिव्यां तिष्ठन् . . . . . . एष त आत्मान्तर्याम्यमृतः' इत्यारभ्य 'यो रेतसि तिष्ठन् यो रेतोन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः' इत्यन्तं याज्ञवल्क्येनोक्त उपनिषद्भागः अनेन शब्देन प्रतिपाद्यते ।

काण्वमाध्यन्दिनपाठभेदेन द्वाविंशतिवारं अभ्यस्तः अन्तर्यामी नारायण एव अनेन ब्राह्मणेन प्रतिपाद्यते । सुबालोपनिषदैकार्थ्यात्, सामान्यविशेषन्यायेन एतेषां सर्वेषां नारायणपरत्वं स्पष्टम् ।

एवञ्च तत्त्वमसीति नवकृत्वोऽभ्यासापेक्षया अस्मिन् ब्राह्मणे पाठभेदेन द्वाविंशति-वारं श्रवणात्, एतदनुरोधेनैवार्थो वर्णनीयः । भेदाभेदश्रुतीनां समन्वयार्थं प्रवृत्तेयं घटकश्रुतिः इति च व्यवह्रियते ॥

अन्तर्यामिरूपम् — परमात्मनः पञ्चविधरूपेषु अन्यतमम् ।

हृत्पद्मकर्णिकामध्यगतस्य अन्तर्यामिणः परस्य विशेषतः सूक्ष्मः अन्तर्याम्यवतारः । (न्या.सि.246) अन्तर्यामिरूपं स्वर्गनरकाद्यनुभवदशायामपि जीवात्मनः सुहृत्त्वेन योगिभिः द्रष्टव्यतया हृदयप्रदेशावस्थितं रूपम् । जीवेन साकं विद्यमानोऽपि तद्गतदोषैः असंस्पृष्टो वर्तते । (य. दी. 138) अन्तर्यामिरूपं तु योगिनां साक्षात्कर्तुमर्हम् । हृदयदेशे-सन्निहितं उपासकानुग्रहार्थं अंगुष्ठमात्रमिति श्रुतिव्यपदेश्यं पूर्वोक्तविभवादिरूपविलक्षणं रूपम् ॥ (द. उ. 227)

**अन्तर्यामिविद्या** — अन्तःप्रविष्टनियन्तुः उपासनम् ।

पृथिव्याद्यचेतन-तत्संस्पृष्टचेतन-शुद्धात्मस्वरूपाणां च अन्तःप्रविश्य नियन्तुः परमात्मनः अदृष्टत्वविशिष्टद्रष्टृत्वादिगुणविशिष्टतयोपासनम् ।

इयं च काण्वमाध्यन्दिनपाठभेदेन बृहदारण्यकोपनिषदि 'यः पृथिव्यां तिष्ठन् ......., यः सर्वेषु भूतेषु तिष्ठन्' (अत्र भूतशब्दः अचिद्विशिष्टजीवपर एव) 'य आत्मनि तिष्ठन् ........ यो विज्ञाने तिष्ठन्' इत्यादिवाक्यैः निरूप्यते । (अत्रात्मशब्दः शुद्धात्मपरः) अन्तर्याम्यधिकरणेन विचारिता च ॥

**अन्तर्यामी** — अन्तःप्रविश्य नियमनशीलः नारायणः ।

[सुप्यजातौ णिनिः ताच्छील्ये' (पा. सू. 3-2-78) इत्यनेन ताच्छील्ये णिनिः] यः ईदृक् ईश्वरो नारायणाख्यः पृथिवीं – पृथिवीदेवतां, यमयति – नियमयति स्वव्यापारे । अन्तरः – अभ्यन्तरः तिष्ठन् एष ते आत्मा – ते – तव मम च सर्वभूतानां च (उपलक्षणार्थमेतत्) – अन्तर्यामी । (बृ. उ. शं. भा. 5-7-3)

नियमनार्थं सर्वजन्तूनां हृदये परिच्छिन्नतया स्थितो भगवान् तदन्तर्यामी नाम तत्र तिष्ठन् ततोऽन्तरः तेनावेद्यमानः तत् यमयति यस्य इति ॥ (वि. को.)

**अन्तर्याम्यधिकरणम्** — (1-2-4)

1. अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ।
2. न च स्मार्तमतद्धर्माभिलापात् शारीरश्च ।
3. उभयेऽपि हि भेदेनैनमधीयते ।

इति सूत्रत्रयात्मकं इदमन्तर्यामिपदादिमं एवं अभिलप्यते ।

'यः पृथिव्यां तिष्ठन्' इत्यादिवाक्योक्तोऽन्तर्यामी 'द्रष्टा श्रोता' इति वाक्ये करणायत्तज्ञानत्वावगमात् योगविशेषयुक्तः जीव एवेत्याशङ्क्य – एतेनैव वाक्येन सर्वनियमनस्य परमात्मधर्मस्य व्यपदेशात् द्रष्ट्रादिशब्दानां रूपादिसाक्षात्कारपरतया तेषां परमात्मन्युपपत्तेश्चान्तर्यामी परमात्मेत्युक्तम् ।

द्रष्टेति शब्दादिह वाक्यशेषे द्रष्ट्रन्तरस्य प्रतिषेधतश्च ।
क्षेत्रज्ञमन्तर्यमयन्तमाहेन्येतन्न जागर्त्यमृतत्वशब्दात् ॥ (न्या. क. सं. 1-24)

**अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् — (ब्र. सू. 1-2-19)**
**(अन्तर्याम्यधिकरणे प्रथमं सूत्रम्)**

अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमात्मा; सर्वान्तरत्व-सर्वाविदितत्व-सर्वशरीरकत्व-सर्वनियमन-सर्वात्मकत्वामृतत्वादिपरमात्मधर्माणां व्यपदेशात् ।

अत्र 'य इमञ्च लोकं, परञ्च लोकं सर्वाणि च भूतानि, योऽन्तरो यमयति' इत्युपक्रम्य तमन्तर्यामिणं ब्रूहीति प्रश्नः। तस्य चोत्तरं 'यः पृथिव्यां तिष्ठन्, पृथिव्या अन्तरः, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति, एष त आत्मा अन्तर्याम्यमृतः; इत्यारभ्योक्तम् । अत्र 'य आत्मनि तिष्ठन्' इत्यादिषु सर्वेषु पर्यायेषु श्रूयमाणोऽन्तर्यामी किं प्रत्यगात्मा, उत परमात्मेति संशयः, प्रत्यगात्मेति पूर्वपक्षः; वाक्यशेषे द्रष्टा, श्रोता, मन्ता इति द्रष्टृत्वादिश्रुतेः, नान्योऽतोऽस्ति द्रष्टा इति द्रष्ट्रन्तरनिषेधाच्च, अत्रैकवचनं जात्यभिप्रायेणैव । 'यस्यात्मशरीरम्' इति तु इदं पूर्वपक्षशरीरमितिवत् स्वरूपपरम् । वैरूप्यन्तु प्रामाणिकम् ।

राद्धान्तस्तु – पृथिव्याद्यात्मपर्यन्तसर्वतत्त्वानां सर्वैः तैः अदृष्टेनैकेन नियमनं निरुपाधिकामृतत्त्वादिकं च परमात्मन एव धर्म इत्यन्तर्यामी परमात्मा ।

द्रष्टृत्वादिश्च रूपादिसाक्षात्कारः । स च 'पश्यत्यचक्षुः' इत्यादिना परमात्मनोऽप्यस्ति । नान्योऽतोऽस्ति द्रष्टेति च जीवेनादृष्टान्तर्यामिद्रष्टृवत् अन्तर्यामिणापि अदृष्टद्रष्ट्रन्तरनिषेधपरः; तस्य नियन्तुः नियन्त्रन्तरं निषिध्यते इति हि भाषितम् ।

अत्रैकवचनं पूर्वपक्षोक्तरीत्या जीवजात्यभिप्रायेण योजयितुं न युक्तम्; प्रथमप्रवृत्तैकविषयप्रश्नानुसारेण उत्तरवचनानां सर्वदेवलोकादिनियन्त्रेकविषयत्वस्य वक्तव्यत्वात् । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि न द्रष्ट्रन्तरादिनिषेधमात्रपरम्, किन्तु तत्सदृशसर्वभूतनियन्तृरूपद्रष्ट्रन्तरादिनिषेधपरम् । 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिः' इति शाब्दिकन्यायात् ।

अत्र ब्राह्मणे 'यः पृथिव्यां तिष्ठन्' 'योऽप्सु' इत्यादि पर्यायोपदेशबाहुल्यं पृथिव्यादिके एकैकवस्तुनि प्रत्येकं परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्थत्वेन सार्थकम्। परिपूर्णत्वं चाणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिकषाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्वं' इति व्यासार्यैर्वर्णितं वाक्यान्वयाधिकरणे। इदं हि पूर्णत्वं नैकेन पूर्वोक्तरीत्या निर्देशेन सिध्यति। 'यः पृथिव्यां तिष्ठन्' इत्यनेन बहिःस्थितिः, 'पृथिव्या अन्तरः' इत्यनेन अन्तःस्थितिरुच्यते। अतः तदन्तर्गतः तदवेद्यः तच्छरीरकश्च सन् योऽन्तः प्रविश्य नियमनं करोति एष ते अन्तर्यामी निरुपाधिकामृतत्वशाली आत्मा परमात्मैवेति सिद्धम्।

अन्तर्याम्यधिदैवाधिलोकादिषु परात्परः।
सर्वाऽवेद्यनियन्तृत्वब्रह्मधर्मस्य शंसनात्॥ (ब्र. प. मा.- 51)

**अन्तर्व्याप्तिः** — अन्तर्यामित्वप्रयोजकः सर्ववस्तुसम्बन्धः।

'तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः' (ई. उ. 5) तत्-सर्वव्याप्तमुक्तं-परं ब्रह्म। अस्य – विचित्रचिदचिद्रूपेण प्रमाणसिद्धस्य सर्वस्य वस्तुनः अन्तर्भवति, अप्रतिघातादविभक्तदेशं वर्तत इत्यर्थः। तदेव सर्वस्यास्य बहिरपि भवति, परिमितानां पदार्थानां भावदेश इव अभावदेशेऽपि वर्तत इति यावत्। तदेतद्व्यक्तमुक्तं तैत्तिरीये –

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥ इति। (वे. भा.)

इदमप्येकं वैचित्र्यमित्याह। तत् – सर्वव्याप्तं परं ब्रह्म, अस्य सर्वस्य — विविध-विचित्ररूपतया प्रमाणसिद्धस्य सर्वस्य वस्तुनोऽन्तर्भवति, तदेव पुनः तदानीमेव सर्वस्य बहिरपि भवतीत्यर्थः।

अन्येषान्तु गृहान्तर्वर्तिपुरुषाणां तदानीमेव न बहिष्ठत्वं सम्भवति; बहिर्वसताञ्च नान्तर्वर्तित्वमितीह वैचित्र्यमिति भावः।

यद्यप्यणुषु नान्तर्वर्तिता सम्भवति, तथाप्यप्रतिघातात् अविभक्तदेशतया वर्तित्व-मात्रेणाणुष्वन्तर्वर्तित्वोक्तिः। एवं बहिर्व्याप्तिरपि अविभुद्रव्यापेक्षयैव, न तु विभुद्रव्या-

पेक्षयापीति द्रष्टव्यम् । तदिदं वैचित्र्यं तैत्तिरीयकेऽप्युक्तम् 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः' इति । (कू. भा.)

अस्य च अन्तर्बहिश्च सर्ववस्तुव्याप्तिर्नाम स्वाव्याप्तप्रदेशराहित्यम् । अणोः जीवस्य, विभोः कालादेश्च अन्तर्बहिःप्रदेशाभावेऽपि नानुपपत्तिः ।

ईश्वरस्याघटितघटनासामर्थ्यलक्षणं सर्वशक्तिमत्त्वमप्यनेकान्तवादापातरूपदोषानवकाशेन वक्तव्यम् । यथा—यद्यद्वस्तु यथा यथा घटयितुमर्हं तत्तद्वस्तु तथा तथा अन्यैरघटितमीश्वरेण संकल्पमात्रेण घटितं भवतीत्यर्थः इति । अन्यथा नीलमपि पीतं भवेदित्यनेकान्तवादापातः । (द. उ. 225)

अणुद्रव्यविषयेऽन्तर्व्याप्तेर्विभुद्रव्यविषये बहिर्व्याप्तेश्च दुर्वचतयाऽन्तर्व्याप्तिवचनमणुद्रव्यविषयेऽप्रतिघातादविभक्तदेशं वर्तमानत्वमात्रविषयम् ; बहिर्व्याप्तिवचनन्तु विभुभिन्नपरिमितद्रव्यमात्रविषयम् इति ।

अत्रोच्यते — परमात्मनः स्वभिन्नयावद्द्रव्येष्वन्तर्व्याप्तेर्बहिर्व्याप्तेश्च पृथक्पृथक्सर्वशब्दघटितेन वाक्यद्वयेन स्वरसतः प्रतिपाद्यमानत्वात्, श्रौतस्यार्थस्य यथाश्रुत्यैव प्रतिपत्तव्यत्वात्, 'न हि वचनविरोधे न्यायः प्रभवति' इति न्यायेन प्रस्फुटार्थकवचनविरोधेन न्यायप्रचारायोगाच्च, कतिपयद्रव्येष्वन्तर्व्याप्तेः कतिपयद्रव्येषु बहिर्व्याप्तेश्चासम्भवम्मत्वा श्रुतेस्स्वतर्कानुरोधेन स्वैरं सङ्कोचकल्पनमप्येतेषां न युज्यते । 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इति सम्प्रतिपन्नसमानार्थकनारायणानुवाकगतश्रुत्यन्तरमपीदृशसङ्कोचकल्पनं निरुणद्धि । अत्र हि 'तत्सर्वम्' इत्येकशब्दप्रतिपन्नस्यैवार्थस्यान्तर्बहिर्व्याप्तिकर्मतयाऽन्वयात् 'तत्सर्वम्' इत्यस्य 'यच्च किञ्चित्' इत्यादिपूर्ववाक्यप्रतिपन्नसर्वार्थपरामर्शिनः कतिपयद्रव्यभिन्नद्रव्यविषयकत्वेन सङ्कोचकल्पनासम्भवात् ; तथा सङ्कोचस्वीकारे च कतिपयद्रव्येषु व्याप्तेरेव परमात्मनोऽसिद्धिप्रसङ्गात्, द्वयोरेतयोश्श्रुत्योस्सर्वसम्प्रतिपन्नसमानार्थकताव्याहतिप्रसङ्गाच्च, दर्शितश्रुतेर्यथोक्तरीत्या सङ्कोचकल्पनं नैव सङ्घटीति । तस्मात्स्वरसतः प्र[illegible]श्रु[illegible]त्वात् [illegible]नेपन्नं स्वभिन्नयावद्द्रव्येष्वन्तर्बहिर्व्याप्तिमत्त्वं परमात्मनोऽस्तीत्येवाभ्युपगन्तव्यम् ।

एवं 'यच्च किञ्चित्' इत्याद्युदाहृतश्रुतिप्रतिपन्नां परमात्मनः स्वेतरसर्वद्रव्येष्वन्तर्बहिश्च व्याप्तिमुपपादयितुं प्रवृत्तया 'अणोरणीयान्महतो महीयान्' इति श्रुत्या पर-

मात्मनः स्वेतरसर्वसूक्ष्मद्रव्यापेक्षया सूक्ष्मतमत्वस्य तदन्तर्व्याप्तिप्रयोजकस्य स्वेतरमहाद्रव्यापेक्षया महत्तमत्वस्य च तद्बहिर्व्याप्तिप्रयोजकस्य प्रतिपादनमुखेन स्वेतरेषु सर्वेषु सूक्ष्मेषु महत्सु च द्रव्येषु अन्तर्बहिर्व्याप्तियोग्यताया एव प्रतिपादनात् परमात्मनः स्वेतरेषु सर्वेषु द्रव्येषु अन्तर्बहिर्व्याप्तिर्निराबाधैव प्रतिपद्यते ।

न च निरवयवेष्वणुद्रव्यभूतेषु प्रत्यगात्मसु कथमन्तर्व्याप्तिः परमात्मनः सम्भवति? अन्तःप्रवेशप्रयोजकविवराभावादिति वाच्यम्, इतरवस्तुप्रवेशप्रयोजकविवराभावेऽपि प्रमाणबलेन परमात्मप्रवेशप्रयोजकविवरस्वीकारे क्षत्यभावात् ।

यथाहि दर्पणादिस्वच्छद्रव्येषु पृथिवीजलादीतरवस्तुप्रवेशप्रयोजकविवरानङ्गीकारेऽपि सूर्याद्यालोकप्रवेशप्रयोजकविवरम्, अयःपिण्डे वस्त्वन्तरप्रवेशप्रयोजकविवरानङ्गीकारेऽप्यग्निप्रवेशप्रयोजकविवरश्च प्रत्यक्षप्रमाणबलेनाङ्गीक्रियते; तथैव प्रत्यगात्मस्वपि प्रमाणबलेन परमात्मप्रवेशप्रयोजकविवरस्वीकारे हि न काचिदस्ति क्षतिः। न चैतावता प्रत्यगात्मनां छेदभेदादिप्रसङ्गः दर्पणादिद्रव्येष्वालोकादिप्रवेशतच्छेदाद्यसम्भववदेवोपपत्तेः । तस्मात् सूर्याद्यालोकस्स्वव्याप्यप्रतिघातेन स्वच्छद्रव्याण्यन्तर्बहिश्च व्याप्यावतिष्ठते ; न च तावता तेषां काचिदस्ति क्षतिरिति यथा प्रत्यक्षप्रमाणबलादङ्गीक्रियते; तथैव परमात्मापि स्वव्याप्यप्रतिघातेन प्रत्यगात्मनोऽन्तर्बहिश्च व्याप्यावतिष्ठते ; न च तावता तेषां नित्यतादिक्षतिरिति श्रुतिबलादङ्गीक्रियत इति न कश्चिद्दोषः ।

अथैवमपि विभुद्रव्याणां देशपरिच्छेदरहितत्वेन तद्बहिर्देशसद्भावस्यैव दुर्वचतया कथं तद्बहिर्व्याप्तिः परमात्मनस्सुवचेति चेन्न ; 'महतो महीयान्' इति श्रुत्या स्वेतरसर्वमहाद्रव्यापेक्षया परमात्मनो महीयस्त्वप्रतिपादनेन तद्विरोधेन कस्यापि द्रव्यस्य परमात्मसमानमहत्त्वासिद्धेः तदपकृष्टमहत्त्वेभ्यो द्रव्येभ्यः परमात्मनो बहिर्व्याप्तिसंभवे क्षतिविरहात् ।

अथ किं तावत्तादृशं विभुद्रव्यं यद्बहिर्व्याप्तिर्ब्रह्मणो न सम्भवतीत्युच्यत इति विवेचयामः । न तावदाकाशस्तथा – वेदान्तसिद्धान्ते तस्य प्राकृततत्त्वरूपतया महदादिभ्योऽप्यपकृष्टपरिमाणस्यापरिच्छिन्नत्वशङ्कागन्धानवकाशात् । नापि शुद्धसत्त्वमिश्रसत्त्वद्रव्ये तथा, तयोः परस्परदेशव्यावृत्तत्वात् । नापि नित्यमुक्तधर्मभूतज्ञानानि तथा, तेषां सङ्कोचविकासशीलतया कदाचित्सङ्कोच्यावस्थापनस्यापि सम्भवेन तद्बहिःप्रदेशस्यापि

सूपपादत्वात्। नापि कालस्तथा, सचराचरस्य कृत्स्नस्य जगतो भगवत्स्वरूपैकदेश एव परिसमाप्ततायाः प्रागुदाहृतप्रमाणसिद्धतया तदन्तःपातिकार्योपयोगितयैव क्लृप्तस्यास्य तद्बहिस्सद्भावे प्रमाणाभावेन परिच्छिन्नताया दुरपह्नवत्वात्॥ (श्रीरं. भा.)

**अन्तर्हृदय आकाशः** — हृदयान्तरावच्छिन्नदहराकाशः परमात्मा।

यच्च बृहदारण्यके 'य एषोऽन्तर्हृदय आकाशः, तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः' इत्यादिना आकाशशब्देन भगवन्तमुक्त्वा, तदन्तर्वर्तितया ईशानशब्देन रुद्रः प्रतिपाद्यते इति पूर्वपक्षः।

राद्धान्तस्तु – अत्र आकाशशब्दस्य परमपुरुषवाचित्वाभावात् तदपि न साधीयः। तदभावश्च आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्येण तस्यैव प्रतीतेः, तदपवादहेतोश्च परमपुरुषासाधारणधर्मान्वयस्य अभावात्। हृदयान्तर्वर्तित्वं 'तस्यान्ते सुषिरं सूक्ष्मम्' इति हृदयान्तरावच्छिन्नसुषिरशब्दवाच्यभूताकाशस्यापि सम्भवति। (त. नि. 17) तथा चाकाशे शयानः चेतनाचेतनसर्वनियन्ता ईशानः परमात्मैव न तु रुद्र इति बोध्यम्॥

**अन्तवत्त्वमसर्वज्ञता वा** — (ब्र. सू. 2-2-38) (पशुपत्यधिकरणे चतुर्थं सूत्रम्)

पशुपतेः जगत्कारणत्वे तस्यादृष्टापेक्षत्वेन दोषमाह। वा शब्दश्चार्थे। पशुपतेः पुण्यपापरूपादृष्टवत्त्वे जीववदन्तवत्त्वं, सृष्टिसंहाराद्यास्पदत्वं, असर्वज्ञता च स्यादिति अनादरणीयमेवेदं मतम्। अनेन पशुपतेः पुण्यपापरूपादृष्टवत्त्वे दोषः प्रादर्शि।

तस्याप्यदृष्टवत्त्वे तु सृज्यत्वादि ततो भवेत्।
सर्वज्ञतायाः हानिश्च तस्मात्तन्न समञ्जसम्॥ (ब्र. प. मा. 212)

**अन्तश्चरणम्** — परमात्मकर्तृकः अन्तस्सञ्चारः।

'स एषोऽन्तश्चरते बहुधा जायमानः' (मुं. उ. 2-2-6) प्रकृत आत्मा 'अजायमानो बहुधा विजायते' इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयस्वरूपसंस्थानगुणकर्मसमन्वितः स्वीयस्वभावमजहदेव स्वेच्छया बहुधा जायमानः सन् चरते – वर्तते इत्यर्थः। (रं. भा.)

निष्कम्पव्यापिनोऽन्तश्चरणमपि शुभैर्विग्रहैरस्ति लोके ।
सौबालम्नातवद्वा चरणमिदमिति स्यादधिष्ठानमात्रम् ॥ (अ. सा. 103)

सर्वव्यापिनः कथमन्तश्चरणमिति चेत् तदुच्यते – द्विरूपं खल्वन्तर्यामित्वं भगवतः, विग्रहपरिग्रहेणैकं, सर्वव्याप्तेन स्वरूपेणापरम् । विग्रहेण देहान्तश्चरणं तावन्मुख्यत एव; स्वरूपेणान्तश्चरणं तु 'यः पृथिवीमन्तरे सञ्चरन्' इत्यादिना सुबालोपनिषदाम्नात-सर्वान्तर्यामित्वरूपचरणवदत्रापि सङ्घटत एव । अन्तर्यामित्वेनाधिष्ठानमात्रस्यैव चरण-शब्दवाच्यत्वादित्यर्थः ॥ (चिं. म.)

**अन्तस्तद्धर्मोपदेशात्** — (ब्र. सू. 1-1-21) (अन्तरधिकरणे प्रथमं सूत्रम्)

आदित्याक्ष्यन्तर्वर्ती परमात्मा, तदसाधारणधर्माणामत्रोपदेशात् ।

आदित्यान्तर्वर्तिनः अक्ष्यन्तर्वर्तिनश्च परमात्मत्वं साध्यते । छान्दोग्ये 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यक्ष्यादित्याधारतया श्रूयमाणः पुरुषः किं जीवविशेषः, उत परमपुरुषः इति संशयः । जीवविशेषः इति पूर्वपक्षः; शरीरसंयोगो हि कर्मवश्यस्य जीवस्य स्वकर्मफलभोगायेति ।

राद्धान्तस्तु – 'स एषः सर्वेभ्यः पाप्मभ्यः उदितः' इत्यादिना अपहतपाप्मत्व-पूर्वकसर्वलोककामेशत्वोपदेशात्, तेषां च जीवेष्वसम्भवात्, अयमक्ष्यादित्याधारः पुरुषोत्तम एव । स्वासाधारणविलक्षणरूपवत्त्वञ्च ज्ञानबलैश्वर्यादिकल्याणगुणवत् तस्यैव सम्भवति । श्रूयते तद्रूपस्य अप्राकृतत्वं 'आदित्यवर्णं तमसस्तु पारे' इत्यादौ ।

तदेतद्वाक्यकारश्चाह – 'हिरण्मयः पुरुषो दृश्यते' इति प्राज्ञः सर्वान्तरः स्यात् लोककामेशोपदेशात् तथोदयात् पाप्मनां इत्युक्त्वा, तद्रूपस्य कार्यत्वं मायामयत्वं वेति विचार्य 'स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इति निरसनीयं मतमुपन्यस्य, 'रूपं वातीन्द्रियं अन्तःकरणप्रत्यक्षनिर्देशात्' इति । व्याख्यातं च द्रमिडाचार्यैः 'न वा मायामात्रमञ्जसैव विश्वसृजो रूपं, तत्तु न चक्षुषा ग्राह्यम्, मनसात्वकलुषेण साधनान्तरवता गृह्यते । 'न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेनेति' श्रुतेः ।

अञ्जसा – अव्यवधानेन; स्वाभाविकमित्यर्थः । ऐन्द्रजालिकवस्तुवत् माया-कृतमिति शङ्कां व्यावर्तयति तत्तु इत्यादिना । पारमार्थिकमिति यावत् । 'तत्त्वे

त्वद्धाञ्जसा द्वयम्' इति कोशाच्च । 'अरे अद्धा पुरुषः अञ्जसा वक्ति साधुः' इति सरस्वतीकण्ठाभरणम् ।

न ह्यरूपायाः देवतायाः रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रम् । यथा 'महारजतं वासः' 'वेदाहमेतं पुरुषं महान्तम्' 'आदित्यवर्णं' इति प्रकरणान्तरनिर्देशाच्च । साक्षिण इत्यादिना हिरण्मय इति रूपसामान्यात् चन्द्रमुखवदिति वाक्यम् ।

तच्च व्याख्यातं तैरेव 'न मयडत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मन' इत्यादिना । अतः प्रधानात् प्रत्यगात्मनश्चार्थान्तरभूतो निरुपाधिकविपश्चिदनवधिकातिशयानन्दोऽप्राकृतस्वासाधारणदिव्यरूपः पुरुषोत्तमः परं ब्रह्म जगत्कारणतया वेदान्तवाक्यैः प्रतिपाद्यत इति निरवद्यम् । अत्र अन्तश्शब्देन, अन्तरादित्यविद्या, अन्तरक्षिविद्या द्वयमिह उदाहरणमिति सूचितम् ।

आदित्येऽक्षिणि योऽन्तस्स्यात्परमात्मा हिरण्मयः ।
सर्वपाप्मोदितत्वादि तद्धर्माणामिहेरणात् ॥ (ब्र. प. मा. 21)

**अन्तस्सुखः** — आत्मानुभवैकसुखः ।

'योऽन्तस्सुखोऽन्तरारामः' (गी. 5-24) अत्र अन्तश्शब्दः बाह्यसुखव्यतिरेकादात्मपरः । आत्मैव आत्मन्येव वा सुखं यस्य' ॥ (ता. चं.)

**अन्तिमयुगवेदान्तिनः** — बौद्धसदृशमायावादिनः ।

सांख्यसौगतचार्वाकसङ्कराच्छङ्करोदयः ।
दूषणान्यपि तान्यत्र भूयस्तदधिकानि च ॥

चिच्छायापत्तिसंपर्कादिना आत्मनो ज्ञातृत्वम् , वस्तुतो न कर्तृत्वं भोक्तृत्वं वा आत्मनः इत्येवमादि सांख्योपदिष्टार्थोपजीवनात् , स्तम्भादिप्रत्ययो मिथ्या, प्रत्ययत्वात् यः प्रत्ययः स मृषा दृष्टो यथा स्वप्नादिप्रत्ययः इति बौद्धोपदिष्टप्रपञ्चमिथ्यात्वोपजीवनात् चार्वाकोपदिष्टाहमर्थविनाशाभ्युपगमाच्च मिलितमपि मतत्रयं शङ्करमतरूपेण परिणतमित्यर्थः ।
(या. सि. टी. 206)

अत्र शङ्करपदं न व्यक्तिपरम् । किन्तु तदनुयायिखण्डनकारादिपरम् । खण्डन-कारेण तु शङ्कराचार्यबुद्धयोः समानतया सादरमुल्लेखः कृतः इत्यभिप्रायेण एवमुक्तिः ॥

**अन्तेवासी** — 1. शिष्यः ।

'छात्रान्तेवासिनौ शिष्ये' इत्यमरः । 1. वेदाध्ययनार्थं गुरुसमीपवर्ती । 2. चण्डालः । ग्रामात् बहिर्वसति ॥ (सं. अ.)

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः** — (ब्र. सू. 2-2-34) (एकस्मिन्नसम्भवाधिकरणे चतुर्थं सूत्रम्)

शरीरतुल्यपरिमाणत्वं वदतां मतं पूर्वं दूषितं, तदेवात्र प्रकारान्तरेण निरस्यते । जीवस्य यदन्त्यं परिमाणं मोक्षावस्थं, तस्य पश्चादेकरूपेणावस्थितेः तदेव स्वाभाविकं परिमाणमिति, आत्मनश्च तत्परिमाणस्य चोभयोर्नित्यत्वात् पूर्वमपि न शरीरपरिमाणत्व-सिद्धिरिति पूर्वावस्थायां न विशेषः । अतोऽसङ्गतमेव शरीरसमपरिमाणत्वं जीवस्य ।

मुक्तात्मपरिमाणस्य मुक्तस्याप्यात्मनस्तथा ।
नित्यत्वादुभयोर्जीवः न देहपरिमाणवान् ॥ (ब्र. प. मा. 208)

**अन्धः** — 1. दृक्शक्तिविकलः ।

2. अनभिज्ञः । 'तस्माद्वा एतं सेतुं तीर्त्वा अन्धस्सन् अनन्धो भवति । (छां. उ. 8-4-2)

यस्मादयमपहतपाप्मा, तस्मादेव एतं परमात्मलक्षणं सेतुं प्राप्य पूर्वम् आन्ध्य-आयुधवेध-ज्वरादियुक्तदेहोऽपि सन् तद्दोषरहितदिव्यदेहयुक्तो भवतीत्यर्थः । (रं. भा.)

1. स्वकर्तव्यं परित्यज्य हिताहितपरिज्ञानशून्यः । 2. तत्त्वनिरीक्षणासमर्थः ॥ (वि. को.)

**अन्धकारः** — तमः (पार्थिवम्) ।

नैल्याद्भौमं तमिस्रं चटुलबहलतायन्वयात् तत्र नैल्यं
छायावत्पारतन्त्र्यन्त्वयस इव मणौ दृष्टिसिद्धात् स्वभावात् । (त. मु. 60) इत्यनेन

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥

इति य एवं वदन्ति तान्प्रत्युभयसम्मतेन नीलत्वेन पार्थिवत्वं साध्यते, द्रव्यान्तरकल्पने गौरवात् । (स. सि.)

'तमः नीलं' 'तमः चलति' इति प्रतीतिस्वारस्यात् तमसः पृथिव्यामन्तर्भाव इति भावः ।

द्रव्यमिति मीमांसकाः । तेजःसामान्याभावः इति नैयायिकाः ॥ (मी. को.)

**अन्धगजन्यायः** — अन्धैः निर्धारितो गजः तस्य न्यायः ।

यत्र तत्त्वानभिज्ञमूर्खाणां परस्परकलहः तत्रायं अवतरति ।

यथा हि लोके श्रूयते — जन्मान्धा बहवः किञ्चिदन्धं पुरुषमूचुः, अस्मान् गजं दर्शयेति । स च गजशालायां तान्नीत्वा तं तं गजावयवं तेन तेन ग्राहयित्वा प्रोवाच 'अयं गजः' इति । ते च तं तमवयवमेव गजत्वेन निश्चित्य स्वस्थानमागताः परस्परं कलहं चक्रुः । कूर्पसदृशो गज इति कर्णस्पर्शी, महासर्पसदृशः इति शुण्डग्राही, स्तम्भतुल्य इति जङ्घाग्रहीता, पुच्छग्राहकस्तु स्थूलरज्जुसमः गज इत्युवाचेति । तथा वेदशास्त्राभिप्रायानभिज्ञा आर्याभासवादिनोऽपि कानिचित् दुरूहश्रुतिप्रभृतिवाक्यानि स्वस्वाभीष्टप्रदानीव पश्यन्तः इतराणि तु पश्यन्तोऽप्यपश्यन्त इव तत्त्वमजानन्तोऽन्योन्यं विवदमानाः इत्यर्थः । (मी. को.)

एवमेव छान्दोग्ये वैश्वानरविद्यायां औपमन्यवादयः उद्दालकषष्ठाः समेत्य को न आत्मा किं ब्रह्म इति विचार्य निर्णयमलभमानाः वैश्वानरात्मजिज्ञासया अश्वपतिमाजग्मुः; स च ज्ञाताज्ञातांशवुभुत्सया तत्त्वज्ञानचक्षुर्हीनान् एकैकावयवेषु वैश्वानरात्मत्वं मन्वानान् तानेकैकं पप्रच्छ, औपमन्यव कं त्वमात्मानमुपास्से इत्यादिना । ततः 'दिवमेव भगवो राजन्' इत्यादिना तैरुक्ते तस्य दिवि पूर्णवैश्वानरात्मबुद्धिं निवर्तयन् वैश्वानरस्य द्यौः मूर्धा इति च उपदिशन् तस्याः वैश्वानरांशभूतायाः दिवः सुतेजा इति गुणनामधेयं प्राचिख्यपत् । एवं सत्ययज्ञादिभिः वैश्वानरबुद्ध्या उक्तानामादित्य-वायु-आकाश-अप्-पृथिवीनामपि वैश्वानरात्मनः चक्षुः-प्राण-सन्देह(मध्यकायः)वस्ति(मूत्रकोशः)पादरूपावयवत्व-

श्चोपदिश्य पादादिमूर्धपर्यन्ते कृत्स्ने वैश्वानरात्मत्वं उपादिक्षत् । एवञ्चात्रापि गजान्धवत् तैर्निर्धारितेषु आत्मत्वबुद्धिनिरसनेनायं न्यायः सुयोजः ॥

**अन्धन्तमः** — अतिगाढमज्ञानम् ।

'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते' (ई. उ. 9) अज्ञानं, त्रिवर्गाभिपङ्गात् नान्तरीयं नारकं तमो वा । (वे. भा; कू. भा.) अन्धयतीत्यन्धम् — अतिगाढमिति यावत् । 'असुर्या नाम ते लोका अन्धेन तमसा वृताः' इत्युक्ततमोलोकः ॥ (श्रीरं. भा.)

**अन्धपङ्गुन्यायः** — लौकिकन्यायविशेषः ।

श्रीभाष्ये रचनानुपपत्त्यधिकरणे सांख्यमते कर्तृत्वशक्तिहीनस्य पुरुषस्य दृष्टिशक्तिहीनायाः प्रकृतेश्च परस्परसंयोगात् सृष्टिरुपपद्यते इत्यत्रोपपादितोऽयं न्यायः ।

यथा कश्चित् चक्षुष्मान् पुमान् पङ्गुः गमनशक्तिमन्तं अन्यमन्धं नरमाश्रित्य किञ्चित्फलमुद्दिश्य प्रवर्तयति । तथा चेतनः पुरुषः स्वयमप्रवर्तमानः प्रवृत्तिशक्तिमदचेतनं प्रधानं प्रवर्तयति इति सांख्याः । उक्तं च —

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पंग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ इति । (मी. को.)

अस्य न्यायस्य अन्यत्रापि समन्वयः । अन्धपुरुषस्य अनन्धपुरुषसंयोगेन, पङ्गोश्च अपङ्गुपुरुषसंयोगेन च कार्यं दरीदृश्यते । तदुक्तम् —

अन्धोऽनन्धग्रहणवशगो याति रङ्गेश यद्वत्
पंगुर्नौकाकुहरनिहितो नीयते नाविकेन ।
भुङ्क्ते भोगान् अविदितनृपः सेवकस्यार्भकादिः
त्वत्सम्प्राप्तौ प्रभवति तथा देशिको मे दयालुः ॥ इति । (न्या. ति. 21)

अनेन अन्धपङ्गुसदृशा वयं समर्थाचार्यसम्बन्धेन भगवन्तं प्राप्स्याम इति निश्चप्रचम् ॥

**अन्धपरम्परान्यायः** — कश्चन लौकिकन्यायः ।

'अन्धेनैव नीयमाना यथान्धाः' इति श्रुतिमूलोऽयम् । तद्यथा कश्चिज्जात्यन्धो वदेत् 'सराम्यहं अस्य रूपविशेषस्य इति' कुतस्ते पूर्वविज्ञानं इति च पर्यनुयुक्तो जात्यन्धमेवापरं निर्दिशेत् । तस्य कुतः, जात्यन्धान्तरात् इति । (मी. को.)

लोके हि प्रमाणमूलकाचाररहितस्थलेऽपि एवमेव व्यपदिश्यते ॥

**अन्नम्** — (स. ना. 983)

निष्पादितभोक्तृशक्तिभिः भुज्यते इति । (वि. स. भा.) निष्पादितभोक्तृशक्तिभिरेतैरयमद्यते – भुज्यते इति । (वि. स. निर्व.)

एवं निष्पादितानन्तभोक्तृशक्तिसमन्वितैः ।
भुज्यते यस्सदाकालं सोऽन्नमित्युच्यते बुधैः ॥ (वि. स. नि.)

**अन्नम्** — 1. भोग्यं – आत्मपरमात्मस्वरूपञ्च ।

'अहमन्नमन्नमदन्तमा२द्मि' अद्यते इत्यन्नम् भोग्यमिति यावत् । ज्ञानानन्दस्वरूपतया श्रीकौस्तुभादिवत् स्पृहणीयत्वेन अन्नभूतोऽहं अन्नमदन्तमाद्मीति भोग्यभूतं मां अनुभवन्तं अन्नं भगवन्तमनुभवामि इत्यर्थः । (त. दी. 146) अनेनोभयत्र परस्परभोग्यता प्रत्यपादि । 2. अव्याकृतम् । 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' (मुं. उ. 1-1-9) 'अद्यतेऽत्ति च भूतानि' इति भोग्यभोक्तृरूपचेतनाचेतनसङ्घातलक्षणमव्याकृतं परस्मात् ब्रह्मणो जायत इत्यर्थः । (रं. भा.)

अद्यते इत्यन्नम् ; विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्मात् ब्रह्मणो जायते इत्यर्थः । (श्री. भा. 1-2-23)

भोक्तृभोग्यरूपञ्चेत्युत्तरभाष्येण अन्नशब्दो व्याख्यातो भवति । अद्यतेऽत्ति च भूतानि इति हि अन्नशब्दनिर्वचनम् । (श्रु. प्र.) 3. पृथिवी । महाभूतसृष्ट्यधिकारात् पृथिव्येवान्नशब्देनोक्तेति प्रतीयते । अदनीयस्य सर्वस्य पृथिवीविकारत्वात् कारणे कार्योपचारः । (श्री. भा. 2-3-13) 4. घ्राणम्, रसनेन्द्रियञ्च ।

'अन्नस्यान्नम्' (माध्यन्दिनशाखा बृ. उ. 6-4-18) अन्नशब्देनान्नसम्बन्धिनोः घ्राणरसनयोः तन्त्रेण ग्रहणम् । अन्नेन घ्राणस्याऽऽप्यायितत्वलक्षणसम्बन्धः, रसनस्यान्नभक्षकतयाऽन्नसम्बन्धः इति द्वयोरपि ग्रहणम् । (रं. भा.)

1. अनुभाव्यम् । 2. अन्नवदुपकरणभूतः । 3. अन्नपरिणामः शरीरम् ॥
(वि. को.)

**अन्ननियमः** — आहारनियमः ।

अन्ने नियमः – व्रतम् । 'दुष्टान्नं न भुञ्जे' इति सङ्कल्पः कर्तव्यः । इमानि दुष्टान्नानि- जातिदुष्टाः लशुनादयः । चाण्डालद्रव्यनिर्मितानि अन्नानि आश्रयदुष्टानि । निमित्तदुष्टानि आमश्राद्धान्नानि । दृष्टिदुष्टानि पाषण्डचण्डालपापिरोगिवायसादिभिः दृष्टानि । भावदुष्टानि सर्पशाखादीनि । क्रियादुष्टानि पुनः पक्वान्नानि, सन्ध्याकाल-मध्यरात्र्याद्यकाले भुज्यमानानि, एकस्मिन्नेव अह्नि द्विः भुज्यमानमन्नम् , पर्युषितान्नम् , परान्नञ्चेति । (सं. अ.)

अत एव श्रूयते – 'आहारशुद्धौ सत्त्वशुद्धिः । सत्त्वशुद्धौ ध्रुवा स्मृतिः' । इति च । सात्त्विकाहारसेवनया सम्यग्ज्ञानोदयेन भगवद्भक्तिः जायते इति भावः ॥

**अन्नमयः** — 1. अन्नविकारभूतस्थूलदेहविशिष्टः परमात्मा ।

'एतमन्नमयमात्मानमुपसंक्रम्य' (तै. उ. 46) 'तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तरात्मा प्राणमयः' इत्यादिना अन्नमयशब्दितस्थूलशरीरपर्यन्तस्य ब्रह्मैव आत्मेति प्रतिपादितत्वात् अयमन्नविकारभूतस्थूलशरीरविशिष्टपरमात्मपर इति भावः ।

'अतः परं सर्वनयनः प्रशास्ता अन्नमयो भूतात्मा' (सु. उ. 5) तमात्मानं इत्यात्मशब्दनिर्दिष्टस्य परमात्मनः सर्वान्तरात्मत्वेन आत्मत्वकाष्ठां प्रतिपादयति अन्नमय इत्यादिना । भूतपरिणामदेहोऽन्नमयः । स च सर्वेश्वर इत्यर्थः । (श्रु. भा.) भूतात्मा – भूतानामपि आत्मा । अन्नमयादिशब्दानां परमात्मसामानाधिकरण्यम् आत्म-शब्दस्वारस्यादवगम्यते । (श्रु. भा.)

ननु अन्नमयादिशब्दाः तैत्तिरीय इव देहादिमात्रपराः । तेषां च यथाक्रमं भूतादिनिर्वाहकत्वादात्मत्वं विमृश्यम् । अन्नरसमयस्य देहस्यानेकप्राण्युत्पत्तिहेतुत्वात् अनेकप्राणिसेव्यत्वात् पाञ्चभौतिकस्य सर्वस्य देहोपचयाद्यर्थतया देहशोषिकत्वाच्च भूता-त्मत्वं देहस्य । विज्ञानमयस्य च कालात्मत्वं भूतभविष्यदादिविविधकालसद्भावस्य विज्ञानैकनिरूप्यत्वात् इत्यत्राह – अन्नमयादिशब्दानामिति । तैत्तिरीयेऽपि, 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा' इत्यादौ अन्नमयादिपदस्य देहादिमात्रपरत्वेऽपि

'एतमन्नमयमात्मानमुपसंक्रम्य' इत्यादौ विशिष्टपरमात्मपरत्वमेवेति ध्येयम्; आत्मै-शब्दस्वारस्यादिति। सर्वनयनः प्रशास्तेत्येतत्सामानाधिकरण्यादेवान्नमयादिपदानां पर-मात्मपरत्वं सिद्धम्॥ (टि.)

**अन्नमयं मनः** — पृथिवीसूक्ष्मांशाप्यायितं मनः।

अन्नमयं हि सौम्य मनः (छां. उ. 6-5-4) अन्नसूक्ष्मांशाप्यायितत्वात् मनः अन्नमयमित्यर्थः॥ (रं. भा.)

**अन्नस्यान्नम्** — अन्नस्याप्यन्नं ब्रह्म।

'अन्नस्यान्नम्' (बृ. उ. 6-4-18) (माध्यन्दिनशाखा) [ब्रह्माधीनस्वकार्यत्वात्, ब्रह्मापि अन्नादिशब्देनोपचर्यते]।

अन्नशब्दोदितपृथिवीसम्बन्धित्वात् (पृथिव्याप्यायितत्वात्) घ्राणेन्द्रियमनेन गृह्यते; अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते। (श्री. भा. 1-4-13)

अनेन घ्राणस्याऽऽप्याय्यतया सम्बन्धः; तद्विनियोगकरणतया रसनायाः। अतोऽन्नसम्बन्धिवस्तुलक्षयताऽन्नशब्देन घ्राणरसनयोरेकव्यापारेण लक्षणा सम्भवतीति भावः॥ (श्रु. प्र.)

**अन्नादः** — (स. ना. 984)

निष्पादितभोक्तृशक्तिभिः भुज्यते इति अन्नम्। तांश्च तथा भुङ्क्ते इति। (वि. स. भा.)

अन्नं तदुपलक्ष्यान् तद्वत् भोग्यान् तानप्यत्ति – भुङ्क्ते इति। (वि.स.निर्व.)

य आदत्ते तथा भुङ्क्ते स्वयं सोऽन्नाद ईरितः॥ (वि. स. नि.)

**अन्नादः** — 1. अन्नदाता परमात्मा।

'स वा एष महानज आत्माऽन्नादो वसुदानः' (बृ. उ. 6-4-24) अन्नं ददातीत्यर्थे छान्दसो दीर्घः।

2. ब्रह्मानुभववान्। 'इदं दृष्टं भवत्यन्नादो भवति' (छां. उ. 4-3-8) ब्रह्मलक्षणान्नानुभववान्। (रं. भा.)

3. अन्नभोक्ता । 'अन्नादोऽधिपतिर्य एवं वेद' (बृ. उ. 3-3-18) अरोग-दृढगात्रतया अभिमतान्नभोक्ता अन्येषामधिपतिश्च भवति । (रं. भा.) अन्नमत्तीति अन्नादः । अन्नशब्दवाच्यपरमात्मानुभवैकरसः ॥ (सं. अ.)

**अन्यतस्त्यजायी** — शत्रुविजयशीलः । धास्वन्तर्वर्तीश्वरोपासकः ।

'स यो हैतमेवमुपास्ते जिष्णुर्हैवा अपराजिष्णुरन्यतस्त्यजायी भवति' (कौ. उ. 4-11) जिष्णुः – जयशीलः अपराजितः, अन्यतो भवाः अन्यतस्त्याः – शत्रव इति यावत् । तान् जेतुं शीलमस्येति अन्यतस्त्यजायी । 'सुप्यजातौ' इति णिनिः ॥ (रं. भा.)

**अन्यत्र** — विना ।

'सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' (बृ. उ. 4-4-6)

अन्यत्रेत्यव्ययं विनाशब्दपर्यायं ब्रह्मणः पृथग्भूतं तदविनाभावरहितं नास्तीत्यर्थः भेदविशेषनिषेधदर्शनात् सामान्येन भेदनिषेधोऽपि तत्रैव पर्यवस्यति 'छागो वा मन्त्रवर्णात्' इति न्यायादिति भावः ॥ (श्रु. प्र. 1; भा. 2-79)

**अन्यत्राभावाच्च न तृणादिवत्** — (ब्र. सू. 2-2-4) (रचनानुपपत्त्यधिकरणे चतुर्थं सूत्रम्)

तृणादिदृष्टान्तेन प्राज्ञानधिष्ठितस्यैव प्रधानस्य कारणत्वमिति नैववक्तव्यम् ; अन्यत्राभावात् – अनडुहाद्युपयुक्तस्य प्रहीणस्य वा तृणादेः क्षीराकारेण परिणामाभावात् । ['अनड्वांश्चाप्यनडुहः' इति द्विरूपकोशः]

धेन्वादिनोपयुक्तं हि तृणोदकादि स्वयमेव क्षीराकारेण परिणमते, तद्वत् प्रधानमपीति च वक्तुं न शक्यते । धेन्वादिनोपयुक्तस्यापि तृणादेः क्षीराकारेण परिणामा प्राज्ञाधिष्ठितत्वादेव भवतीत्यभ्युपेतव्यम् । अतः प्राज्ञाधिष्ठितमेव प्रधानं कारणमिति स्वीकर्तव्यमेव ।

क्षीरजलयोरपि अचेतनत्वात् चेतनाधिष्ठानाभावे प्रवृत्त्यसम्भवतौल्येन पक्ष इव पक्षतौल्येऽपि व्यभिचाराभावः पूर्वमुक्तः । एतेन धेन्वाद्युपयुक्ततृणादेः क्षीरादिभावापत्तिरपि व्याख्याता । तत्रापि चेतनाधिष्ठानावश्यम्भावेन पक्षतौल्यात् ।

अन्यथा चेतनविशेषसङ्कल्पस्य नियामकस्याभावे अनडुहाद्युपयुक्तस्यापि तृणादेः क्षीरादिभावप्रसङ्गात् । न च धैनवजठराग्निसंयोगे कश्चित् पाके विशेषः । अग्नि-संयोगमात्रस्य पाकहेतुत्वात् , तस्य अनडुहादिजठरसंयोगेप्यविशेषात् । पाचकसङ्कल्प-विशेषात् पाकविशेषस्तु लोके दृष्टः । एतेन तृणादिदृष्टान्तेन प्राज्ञानधिष्ठितप्रधान-कारणवादः निरस्तः ।

तृणादिकं यथा क्षीरं प्रकृतिश्च तथेति चेत् ।
वृषभेणोपभुक्तं तत् तृणं न हि भवेत्पयः ॥ (ब्र. प. मा. 78)

अन्यथाख्यातिः — अन्यस्य अन्यथाभानम् ।

अन्यत्वैव सता आकारेण पुरोवर्तिनो विशिष्टताज्ञानम् अन्यथाभानम् , प्रतिपन्ना-कारस्य पुरोवर्तिन्यभावनिश्चयश्च प्रवृत्तिबाधसचिवात् नास्तीति प्रत्ययात् । (श्रु. प्र. 1; भा. 2-26) यथार्थख्यातिव्यतिरिक्तपक्षेष्वन्यथाख्यातिपक्षः प्रबलः । (श्रु. प्र. 1; भा. 2-27) 'शुक्तिः रजतात्मना भाति' इत्यन्यथाधीः ख्यात्यन्तरवादिनां सुदूरमपि गत्वा अन्यस्य अन्यथाभानं अवर्जनीयमित्युक्तं भाष्ये । (चि. म. 201)

सत्यरजतस्थले विशिष्टज्ञानस्यैव प्रवृत्तिकारणत्वात् शुक्तिरजतस्थलेऽपि विशिष्टं ज्ञानमेव प्रवृत्तिकारणमिति वाच्यम् । अतश्च विशिष्टं ज्ञानम् एकमेवेति, अन्यथा-ख्यातिसिद्धिरिति नैयायिकाः । सिद्धान्ते तु लाघवात् भेदाग्रहस्यैव प्रवृत्तिकारणत्वं अङ्गीकृत्य विशिष्टज्ञानस्य प्रवृत्तिकारणत्वं नाङ्गीक्रियते । नैयायिकैरपि सामग्रीकोटौ भेदाग्रहः स्वीकरणीयश्च । तथा च लाघवं बोध्यम् । वस्तुनो वस्त्वन्तरतया ज्ञानम्, यथा शुक्तेः रूप्यतया । (न्या. प. 57)

धर्मैक्ये सति प्रकारान्तरारोपणेन ज्ञानम् । यथा 'पीतः शङ्खः' इति । इदं रजःकार्यम् । धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं विपरीतज्ञानम् । यथा शुक्तौ इदं रजतमिति । इदं तमःकार्यम् ।

अयथावत् प्रजानाति बुद्धिस्सा पार्थ राजसी ।
अधर्मं धर्ममिति या मन्यते तमसा वृता ॥
सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसी । इति स्मृतेः ।
(श्रु. प्र. 1-171)

अन्यस्यान्यस्त्वेन भानम् । शुक्तिं दृष्ट्वा इदं रजतमिति ज्ञानम् । (न्या. प. 47)
धर्मविपर्यासः यथा कर्तृत्वेन भासमाने आत्मनि कर्तृत्वस्य भ्रान्तत्वोपपादनम् ॥
(य. दी. 6)

अयथार्थानुभवः । अन्यथाख्यातिः भ्रमः । स च यस्य यद्धर्मवत्त्वेन ज्ञानमुचितं तस्य तद्भिन्नधर्मेण ज्ञानम् । यथा ह्रदो वह्निमान् इति ज्ञानम् । तच्च विशिष्टं एकं ज्ञानम्, प्रवर्तकत्वादिति नैयायिकाः । मीमांसकादयस्तु तत्र ज्ञानद्वयम् । वह्निज्ञानं ह्रदज्ञानञ्च । असंसर्गाग्रहवशाच्च तयोः विशिष्टज्ञानकार्यकारिता । (न्या. को.)

स्वप्ने दिवसानुभूतदेशकालान्तरगताः शिरच्छेदादयो विषयाः अदृष्टोद्बोधितसंस्कारवशात् स्मर्यमाणा निद्रारूपदोषवशेन आत्मनिष्ठतया भासन्ते । एवं चान्यसम्बन्धित्वेनावगतानां अन्यसम्बन्धित्वेन भानं शुक्तिरजतज्ञानवत् । इयमेव चान्यथाख्यातिः । न च बाह्यविषयेषु मनसः तदानीमसम्बन्धात् कथं भानमिति वाच्यम् । ज्ञानलक्षणायाः प्रत्यासत्तेरङ्गीकारात् न दोषः । अन्यथाख्यातिरूपरजतत्वविशिष्टज्ञानस्यैवाग्रहे प्रवृत्त्यादिहेतुता युक्ता ॥ (मी. को.)

अयन्थात्वं शब्दादिति चेन्नाविशेषात् — (ब्र. सू. 3-3-6) (अन्यथात्वाधिकरणे प्रथमसूत्रम्)

'अन्यथात्वं शब्दादिति चेत्' इति पूर्वपक्षी परिहरति । वाजिनां छन्दोगानां चोद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं हि विहितम् । तत्र विद्यैक्यं पूर्वपक्षं हृदि निधाय राद्धान्तच्छायया चोदयति । वाजिनां प्राणदृष्ट्योपासनं उद्गीथकर्तृविषयं इतरत्र कर्मविषयं इति शब्दादेव प्रतीयते । 'अथ हेममासन्यं प्राणमूचुः त्वं न उद्गाय' इति 'तथेति तेभ्यः उदगायत्' इत्यादिना उद्गीथकर्तृविषयं वाजिनां, छन्दोगानां तु 'य एवायंमुख्यः प्राणः तमुद्गीथमुपासाञ्चक्रिरे' इत्युद्गीथविषयमिति चेत् तदिदमाह — 'अन्यथात्वं शब्दादिति चेत्' इति न, उपक्रमविशेषात्; 'हन्तासुरान् यज्ञ उद्गीथेन अत्ययाम' इत्येकत्र; अन्यत्रापि 'तद्ध देवा उद्गीथमाजह्रुः अनेनैनानभिहनिष्याम' इति । अत्र वाजिनां उद्गानकर्मण्येव सौकर्यातिशयविवक्षया तत्कर्तृत्वव्यपदेशः । स्वयमेवासिश्छिनत्तीतिवत् । तस्मादुभयत्र विद्यैक्यमिति पूर्वपक्षपरमिदम् ।

सिद्धान्तस्तु 'न वा प्रकरणभेदात्' इत्यादिना विद्याभेदः साध्यते । यथैकस्यामपि शाखायां उद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि परोवरीयस्त्वा-

द्विगुणविशिष्टदृष्टिविधानमर्थान्तरम् ; एवं प्रकरणभेदात् विद्याभेदः। तथा च कर्मणः कर्तृत्वविवक्षा तु न कार्येति भावः।

उद्गातरि च तत्कर्मण्यध्यासस्य विधानतः।
विद्यैक्यं नेति चेन्नैवं ह्यविशेषादुपक्रमे॥ (ब्र. प. मा. 360)

**अन्यथात्वाधिकरणम्** — (3-3-2)

1. अन्यथात्वं शब्दादिति चेन्नाविशेषात्।
2. न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्।
3. संज्ञातश्चेत्तदुक्तं अस्तितु तदपि।
4. व्याप्तेश्च समञ्जसम्।

अत्र प्रथमं सूत्रं पूर्वपक्षपरम्, पश्चात् सूत्रत्रिकं सिद्धान्तपरञ्च, अन्यथात्वशब्दोपक्रान्तं सूत्रचतुष्टयात्मकं एवमुच्यते।

चोदनाद्यविशेषात् विद्यैक्यमुक्तम्। अतःपरं काश्चन विद्या अधिकृत्य चोदनाद्यविशेषोऽस्ति नास्तीति विचार्यते। छान्दोग्यवाजसनेयकयोः 'देवा उद्गीथमाजह्रुः अनेनैनानमिहनिष्याम' इत्यादिना देवा ऊचुः 'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इत्यादिना चाम्नातयोरुद्गीथविद्ययोरध्यस्तप्राणभावोद्गीथविषयत्वात् रूपाद्यविशेषात् एकविद्यात्वमित्यशङ्क्य छान्दोग्ये 'ओमित्येतदक्षरं उद्गीथमुपासीत' इति प्रस्तुतस्यैव प्रणवस्य प्राणदृष्ट्या उपास्यत्वात्, वाजसनेयकेतु कृत्स्नोद्गीथविषयत्वाच्च रूपभेदात् विद्याभेद इत्युक्तम्।

उद्गीथैक्यं चोदनादेरभेदात्
छन्दोगानां वाजिनां चेति नैतत्।
उद्गीथांशोद्गीथयोः प्राणदृष्ट्या
रूपानैक्यात् कर्मकर्त्रोस्तथा च॥ (न्या. क. सं. 3-22)

**अन्यथानुपपत्तिः** — प्रमाणानुग्राहकतर्कविशेषः।

स्वाभावप्रयोज्यसम्भवः। यथा 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यादौ रात्रिभोजनानङ्गीकारे रात्रिभोजनाभावप्रयोज्यपीनत्वासम्भवात्मिका पीनत्वान्यथानुपपत्तिः।

अत्र दिवा अभोक्तुर्देवदत्तस्य पीनत्वं रात्रिभोजनं विनानुपपन्नम् । इदञ्चार्थापत्तिप्रमाण-मनुमान एवान्तर्भवतीति विज्ञेयम् । अत्रानुमानं च देवदत्तो रात्रिभोजी दिवा अभुञ्जानत्वे सति पीनत्वात् इति बोध्यम् ।। (न्या. को.)

**अन्यथानुमितौ च ज्ञशक्तिवियोगात्** — (ब्र. सू. 2-2-7) (रचनानुपपत्त्यधिकरणे सप्तमं सूत्रम्)

दूषितप्रकारातिरिक्तप्रकारान्तरेण प्रधानानुमितौ च प्रधानस्य ज्ञशक्तिवियोगात् — ज्ञातृत्वशक्तिवियोगात् त एव दोषाः प्रादुःष्युः । अतो न कथञ्चिदपि अनुमानेन प्रधानसिद्धिः । ज्ञातृत्वे सति हि सङ्कल्पादधिष्ठात्रन्तरनिरपेक्षप्रवृत्त्युपपत्तिः । तच्च नास्ति, तस्मान्नित्यसर्गादिप्रसङ्ग इत्यर्थः । अचेतनत्वादेव प्राज्ञाधिष्ठितत्वं प्रसजेत् इति भावः । अतः कार्यं च सर्वं स्वसमानजातीयवस्तूपादानकं दृष्टम् । जगच्च सर्वं सुखमोहात्मकं प्रत्यक्षत उपलभ्यते तस्य च तथाविधेनैव केनचिदुपादानेन भाव्यम् । तच्च प्रधानमेवेत्युक्तेर्नावकाशः ।

प्रधानानुमितौ चात्र ह्यन्यथा यदि तत्र च ।
ज्ञातृत्वशक्तिविरहाद्रचनादेरसम्भवः ।। (ब्र. प. मा. 181)

**अन्यथानुमेयमिति चेत् एवमप्यनिर्मोक्षप्रसङ्गः** — (ब्र. सू. 2-1-12) (विलक्षणत्वाधिकरणे द्वादशं सूत्रम्)

प्रधानकारणवादे दोषः । इतः पूर्वं विद्यमानैः तर्कैरप्रतिहतत्वं यथा सम्भवति, तथा प्रधानकारणवादमनुमास्यामह इति चेत्, तथापि तर्काप्रतिष्ठानदोषात् अनिर्मोक्ष-प्रसङ्गो दुर्वारः, त्वदधिककुतर्ककुशलदूष्यत्वसम्भवात् । अनिर्मोक्षः — अप्रतिष्ठितत्व-दोषापरित्याग इत्यर्थः ।

शुष्कतर्कावलम्बिनां न क्वापि पर्यवसानमित्यर्थः । 'तर्काप्रतिष्ठानादपि' इति पूर्वप्रयुक्तहेतुशैथिल्यशङ्का पर्यहार्यनेनसूत्रेण । अतः अनयोरुभयोरेकसूत्रत्वं परैरुक्तं न घटते । पूर्वप्रयुक्तहेतुशैथिल्यशङ्कापरिहारौ हि सर्वत्र सूत्रकारेण सूत्रान्तरेणैव कृतौ दृश्येते खलु ।

प्रबलात्तर्कसंवादात् प्रधानं सिद्ध्यतीति चेत् ।
ततोऽपि बलवत्तर्कबाधान्मुच्येत नो भवान् ।। (ब्र. प. मा. 150)

**अन्यथाप्रतिपत्तिः** — स्वरूपाग्रहणम् ।

मोहो विपरीतज्ञानम् । प्रमादो यथावदप्रतिपत्तिः, स्वरूपाग्रहणे हि अन्यथा-प्रतिपत्तिः ॥ (श्रु. प्र. 1-82)

**अन्यथासिद्धिः** — कारणताग्रहप्रतिबन्धको दोषविशेषः ।

यथा — अवश्यक्लृप्तनियतपूर्ववर्तिभिः दण्डादिभिरेव घटरूपकार्यसम्भवे तत्सह-भूतं दण्डत्वं घटं प्रति अन्यथासिद्धम् ॥ (न्या. को.)

**अन्यथासिद्धत्वम्** — बाध्यताप्रयोजकधर्मः ।

द्वयोः प्रमाणयोः विरोधे यत् सम्भाव्यमानान्यथासिद्धि तद्बाध्यम्, अनन्यथा-सिद्धमनवकाशमितरत् बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णयः । (श्री. भा. 1-84) सावकाशत्वादन्यथासिद्धमित्यर्थः । विषयान्तरलाभोऽप्रमाणकोटिनिवेशो वा सावकाशत्वं; तेन स्वोपस्थापितार्थविषयप्रामाण्यं विनापि सम्भावितोदयत्वम् । विरुद्धार्थप्रमाणाऽबा-धेनापि सम्भवदुदयत्वमिति यावत् ॥ (श्रु. प्र.)

**अन्यपरत्वम्** — तात्पर्याभावः ।

न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां . . . . . पदसमुदायानां . . . . . ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वम् ; स्वविषया-वबोधपर्यवसायित्वात् सर्वप्रमाणानाम । (श्री. भा. 1, भा. 2-1-39)

प्रमाणानि हि स्वस्वविषयावबोधे पर्यवस्यन्ति, न तु प्रवृत्तिनिवृत्त्योरित्यर्थः । (श्रु. प्र.) अनेन प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि ब्रह्मणि प्रामाण्याभावः निरस्तः । गङ्गायां घोष इत्यादौ तु बाधितत्वात् गङ्गाशब्दस्य स्ववाच्यार्थे तात्पर्याभावः खलु ॥

**अन्यपरशब्दार्थनिर्णयः** — एकस्मिन्नेव प्रयुक्तयोः अर्थविशेषः ।

'यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयश्चान्यो वक्तुमेवमपीष्यते' ॥ (वि. पु.2-13-90)

'यद्यन्योऽस्ति परः कोऽपि' इत्यत्रापि नात्मैक्यं प्रतीयते; 'यदि मत्तः परः कोऽप्यन्यः' इति एकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात्। तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः, अन्यशब्दः तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः।

एतदुक्तं भवति – यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्याकारोऽस्ति, तदा 'अहमेवमाकारः, अयञ्चान्यादृशाकारः' इति शक्यते व्यपदेष्टुम्। न चैवमस्ति; सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति। (श्री. भा. 1-242)

द्वयोः शब्दयोः (अन्यपरशब्दयोः) कोऽर्थ इत्यत्राह तत्रेति। परशब्देन धर्मिणमनूद्य तस्य शब्दान्तरोपस्थापिताकारान्तरान्वयो निषिध्यत इत्यर्थः। एषोऽहं अयञ्चान्य इति वक्तुमशक्यत्वं कथम्; प्रत्यक्त्वपराक्त्वे भेदकधर्मौ हि विद्येते इति चेत् मैवम्; प्रत्यक्त्वपराक्त्वयोः स्वपरापेक्षया सर्वात्मनां साधारणतया व्यावर्तकत्वाभावात्। पूर्वं देवादिष्वन्यतमोऽयमित्यभिप्रायेण तद्विशेषबुभुत्सया हि सौवीरराजेन आदिभरतः पृष्टः। अतो देवाद्याकारनिषेधपरा इमे शब्दा इति भावः। (श्रु. प्र.)

'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' (गी. 7-7)

यथा सर्वकारणस्यापि प्रकृतिद्वयस्य कारणत्वेन सर्वाचेतनवस्तुशेषिणः चेतनस्यापि शेषित्वेन कारणतया शेषितया चाहं परतरः; तथा ज्ञानशक्तिबलादिगुणयोगेन चाहमेवपरतरः। मत्तोऽन्यत् – मद्व्यतिरिक्तं ज्ञानबलादिगुणान्तरयोगि किञ्चिदपि परतरं नास्ति॥ (गी.भा.)

मत्तः – परमेश्वरात् परतरमन्यत् – कारणान्तरं किञ्चित् नास्ति – न विद्यते, अहमेव जगत्कारणमित्यर्थः। (शं. भा.)

तथा च (वि. पु. वचने) जीवात्मस्वरूपे देवाद्याकारनिषेधपरे अन्यशब्दः अन्यादृशाकारपरः, परशब्दस्तु भिन्नवाची इत्युक्तं भवति। गीतायान्तु परशब्दस्य प्रकरणानुरोधेन उत्कर्षवाचित्वञ्च बोधितम्। अन्यथा अन्यपरशब्दयोः सार्थक्यं दुर्वचम्।

**अन्यभावः** — अन्यस्य भावः अन्यत्वम्। अथवा अन्यवस्तुसद्भावः।

'भावस्सत्ता स्वभावाभिप्रायचेष्टार्थजन्तुषु' इति नानार्थमाला॥

**अन्यभावव्यावृत्तेश्च** — (ब्र. सू. 1-3-11) (अक्षराधिकरणे तृतीयं सूत्रम्)

गार्गिप्रश्नेऽक्षरं परं ब्रह्मेति साधितम्। अनेनास्य प्रधानत्वं जीवत्वञ्च व्यावर्त्यते। अन्यभावः—अन्यत्वं, अस्य अक्षरस्य परमपुरुषादन्यत्वं व्यावर्तयति वाक्यशेषः। 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ' इत्यादिना सर्वैरदृष्टस्यैव सतः सर्वस्य द्रष्टृत्वाद्युपदेशाच्च सर्वैरदृष्टत्वे सति सर्वद्रष्टृत्वं प्रधाने जीवे च न सम्भवतीति।

एवं वान्यभावव्यावृत्तिः—अन्यस्य सद्भावव्यावृत्तिः; यथैतदक्षरं अन्यैरदृष्टं सत् अन्येषां द्रष्टृ च सत् स्वव्यतिरिक्तस्य समस्तस्याधारभूतम्; एवमनेनादृष्टम् एतस्य द्रष्टृ च एतस्याधारभूतम् अन्यन्नास्तीति वदन् 'नान्यदतोऽस्ति द्रष्टृ' इत्यादि वाक्यशेषः अन्यस्य सद्भावं व्यावर्तयन्, अस्याक्षरस्य प्रधानभावं; प्रत्यगात्मभावं च प्रतिषेधति।

तथा च अक्षरविद्यायां गार्गिप्रश्ने अक्षरशब्दवाच्यः परमात्मैव, न तु प्रधानजीवौ इति पूर्वं अक्षराधिकरणसूत्रद्वयेन पृथगुपपादितौ; इदानीं एकेनैवोभयव्यतिरेकः दृढीकृतः।

'नान्यदतोऽस्ति द्रष्टृ' इति वाक्यस्य ब्रह्मव्यतिरिक्तद्रष्टृमात्रनिषेधपरत्वमयुक्तम्। तथा सति हि ब्रह्मैव द्रष्टृ नान्यदित्युक्तं स्यात्। तत् परमते विरुद्धम्, ब्रह्मणो द्रष्टृत्वानभ्युपगमात्। तन्मते 'नैतदक्षरं द्रष्टृ' इति हि वक्तव्यम्। यदि द्रष्टृमिथ्यात्वपरं अतोऽन्यदिति निर्देशवैयर्थ्यम्। द्रष्टृ नास्तीत्येतावता तन्मिथ्यात्वसिद्धेः।

ननु 'ब्रह्मैव द्रष्टृ' इत्यर्थः। ततश्च ब्रह्मणि द्रष्टृणां कल्पितत्वं सिध्यतीति चेन्न; अयमेव पुरुषः, नान्योऽतोस्ति पुरुषः इत्युक्ते पुरुषत्वमस्मिन् कल्पितमित्यर्थाप्रतीतेः। एतत्तुल्यपुरुषान्तरनिषेधो हि प्रतीयते। अतः ब्रह्मणोऽन्यः द्रष्टृवर्गो मिथ्येत्यर्थः इति चेन्न, अदृष्टं द्रष्टृ इति पूर्ववाक्ये ब्रह्मण एव द्रष्टृत्वप्रतिपादनात्, ब्रह्मव्यतिरिक्तस्यैव द्रष्टृत्वमिति वक्तुमयुक्तत्वात् द्रष्टृमिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गात्। तस्मिन् परिजिहीर्षिते सति 'अदृष्टं द्रष्टृ' इति पूर्ववाक्यप्रतिपाद्यस्याब्रह्मत्वप्रसङ्गाच्च। ब्रह्मणो द्रष्टृत्वेऽपि ब्रह्मव्यतिरिक्तत्वाभावात् न मिथ्यात्वमिति चेत्; तर्हि परमार्थतो ज्ञातृत्वमभ्युपगतं स्यात्।

अतः 'नान्यदतोऽस्ति द्रष्टृ' इति वाक्यस्य ब्रह्मव्यतिरिक्तद्रष्टृमात्रनिषेधपरत्वोपपादनं न घटत इतिं भावः।

अदृष्टं द्रष्टृति श्रुत्या ह्यन्यभावनिषेधतः ।
अक्षरं परमात्मा हि जगत्कारणमुच्यते ॥ (ब्र. प. मा. 76)

**अन्ययोगव्यवच्छेदः** — एवकारार्थेष्वन्यतमः ।

अन्यस्मिन् योगस्य – सम्बन्धस्य, व्यवच्छेदः । 'पार्थ एव धनुर्धरः' इत्यादौ धनुर्धरत्वं पार्थादन्यस्मिन् व्यवच्छिद्यते – व्यावर्त्यते । विस्तरस्तु एवकारार्थे द्रष्टव्यः ॥

**अन्ययोगव्यवच्छेदपादः** — अतिव्याप्तिपरिहारपरः पादः ।

यथा 'चोदना लक्षणोऽर्थो धर्मः' इत्यत्र चोदनैव प्रमाणम्, प्रमाणमेव चोदनेत्यवधारणद्वयम्; तत्र प्रमाणमेव चोदनेत्यवधारणम् औत्पत्तिकसूत्रे साधितम्; चोदनैव प्रमाणमित्यवधारणं प्रत्यक्षसूत्रे स्थापितम्; तथा जन्मादिसूत्रेऽपि ब्रह्म कारणमेव, ब्रह्मैव कारणमित्यवधारणद्वयमपि विवक्षितम्; जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वात्; लक्षणस्याव्याप्त्यतिव्याप्त्यसम्भवपरिहारावश्यम्भवात् । तत्र व्यक्त्यैक्यान्नाव्याप्तिः; असम्भवपरिहाररूपायोगव्यवच्छेदः प्रथमपादे उक्तः; अतिव्याप्तिपरिहाररूपान्ययोगव्यवच्छेदः त्रिपाद्या क्रियते । (श्रु. प्र. 1-2-1) जगत्कारणत्वरूपलक्षणस्य अन्यस्मिन् प्रधानादौ योगः – सम्भवः, तस्य व्यवच्छेदः – व्यावृत्तिः इति यावत् ॥

**अन्यराजानः** — अन्यपरतन्त्राः ।

'अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति' (छां. उ. 7-25-2)

विधिनिषेधकिङ्कराः – कर्मवश्याः भवन्तीत्यर्थः । स्वराडित्यस्य प्रतिद्वन्द्वित्वात् । (रं. भा.) बहुव्रीहिरत्र विवक्षितः ॥

**अन्यस्मिन् अन्यदृष्टिः** — अतस्मिन् तद्बुद्धिः ।

प्रमात्वेन लोकसिद्धेषु घटपटादिज्ञानेषु भ्रमत्वेन लोकसिद्धेषु शुक्तिरजतादिज्ञानेषु च तुल्यतयानुगतं याथार्थ्यं तद्वद्विशेष्यकतत्प्रकारकज्ञानत्वरूपं याथार्थ्यमनुगतं शुक्तिरज्ज्वोरपि रजतसर्पावयवसद्भावात् । एवमङ्गीकुर्वतां भवतां मते अन्यदृष्टिः नोपपद्यते । कुत इति चेत्; मनुष्यादौ उद्गीथादौ च गरुडत्वादित्यत्वादिदृष्टिविधिः

नोपपन्नो भवति । दृष्टिविशेषणभूतयोः गरुडादित्ययोः निरवयवत्वेन दृष्टिविशेष्ये मनुष्ये उद्गीथादौ च तदवयवसद्भाववार्ताया असम्भवात् कथं तयोः याथार्थ्यमिति शङ्कामपाकरोति ।

तन्मात्राद्ये हि न स्यात् विमतिरविमता भ्रान्तिनीतिः परस्मिन् ।
तादृग्भेदाग्रहोपप्लुतमतियुगलस्थापनायां नियोगात् ।।
(अ. सा. 452) इत्यनेन ।

अयमर्थः – अन्यथाख्यातिपक्षे दृष्टिविधेः अयुक्तत्वं नैव । परस्मिन् यथार्थपक्षे तादृगन्यथाख्यातिवत् व्यवहारान्यथाभावसम्पादनसमर्थो यो गरुडमनुष्ययोः, आदित्योद्गीथयोश्च भेदाग्रहः तेन उपप्लुतं अयथावस्थितव्यवहारजनकतारूपं कालुष्यमापन्नं यत् गरुडमनुष्यविषयकं उद्गीथादित्यविषयकं वा मतियुगलं ज्ञानद्वयं तस्य स्थापनायां अनुवर्तनौपयिकमनोव्यापारे चोदनात् भ्रान्तिनीतिः अविमता – अविप्रतिपन्नेति ।

अयं भावः – यत्र पञ्चीकरणप्रक्रिययावयवसद्भावः तदैव यथार्थख्यातिः । अन्यत्र तु भेदाग्रहसहकृतज्ञानद्वयात्मकत्वेन प्राभाकरादीनामिव निर्वाहः । तथा च 'अहं गरुड' इति ध्यानञ्चाहन्त्वप्रकारकस्वात्मविशेष्यकंगरुडत्वप्रकारकगरुडविशेष्यकज्ञानद्वयात्मकं, गरुडस्वात्मभेदाग्रहसहितम् ; ईदृशं ज्ञानद्वयं यथार्थमेव विहितमिति नास्मत् सिद्धान्ते विरोध इति ।

नन्वेवं सर्वेषामपि ज्ञानानां तद्वति तत्प्रकारकत्वेन प्रमात्वे लोकसिद्धभ्रमप्रमाभेदोपपादनं कथमिति चेत्, तत्सावधानो निशमय । यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमेति प्रमालक्षणम् । अतो विपरीतं ज्ञानं भ्रमं इति सुगमम् । शुक्तिदर्शनानन्तरभाविशुक्तिरजतभेदाग्रहसहितशुक्तिरजतज्ञानद्वयेन इदं रजतमित्याकारवता जायमान इदं रजतमिति व्यवहारो न यथावस्थितः । पुरोवर्तिवस्तुपरस्येदमादिशब्दस्य तदुत्तररजतादिपदेन सामानाधिकरण्याभावात् यथावस्थितेषु 'अयं घटः, अयं पटः, इदं पुष्पं, इदं फलमित्यादिव्यवहारेषु तथा दर्शनात् ज्ञाने व्यवहारे चायथावस्थितिः परपक्षसिद्धा । व्यवहारमात्रस्य अयथावस्थितिरस्मत्सिद्धान्तसिद्धा ।

तथा च शुक्तिरजतादिज्ञानवदयथावस्थितव्यवहारानुगुणत्वात् निरुक्तं गरुडादिज्ञानद्वयं भ्रान्तिशब्दवाच्याज्ञानविशेषगतायथावस्थितव्यवहारानुगुणत्वरूपभ्रान्तिलक्षण-

लक्षितमेव । अत एव लोकसिद्धभ्रमप्रमाव्यवहारभेदस्योपपत्तिरिति न किंचित्सङ्कटमिति ॥
(प. यो.)

**अन्यात्** — सुखहेतुः (परमात्मा) ।

'को ह्येवान्यात् कः प्राण्यात्' । (तै.आ. 31)

अन्यात् – प्राण्यादिति भोगापवर्गसुखहेतुत्वमुक्तम्, यद्वा सत्ता हेतुत्वं सुखहेतुत्वं चोक्तम् । पूर्वोक्त एव सम्यगर्थः । (श्रु. प्र. 1-1-15)

'अन-प्राणने' अस्माद्धातोः 'हेतुहेतुमतोर्लिङ्' इत्यनेन हेत्वर्थे लिङ् । तथा च परमात्माधीनैव सुखप्राप्तिः सत्ता च भवतीति भावः ॥

**अन्यादृशम्** — विलक्षणम् (ब्रह्म) ।

अन्य इव दृश्यते इति । स्वरूपस्वभाववैचित्र्यादिभिर्विलक्षणं ब्रह्म ॥ (सं. अ.)

**अन्याधिपतित्वम्** — अन्यपरतन्त्रता (कर्माधीनत्वम्) ।

विधिनिषेधयोग्यत्वम् । (श्री. भा. 4-4-9) अत्र बहुव्रीहिसमासो विवक्षितः । परमात्मशेषत्वस्य यावत्स्वरूपभावित्वात्, तदन्यपरतन्त्रता अत्र विवक्षिता ॥

**अन्याधिष्ठिताधिकरणम्** — (3-1-6)

1. अन्याधिष्ठिते पूर्ववदभिलापात् ।
2. अशुद्धमिति चेन्न शब्दात् ।
3. रेतस्सिग्योगोऽथ ।
4. योनेश्शरीरम् ।

इति सूत्रचतुष्टयं अन्याधिष्ठितपदादिमं तथाभिलप्यते ।

'मेघो भूत्वा प्रवर्षति त इह व्रीहि यवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' इत्यादिवाक्ये देवो जायते इत्यादिवत् जायन्ते इति वचनात् आत्मानो व्रीह्यादि-

शरीरकाः जायन्त इत्याशङ्क्य – आकाशादिमेघपर्यन्तवत् केवलतद्भावापत्तिवचनात् अन्याधिष्ठितेषु संश्लेषमात्रमित्युक्तम् ।

'जायन्त' इत्येव विशेषशब्दात् व्रीह्यादिदेहास्तु भवन्ति जीवाः ।
नैतत्तु गौणं जननाभिधानं तद्धेत्वभावात् परतस्तु भावात् ॥

भूतसूक्ष्मैः परिष्वङ्गः कर्मशेषसहायता ।
अपुण्यानामनारोहो वियदादिसदृक्षता ॥

तत्राचिरादवस्थानं व्रीह्यादेः श्लेषणं तथा ।
इत्यर्थाः षडमी सम्यक् पादेनानेन चिन्तिताः ॥
(न्या. क. सं. 3-6; 3-7; 3-8)

**अन्याधिष्ठिते पूर्ववदभिलापात्** — (ब्र. सू. 3-1-23) (अन्याधिष्ठिताधिकरणे प्रथमसूत्रम्)

जीवान्तराधिष्ठिते व्रीह्यादिशरीरे संश्लेपमात्रम् । पूर्ववदभिलापात् – आकाशादिभाववत् केवलव्रीह्यादिभावाभिलापात्; जन्महेतुभूतकर्मानभिलापात् ।

अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्त इति श्रूयते 'मेघो भूत्वा प्रवर्षति त इह व्रीहि-यवा-ओषधिवनस्पतयः तिलमाषा जायन्ते' इति । जायन्त इति वचनात् व्रीह्यादिशरीराःभोक्तारः इति प्राप्ते आह – व्रीहियवादौ संश्लेषमात्रम् अवरोहतः आकाशादिष्विव जननहेतुविरहिताभिलापात् । 'जायन्त' इति वचनं औपचारिकम्, यत्र ब्राह्मणादि जन्मास्ति तत्र 'रमणीयचरणाः' इति हि हेतुरभिलप्यते । तथा चावरोहतां जीवानां व्रीह्यादिजन्माभावः अपि तु जीवान्तराधिष्ठिते संश्लेषमात्रमिति सिद्धम् ।

अन्याधिष्ठितव्रीह्यादौ सम्बन्धः पूर्ववत्तदा ।
अनुभाव्यान्तराभावात् मध्ये चाप्यवरोहतः ॥ (ब्र. प. मा. 31)

**अन्यापदेशः** — अन्योक्तिः ।

अन्यस्य अपदेशः – उक्तिः । प्रकृतार्थप्रकाशनाय अन्यस्यार्थस्योक्तिः ॥ (सं.अ.)

**अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके** — (ब्र. सू. 1-4-18) (जगद्वाचित्वाधिकरणे तृतीयं सूत्रम्)

तु शब्दः शङ्कानिवृत्त्यर्थः । जीवसङ्कीर्तनम् अन्यार्थम् । जीवातिरिक्तब्रह्मसद्भावप्रतिबोधनार्थमिति प्रश्नप्रतिवचनाभ्यां अवगम्यते । प्रश्नस्तावत् जीवप्रतिपादनानन्तरं 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट' इत्यादिकः सुषुप्तजीवाश्रयविषयतया परमात्मपरः इति निश्चितम् । प्रतिवचनमपि 'अथास्मिन्प्राण एवैकधा भवति' इत्यादिकं परमात्मविषयमेव । सुप्तपुरुषाश्रयतया हि प्राणशब्दनिर्दिष्टः परमात्मैव 'सता सौम्य तदा संपन्नो भवति' इत्यादिभ्यः । जैमिनिग्रहणं उक्तस्यार्थस्य पूज्यत्वाय । अपि चैवमेके — एके वाजसनेयिनः इदमेव बालाक्यजातशत्रुसंवादगतं प्रश्नप्रतिवचनरूपं वाक्यं परमात्मविषयं स्पष्टम् अधीयते 'क्वैष एतदित्यादि' 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते' इत्येतदन्तम् ।

एतेन 'तौ ह सुप्तं पुरुषमीयतुः तं हाजातशत्रुरामन्त्रयां चक्रे बृहन् पाण्डरवासः सोमराजन्निति । स उ ह तूष्णीमेव शिष्ये तत उ हैवैनं यष्ट्या विचिक्षेप । स तत एव समुत्तस्थौ' इत्यादिना प्राणनामभिः आमन्त्रण-अश्रवण-यष्टिघातोत्थापनादिना शरीरेन्द्रियप्राणाद्यतिरिक्तजीवात्मसद्भावप्रतिपादनपरमिदं प्रकरणमिति शङ्कां पर्यहार्षीत् ।

अस्मिन् जीवपरामर्शो जीवादन्यत्वसिद्धये ।
आख्याति प्रश्नव्याख्याभ्यां जैमिनिस्त्वपि चेतरे ॥ (ब्र. प. मा. 127)

**अन्यार्थश्च परामर्शः** — (ब्र. सू. 1-3-19) (दहराधिकरणे सप्तमं सूत्रम्)

'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते' इति परंज्योतिस्स्वरूपदहराकाशोपसम्पत्त्या अस्य जीवस्य अनृततिरोहितस्वरूपस्य स्वरूपाविर्भावो भवतीति दहराकाशस्य जगद्विधरणादिवत् जीवस्वरूपाविर्भावापादनरूपसंपद्विशेषप्रतिपादनार्थो जीवपरामर्शः ।

एतेन दहरवाक्ये जीवप्रस्तावः न प्रष्टृप्रतिवक्तृभावेन, तथा श्रवणाभावात् । नाप्यङ्गोपासनविषयतया, दहरविद्यायां उपासनविध्यन्तराभावात् । अतः प्रकृतोपासनकर्मत्वेनैव जीवपरामर्शः, अन्यथा तत्प्रतिपादनवैयर्थ्यात् । प्रकृतोपासनकर्मत्वे च दहराकाशः जीव एव स्यादिति, पूर्वपक्षः व्यावर्तितः ।

माहात्म्यकथनार्थं तु ब्रह्मणोऽन्यस्य कीर्तनम् ।
संप्रसादस्य मुक्त्यादौ स्वरूपापादनेन तु ॥ (ब्र. प. मा. 84)

**अन्योन्यलक्ष्यम्** — परस्परलक्षणीयम् (निरूपणीयम्) । (लक्ष्मीनारायणाख्यं परं ब्रह्म)

'विष्णुस्त्वञ्चेत्यनवधिगुणं द्वन्द्वमन्योऽन्यलक्ष्यम्' (श्री. स्तु. 5) लोके वेदे च विष्णुपत्नीत्वेन, श्रियःपतित्वेन च तयोर्व्यवहारप्राचुर्यात् ।

यद्वा – अन्योन्येन लक्ष्यं दृश्यम् । 'लक्ष-दर्शनाङ्कयोः' श्रिया हि दृश्यो देवः, तेन च दृश्या देवी, उभयोः परस्परं प्रति श्रीत्वात् ।

'कः श्रीः श्रियः' 'तव श्रिया' इति च परस्परस्य श्रीत्ववचनात्, एवं परस्परं द्वावप्यनुरूपाविति भावः । (व्या.)

भगवत्स्वरूपनिरूपिका श्रीः । पत्युरपि पत्नीस्वरूपनिरूपकत्वादेवम् ॥ (वि.को.)

**अन्योन्याभावः** — अभावविशेषः ।

भावान्तराभाववादिनां सिद्धान्ते तु वस्त्वन्तरगतासाधारणविरोधिधर्म एव समानाधिकरणनिषेधभेदेन व्यवह्रियते । (ता. चं. 2-27) अयं च अतिरिक्त इति नैयायिकाः – 'घटः पटो न' इत्यादौ पटान्योन्याभावः घटगतासाधारणघटत्वरूपविरोधिधर्म एव । (शिष्टं अभावपदे द्रष्टव्यम्)

तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः । इदमिदं न भवति इदमेतद्भिन्नम् इति प्रतीतिसाक्षिकोऽभावः ॥ (न्या. को.)

**अन्योन्याश्रयः** — दोषविशेषः ।

स्वकार्येण स्वोत्पत्त्यभ्युपगमे विरोधप्रसङ्गः । यथा – देवदत्तः पिता यज्ञदत्तस्य, तस्मिन्नेव च जन्मनि स एव तस्येति । अयमेवान्योन्याश्रयः । (न्या. प. 222)

अयमितरेतराश्रयशब्देन व्यवह्रियते । अत्र अन्योन्यपदस्य तज्ज्ञाने तदुत्पत्तौ तत्स्थितौ च लक्षणा । तदाश्रयोऽन्योन्याश्रय इति त्रितयसाधारणो विग्रहः । एवं च अन्योन्यसम्बन्धिनो ज्ञानोत्पत्तिस्थित्येतदन्यतमस्याश्रय इत्यर्थः । (न्या. को.)

स च स्वापेक्षाऽपेक्षितत्वनिमित्तकोऽनिष्टप्रसङ्गः। अपेक्षा च ज्ञप्तौ, उत्पत्तौ, स्थितौ च ग्राह्या ॥

**अन्योन्याश्रयत्वम्** — परस्परज्ञप्त्यधीनज्ञप्तिकत्वम्।

परस्परापेक्षत्वम्। (य. दी. 18)

स्वनिर्वाह्यपदार्थनिर्वाह्यत्वम् ॥ (वि. को.)

**अन्वयः** — सम्बन्धः।

स च गुणप्रधानभावमन्तरेण न सम्भवति। द्वयोः गुणयोः परस्पराकांक्षारहितत्वेन अन्वययोग्यत्वाभावात्। एवं द्वयोः प्रधानयोरपि। अतो व्युत्पत्तिवशात् क्रियाकारकतदन्वयाः यथा शाब्दाः तथा तदन्तर्गतः शेषशेषिभावोऽपि शाब्दः। यथा 'नीलो घटः' इत्यादौ। (मी. को.)

अतः सिद्धान्ते गुण(अप्रधान)भूतचेतनाचेतनयोः प्रधानभूतब्रह्मणश्च 'चिदचिद्विशिष्टं ब्रह्म' इत्यादौ शाब्दः शेषशेषिभावः सुप्रतिष्ठित एवेति भावः ॥

**अन्वयदृष्टान्तः** — सपक्षः।

यथा – 'यो यो धूमवान् स सोऽग्निमान्, यथा महानसः' इत्यन्वयोदाहरणम् ॥ (य. दी. 28)

**अन्वयबोधः** — प्रत्येकं पदैः उपस्थितानामर्थानां परस्परसम्बन्धज्ञानम्।

यथा घटमानयेत्युक्ते घटपदार्थस्याधेयतासम्बन्धेन द्वितीयार्थकर्मत्वे, तस्य चानयनक्रियायां निरूपकत्वसम्बन्धेन जायमानो बोधः। अधिकमन्विताभिधानपदे द्रष्टव्यम् ॥

**अन्वयव्यतिरेकि** — अन्वयव्यतिरेकव्याप्तिद्वयविशिष्टं लिङ्गम्।

पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वं, असत्प्रतिपक्षत्वम् इति पञ्चरूपोपपन्नं व्याप्यम् अन्वयव्यतिरेकि। यथा पर्वतोऽग्निमान् धूमवत्त्वात्, यो यो धूमवान् स सोऽग्निमान् यथा महानसः, योऽनग्निः स निर्धूमः यथा ह्रद इति। तादृशमेव विपक्षरहितं व्याप्यं केवलान्वयि ॥ (य. दी. 45)

**अन्वयव्यतिरेकौ** — सम्बन्धासम्बन्धौ ।

तौ च यत्सत्त्वे यत्सत्त्वं, यदभावे यदभावः इत्येवं रूपौ ॥ (सं. अ.)

**अन्वयव्यभिचारः** — कारणताग्रहप्रतिबन्धकः दोषविशेषः ।

कारणसत्त्वेऽपि कार्याभाव इति संक्षिप्तार्थः॥ (न्या. को.)

**अन्वयव्याप्तिः** — अन्वयनिरूपिता व्याप्तिः ।

साधनविधौ साध्यनिरूपणेन प्रवृत्ताव्याप्तिः । यथा यो यो धूमवान् स सोऽग्निमान् इति ॥ (य. दी. 22)

**अन्वयादिति चेत् स्यादवधारणात्** — (ब्र. सू. 3-3-17) (आनन्दाधिकरणे सप्तमं सूत्रम् )

'अन्योऽन्तर आत्मा आनन्दमयः' इत्यत्रात्मशब्देन परमात्मन एव ग्रहणमिति पूर्वमुक्तम् । तत्र व्यभिचारमाशङ्क्य परिहरति ।

पूर्वम् 'अन्योऽन्तर आत्मा प्राणमयः' इत्यादिवाक्येषु अनात्मस्वात्मशब्दान्वयदर्शनात् नोत्तरवाक्यान्निर्णयः इति चेत् 'तस्माद्वा एतस्मादात्मनः आकाशस्सम्भूतः' इति प्रकृतस्य आत्मन एव प्राणमयादिषु आनन्दमयपर्यन्तेषु आत्मशब्देनावधारणात् स्यादेव निर्णयः । पूर्वत्रापि तस्माद्वा एतस्मादात्मनः आकाशस्सम्भूतः इति परमात्मन एव बुध्यावतारितत्वात् अन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिः अवतीर्णा, तदनन्तरं च प्राणमयादन्तरे मनोमये ततो विज्ञानमये, तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिः तदन्तराभावाच्च 'सोऽकामयत' इति वाक्यात् प्रतिष्ठितेत्युपक्रमेपि अपरमात्मनि परमात्मबुद्ध्या आत्मशब्दान्वयः इति निरवद्यम् ।

अनात्मन्यप्यात्मशब्दस्यान्वयादिति चेदिह ।
एतस्मादात्मन इति परस्यैवावधारणात् ॥ (ब्र. प. मा. 371)

**अन्ववसर्गः** — कामचारानुज्ञा ।

अनुरूपं स्वेच्छानुरूपतया अवसृज्यते – न प्रतिरुध्यते अनेना इति व्युत्पत्त्या प्रकृतार्थः बोध्यते (वाचस्पत्यं) ॥

अन्ववस्यन्ति — अनुवर्तन्ते ।

'तमेनमात्मानमेते आत्मानोऽन्ववस्यन्ति . . . . . . . यथा श्रेष्ठिनं स्वाः' । (कौ. उ. 4-42) एतादृशं परमात्मानं इतरे जीवाः अन्ववस्यन्ति – अनुवर्तन्ते । (रं. भा.)

तत्र दृष्टान्तमाह – 'यथा श्रेष्ठिनं स्वाः' यथा श्रैष्ठ्यवन्तं स्वाः ज्ञातयः अनुवर्तन्ते ॥ (रं. भा.)

अन्वाख्यानम् — व्याख्यानम् ।

'यथा-प्रयुक्तानामिदमन्वाख्यानम्' इत्यादौ ।

तात्पर्यावधारणार्थं प्रतिपादनम् । यथा – वस्त्वन्वाख्यानं क्रियान्वाख्यानमित्यादौ ॥ (न्या. को.)

अन्वाचयः — चार्थेष्वन्यतमः ।

समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः । यथा – 'भिक्षामट गां चानय' इत्यादौ न समासोऽसामर्थ्यात् । (सि. कौ. 2-2-29) अप्राधान्यम् । (सं. अ.)

उद्देश्यसिध्याऽनुद्देश्यसिद्ध्यर्थोपदेशः ॥ (न्या. को.)

अन्वादेशः — अन्वाख्यानम् ।

'आमनन्ति चैनमस्मिन्' (ब्र. सू. 1-2-33) अन्वादेशविषयो ह्येनादेशः । अन्वादेशः अन्वाख्यानं, तस्मात् एनमिति पदम् उक्तधर्मोपेतं उक्तधर्मिणं परामृशति । (श्रु. प्र. 1.) किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । 'अनेन व्याकरणमधीतम् । एनं छन्दोऽध्यापय' इति ॥ (सि. कौ.)

अन्वायत्ता — उपास्या ।

'सैषा देवता प्रस्तावमन्वायत्ता' (छां. उ. 1-11-5) प्राणेऽभ्यस्योपास्या । (रं. भा.) उपस्थिता ॥ (वि. को.)

**अन्वायत्ताः** — 1. अधीनाः ।

'एतस्य वा अक्षरस्य प्रशासने पितरः अन्वायत्ताः' (बृ. उ. 5-7) अनुवशाः । (रं. भा.) 2. अनुगताः । 'वसवोऽन्वायत्ताः' (छां. उ. 3-16-1) स्वामित्वेनानुगताः । (रं. भा.) 3. उपजीविनः । अथ यत् प्रथमोदिते स प्रस्तावः । तदस्य मनुष्या अन्वायत्ताः ॥ (छां. उ. 2-9-3)

**अन्वारम्भणम्** — स्पर्शः ।

'तं विद्याकर्मणी समन्वारभेते' इति विद्याकर्मणोस्साहित्यं च दृश्यते । (श्री. भा. 3-4-5) अन्वारम्भणं स्पर्शः; तेन सम्बन्धो विवक्षितः ॥ (श्रु. प्र.)

**अन्वारुह्यवादः** — परपक्षमङ्गीकृत्य सान्त्वेन समाधानम् ।

'अन्वारुह्योक्तिदैन्यं न हि सहत ऋजुः सूत्रकृद्वावदूकः' (अ. सा. 23) प्रौढिवादः, अभ्युपगमवादः, वैभववादः इति पर्यायाः ॥

**अन्वाविशन्ति** — अनुसरन्ति ।

'यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं . . . अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' । (छां. उ. 8-5) इह लोके प्रजाः यथानुशासनम् – राजशासनानुल्लङ्घनेन राजानं अन्वाविशन्ति – अनुसरन्ति तथा परलोकेऽपि परतन्त्रा एव भवन्ति । यद्वा यथा राजानमनुसृत्य फलं लभन्ते तथा परलोकेऽपि उपजीवन्तीत्यर्थः । (रं. भा.) अनेन दृष्टान्तेन राजाधिराजपरमात्मशासनानुसरणे अभीप्सितफलसिद्धिः प्रदर्शिता ॥

**अन्वाहार्यः** — चरुविशेषः ।

दर्शपूर्णमासयोः कर्मानुष्ठानमनु यः आहार्यते – दीयते ऋत्विग्भ्यः दक्षिणात्वेन सः चरुः अन्वाहार्यः ॥ (मी. को.)

**अन्वाहार्यपचनः** — दक्षिणाग्निः ।

'अथ हैनमन्वाहार्यपचनोऽनुशशास' (छां. उ. 4-12-1)

अन्विताभिधानम् — शब्देनान्वयपर्यन्ताभिधानम् ।

आचष्टे प्रत्ययश्च प्रकृतिरपि मिथः श्लिष्टमित्यभ्युपेतं
स्पष्टं दण्ड्यादिशब्देष्वपि तदितरथा धीविरोधप्रसङ्गात् ।
अन्योन्यस्मारितार्थान्वितमभिदधति स्वार्थमेवं पदानि
स्यान्नातश्चक्रकादिर्न च पुनरभिधा नापि वाक्यस्य भेदः ॥
(त. मु. 316)

वाक्यानामर्थवत्त्वे सिद्धे तेषामन्विताभिधायित्वं पदप्रतिबन्द्या समर्थयते – आचष्ट इति । द्विविधं हि वाक्यार्थप्रक्रियाभेदमाहुः तत्तत्तन्त्रनिष्ठाः, अन्विताभिधानमभिहितान्वय इति । तत्र पदैरभिहिताः पदार्था वाक्यार्थं बोधयन्तीत्यभिहितान्वयः ।

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसंपादितव्यक्तिपश्चाद्वाक्यार्थबोधकम् ।

इत्यन्विताभिधानम् । अयमत्रश्लोकार्थः । पदानि तावत् श्रूयन्ते । श्रुतानि च व्युत्पत्त्यनुसारेण पदार्थस्वरूपाणि परस्परानन्वितानि स्मारयन्ति । स्मृतेषु च पदार्थेष्वाकांक्षादिपरामर्शः । तत्रैव न्यायप्रवृत्तिः, न्यायप्रवृत्त्या च वचनव्यक्तिविशेषाभिव्यक्तिस्सम्पाद्यते । ततस्सम्यङ्न्यायानुगृहीतानि पदानि नानापदार्थविशिष्टैकप्रधानपदार्थात्मकं वाक्यार्थमभिदधतीति ।

अभिहितान्वयवादिनस्त्वेवमभ्यदधुः । पदैः पदार्थाः पृथक्पृथगभिधीयन्ते । तच्चाभिधानं विशेषव्यक्त्यभावात् स्मारकान्न विशिष्यते; पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते इति वचनात् । ते चाभिहिताः पदार्थाः योग्यत्वेन परामृश्यमानाः स्वयमेव विशेषसंसर्गात्मकं वाक्यार्थमवबोधयन्ति । न तत्र पदव्यापारः; अर्थैरेवार्थविशेषसिद्धेः । यथा कविभिरालोच्यमानाः पदार्था एव वाक्यार्थरूपमर्थविशेषं संसर्गात्मकमवबोधयन्ति, पश्चादेव शब्दरचना प्रतिपन्नार्थानुरोधेन; एवमत्राप्यर्था एवार्थविशेषमवबोधयन्तीति ।

अत्रान्विताभिधानवाद्याह – यथा पदे प्रकृतिप्रत्ययौ सहैवार्थं विशिष्टरूपमभिधत्तः, तथैव वाक्येऽपि सर्वे शब्दाः सहैवार्थं विशिष्टमभिदधति ।

अत्रायं सारतमोऽर्थः — योग्येतरान्वितस्वार्थाभिधायीनि सर्वाण्यपि पदानि । तत्र तत्र कारकपदानि क्रियान्वितस्वार्थाभिधायीनि । क्रियापदन्तु करकान्वितस्वार्थाभिधायकम् । एवं सिद्धपरत्वेऽपि विशेष्यपदं विशेषणान्वितस्वार्थाभिधायकम् ; विशेषणपदं च विशेष्यान्वितस्वार्थाभिधायकत् । सर्वमेतदन्विताभिधानान्न मुच्यते; गुणप्रधानभावेनैव पदार्थानां प्रतीतेरेकवाक्यत्वं न विरुध्यते इति । एवमभिधानाङ्गीकारे परवाद्युक्तास्सर्वे दोषा निरस्ता इत्याह – स्यादिति । पदैरर्थप्रतीतिः; अनन्तरमाकांक्षादिपरामर्शः; पश्चात्पदैरर्थाभिधानम् ; ततोऽर्थप्रतीतिरिति चक्रकम् । आकांक्षादिपरामर्शादर्थाभिधानमर्थाभिधानानन्तरमाकांक्षादिपरामर्श इत्यन्योन्याश्रयः । उभयमपि नास्ति; प्रथममर्थाभिधानाभावात् स्मरणमात्रत्वात्प्रथमं प्रत्येकमर्थानाम् । अत एव न द्विरभिधानप्रसङ्गः । विशेषणानां नानात्वेऽपि सर्वेषामपि पदानां विशिष्टार्थैक्यपरत्वेन वाक्यभेदप्रसङ्गोऽपि नास्ति । (स. सि. 316)

अयमत्र भावः – यद्यप्यन्विताभिधानं, तथापि निर्विशेषब्रह्मवादिनो न वेदवेद्यत्वं निर्विशेषस्य सिध्येत् । यद्यभिहितान्वयस्तथापि तथा; अन्वितस्यान्वयस्य वा भेदगर्भत्वात् । अतो गुरु-कुमारिलपरिगृहीतं पक्षद्वयमप्याश्रित्य परपक्षवादिनं प्रतिक्षिपामः; नास्माकं क्वापि निर्बन्ध इति । प्रधानार्थविरोधे हि प्रतिक्षेप्यत्वनिर्बन्धः । (स. सि. 318) तथा चानेन कतिपयग्रन्थव्याख्यान्युद्धृत्य अभिहितान्वयपक्ष एव सिद्धान्तसम्मत इति वादस्य सावकाशता निरणायि ॥

**अन्वीक्षा** — प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणम् ।

यथा – आन्वीक्षिकीन्यायविद्येत्यादावन्वीक्षा । अत्र व्युत्पत्तिः–श्रवणात् अनु (पश्चात्) ईक्षा – अन्वीक्षा उन्नयनम् ॥ (न्या. को.)

**अपकर्षः** — निकर्षः ।

'उत्कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मतः' (मनु. 10-42)

1. उचितधर्मापेक्षातो हीनता । 2. परसूत्रपदानामन्वयार्थं पूर्वसूत्रे आकर्षणमिति शाब्दिकाः वदन्ति ॥ (न्या. को.)

**अपकर्षसमः** — दोषरूपजातिविशेषः ।

व्यापकाभासनिवृत्त्या कुतश्चित् कस्यचित् व्याप्याभासस्य अपकर्षणम् अपकर्ष-समः । स चानेकधा – पक्षात्, सपक्षात्, उभयतः, विपक्षाच्चेति ।

तत्र पक्षादपकर्षो यथा – यदि घटादिवत् कार्यत्वात् क्षित्यादि सकर्तृकं साध्येत, तदा आत्मादिवत् मनुष्याशक्यक्रियत्वात् कार्यत्वं, सकर्तृकत्वं, उभयं वा किं न बाध्यते? तच्चेत् साधयेत्, इदमपि बाधेत । न चेदिदं, न तदपि, अवि-शेषात् इति ।

अत्र हेत्वपकर्षे स्वरूपासिद्धिः, साध्यापकर्षे बाधः, उभयापकर्षे तूभयमिति । असमीक्षितोदाहरणान्तरास्त्वेतावति विश्रान्ताः ॥ (न्या. प. 177)

**अपगोरणन्यायः** — वैदिकन्यायविशेषः ।

'तस्माद् ब्राह्मणाय नापगुरेत . . . . . योऽपगुरते तं शतेन यातयेत्' इति हि श्रुतिः। विधेयोपकारके विरोधिफलेऽपि तात्पर्यमस्तीत्यनेन न्यायेन ज्ञाप्यते । अतः उपासनविषयकार्योपयोगित्वात् फलभूतब्रह्मस्वरूपे तद्विशेषणगुणादौ, विधिविरो-धिनि फले, संसारहेयत्वादौ च विवक्षा कार्येत्यर्थः । (श्रु. प्र. 1. भा. 2-92) नापगुरेत – न वधसङ्कल्पं कुर्यात् । शतेन यातयेत् – शतसंवत्सरव्यापिनरकबाधां यम उत्पादयेत् । (टि.)

अत्रापगोरणं न कुर्यादिति विधिः, यद्यपगुरेत, एतादृशं अनिष्टं फलं प्राप्नुयात् इति विरोधिफलं श्रुतम् । विरोधिफलं विधेयोपकारकमिति अर्थवादवाक्यगततद्विरोधि-फलेऽपि तात्पर्यं स्वीकरणीयम् । तद्वदेव वेदान्तवाक्येषु अनेन न्यायेन मोक्षोपायविधि-विरोधिफलेऽपि तात्पर्यं स्वीक्रियते । कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव । 'निदिध्यासितव्य' इत्यादिभिः प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन, 'ब्रह्मविदाप्नोति परं' इत्यादिभिः ब्रह्मप्राप्तिः श्रूयत इति ब्रह्मस्वरूपतद्विशेषणानां दुःखासम्भिन्नदेशविशेष-रूपस्वर्गादिवत, रात्रिसत्रप्रतिष्ठावत् अपगोरणशतयातनासाध्यसाधनभाववच्च कार्योप-योगितयैव सिद्धेः' इति हि भाषितम् ॥

**अपचारः** — 1. अकृत्यकरणकृत्याकरणादिरूपोऽपराधः ।

'अकृत्यकरणकृत्याकरण भगवदपचारभागवतापचारासह्यापचाररूपनानाविधानन्तापचारान् . . . सर्वान् अशेषतः क्षमस्व'। (श. ग. 10)

अकृत्यकरणान्तर्गतस्यापि भगवदपचारादेः ब्राह्मणपरिव्राजकन्यायेन प्रकृष्टत्वज्ञापनाय पृथगभिधानम् । यद्यपि अकृत्यकरणादेरपि आज्ञातिलङ्घनरूपतया भगवदपचारत्वम् । तच्च अत्रापचारानिति विशेष्यनिर्देशेन व्यज्यते; तथापि शिशुपालादीनामिव अव्यवधानेन भगवत्परिवादादिकं इह भगवदपचारशब्दोक्तम् । अकृत्यकरणशब्देन तु स्ववर्णाश्रमादिनिषिद्धानुष्ठानमात्रम् । भगवदपचाराः द्वात्रिंशदपचारादिप्रकरणेषु द्रष्टव्याः ।

भगवदीयेषु वस्तुषु स्वीयत्वबुद्धिः, अर्चावतारपर्यन्तेषु अवतारेषु प्राकृतत्वबुद्धिः इत्यादयोऽपि भगवदपचाराः । अयथाशास्त्रम्, अर्थाद्युपाधिभिः भागवतविरुद्धाचरणमिह भागवतापचाराः ; आचार्यापचारो वा । एवं निर्निबन्धनभगवद्भागवतद्वेषावज्ञापरिहासादयश्च यथालोकमसह्यापचारा इत्यनुशिष्यन्ते । अकृत्यकरणादिकं पञ्च उत्तरोत्तरं क्रूरतरम् । एते पञ्चापि प्रत्येकमवान्तरोपाधिभिः नानाविधाः तत्तद्विधास्वपि अवान्तरव्यक्तिभेदैः अनन्ताः । (र. रक्षा. 122)

'नाविरतो दुश्चरितात् नाशान्तो नासमाहितः' इति श्रुत्यनुसारेण पूर्वोक्तान् ज्ञात्वा स्वानुष्ठानवेलायां एते दूरीकर्तव्या इत्यभिप्रायेणाचार्यैरपचाराः पर्यगणिषत । 2. अविचारः । (वि. को.)

'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते, इत्युक्तेः ॥

**अपच्छेदन्यायः** — परप्राबल्यपरः मीमांसान्यायविशेषः ।

अपच्छेदे पूर्वापरशास्त्रयोः पौर्वापर्यं प्रमित्युत्पत्तिक्रमात्, न पाठक्रमात् । 'पञ्चर्त्विजः समन्वारब्धाः प्रसर्पन्ति अध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारं उद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः' इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते, 'बहिष्पवमानं प्रसर्पतां यदि उद्गातापच्छिद्येत, अदक्षिणः सः यज्ञः संस्थाप्यः; तेन पुनर्यजेत । तत्र तत् दद्यात् यत्पूर्वस्मिन् दास्यन् स्यात् । अथ प्रतिहर्तापच्छिद्येत, सर्ववेदसं दद्यात्' इति ।

तदिदं शास्त्रद्वयं विषयः। अत्र उद्गातृप्रतिहर्त्रोः प्रयोगभेदेनापच्छेदे स्वं स्वं प्रायश्चित्तशास्त्रं प्रवर्तते। एकस्मिन् प्रयोगे यौगपद्येनापच्छेदे सति उद्गातुः प्रायश्चित्तं प्रवर्तते; तस्य वर्गप्रधानत्वात्; प्रधानापच्छेदस्यैव समाधेयत्वात्; विकल्पेनानुष्ठानं वा। एकस्मिन्नेव पौर्वापर्येणापच्छेदे पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं परस्य प्राबल्यं च कर्ममीमांसायामुक्तम्, 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इति।

(श्रु. प्र. 1-86)

निर्गुणसगुणवाक्यविषयेऽयं न्यायः सञ्चारितः परैः। अत्र अस्यानवकाश इति सिद्धान्तः। तदेवोपपादयति – ननु अनादिनिधनाविच्छिन्नसंप्रदायतया निर्दोषस्यापि शास्त्रस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादेः भेदावलम्बिनो बाध्यत्वं प्रसज्येत। सत्यम्; पूर्वापरापच्छेदे पूर्वशास्त्रवत् मोक्षशास्त्रस्य निरवकाशत्वात् तेन बाध्यत एव। वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात् परस्य ब्रह्मणः। ननु च 'सर्वज्ञः सर्ववित्' इत्यादि ब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम्? निर्गुणवाक्यसामर्थ्यात् इति ब्रूमः। .... उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति।

(श्री. भा. 1-87)

अत्रोच्यते – निर्गुणवाक्यानां सगुणवाक्यानां च विषयं 'अपहतपाप्मेत्याद्यपिपास' इत्यन्तेन हेयगुणान् प्रतिषिध्य, 'सत्यकामः सत्यसङ्कल्पः' इति ब्रह्मणः कल्याणगुणान् विदधती इयं श्रुतिरेव विविनक्ति इति सगुणनिर्गुणवाक्ययोः विरोधाभावात् अन्यतरस्य मिथ्याविषयतयाश्रयणमपि नाशङ्कनीयम्। (श्री. भा. 1-195)

अत्रायमभिप्रायः; पूर्वं विरोधो नास्तीति परिहृतम्; इदानीं विरोधाभ्युपगमेऽपि नायमपच्छेदन्यायविषयः, अपि तु विरोधाधिकरणन्यायविषय एव। तथा हि – अपच्छेदन्यायो ह्यनियतविरोधपौर्वापर्यविषयः। उद्गातृप्रतिहर्त्रोः उभयोरपच्छेदनियमो नास्ति, तत्रापि क्रमेणापच्छेदोऽप्यनियतः। तन्नियमे सति हि सर्वस्वदक्षिणाकत्वादक्षिणाकत्ववद्विरोधनियमः। उभयोरप्यपच्छेदे तस्य क्रमभावित्वे 'उद्गात्रपच्छेदः पूर्वभावी, इतरस्तु चरमभावी' इति वा विपर्ययेणेति वा नियमो नास्ति। अतोऽपच्छेदन्यायविषयः प्रयोगावधिकविरोधः। सगुणनिर्गुणवाक्यविरोधस्तु स्वरूपप्रयुक्तः,

विधिनिषेधरूपतया नियतपौर्वापर्यश्च । अतो विरोधाभ्युपगमेऽपि अनियतविरोधपौर्वापर्यविषयोऽपच्छेदनयो नात्र प्रवर्तते । अपि तु विरोधाधिकरणन्याय एव प्रवर्तते । (श्रु. प्र. 1-95)

तुल्यविषयो हि अपच्छेदन्यायः । द्वयोर्वचनयोः समानविषयतया विरोधे सति पूर्वबाधेन परस्य सार्थक्यसंपादनं अपच्छेदन्यायकार्यम् । अत्र द्वयोर्वचनयोः (सगुणनिर्गुणप्रतिपादकयोः) उत्सर्गापवादन्यायेन विषयविभजनवशेन तुल्यविषयत्वस्यापनोदनात् नापच्छेदन्यायस्यायं विषय इति भावः ।

किञ्च अनियतपौर्वापर्यविषये हि अपच्छेदन्यायस्य प्रसङ्गः । यथा – कदाचिदुद्गाता पूर्वमपच्छिद्येत कदाचित्प्रतिहर्ता तेन तत्रोत्तरप्राबल्यम् । इह तु नियतं पौर्वापर्यं, विधिः पूर्वो निषेधः परः इति भवतैव नैयत्याभिधानात् । तस्मादुपक्रमाधिकरणन्यायेन सगुणवाक्यस्यैव प्राबल्यम् । एवं भवद्गुणविग्रहविधिनिषेधविषये उपक्रमाधिकरणन्याय एव प्रवर्तितव्यः । (प. यो. 307)

तथा चैतादृशस्थले, अपच्छेदन्यायस्यानवकाशः इति सिद्धम् ॥

**अपदेशः** — व्याजः ।

उपचारापदेशेन कृतानहरहर्मया ।
अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम ॥ (जितन्ता)

1. कथनम् । यथा – नोत्पत्तिकारणानपदेशात् इत्यादौ । 2. हेतुः । यथा – सोऽनपदेश इत्यादौ ॥ (न्या. को.)

**अपह्नवः** — अपलापः ।

'दृष्टेऽपह्नुत्यभावात् अनुमितिविषये लाघवस्यानुरोधात्' (त. मु. 496)

दृष्टे अपह्नुत्यभावात् प्रत्यक्षसिद्धेऽर्थे मृषावादिप्रभृतिवत् अपह्नवाभावात्, अनुमितिविषये लाघवस्यानुरोधात्, शास्त्रैरेवावसेये नास्तिकत्वप्रहाणाच्च श्रीभाष्यकारैः परिगृहीतमिदं दर्शनम् ।

सत्त्वेन ज्ञातस्यापि वस्तुनः असत्त्वेन कथनम् । स द्विविधः शब्दतोऽर्थतश्चेति । तत्र मिथ्यैव तत् इति शब्दतः । अर्थतस्तु नाभिजानाम्यहम् तत्र तदा न मम स्थितिः इति ॥ (न्या. को.)

**अपरत्वम्** — अपरव्यवहारहेतुः ।

दिक्कालापेक्षयाऽपरधीहेतुः गुणः इति परे । सिद्धान्ते दिक्कालसम्बन्धविशेषातिरिक्तः लाघवात् । अप्रत्यक्षपदार्थसंयोगः कथं प्रत्यक्ष इति चेन्न; दिक्कालयोरपि प्रत्यक्षत्वस्य समर्थितत्वात् । यादृशोपाध्यवच्छिन्नदिक्कालसम्बन्धः परत्वापरत्वोत्पादको भवताम् । तथाविध एव सोऽस्माकं व्यवहारविषय इति नातिप्रसङ्गगन्धोऽपि एवमेव परत्वेऽपि । (न्या. सि. 362) न्यूनदेशसंयोगसामानाधिकरण्यावच्छिन्नत्वम् । ज्ञानस्य न्यूनविषयकत्वम् । (टी.)

अपरव्यवहारजनकतावच्छेदकतादृशप्रकारताश्रयत्वं लक्षणम् । यथायं कनिष्ठः अयं समीप इत्यादौ कनिष्ठसमीपयोरपरत्वम् । तत् द्विविधम् । दिक्कृतं कालकृतम् । समीपस्थे दिक्कृतमपरत्वम । कनिष्ठे कालकृतमपरत्वम् ॥ (न्या. को.)

**अपरमार्थत्वम्** — आरोपितत्वम् ।

तच्च परमार्थस्यैव रजतत्वादेः स्वात्यन्ताभाववति प्रतीयमानत्वम् । तदेव मिथ्यात्वमपि । अत एव तस्यात्रासत्त्वं तत्तन्निष्ठात्यन्ताभावप्रतियोगित्वरूपं; यथा लोकेऽभ्युपगम्यते । अत्र रजतादिकं व्यवहारयोग्यं विवक्षितम् । नातो रजतांशमादाय अतिशङ्काया अवकाशः ॥ (द. उ. 199)

**अपराजितः** — (स. ना. 721)

1. भारतसंग्रामे निष्परिग्रहा अपि तत्परिग्रहात् पञ्चापि, पाण्डवाः शतेनापि बहूपकरणरूढमूलैर्वा धार्तराष्ट्रैः न पराजिता इति । (वि. स. भा.) भारतसंग्रामे निष्परिग्रहाणामपि पञ्चानां पाण्डवानां तदेकपरिग्रहात् बहूपकरणरूढमूलैः शतेनापि धार्तराष्ट्रैरपराजिततया न सन्ति पराजिताः स्वगृह्याः अस्येति वा, उक्तरीत्या अपराजिताः स्वगृह्याः पञ्चपाण्डवाः ते अस्य सन्तीति वा । (वि. स. निर्व.)

दुर्योधनादिभिर्नित्यं रूढमूलैः पराजयः ।
न यस्य कुत्रचिद्वापि सोऽपराजित ईरितः ॥ (वि. स. नि.)

**अपराजितः** — (स. ना. 866)

सर्वतो मुखे प्रशासने क्वचित् कदाचित् कुतश्चित् अप्रतिहतः । (वि. स. भा.)

क्वचित् कदाचित् कुतश्चित् सर्वतोमुखशासने ।
यस्य प्रतिहतिर्नास्ति स वै स्यादपराजितः ॥ (वि. स. नि.)

**अपराजितम्** — एतत्संज्ञकं पुरम् ।

'अपराजितमायतनम्' (कौ. उ. 1-26)

अब्रह्मविद्भिः न जीयते इत्यपराजितम् । 'अपराजिता पूः ब्रह्मणः' इति श्रवणात् ॥ (रं. भा.)

**अपराजिता** — वैकुण्ठलोकः ।

'तदपराजिता पूः ब्रह्मणः' (छां. उ. 8-5) अब्रह्मविद्भिः प्राप्तुमशक्या ब्रह्मणः पुरी । (रं. भा.)

**अपराजिष्णुः** — पराजयशीलो न भवति ।

'इन्द्रो वैकुण्ठः अपराजिता सेनेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते, जिष्णुर्ह वा अपराजिष्णुरन्यतस्त्यजायी भवति' (कौ. उ. 4-11) अपराजितः । (रं. भा.) 'ग्लाजिस्थश्च ग्स्नुः' (पा. सू. 3-2-139) अनेन आक्वेः तच्छील-तद्धर्म-तत्साधुकारिषु' इत्युक्तार्थेषु प्रत्ययः । तत्क्रतुन्यायेन अपराजितत्वोपासनेनापराजिष्णुत्वप्राप्त्या शत्रुजयशीलो भवतीति भावः ॥

**अपराधवर्गः** — पापसमूहः ।

एकस्मिन् दुरिते कृते 'पापं प्रज्ञां नाशयति' इतिरीत्या तत्कृतवासनावशेन पुनः पुनः क्रियमाणा तत्तत्सजातीयदुरितपरंपरा ॥ (वि. को.)

**अपराधसहिष्णुत्वम्** — अपराधसहनशीलता (भगवद्गुणः)।

'प्रतिभवमपराद्धुर्मुग्ध ! सायुज्यदोऽभू-
र्वद किमपदमागस्तस्य तेऽस्ति क्षमायाः। (स्तो. र. 63)

जन्मत्रयेऽपि सर्वदा अपराधशीलस्य चैद्यस्य काकादपि परमपापिष्ठत्वं स्पष्टतरं वर्तते। पापिष्ठपापिष्ठतमयोर्काकचैद्ययोः पापक्षमापणेन भगवति अपराधसहिष्णुत स्थापिता भवति। (पे. भा.) एतद्गुणानुसन्धानं भगवदाश्रयणेऽत्यन्तमुपकरोत्येव॥

**अपराधीनः** — स्वतन्त्रः (परमात्मा)।

पराधीनो न भवतीति पुण्यपापकर्मानधीनत्वे सति स्वेतरचेतनानधीनः॥ (सं. अ.)

**अपरावरः** — परमात्मा।

'तस्मिन् दृष्टेऽपरावरे, (मुं. उ. 2-2-9) निम्नोन्नतविश्वविलक्षणः। अत्र अपरावरे इति पाठान्तराभिप्रायेण अयमर्थः उक्तः। परावरे इति पाठे परत्वं सर्वातिशायिता; अवरत्वं सौलभ्यार्थेन्द्रानुजत्वाद्यैः। यद्वा 'सत् ब्रह्म' 'ब्रह्मदाशा' इत्याद्युक्तपरावरजन्तुशरीरकः। अथवा परा एव अवराः भृत्याः यस्य सः। (त. टी. 65) परश्चासौ अवरश्च इत्यपि विवक्षणीयम्। वस्तुतो परस्यैव सौलभ्यातिशयेन मनुष्यादिरूपतया अवतारात्॥

**अपराविद्या** — साङ्गागमजन्यं ब्रह्मविषयकं परोक्षं ज्ञानम्।

'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति, परा चैवापरा च' (मुं. उ. 1-1-4) षडङ्गोपेतसशिरस्कसो-बृहणवेदश्रवणजन्यं परोक्षज्ञानम्। (रं. भा.) ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये—ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः। तत्र परोक्षं शास्त्रजन्यं ज्ञानं, अपरोक्षं योगजन्यम्। तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षं ज्ञानम्। तच्च भक्तिरूपापन्नम्; 'यमेवैष वृणुते तेन लभ्यः' इति अत्रैव विशेष्यमाणत्वात्, तदुपायश्चागमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम्; 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः। आह च भगवान् पराशरः—

तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने।
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तदुच्यते ॥ (श्री. भा. 1-2-23)

एतादृशापरविद्यासाधनत्वात् ऋग्वेदादावपरविद्यात्वव्यवहारः ॥

**अपरावृत्तिः** — पुनरावृत्तिरहितः मोक्षः ।

नास्ति परावृत्तिः यस्मात् । स्वप्राप्त्यनन्तरं कदापि संसाररहितः मोक्षः ।

2. मुक्तः । नास्ति पुनरावृत्तिः यस्येत्यपि विग्रहः । पुनरावृत्त्यभावः । परावृत्तेरभावः इति च विग्रहः । (सं. अ.)

एतेन स्वेच्छयेहागमऽपि न दोष इति बोधितम् ॥

**अपरिग्रहः** — ममतारहितः ।

'निराशीरपरिग्रहः' (गी. 6-10) आत्मव्यतिरिक्ते कस्मिंश्चिदपि ममतारहितः । (गी. भा.) अपरिग्रहशब्देन बुद्ध्या स्वीकारपर्यायः परिग्रहः अत्र निषिध्यते, इत्यभिप्रायेणाह – ममतारहित इति । (ता. चं.)

ममेदमिति भोगविषयतया परिगृह्यत इति परिग्रहः । भोग्यभोगोपकरणादिः । तेषु ममता निषिध्यत इति भावः ॥

**अपरिग्रहाच्चात्यन्तमनपेक्षा** — (ब्र. सू. 2-2-16) (महद्दीर्घाधिकरणे सप्तमं सूत्रम् )

कपिलस्य श्रुतिन्यायविरोधपरित्यक्तस्यापि सत्कार्यवादादिना क्वचिदंशे वैदिकैः परिग्रहोऽस्ति । अस्य तु काणादपक्षस्य केनाप्यंशेन अपरिग्रहात् अनुपपन्नत्वाच्च अत्यन्तमनपेक्षैव निश्रेयसार्थिभिः कार्या ।

अनुमानेनेश्वरसिद्धिः, परमाणुकारणवादः, असत्कार्यवादः, अतिरिक्तसमवायसम्बन्धः इत्यादीनां वैदिकैरपरिग्रहो बोध्यः ।

काणादस्य मतस्यास्य सर्वांशेऽप्यपरिग्रहात् ।
मुमुक्षुभिश्च कर्तव्या ह्यनपेक्षा सदा बुधैः ॥ (ब्र. प. मा. 190)

**अपरिमितशब्दः** — बहुत्वबोधकः ।

अनेकस्मिन् अशक्यपरिमाणे सति बहुषु रूढः । अपरिमितं अस्य धनम्, बहु इति गम्यते । यथा कुशलः – प्रवीणः इति । अश्वकर्णशब्दवत् समुदाय-प्रसिद्ध्या अपरिमितशब्देऽवयवप्रसिद्धिः बाध्यते । (मी. को.)

अपरिच्छिन्नमिति योगार्थस्वीकारे, बहुत्वाभिप्रायेण प्रयोगस्यासाधुता स्यादिति, रूढ इत्युक्तम् ॥

**अपरोक्षत्वम्** — ब्रह्मनिष्ठगुणः ।

1. अपरोक्षत्वमपि सर्वदेशसर्वकालसम्बन्धित्वम्, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनन्तत्वेनावगतस्य परमात्मन एवोपपद्यते । (श्री. भा. 3-3-35) देशकालसन्निकर्षो ह्यापरोक्ष्ये विद्यते । तस्माद्ब्रह्मणोऽपरोक्षत्वं नाम सर्वदेशसर्वकालसन्निहितत्वमित्यर्थः । (श्र. प्र.)

2. ज्ञानकारणकज्ञान-स्मृतित्वरहितमतित्वम् ॥ (न्या. प. 95)

**अपरोक्षात्** — अपरोक्षम् ।

'यत् साक्षात् अपरोक्षात् ब्रह्म' (बृ. उ. 5-4-1) सर्वदेशसर्वकालसन्निहितम् । 'सुपां सुलुक्' इत्यादिना सु-प्रत्ययस्य आत् आदेशो अपरोक्षादिति ॥ (रं. भा.)

**अपर्यवसानवृत्तिः** — पर्यवसानरहिता शक्तिः । शरीरवाचकस्य, शरीरिपर्यन्तं पर्यवस्यन्ती वृत्तिः ।

शरीरस्य शरीरिणं प्रति प्रकारत्वात् प्रकारवाचिनाञ्च शब्दानां प्रकारिण्येव पर्यवसानात्; शरीरवाचिनां शब्दानां शरीरिपर्यवसानं न्याय्यम् । प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनि इत्थमिति प्रतीयमानोंऽशः । तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्यवस्यति । अत एव गौरश्वो मनुष्य इत्यादि प्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डे(अ)पर्यवस्यन्तः, पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्ड-

शरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्यः इति परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव । (श्री. भा. 1-1-13)

पर्यवस्यन्तः – पूर्वं क्वचित् व्यापृतस्य तत्रानुपरम्य तदन्वयिनि अन्यत्र व्यापारः पर्यवसानमिह विवक्षितं । न तु व्यापारोपरमः ।

व्यापारोपरमवाचित्वे सति, अपर्यवस्यन्त इति पदच्छेदः । यद्वा पर्यवस्यन्तः – पर्यवस्थातुं प्रवृत्ताः इत्यर्थः । (श्रु. प्र.) अनेन पर्यवसानवृत्तिरित्यपि व्यवहारस्योपपत्तिः बोधिता । अत एवोक्तं वेदार्थसंग्रहे – 'वेदान्तेन हि व्युत्पत्तिः पूर्यते' इति ।

शरीरवाचकशब्दस्य शरीरिणि मुख्यत्वे प्रमाणं पूर्वमीमांसाऽऽकृत्यधिकरणं उपजीव्य प्रवृत्तमुत्तरमीमांसागतमंशाधिकरणं (2-3-7) अभिमतम् । आकृत्यधिकरणे हि जातिगुणवाचकपदानां द्रव्यपर्यन्तत्वं व्यवस्थापितम् । तत्र जातिवाचकत्वं गुणवाचकत्वं वा मिथः व्यभिचारेण प्रयोजकमिति वक्तुं न शक्यत इत्यनुगतप्रयोजकपरीक्षायां अयुतसिद्धविशेषणवाचकत्वं प्रयोजकमित्याकृत्यधिकरणसिद्धोऽर्थः ।

इमं च न्यायं मनसि कृत्वा 'अंशो नाना व्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' (ब्र. सू. 2-3-42) इति सूत्रं प्रवृत्तम् । तत्र हि जीवपरयोः विशेषणविशेष्यवकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रवर्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तत्वमाश्रित्य मुख्यत्वेनोपपद्यन्ते इति सिद्धान्तः कृतः । अस्य च सिद्धान्तस्याकृत्यधिकरणन्याय एव मूलम् । शरीरवाचकपदानामपि लोकवेदयोरात्मपर्यन्तत्वेन प्रयोगप्राचुर्यात् अपृथक्सिद्धविशेषणवाचकत्वं विशेष्यपर्यन्तताप्रयोजकमिति निर्णयः । (द. उ. 412)

नास्ति पर्यवसानं मुख्यविशेष्यबोधनमन्तरा विशेषणबोधनमात्रेण कृतकृत्यता, यस्या वृत्तेः सा विशेष्यपर्यन्तबोधिका शब्दशक्तिः । शब्दानां पर्यवसानवृत्तिः, अपर्यवसानवृत्तिरिति शक्तिद्वयम् । अनयोर्मध्ये पर्यवसानवृत्तिस्तु विशेषणमात्रबोधिका, अत एवामुख्या । अपर्यवसानवृत्तिरेव मुख्या वेदान्तिनाम् ॥ (सं. अ.)

**अपवर्गः** — मोक्षः ।

वृजी-वर्जने इति धातोः निष्पन्नः । सर्वकर्मात्यन्तोच्छेदेन निश्शेषाविद्यानिवृत्तिलक्षणपरिपूर्णब्रह्मानुभवः । 'मोक्षोऽपवर्गः' इति कोशश्च । (चिं. म. 269)

दुःखान्तरकारणासमानाधिकरणा दुःखनिवृत्तिः अपवर्गः। स च स्वाभाविकात्मस्वरूपाविर्भावपूर्वकसमस्तविभूतिगुणविशिष्टनिरतिशयानन्दब्रह्मानुभवगर्भः (रूपः) इति परमपुरुषार्थः। तत्पूर्वको वा तादृशब्रह्मानुभवः अपवर्गः इति। (न्या. प. 319)

आत्यन्तिकदुःखनिवृत्तिरपवर्गः। निवृत्तेरात्यन्तिकत्वं नाम निवर्त्यसजातीयस्य पुनस्तत्रानुत्पादः।

फलप्राप्तिः। यथा – अपवर्गे तृतीया इत्यादौ॥ (न्या. को.)

**अपवर्ग्यम्** — मोक्षसाधनम्।

अपवर्गमर्हतीत्यर्थे यत्-प्रत्ययः॥

**अपवादः** — 1. सङ्गतिविशेषः।

पूर्वाधिकृतिसिद्धान्तन्यायं यत्रावलम्बते।
उत्तराधिक्रिया पूर्वपक्षः तत्रापवादिकी॥ (द. उ. 470)

इत्युक्तरीत्या पूर्वाधिकरणसिद्धान्तन्यायमाश्रित्य उत्तराधिकरणपूर्वपक्षप्रवृत्तौ अपवादसङ्गतिरित्युच्यते। यथा मनुष्यव्यतिरिक्तवस्वादिदेवताविशेषाणां अर्थित्वसामर्थ्यसम्भवादधिकारोऽस्तीति देवताधिकरणे साधितम्। अथ अर्थित्वसामर्थ्ययोः प्रयोजकत्वे मनुष्यविशेषाणां शूद्राणामपि अधिकारः स्यात् इति शङ्कया अपशूद्राधिकरणं प्रवृत्तम्।

सिद्धान्ते तु पूर्वाधिकरणसिद्धान्तन्यायस्य स्थलविशेषेऽप्रवृत्तिः प्रतिपाद्यते। तेनात्र मनुष्याणामपि अत्रैवर्णिकानामनधिकारः सिद्ध्यति।

2. बाधकः। यथा उत्सर्गापवादन्यायादिषु।

1. विशेषशास्त्रम्। 2. मिथ्याभूतपदार्थनिवारणार्थमुपदेशविशेष इति मायावादिन आहुः। 3. मिथ्यावाद इति सांख्याः। 4. निन्दा निरसनं वेति काव्यज्ञाः। (न्या. को.)

अधिष्ठाने भ्रान्त्या तदतिरेकेणाभावनिश्चयः अपवादः। यथा स्थाण्वादौ प्रतीतस्य पुरुषादेः स्थाण्वादिव्यतिरेकेण अभावनिश्चयः इति॥ (मी. को.)

**अपवित्रः** — तीर्थस्नानादिनाधिकशुद्धिरहितः ।

'अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः' ॥

अपवित्रः – निर्दोषस्सन् तीर्थस्नानादिनाऽधिकशुद्धिरहितः, पवित्रः – अधिक शुद्धिमान् , सर्वावस्थां गतोऽपि वा – सर्वदोषविशिष्टः । पुण्डरीकाक्षशब्दः देवतान्तरव्यावर्तकः, स्मरणीयताहेतुभूतदिव्येक्षणसौन्दर्यपरश्च ।

1. 'पृथुलोचनौ मोहयित्वा जगत्सर्वं' इति हि उक्तम् । स बाह्याभ्यन्तरः शुचिः – बहिरन्तःप्रदेशावच्छिन्नः सन् शुचिरित्यर्थः । 'अपवित्रो यः स्मरेत् , सः बहिश्शुचिः' इत्यनेन भगवत्स्मरणस्य तीर्थस्नानादिस्थानीयत्वं उक्तम् । 'अपवित्रः – आभ्यन्तरः शुचिः इत्यनेन तीर्थस्नानाद्यपेक्षया आधिक्यमुक्तम् । 'पवित्रः बहिश्शुचिः, इत्यनेन स्मरणाभावे तीर्थस्नानादेः स्मरणकृताऽतिशयितशुद्धिहेतुत्वाभावेन वैयर्थ्यमुक्तम् । 'पवित्रः अन्तश्शुचिः' इत्यनेन स्मरणसाचिव्ये तीर्थस्नानादेः अधिकफलत्वं उक्तम् । 'सर्वदोषविशिष्टो यः स्मरेत् – सः बहिश्शुचिः' इत्यनेन निर्दोषस्यैव तीर्थस्नानादिकं अधिकशुद्धिहेतुरिति सूचितम् , 'दुष्टोऽन्तश्शुचिः' इत्यनेन दुष्टस्याप्यन्तश्शुद्धिमपि जनयतीति अधिकोत्कर्षः उक्तः । 'सर्वावस्थां गतः' इत्यनेन 'उपपातकयुक्तोऽपि महापातकवानपि' इत्युक्तार्थः सूचितः । (रह. मी. भा. 118)

अनेन पुण्डरीकाक्षस्मरणम् अपवित्रस्य, पवित्रस्य, सर्वावस्थां गतस्य च बाह्याभ्यन्तरशुचिजनकमिति वैशिष्ट्यं प्रतिपादितम् ॥

**अपवृक्तः** — मुक्तः ।

वृजी-वर्जने, अस्मात् कर्मणि क्त-प्रत्ययः ॥

**अपशब्दः** — दुष्टश्शब्दः ।

'म्लेच्छो ह वा नाम यदपशब्दः'

हरिणाप्युक्तम् –

त एव शक्तिवैकल्य-प्रमादाऽलसतादिभिः ।
अन्यथोच्चारिताः शब्दाः अपशब्दाः इतीरिताः ॥ इति ॥

**अपशवोऽन्ये गो अश्वेभ्यः** — गो-अश्वव्यतिरिक्तपशवः अप्रशस्ताः गवाश्वन्तु प्रशस्तम् ।

तत्राजादिषु प्राशस्त्याभावकथनेन गवाश्वे प्रशंसातिशयो गम्यते । उदितहोम-निन्दया अनुदितहोमप्रशंसावत् । (प्रशंसाधिकरणं 1-4-16)

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिताः ॥

इत्युक्तेः नञा अप्राशस्त्यं द्योत्यते । 'सर्वत्र विभाषा गोः' इत्यनेन प्रकृति-भावः ॥

**अपशूद्राधिकरणम्** — (1-3-9)

1. शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ।
2. क्षत्रियत्वगतेश्च ।
3. उत्तरत्र चैत्ररथेन लिङ्गात् ।
4. संस्कारपरामर्शात् तदभावाभिलापाच्च ।
5. तदभावनिर्धारणे च प्रवृत्तेः ।
6. श्रवणाध्ययनार्थप्रतिषेधात् ।
7. स्मृतेश्च ।

इति सूत्रसप्तकमिदमधिकरणम् ।

रैक्वेण जानश्रुतिं शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्याया उपदिष्टत्वात् शूद्रादीनामपि ब्रह्मविद्यायामधिकारोऽस्तीत्याशङ्क्य – शूद्रशब्दस्य शोचितृवाचकत्वात् शूद्रादीनां अध्य-यननिषेधेन सामर्थ्याभावाच्च न शूद्रादीनामधिकार इत्युक्तम् ।

स्वाध्यायहीना अपि भारतादीन् श्रुत्वाऽथ विज्ञाय परं पुमांसम् ।
उपासते शूद्रगणा इतीदं न सत् निषेधात् श्रवणादिकस्य ॥
(न्या. क. सं. 1-37)

शूद्रस्य वैदिके कर्मणि नाधिकारः; कर्माधिकारनिषेधकवचनाभावेऽपि अग्नि-साध्येषु कर्मसु अग्न्यभावेनानधिकारप्रतिपादनार्थमिदम् ॥ (मी. को.)

**अपशूद्राधिकरणविरोधवादः — (शतदूषण्यां ६२तमो वादः)**

यत्तु भगवता बादरायणेन सूचितं शूद्रस्य ब्रह्मविद्यायां अनधिकारित्वं तत् निर्विशेषब्रह्मज्ञानस्य अविद्यानिवृत्तिरूपमोक्षसाधनत्ववादे न सङ्गच्छते ।

निर्विशेषज्ञानस्य वेदैकजन्यत्वेन वेदे शूद्रस्य अनधिकारात्, तस्मात् ज्ञानसम्पादनं सुतरां न सम्भवतीति चेन्न; तर्कानुगृहीतानुमानादिना निर्विशेषब्रह्मज्ञानस्य साधयितुं शक्यत्वात् तेनैवाविद्यानिवृत्तेः, निर्विशेषं तत्त्वमित्यादि लौकिकवाक्येनापि आप्तोक्तेन अविद्यानिवृत्त्या वेदैकजन्यज्ञानस्य अनपेक्षितत्वाच्च । न चानुपनीतस्यानधीतवेदस्याश्रुतवेदान्तस्य तत्त्वमसीति वाक्यजन्यज्ञानाभावात् विभ्रमानिवृत्तिः इति वाच्यम् । दग्धाधिकारतया वेदशिरसि वर्तमानैर्भवद्भिः वेदान्तानां तदर्थस्य च शूद्रेभ्योऽपि यथावदुपदेशसम्भवाच्च शूद्रादीनां अनधिकारो न प्रतिपादयितुम् शक्यते ।

न चैवं सिद्धान्ते प्रसङ्गः ; वक्तुरिव श्रोतुरपि प्रत्यवायेन तन्मूलोपासनादेः तेष्वसम्भवात् उपासनविधीनाञ्च उपनयनाद्यङ्गकाध्ययनविधिसिद्धस्वाध्यायसम्पन्नज्ञानत्रैवर्णिकाधिकारिलाभेन कर्मविधीनामिव तदितरेषु स्वसिद्ध्यर्थं ज्ञानान्तरकल्पनौदासीन्यात् ।

तत एवोपबृंहणभूतेतिहासपुराणजन्यज्ञानस्यापि विधिभिः अनादृतत्वात् । तच्छ्रवणानुज्ञानस्य पापक्षयादिमात्रफलत्वात् । उपास्यस्य च ब्रह्मणोऽनन्तविशेषस्यानुमानाद्यगोचरत्वात्, उपासनस्यैव वाक्यार्थज्ञानातिरिक्तस्य बन्धनिवर्तकत्वात् बन्धस्य च सत्यत्वेन अदृष्टद्वारा तन्निवृत्त्युपपत्तेः इति ॥ (विस्तरस्तु श. दू.)

**अपशूद्राधिकरणस्यावश्यकता —**

पूर्वकाण्डापशूद्राधिकरणे शूद्रस्य उपनयनसंस्काराद्यभावात् वैदिकसर्वकर्मस्वनधिकारः उक्तः । ऐकशास्त्र्यवादिना तेनैव गतार्थत्वात् उत्तरमीमांसायां तन्न्यायनिरूपणं व्यर्थमिति शङ्का वार्यते ।

यद्यप्यग्निविद्या (अग्निः – आहितः, विद्या – वेदविद्या – अध्ययनम्) साध्येषु कर्मसु अनग्निविद्यत्वात् शूद्रस्यानधिकारः, तथापि मनोवृत्तिमात्रत्वात् ब्रह्मोपासनस्य तत्र अधिकारोऽस्त्येव । शास्त्रीयक्रियापेक्षत्वेप्युपासनस्य तत्तद्वर्णाश्रमोचितक्रियाया एवापेक्षितत्वात्, शूद्रस्यापि स्ववर्णोचितक्रिया भविष्यति । अनधीतवेदस्याश्रुतवेदान्त-

वाक्यस्यापीतिहासपुराणश्रवणेनापि ब्रह्मस्वरूपतदुपासनज्ञानं सम्भवति। अस्ति च शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' इत्यादौ। दृश्यन्ते चेतिहासपुराणादिषु विदुरादयो ब्रह्मनिष्ठाः। तथोपनिषत्स्वपि संवर्गविद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते। शुश्रूषुं हि जानश्रुतिमाचार्यो रैक्वः, शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्यामुपदिशति। 'आजहारेमाः शूद्र अनेनैव मुखेनालापयिष्यथा' इत्यादिना। अतः शूद्रस्याप्यधिकारः सम्भवतीति प्राप्ते उच्यते।

न शूद्रस्याधिकारः सम्भवति सामर्थ्याभावात्। असमर्थस्यार्थित्वसद्भावेऽप्यधिकारो न सम्भवति। असामर्थ्यं च वेदाध्ययनाभावात्। अतोऽध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वात् शूद्रस्य ब्रह्मोपासनासामर्थ्यासम्भवः। इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती एवोपायभावमनुभवतः न स्वातन्त्र्येण। तच्छ्रवणानुज्ञानं च पापक्षयार्थं नोपासनार्थम्। विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषात् ज्ञानवन्तः प्रारब्धकर्मवशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम्। संवर्गविद्यायां शूद्रेति सम्बोधनं न जातिनिमित्तकम्; किन्तु शोचितृत्वनिबन्धनमेवेति शूद्रशब्दो न रूढः, अपि तु यौगिक एवेति पूर्वकाण्डोक्तन्यायोपरि विशिष्टाक्षेपे तत्परिहारार्थमिदं अधिकरणं आवश्यकमेव ऐकशास्त्र्यवादिनामिति भावः। विस्तरस्तु 'शुगस्य . . . . सूच्यते हि' (ब्र. सू. 1-3-3) इति सूत्रे द्रष्टव्यः॥

**अपसिद्धान्तः** — निग्रहस्थानविशेषः।

स्वाभ्युपगतसिद्धान्तविरुद्धाभ्युपगमः। यथा – सांख्यस्य आत्मा, कर्तेति; वैशेषिकस्य आत्मा, चिद्रूप इत्यादि। (न्या. प. 143)

1. सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गः। 2. कथायां स्वीकृतसिद्धान्तप्रच्यवः। 3. एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम्॥ (न्या. को.)

**अपहतपाप्मा** — पापसम्बन्धरहितः परमात्मा, मुक्तात्मा च।

'एष आत्मा अपहतपाप्मा . . . . . . . . सत्यसङ्कल्पः' (छां. उ. 8-1-5) 'य आत्मा अपहतपाप्मा . . . . . . सत्यसङ्कल्पः' (छां. उ. 8-7-1) परमात्म-

प्रकरणेषु पापशब्दः सुकृतदुष्कृतोभयसाधारणः । 'न सुकृतं न दुष्कृतं, सर्वे पाप्मानः अतो निवर्तन्ते इति सुकृतेऽपि पापशब्दप्रयोगात्, 'एते वै निरयास्तात स्थानस्य परमात्मनः' इति स्वर्गादीनामपि मुमुक्ष्वनिष्टत्वेन स्वर्गादिसाधनकर्मणः मुमुक्षून् प्रति अनिष्टसाधनत्वेन अलौकिकत्वे सति अनिष्टसाधनत्वलक्षणपापशब्दप्रवृत्तिनिमित्तक्रोडीकृतत्वेन पापशब्दवाच्यत्वावश्यम्भावात् । (रं. भा.)

आद्यं दहरविद्यावाक्यं परमात्मपरम् । द्वितीयन्तु दहरविद्याशेषभूतप्रजापतिविद्यापठितं मुक्तात्मपरम् ॥

**अपहतपाप्मत्वम्** — परमात्मनः असाधारणधर्मविशेषः ।

अन्तरादित्ये अन्तरक्षिणि च यः पुरुषः प्रतीयते, सः जीवादन्यः परमात्मैव । जीवेष्वसम्भवात् तदतिरिक्तस्यैव परमात्मनो धर्मोऽयं अपहतपाप्मत्वादिः, 'स एष सर्वेभ्यः पाप्मभ्यः उदितः' इत्यादिनोपदिश्यते, अपहतपाप्मत्वं हि अपहतकर्मत्वम्, कर्मवश्यतागन्धरहितत्वमित्यर्थः । कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः । अतो अपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः । (श्री. भा. 1-1-21) जीवेष्वसम्भवन्नयं धर्मो जीवातिरिक्तस्वाश्रयप्रतिपादकत्वं श्रुतेर्निश्चाययति । योग्यतापरामर्शसहकृतेऽयं श्रुतिः परमात्मानमभिधत्ते ।

अपहतपाप्मत्वं च न ध्वस्तपाप्मत्वम् । 'नैनं सेतुमहोरात्रे तरतो न जरा मृत्युर्न शोको न सुकृतं न दुष्कृतम्' इति सुकृतदुष्कृतप्राप्त्यभावश्रवणात् । तरतेः प्राप्तिवचनत्वात् । तस्मात् अपहतपाप्मत्वं – अश्लिष्टपाप्मत्वमित्यर्थः । अकृतकर्माश्लेषस्य सर्वसाधारणत्वात् कृतेऽपि कर्मणि तत्फलाश्लेष उच्यते । अतः ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानीत्यर्थः । कृतेऽपि पापे तत्फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्य स्वभावविशेषः निरुपाधिकापहतपाप्मत्वम्। परिशुद्धात्मविषयस्य अपहतपाप्मत्वस्यापि अयमेवार्थः । स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तौ आविर्भवति । ईश्वरस्य तु तिरोधानानर्हः नित्याविर्भूत इति । (रं. भा.)

कर्मणो फलजननशक्त्यनुत्पादप्रयोजकतावच्छेदकशक्तिमत्त्वम् । (र. पे. 249) ब्रह्मणः पुण्यपापसजातीयव्यापारेषु सत्स्वपि तत्फलसम्बन्धानर्हत्वम्, न तु पापप्रध्वंसवैशिष्ट्यम् ॥ (वि. को.)

**अपहतपाप्मत्वादिना सत्यकामत्वादेः पृथग्ग्रहणम्** — आदिपदेनासंग्रहकारणम् ।

'एष आत्मा अपहतपाप्मा . . . . . . सत्यसङ्कल्पः' इति निरुपाधिकात्मत्वं अपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वञ्चेति । (श्री. भा. 1-3-13)

अपहतपाप्मत्वादिकमित्यत्र विद्यमानादिशब्देन सत्यकामत्वादिग्रहणे शक्येऽपि गुणानां विधिनिषेधरूपेण द्वैविध्यज्ञापनाय सत्यकामत्वादेः पृथगुपादानम् । (श्रु. प्र.) आदितः षड्गुणाः दोषनिषेधरूपाः, अन्तिमौ विधिरूपाविति गुणाष्टके विभागः ॥

**अपाणिपादः** — पाणिपादाद्यभाववान् ।

'अपाणिपादो जवनो ग्रहीता' (श्वे. उ. 3-19) पाणिपादाद्यभावेऽपि तत्कार्यकारी ॥ (रं. भा.)

**अपात्तम्** — प्राप्तिः ।

'स होवाच, विज्ञायते हास्ति हिरण्यस्यापात्तम्' (बृ. उ. 8-2-7)

प्राप्तम् – प्राप्तिरिति यावत् । (रं. भा.) अप-आङ्पूर्वक दा-धातोः भावे क्त-प्रत्यये सति 'अच उपसर्गात्तः' (पा. सू. 7-4-46) इत्यनेन, अचः तादेशे, अपात्तमिति रूपम् ॥

**अपानः** — प्राणापानादिष्वन्यतमो वायुविशेषः ।

'ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति' (क. उ. 5-3)

1. गन्धः । अपानेन निश्वासवायुना उपनीयमानत्वात् गन्धोऽपानशब्देन लक्ष्यते ।
2. घ्राणेन्द्रियम् । (वि. को.)

**अपापविद्धम्** — कर्मसम्बन्धरहितम् ब्रह्म ।

'अस्नाविरं शुद्धमपापविद्धम्' (ई. उ. 8) अज्ञानादेः कार्यभूतैः कारणभूतैश्च पुण्यपापरूपकर्मभिरनालीढम् । (कू. भा.) पापैः – सुकृतदुष्कृतलक्षणैः कर्मभिः विद्धम् – व्याप्तं न भवतीति तथोक्तम् ; अपहतपाप्मतया कर्मवश्यतागन्धरहितमित्यर्थः । (श्रीरं. भा.)

**अपां ऊर्मिः** — षड्भावविकारविशिष्टसंसारसागरः ।

'गोविन्दः द्रप्स आयुधानि बिभ्रत् अपामूर्मिम् स च मानस्समुद्रं तुरीयं धाम महिषो विवक्ति' (सुद. उ. 7) अप्छब्दोऽन्यभूतस्यापि उपलक्षणम् । 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' 'अप एव ससर्जादौ' इत्यादिवत् शरीररूपेण परिणताचिद्द्रव्यस्येत्यर्थः । सम्बन्धसामान्ये षष्ठी । अपामूर्मिम् – अचिद्द्रव्यसम्बन्धिनमूर्मिम् । ऊर्मिशब्दाभिलक्ष्यमशनायादिषट्कम्, जन्मादिविकारजातं वा । एकवचनं समुदायाभिप्रायम् । समुद्रं – समुद्रिक्तं इत्यर्थः ।

यद्वा [अपामूर्मिम्] समुद्रं – सागरम् । ऊर्मिमत्वादूर्मिरिति लक्षणयोच्यते । अचिद्द्रव्यसम्बन्धिनमूर्मिमन्तं संसारसागरमित्यर्थः । अथवा समुद्रमपामूर्मिम् – समुद्रिक्तं गर्भोदकानां पुञ्जमित्यर्थः । (सच्च. र. 51)

संसारसागरं शरीरमिति यावत् । स च मानः – अपृथक्सिद्ध्यात्मकसंयोगानुकूलव्यापाराश्रयः । 'षच-समवाये' इति धातुपाठेन तद्धातोरुक्तार्थकत्वावगमात्, द्रप्सः – ईश्वरांशभूतो जीवः; (जीवस्य तदंशत्वं चापृथक्सिद्धिसम्बन्धेनेश्वरविशेषणत्वात् गोविन्दुः – गोविन्दस्य (छान्दसमिदं) अस्यायुधानि, चक्रधारणेन बिभ्रत्, महिषः – महनीयस्सन्, तुरीयं धाम-परमपदमिति यावत्, विवक्ति – प्राप्नोति इत्यर्थः । अनेन साम्प्रदायिकचक्रधारणस्य प्रमाणं प्रदर्शितम् ॥ (वे. वा. 54)

**अपांनिधिः** — (स. ना. 325)

मध्यमानमहार्णवधारणः । (वि. स. भा.) मध्यमानमहार्णवधारणात् अपां जलबाहुल्यात् समुद्रस्य निधिः स्थानमिति । (वि. स. निर्व.)

अपां निधिर्मध्यमानमहार्णवविधारणात् ।
भ्रममाणं मन्दराद्रिं धृतवान् यो महाजले ॥ (वि. स. नि.)

**अपायकर्म** — दुःखोदर्कव्यापारः ।

अनर्थरूपनरकादिदुःखहेतुभूतनिषिद्धानुष्ठानात्मकं कर्म ॥ (त. दी. 426)

**अपारम्** — अपरिच्छिन्नं ब्रह्म ।

'अनल्पमपारं . . . . .' (सु. उ. 3) शतयोजनलक्षयोजनत्वादिविशेषणैः निर्देष्टुमशक्यम् । (श्रु. भा.)

1. गुणतोऽपरिच्छेद्यम् । 2. दुस्तरम् ॥ (वि. को.)

**अपारपारः** — अनन्तशक्तिः ।

'पारं पारं विष्णुरपारपारः परः परेभ्यो परमार्थरूपी' (वि. पु. 1-15-55) 'पारतीर-कर्मसमाप्तौ' इति धातोः यद्वक्तुं नैव पार्यते इत्यादौ शक्यार्थे प्रयोगदर्शनात् लक्षणया पारः – शक्तिः, अपारपारः – अनन्तशक्तिरित्यर्थः । अत्र बहुव्रीहिः । 'परास्य शक्तिः विविधैव श्रूयते' इति श्रुतेः । यद्वा पारं यस्य नास्ति यस्य सः अपारपारः, अपरिमितपरिमाण इतिवन्निर्देशः । अथवा अपारस्य असमाप्तस्यापूर्णस्य यज्ञादिकर्मणः पारः । स्वसङ्कीर्तनस्मरणादिना पारयिता समापकः पूरको वा ॥ (वि. चि.)

**अपार्थकम्** — (निग्रहस्थानम्) दोषविशेषः ।

1. पौर्वापर्ययोगादप्रतिसम्बद्धार्थम् । 2. अभिमतवाक्यार्थबोधानुकूलाकांक्षादिशून्यबोधजनकपदम् । 3. परस्परानन्वितार्थकपदसमूहः ॥ (न्या. को.)

**अपि चैवमेके** — (ब्र. सू. 3-2-13) (उभयलिङ्गाधिकरणे तृतीयं सूत्रम्)

अपि चैके शाखिनः एकस्मिन्नेव देहसंयोगे जीवस्य अपुरुषार्थं, परस्य तु तदभावं नियमनरूपैश्वर्यायत्तदीप्तियोगं च स्वशब्देनाधीयते । 'द्वा सुपर्णा सयुजा सखाया, समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्योऽभिचाकशीति इति । तथा च अनया श्रुत्या शरीरसम्बन्धे सत्यपि, अपुरुषार्थायोगः सिद्धः ।

एकदेहस्थितस्यापि न भोक्तृत्वं परात्मनः ।
द्वा सुपर्णाविति श्रुत्याऽधीयते चैकशाखिनः ॥ (ब्र. प. मा. 327)

**अपिसप्त** — (ब्र. सू. 3-1-15) (अनिष्टादिकार्यधिकरणे चतुर्थं सूत्रम्)

अनिष्टादिकारिणं पापकर्मणां गन्तव्यत्वेन रौरवादीन् सप्तनरकादीनपि स्मरन्ति । विहिताकरणप्रतिषिद्धसेवारताः अनिष्टादिकारिणः ।

सप्त चैषां रौरवादिलोकाः इति च गम्यते ।
यातनां त्वनुभूयाथो तत्रापि गतिरुच्यते ॥ (ब्र. प. मा. 302)

**अपिसंराधने प्रत्यक्षानुमानाभ्याम्** — (ब्र. सू. 3-2-23) (उभयलिङ्गाधिकरणे त्रयोदशं सूत्रम्)

अपि च, संराधने – सम्यक् प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारः, नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते ।

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन' ॥

इति हि श्रुतिस्मृती । प्रत्यक्षेण सन्मात्रं ब्रह्मैव गृह्यते, अन्यत् सर्वं भ्रान्तं इति 'अथात आदेशो नेति नेति' इति श्रुतिः वदतीति शङ्का 'तदव्यक्तमाह हि' इति पूर्वसूत्रेण परिहृता, ब्रह्मणः प्रत्यक्षागोचरश्रुतेः ।

तर्हि ब्रह्मस्वरूपग्रहः कथमिति प्रश्नः निदिध्यासनेनैव साक्षात्कारो भवतीत्यनेन समाहितः । तथापि 'अथात आदेशो नेति नेति' इति सकलविशेषरहितमेव साक्षात्कुर्यादित्यपि न वाच्यम्, निदिध्यासनाय ब्रह्मस्वरूपमुपदिशत् 'द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेव च' इत्यादिशास्त्रं ब्रह्मणो मूर्तामूर्तरूपद्वयादिविशिष्टतां प्रागसिद्धां निषेधार्थं नानुवदितुं क्षमम् । अपि तु 'अथात आदेशो नेति नेति इति श्रुतिः ब्रह्मणो ये विशेषाः प्रकृताः तद्विशिष्टतया प्रतीयमानेयत्तामात्रं निषेधतीति स्वीकरणीयम् । एवञ्च उभयलिङ्गपादेऽस्मिन् अनेन सूत्रेण मूर्तामूर्तादिप्रपञ्चशरीरकत्वादिविशिष्टब्रह्मैव निदिध्यासनेन साक्षात्क्रियते; न तु निर्विशेषमिति स्थापितम् । निदिध्यासनस्य भगवत्प्रीतिजनकता ध्येयस्य निरतिशयप्रियत्वात्, तद्विषयकोपासनस्यापि प्रीतिरूपता चासूचि संराधनपदं प्रयुञ्जानेन भगवता बादरायणेनेति बोध्यम् ।

संराधयतीति कर्तरि संराधनमिति भावेच प्रत्ययो विवक्षितः । आद्ये नन्द्यादित्वमाश्रित्य नन्दिग्रहीत्यादिना कर्तरि ल्युः, द्वितीये भावे ल्युट् बोध्यः ।

एकेन ध्यानयोगेन गृह्यते परमः पुमान् ।
यमेवैष इति श्रुत्या तथा स्मृत्या च गम्यते ॥ (ब्र. प. मा. 337)

**अपिस्मर्यते** — (ब्र. सू. 1-3-22) (दहराधिकरणे दशमं सूत्रम्)

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः स्मर्यते ।

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ॥ इति ।

अतः दहराकाशः परमात्मैव ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
इति स्मृत्याऽनुकर्ता च जीवस्त्विति न कारणम् ॥ (ब्र. प. मा. 87)

**अपिस्मर्यते** — (ब्र. सू. 2-3-44) (अंशाधिकरणे तृतीयं सूत्रम्)

'ममैवांशो जीवलोके जीवभूतः सनातनः' इति जीवस्य पुरुषोत्तमांशत्वं स्मर्यते; अतश्चायं परमात्मन अंश एव ।

ममैवांशो जीवलोक इति स्मृत्यापि चोच्यते ।
वासुदेवस्यांश इति तस्य ब्रह्मशरीरता ॥ (ब्र. प. मा. 260)

**अपिस्मर्यते** — (ब्र. सू. 3-4-30) (सर्वान्नानुमत्यधिकरणे तृतीयं सूत्रम्)

अपि च आपद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते –

'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥ इति ।

अतः सर्वान्नभक्षणमापद्विषयकमेव ।

प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।
इति स्मृत्यापि तेषां वै परमापदि चोच्यते ॥ (ब्र. प. मा. 448)

**अपिस्मर्यते** — (ब्र. सू. 3-4-37) (विधुराधिकरणे द्वितीयं सूत्रम्)

अपि च अनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते –

जप्येनापि च संसिद्ध्येत् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्नवा कुर्यात् मैत्रे, ब्राह्मणो उच्यते ॥ इति ।

अत :आमश्रकर्मलोपेऽपि सर्वसाधारणजपादिरेव विद्याया अनुग्राहको भवति ।

जप्येनापी च सांसोध्येत् इति स्मृत्या च तेवपि ।
विद्यायाश्चापि संसिद्धेः अधिकारो भवेदिति ॥ (ब्र. प. मा. 455)

**अपीच्यम्** — अतिसुन्दरं भगवद्रूपम् ।

'अपीच्य दर्शनं शश्वत् सर्वलोकनमस्कृतम्' (भाग. 3-28-17) अति सुन्दरे-अपिपूर्वकात् 'अञ्चु-गतिपूजनयोः' अस्माद्धातोः क्विप्, अप्यङ्, तत्र 'साधुः' इत्यर्थे यत्-प्रत्यये, अञ्चतेः अ-लोपे, पूर्वस्य दीर्घः इति वाचस्पत्यम् ॥

**अपीतिः** — 1. ब्रह्मप्राप्तिः ।

'तदापीतेः संसारव्यपदेशात्' (ब्र. सू. 4-2-8) 'इण्-गतौ' अपिपूर्वकात् अस्माद्धातोः क्तिन्-प्रत्ययः ।

2. लयः । कार्यतारूपविसदृशावस्थाप्रहाणेन कारणान्तर्भावः ॥ (श्रु. प्र.)

3. सुषुप्तिः । व्यापारोपरमः । 4. मृतिः । एते सर्वे लयविशेषाः । 'सता सौम्य तदा संपन्नो भवति स्वमपीतो भवति' (छां. उ. 6-7-1)

**अपीतौ तद्वत्प्रसङ्गात् असमञ्जसम्** — (ब्र. सू. 2-1-8) (विलक्षणत्वाधिकरणे पञ्चमं सूत्रम्)

अपीताविति, अपीतिपूर्वकसृष्ट्यादेः प्रदर्शनार्थम् । यदि कार्यकारणयोः द्रव्यैक्यमभ्युपेतम्, तदा कार्यस्य जगतः ब्रह्मणि अप्ययसृष्ट्यादिषु सत्सु ब्रह्मण एव तत्तदवस्थान्वयः इति कार्यगताः सर्व एवापुरुषार्थाः ब्रह्मणि प्रसज्येरन्, सुवर्णे इव कुण्डलगताः विशेषाः । ततश्च वेदान्तवाक्यं सर्वमसमञ्जसं स्यात् ।

अनुगतशरीरलक्षणस्य असम्भवात्, लोकावगतं इन्द्रियाद्याश्रयत्वमेव लक्षणमास्थाय ततोन्यत्र शरीरशब्दो गौणः इत्याश्रयणीयमिति, ब्रह्मणोऽपि सर्वशरीरत्वं गौणं आश्रयितुं युक्तम्, इति ब्रह्मणः सर्वशरीरत्वस्य अप्रामाणिकत्वात्, केवलस्य ब्रह्मण एव परिणामित्वे कार्यगतास्सर्वे एव विकारा अपुरुषार्थाश्च तद्वत् ब्रह्मणि दुर्वारा इति न ब्रह्मणः सर्वोपादानत्वं युक्तमिति प्रतिकूलतर्कपराहताः वेदान्ताः न ब्रह्मणः कारणत्वं प्रतिपादयितुं शक्नुवन्ति इत्येतदाह – अपीताविति ।

अपीताविति प्रदर्शनार्थम् । जगतो ब्रह्मण्यपीतौ ब्रह्मणः उत्पत्तावपीत्यर्थः । अपीतिः – अप्ययः । यद्वा, तद्वदिति मत्वर्थीयप्रत्ययः । जगद्गतापुरुषार्थादिमत्वप्रसङ्गात् इत्यर्थः ।

'न तु दृष्टान्ताभावात्' इत्यनेन एकस्यैवावस्थाद्वयान्वयेऽपि गुणदोषव्यवस्थितेः स्थापनात् असामञ्जस्यं परिहरिष्यते ।

प्रळये सृष्टिकाले च जगद्भावात्परात्मनः ।
जगद्दोषाः ब्रह्मणोऽतो वाक्यं स्यादसमञ्जसम् ॥ (ब्र. प. मा. 146)

**अपुनर्भवा** — मोक्षद्वारभूता अपुनर्भवाख्या नाडी ।

'हृदयस्य मध्ये लोहितं मांसपिण्डम् . . . . . तस्मिन् नाड्यश्चतस्रो भवन्ति रमारमेच्छाऽपुनर्भवेति' (सु. उ. 11)

**अपुरुषार्थत्वम्** — पुरुषार्थविरोधित्वं जडनिष्ठम् ।

असुरादिशब्देष्विव विरोधार्थकोऽत्र नञ् । जडवस्तुनः मोक्षरूपपुरुषार्थविरोधित्वं स्वाभाविकमित्यर्थः ॥ (द. अं. 111)

**अपुरुषार्थसम्बन्धः** — हेयसम्बन्धः जीवगतः ।

यथा – जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वादि उभयलिङ्गस्यापि देवादिदेहयोगरूपावस्थाभेदात् अपुरुषार्थयोगः, तथान्तर्यामिणः परस्यापि . . . अवर्जनीयः इति चेन्न । प्रत्येकमतद्वचनात् । 'यः पृथिव्यां तिष्ठन्' इत्यादिषु प्रतिपर्यायं 'स त आत्मान्तर्याम्यमृतः' इत्यन्तर्यामिणः अमृतत्ववचनेन तत्र तत्र स्वेच्छया नियमनं कुर्वतः तत्तत्सम्बन्धप्रयुक्तापुरुषार्थप्रतिषेधात् । जीवस्यैव तत्स्वरूपं तिरोहितमिति अपुरुषार्थयोगः ।

ननु स्वेच्छया पूयशोणितादिमज्जनं कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्तापुरुषार्थसम्बन्धोऽवर्जनीयः इत्युक्तं, नैतद्युक्तम् ।

न हि अचिद्वस्त्वपि स्वभावतः अपुरुषार्थस्वरूपम् । कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसङ्कल्पात् एकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति । वस्तुस्वरूपप्रयुक्ते तु ताद्रूप्ये सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव स्यात् । न चैवं दृश्यते । तथा चोक्तम् –

वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ।
कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः ॥

तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते।
तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् ॥ इति।

अतो जीवस्य कर्मवश्यत्वात् तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्ध एव अपुरुषार्थः स्यात्। परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धः तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात्। (श्री. भा. 3-2-12)

तस्मात् परतन्त्रस्य जीवस्य कर्मानुगुणभगवत्सङ्कल्पायत्तोऽपुरुपार्थसम्बन्धः स्वतन्त्रस्य स्वयं स्वापुरुषार्थापादनायोगात् ईश्वरस्येदं लीलोपकरणतया पुरुषार्थभूतमेव ॥ (श्रु. प्र. )

**अपुरोभागा** — दोषदर्शनरहिता।

'किं दीनामपुरोभागाम्' (रा. किं. 20-3) अनपराधा इति यावत्। (गो. रा.) 'दोषैकदृक् पुरोभागी' इति चामरः॥

**अपूर्वः** — कारणरहितः प्रणवः।

'अपूर्वोऽनन्तरोऽबाह्यो प्रणवोऽव्ययः' (मां. उ. 4-26) न विद्यते पूर्वं कारणं यस्य सोऽपूर्वः। (कू. भा.) 'सर्वस्य प्रणवो ह्यादिः' . . . प्रणवं ह्रीश्वरं विद्यात्' इत्युत्तरवाक्यानुसारेण प्रणवेऽपूर्ववाच्येश्वरबुद्धेः विधानात् प्रणवोप्यपूर्वः इत्युक्तम्॥

**अपूर्वम्** — परमात्मनि जनिष्यमाणा प्रीतिः अप्रीतिर्वा।

यागदानहोमादीनां साक्षात् फलसाधनत्वाभावेऽपि परम्परया अपूर्वद्वारेण फलसाधनत्वं उपपद्यते इति जैमिनिः। परमपुरुषस्यैव फलप्रदत्वं भगवान् बादरायणो मन्यते। लोके च कृष्यादिभिर्विचित्ररूपान् द्रव्यविशेषान् सम्पाद्य तैः राजानं भृत्यद्वारेण साक्षाद्वाऽर्चयन्ति; अर्चितश्च राजा तत्तदर्चनानुगुणं फलं प्रयच्छन् दृश्यते। वेदान्तास्त्वतिपतितसकलेतरप्रमाणसम्भावनाभूमिं निरस्तसमस्ताविद्यादिदोषगन्धं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य तदाराधनरूपाणि च यागदानहोमात्मकानि, स्तुतिनमस्कारकीर्तनार्चनध्यानानि च तदाराधनानि आराधितात्परस्मात्पुरुषाद्भोगापवर्गरूपं फलं च वदन्तीति सर्वं समञ्जसम्॥ (श्री. भा. 3-2-40)

1. यागादिकर्मणः काचिदुत्तरावस्था फलैकनाश्या । 2. यागादिजन्यः स्वर्गादिजनकः कश्चन गुणविशेषः । तं गुणविशेषमपूर्वमिति मीमांसकाः वदन्ति । धर्माधर्माविति नैयायिकाः । अदृष्टमिति वैशेषिकाः । पुण्यपापे इति पौराणिकाः ।

(न्या. को.)

कर्मणां आशुतरविनाशित्वात् प्रलीयमानकर्मलब्धोपजनः पूर्वापराङ्गोपपादिताव-स्थान्तरो देशकालद्यासादितपरिणतिभेदः आनन्तर्यमपि कर्मणः अतिवर्तमानः कोऽपि (कर्मणः) अतिशयः कर्तरि (नित्यात्मन्याश्रितः) कर्मणः चिरभाविनः फलस्य साधनं कथ्यते (वृद्धैः) । अवान्तरापूर्वाणि महापूर्वमिति च ॥ (मी. को.)

**अपूर्वत्वम्** — षड्विधतात्पर्यलिङ्गेष्वन्यतमम् ।

उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

अत्र अपूर्वत्वमपि तात्पर्यलिङ्गतया हि उक्तम् । अपूर्वतालक्षणं गुणेषु तात्पर्य-लिङ्गं प्रदर्श्यते । 'सदेव सौम्येदमग्र' इत्यादिना जगतः सदात्मकता, सृष्टेः पूर्वकाले नामरूपविभागप्रहाणम्, जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्त-रानपेक्षत्वम्, सृष्टिकाले अहमेव अनन्तस्थिरत्रसरूपेण 'बहु स्याम्' इति अनन्यसा-धारणसङ्कल्पविशेषः, विलक्षणक्रमविशेषविशिष्टा सृष्टिः, समस्तेषु अचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनैव अनन्तनामरूपव्याकरणम्, स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वं, स्वेनैव जीवनम्, स्वप्रतिष्ठितत्वम् इत्यादि अनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रति-पादिताः ।

तत्सम्बन्धितया प्रकरणान्तरेष्वपि अपहतपाप्मत्वादिनिरस्तनिखिलदोषता-सर्व-ज्ञता-सर्वेश्वरत्व-सत्यकामत्व-सत्यसङ्कल्पत्व-सर्वानन्दकरणनिरतिशयानन्दयोगादयः सकले-तरप्रमाणाविषयाः सहस्रशः प्रतिपादिताः । [अनेनापूर्वत्वलक्षणं लिङ्गमुपपादितम्] ॥

एवं अनन्यगोचरानन्तविशेषविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तु-मात्रोपदेशपरत्वं असङ्गतत्वेन उन्मत्तप्रलपितायेत । (श्री. भा. 1-1-13) एतेन निषेधार्थं गुणानुवादः इति पक्षस्यानवकाशः प्रादर्शि ॥

**अपूर्वमनपरम्** — पूर्वापरकालापरिच्छिन्नं ब्रह्म ।

'तदेतत् ब्रह्मापूर्वमनपरम्' (बृ. उ. 4-5-19) पूर्वोत्तरकालशून्यं कालपरिच्छिन्नम् । कालपरिच्छिन्नस्य हि पूर्वोत्तरकालसम्भवः ॥ (रं. भा.)

**अपूर्वविधिः** — 1. अप्राप्तप्रापको विधिः ।

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।

तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ (तं. वा. 1-2-4)

यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः । अपूर्वविधिः चतुर्विधः । कर्मविधिः, गुणविधिः, विनियोगविधिः, प्रयोगविधिश्चेति । (न्या. को.)

2. हितानुशासनवाक्यं विधिः । स च त्रिविधः; अपूर्व-परिसंख्या-नियमभेदात् । 'व्रीहीन् प्रोक्षति' इत्यपूर्वविधिः ॥ (य. दी. 40)

**अपृथग्भावः** — पृथग्व्यवहारानर्हसंसर्गविशेषः ॥

**अपृथक्सिद्धिः** — 1. अविभक्ततया स्थितिः ।

अविभागः, अविनाभावः, अयुतसिद्धिः इति पर्यायाः । यस्य पदार्थस्य कस्यचित् प्रकारतयैव सद्भावः, तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिः तद्वाचिनां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वम् । (श्री. भा. 1-1-13) सिद्धिः — सत्ता, प्रमाणसम्बन्धयोग्यत्वरूपा । स्थितिः — तदनुवृत्तिः । प्रतीतिपरा सिद्धिश्च विवक्षिता । अपृथक्शब्दः सिद्ध्यादिसाधारणः, प्रतीतिशब्देनापृथक्प्रतीतेः स्वतः प्राप्तत्वं विवक्षितम् । (श्रु. प्र.)

2. यावत्सत्तमसम्बन्धानर्हत्वम् । (न्या. सि. 102) 2. चिदचिदीश्वरात्मकं तत्त्वत्रयं स्वरूपतः स्वभावतश्च मिथो विभिन्नम् । स्थितितस्तु चिदचित्तत्त्वद्वयं ईश्वरतत्त्वादपृथक्सिद्धम् । तज्ज्ञाततयैव ज्ञातत्वं च । ततश्च सर्वाणि ज्ञानानि ब्रह्मविदां ब्रह्मपर्यन्तानि । तथा सर्वे व्यापाराः सर्वाण्यपि प्रयोजनानि । तथा सर्वेऽपि शब्दाः ब्रह्मपर्यन्ताः, अचिद्विशिष्टजीवविशिष्टपरमात्मबोधकाः इति निर्णयः । (द. उ. 195)

सिद्धिः – स्थितिः, निष्पत्तिः – स्वरूप(लाभः)प्राप्तिः, प्रतिपत्तिश्च । यथा – 'ओदनं सिद्धम्' 'अयमर्थः सिद्धः' इत्यादि । ययोः पृथक्स्थितिः प्रतिपत्तिश्च तौ पृथक्सिद्धौ । यथा घटपटौ । तद्विलक्षणौ अपृथक्सिद्धौ, गुणगुणिनौ, जातिव्यक्ती, शरीरशरीरिणौ इत्यादि ॥

**अपेक्षाबुद्धिः** — अनेकेषु प्रत्येकमेकत्वबुद्धिः ।

द्वित्वत्रित्वाद्युत्पत्तौ सहकारिणी । द्वित्वत्रित्वादिकं तु अनेकावगतिसहकृतैकैकनिष्ठैकजन्यम् । तादृशीचावगतिरपेक्षाबुद्धिरित्यभिधीयते । सा चापेक्षाबुद्धिः तत्तत्पुरुषमात्रनिष्ठेति, तज्जन्यं द्वित्वत्रित्वादिकं तत्तत्पुरुषैरेव दृश्यते । तत्तत्कालमात्रभावित्वात् । तच्च क्षणिकमिति कौतस्कुतानां तार्किकाणां कथा कापि श्रूयते । (स.सि. 399)

**अपोहः** — अतद्व्यावृत्तिः । (सौगतमते)

अन्यापोहस्तु गोत्वप्रभृतिरिति तु नेदन्तया तत्प्रतीतेः ।
अन्योन्यापोहबुद्ध्या नियतिरिति मिथः संश्रयस्तत्प्रतीतौ ॥ (त.मु. 475)

अगोत्वव्यावृत्तिरेव गोत्वमिति गोत्वादिजातिखण्डनार्थं प्रवृत्तोऽयं वादः । तत्खण्डनेन गोत्वादीनां भावरूपतां स्थापयति ।

सौगतोक्तमपोहरूपसामान्यं दूषयति अन्यापोह इति । अगोत्वव्यावृत्तिः गोत्वं, अनश्वत्वव्यावृत्तिः अश्वत्वम् । (न तु नैयायिकमतवत् अतिरिक्ता जातिः) इति नेदं युज्यते; इदन्तया विधिरूपेणैव सामान्यप्रतीतेः । अन्योन्यापोहबुद्धिप्रतीतौ त्वन्योन्याश्रयप्रसङ्ग इत्याह – अन्योन्येति । गोत्वप्रतीतिसापेक्षं अगोत्वं, अगोत्वप्रतीतिसापेक्षं गोत्वमित्यर्थः । कथं तर्हि गौरेव गौरिति बुद्धिनैयत्यम् ; इत्थम् – गोत्वविरुद्धमश्वत्वं विधिरूपमेव गोत्वमाक्षिपति । एवं गोव्यतिरिक्तभावत्वं अगोत्वमाक्षिपति । तत्र पूर्वं न्यूनत्वाद्विषमतया, उत्तरं सर्वभाववर्तित्वात् समतया; तेन गोत्वविरुद्धधर्मायोगादेव गौरेव गौः इति बुद्धिनियमसिद्धिरित्यर्थः । तेन भावरूपविरुद्धधर्मसिद्धौ व्यवहारनियमार्थमपोहो न कल्पनीयः इत्यर्थः ॥ (स. सि.)

**अपोहनम्** — 1. ज्ञाननिवृत्तिः, ऊहनं वा ।

'मत्तस्स्मृतिर्ज्ञानमपोहनं च' (गी. 15-15)

'ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम्' । (भाग. 11-13-6)

शब्दादिविषयान्तरस्मृत्यभावः । (वी.)
अनेन 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि'
इति रीत्या विषयान्तरविमुखभगवदेकस्मृतिसन्तरूपं ज्ञानं भवतीत्यर्थः ।।

**अपौनरुक्त्यम्** — पौनरुक्त्यदोषाभावः ।

एकवाक्यस्थपदद्वयस्य एकरूढिनिमित्तमुखेन पौनरुक्त्यात् अबोधकत्वेऽपि वाक्यैक वाक्यस्थपदद्वयस्य भिन्नवृत्त्या पौनरुक्त्याशङ्काऽनवकाश एव । यथा – 'विष्णवे असि' 'विष्णवे स्यात्' इति । अत्र विष्णुपदं योगवृत्त्या व्यापकपरम् । अन्यत्र योग - रूढ्या देवताविशेषपरम् । तयोरेकवाक्यतायां व्यापकभूतनारायणाय स्याम् इति बोधे पुनरुक्तादोषो नास्ति । (रह. मी भा. 225) एकरूपेण उपस्थितस्थल एव दोषः । 'वसन्तकाले संप्राप्ते काकः काकः पिकः पिकः' इत्यत्र काकशब्दवाच्यः काकः, पिकशब्दवाच्यः पिकः इति प्रवृत्तिनिमित्तभेदेन पौनरुक्त्यशङ्कापरिहारवत् ॥

**अपौरुषेयत्वम्** — [वेदनिष्ठः धर्मः] पुरुषबुद्धिपूर्वककृत्यविषयत्वम् ।

अथ पौरुषापौरुषेयविभाग एवानुपपन्नः । सर्वस्यापि वाक्यस्य पौरुषेयत्वे वाक्यत्वादिलिङ्गसद्भावात् ; सर्वज्ञप्रणीता वेदाः वेदत्वात्, इति व्यतिरेकिसम्भवात् ; शब्दस्य च भूतगुणस्य विपक्षे बाधकाभावात् । क्रमविशेषेणानुच्चार्यमाणानां वर्णान कथं पदत्वं वाक्यत्वं वेति चेन्न; परकृतप्रबन्धपाठवत् अकर्तृभिरुच्चारणेऽपि तत्सिद्धेः आदिममुच्चारणं कर्तभावे कथं स्यादिति चेन्न ; आदिमत्त्वस्यैवासिद्धेः । अपौरुषेयत्वे घुणक्षताक्षरवत् बोधकत्वेऽपि अभिप्रायविरहात् अर्थपरत्वं न स्यादिति चेन्न; प्रतिपन्ने निर्बाधे चार्थे प्रधाने बोधकत्वस्यैव तात्पर्यरूपत्वात् । सेश्वरमीमांसापक्षे तु नित्येश्वरा- भिप्रायसम्भवश्च । स्वयमेव ह्याह 'श्रुतिः स्मृतिः ममैवाज्ञा' इति ।

'धाता यथापूर्वमकल्पयत्' इति यथापूर्वमेव विश्वसृष्टिवचनात् यथापूर्वं प्रणयन- मात्रेणापि तत्प्रणीतत्वसिद्धौ वेदस्य सर्वज्ञप्रणीतत्वसाधनं सिद्धमेवार्हति । शब्दस्य नश्वरतया पश्चादीश्वरः तत्स्रष्टा स्यात् । न स्यात्, तथापि प्राचीनवेदसाक्षात्कारिणः तस्य तत्प्रवर्तनमात्रौचित्यात् शक्तस्यापि तज्जातीयवेदान्तरकल्पने गौरवात् । ततश्चागमादेवा- गमनित्यत्वं सिद्धम् । उक्तं च प्रज्ञापरित्राणे –

वेदतः पौरुषेयत्वशङ्का वेदेन शाम्यति ।
हेत्वन्तरसमुद्भूता हेत्वन्तरनिवारिता ॥ इति ।

वस्तुतस्तु प्रजापतिनियोगाच्च तदाहितमहिमानः महर्षयः अनधीतानेव वेदभागान् पश्यन्ति । तेषामपि प्रवाहानादित्वात्, प्रवाहतः नित्यत्वमेव न तु स्वरूपतः नित्यत्वम् । (न्या. प. 157) (विस्तरस्तु तत्रैव द्रष्टव्यः)

अयं भावः – पौरुषेयत्वेऽपि महाभारतादिष्विव प्रामाण्यस्य न क्वापि हानिः; तथापि प्रमाणमूर्धन्यस्यास्य स्मर्तव्यत्वेसति अस्मर्यमाणकर्तृकत्वादेवापौरुषेयत्वं स्थापितम् ।

अनाद्यानुपूर्वीविशेषविशिष्टत्वेन पश्चादपि उच्चार्यमाणत्वम् । (वि.को.)

यदाहुः वेदाः पौरुषेयाः वाक्यत्वात, भारतादिवत् । काठकादिसमाख्यापि कृतकत्वे समर्थ्यते इति । अत्राभिधीयते –

उक्तं तु शब्दपूर्वत्वं आख्याप्रवचनादिति ।
वाक्यात् पौरुषेयत्वं दृश्यादर्शनबाधितम् ॥
प्रतिहेतुविरुद्धश्च हेतुस्तस्मादकृत्रिमाः ॥

(द्रष्टुं योग्यं सत् यन्न दृश्यते, तन्नास्ति इति योग्यानुपलब्ध्या पौरुषेयत्वं बाधितं प्रतिहेतुः वेदाध्ययनत्वम् )

तस्मादपौरुषेयत्वाच्चोदनानां प्रमाणता ।
चोदनेति प्रतिज्ञार्थः पादेनानेन साधितः ॥ (भाट्टदीपिका)

कर्तुः अस्मरणस्य चिरकालिककूपादिवत् अनादरेणोपपत्तेः । अन्यथा छन्दोग प्रसिद्ध ऊहग्रन्थस्यापि तथात्वापत्तेः । काठकादिसमाख्यावशादपि पौरुषेयत्वमेव 'छन्दांसि जज्ञिरे तस्मात्' इति श्रुतावेवोत्पत्तिकथनाच्चेति प्राप्ते वाक्यत्वहेतुकानुमानस्य अप्रयोजकत्वेन, जन्यज्ञानमूलकत्वेन सोपाधिकत्वाच्च कर्तुरस्मरणाच्च अपौरुषेयत्वं, न चानादरात् कर्तुरस्मरणम् । अक्षरशो विस्मरणाभावाय शिक्षाछलाक्षरादीन् (छालारि इति भाषायां) रचितवतां ऋषीणां तदधीनप्रामाण्यकस्मृतिकर्तृसामान्यमपि अविस्मरतां सर्वज्ञानां वेदकर्तृनादरोक्तेः अतिसाहसत्वात् । ऊहग्रन्थस्य पौरुषेयत्वन्तु नवमे वक्ष्यते । समाख्या तु प्रवचननिमित्तेन ।

अत एव 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा' इत्यादिस्मृतयः उपपद्यन्ते इत्यपौरुषेयता सिद्धा ॥ (मी. को.)

**अप्रच्युतस्वभावः** — अपरित्यक्तस्वासाधारणधर्मवान् परमात्मा ।

न प्रच्युतः स्वभावः यस्य । अवतारादिष्वपि अविनाश्यापहतपाप्मत्वादि-स्वभावः ॥ (सं. अ.)

**अप्रज्ञातम्** — प्रत्यक्षागोचरं तमोद्रव्यम् ।

आसीदिदं तमोभूतं अप्रज्ञातमलक्षणम् ।
अप्रतर्क्यं अविज्ञेयं प्रसुप्तमिव सर्वतः ॥ (मनु. स्मृ. 1-5)

प्रलयकाले 'अक्षरं तमसि लीयते, तमः परे देवे एकीभवति' इति तमसः एकीभावमात्रमेव श्रूयते, न तु लयः । तत्र प्रमाणमाह आसीदिदमिति । (श्री. भा. 1-4-23) उपलब्ध्यभावात् तन्नास्तीत्यत्राह अप्रज्ञातमिति । प्रकृष्टं – स्पष्टम्, ज्ञानं – अपरोक्षज्ञानं न तद्विषयः ॥ (श्रु. प्र.)

**अप्रतर्क्यम्** — वाह्यतर्कागोचरं, ब्रह्मणः प्रकारभूतं तमोद्रव्यम् ।

आसीदिदं तमोभूतं अप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ (मनु. स्मृ. 1-5)

'कारणगुणप्रक्रमेण कार्ये गुणारम्भः' इति न्यायात् रूपादिमत्कारणमपि रूपादिमत् स्यात् इत्यत्राह – अप्रतर्क्यमिति अतर्कगोचरम् । (श्रु. प्र. 1-4-23)
अनेन रूपरहितस्य तमसः सूक्ष्मावस्थस्य प्रधानस्य कारणत्वाभावशङ्का व्यावर्तिता ॥

2. लौकिकदृष्टान्तनिबन्धनापेक्षानर्हं ब्रह्मैश्वर्यम् । 'तद्वैभवं श्रुतिविदो विदुरप्रतर्क्यम्' ॥ (वै. स्त. 38)

**अप्रतिभा** — निग्रहस्थानविशेषः ।

कथां प्रविष्टस्य साधनदूषणाद्यप्रतिपत्तिः ॥ (न्या. प. 152)

**अप्रतिरथः** — (स. ना. 645)

स (अनिरुद्धः) एव जनार्दनाख्यत्वात् अनिष्टजनार्दने अप्रतिपक्षः । (वि.स.भा.)
सः – अनिरुद्ध एव जनार्दनाख्यतया अनिष्टजनार्दने नास्ति प्रतिरथः – प्रतीपरथः प्रतिपक्षोऽस्येति । (वि. स. निर्व.)

प्रतिपक्षस्य राहित्यात् बहुनिष्टजनार्दनः ।
विख्यातो ह्यप्रतिरथः नवार्णः शत्रुनाशकः ।। (वि. स. नि.)

**अप्रतिपिद्धमनुमतं भवति** — न्यायविशेषः । (अनिराकृतो अंशः अङ्गीकृतः स्यात् )

जानीयादिति विधौ अभ्यासस्य ध्यानस्य अश्रवणात् । तत्रोत्तराप्रदानात 'अप्रतिपिद्धमनुमतं भवति' इति न्यायेन जानीयादित्यत्र ध्यायेत् इत्यर्थः । (मी. को.)

अत एव सिद्धान्ते विज्ञाय प्रज्ञां कुर्वीतेत्यादिषु ध्यानस्यैव विधानं इत्युक्तिः सङ्गच्छते ।।

**अप्रतिष्ठः** — सांसारिकफलसाधनकर्मनिष्ठारहितः ।

'अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि' (गी. 6-38) यथावस्थितं स्वर्गादि-साधनभूतं कर्म । फलाभिसन्धिरहितस्य अस्य पुरुषस्य स्वफलसाधनत्वेन प्रतिष्ठा न भवतीति ।। (गी. भा.)

**अप्रतिष्ठम्** — स्वाधारनिरपेक्षं ब्रह्म ।

'अजातमभूतमप्रतिष्ठम्' (सु. उ. 3) प्रतिष्ठा - आधारः । पृथिव्यादीनि आधारसापेक्षाणि । ब्रह्म तु तदनपेक्षम् ।। (श्रु. भा.)

**अप्रतिसंख्यानिरोधः** — निरन्वयविनाशविशेषः ।

क्षणिकत्ववादिभिः मुद्गराभिघाताद्यनन्तरभावितयोपलब्धियोग्यः सदृशसन्ताना-वसानरूपः स्थूलो यः, सदृशसन्ताने प्रतिक्षणभावी चोपलब्ध्यनर्हः सूक्ष्मश्च यो निरन्वयो विनाशः प्रतिसंख्यानिरोधाप्रतिसंख्यानिरोधशब्दाभ्यामभिधीयेते । (श्री. भा. 2-2-21)

निरन्वयविनाशवादिनः बौद्धाः । तथा च निरन्वयविनाशश्च द्विविधः । प्रतिसंख्यानिरोधः अप्रतिसंख्यानिरोध इति । आद्यः मुद्गराभिघातादिना घटनाशादौ । अन्त्यः प्रतिक्षणं जायमानः सूक्ष्मः । अत्र संख्याशब्दः बुद्धिपर्यायः ।।

**अप्रतीकालम्बनाः** — स्वात्मशरीरकब्रह्मोपासकाः, ब्रह्मशरीरभूतस्वात्मोपासकाश्च ।।

'अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च'
(ब्र. सू. 4-3-14)

**अप्रतीकालम्बनान्नयतीति बादरायणः उभयथा च दोषात् तत्क्रतुश्च – (ब्र. सू. 4-3-14)**
**(कार्याधिकरणे नवमं सूत्रम्)**

अस्मिन्नधिकरणे किमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति, उत परं ब्रह्मोपासीनान्, अथ परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति संशये– बादरिः प्रथमपक्षमाह, द्वितीयन्तु जैमिनिः। इदानीं बादरायणः स्वसिद्धान्तं प्रकाशयति अनेन सूत्रेण।

अप्रतीकालम्बनान् – प्रतीकालम्बनव्यतिरिक्तान् नयत्यर्चिरादिरातिवाहिको गण इति भगवान् बादरायणो मन्यते।

एतदुक्तं भवति – कार्यमुपासीनान्नयतीति नायं पक्षस्सम्भवति; परमेवोपासीनानित्ययमपि नियमो नास्ति; न च प्रतीकालम्बनानपि नयति। अपि तु ये परं ब्रह्मोपासते, ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते; तानुभयविधान्नयति। ये तु ब्रह्मकार्यान्तर्भूतनामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवत् ब्रह्मदृष्ट्या, केवलं वा तत्तद्वस्तूपासते; प्रतीकालम्बनाः न तान्नयति। अतः परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयतीति। कुतः? उभयथा च दोषात्। कार्यमुपासीनान्नयतीति पक्षे 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य' इत्यादिकाः श्रुतयः प्रकुप्येयुः। परमेवोपासीनानिति नियमे 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्तीति पञ्चाग्निविदोऽर्चिरादिर्गणो नयतीति श्रुतिः प्रकुप्येत्। अतः उभयस्मिन्नपि पक्षे दोषः स्यात्। तस्मादुभयविधान्नयतीति। तदेतदाह – तत्क्रतुश्चेति। तत्क्रतुः– तथोपासीनस्तथैव प्राप्नोतीत्यर्थः; 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' 'तं यथा यथोपासते' इति न्यायात्, पञ्चाग्निविदोप्यर्चिरादिना गतिश्रवणात्। अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च। अत एव तत्क्रतु न्यायात् प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धम्। नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादचिन्मिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिनागतिः ब्रह्मप्राप्तिश्च न विद्यते।

न चैवमपि ब्रह्मात्मकजीवोपासने ब्रह्मप्राप्त्ययोगस्तुल्यः। 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यधिकरणे ब्रह्मणो जीवं प्रति आत्मत्वेन अनुसन्धानस्यैव ब्रह्मप्राप्तिसाधनत्वोक्तिः इति वाच्यम्। ब्रह्मात्मकत्वेन जीवानुसन्धानेऽपि ब्रह्मणो जीवं प्रति आत्म-

त्वानुसन्धानाक्षतेः 'रामानुजं लक्ष्मणपूर्वजञ्च' इतिवत् उपदेशद्वयेऽपि, अर्थैक्येन सम्भावितविद्याद्वयग्रहणं कार्यं, विशेषणविशेष्यभावमात्रं हि तत्र भिद्यते इति ।

प्रतीकालम्बनाद्भिन्नान् नयन्तीत्यातिवाहिकाः ।
पूर्वत्र दोषान् मनुते तत्क्रतोर्बादरायणः ॥ (ब्र. प. मा. 522)

**अप्रधानकारणम्** — साधारणकारणम् ॥

**अप्रमा** — यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा, तद्भिन्नम् ।

तदभाववति तत्प्रकारकानुभवः । तत्र अप्रमा त्रिविधा । संशयः, विपर्ययः, तर्कश्चेति । प्रकारान्तरेणाप्रमा द्वेधा । भ्रमः संशयश्च । तत्र भ्रमो विपर्ययतर्कौ इत्युच्यते ॥ (न्या. को.)

**अप्रमादः** — तत्त्वज्ञानम् ।

'प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्त्वं ब्रवीमीति' (सनत्सुजातवचनम्) अविद्यानिवृत्तिः । यद्वा अत्र अमृतत्त्वसाधनतया उक्तः अप्रमादः तत्त्वज्ञानम्; तत्प्रतिपक्षः प्रमादोप्यत्र ज्ञानमेव ॥ (त. टी. 93)

**अप्रमेयः** — (स. ना. 46)

तेषां ब्रह्मादीनां करणैः प्रमातुमशक्यः । (वि. स. भा) तेषां ब्रह्मादीनां करणैः प्रमातुं – परिच्छेत्तुं शक्यः प्रमेयः, स नेति । (वि. स. निर्व.)

ब्रह्मादीनां च करणैर्नो मातुमपि शक्यते ।
द्रष्टुं ह्यसावप्रमेयः वचसामप्यगोचरः ॥ (वि. स. नि.)

**अप्रमेयः** — 1. परिपूर्णः भगवान् ।

अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी ।
मोदते भगवान् भूतैः बालः क्रीडनकैरिव ॥ (वायु.उ. 36-6)

2. वेदैः अपरिच्छेद्यः ।

'त्वमप्रमेयश्च दुरासदश्च' (रा. कि. 24-31)

'वेदाहमित्युपक्रम्य......महान्तं क इत्था वेद' इति वेदैः अपरिच्छेद्यः ।
'सो अङ्ग वेद यदि वा न वेद' इति स्वेनापि परिच्छिद्य ज्ञातुमशक्यः ।

प्रत्यक्षगम्योऽपि मनसा दुर्विभाव्यस्वभावः। सौलभ्यदशैव न परिच्छेत्तुं शक्यते, परिकररहितोऽपि प्रतापातिशयेन निरवधिकपरिकरपरिगत इव दुरवगाहोऽसि इति एकवचनस्य भावः। (गो. रा.)

न प्रमातुं योग्यः। स्वरूपस्वभावेषु इयत्तया परिगणितुं अशक्यः, परिपूर्णः विष्णुः॥ (सं. अ.)

**अप्रमेयम्**—1. अपरिच्छेद्यम्।

'अप्राणममुखं....अस्निग्धमलोहितमप्रमेयम्' (मु. उ. 3) प्रमाणं-इयत्ता अप्रमेयम्-अपरिमेयम्। व्यष्टिदेहवत् इयत्तारहितम्। (श्र. भा.)

2. 'दीप्तानलार्कद्युतिमप्रमेयम्' (गी.11-17) ईदृक्त्वेयत्ताभ्यां परिच्छेत्तुमशक्यम्। (ता. चं.)

3. साधकाविषयभूतम्।

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अतर्क्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः॥ (श्रु.प्र.2-1-12)

**अप्रमेयात्मा**—(स. ना.249)

तेषां (विभूतिभूतचेतनाचेतनानां) नराणां असंख्येयानां एकैकशोऽपि अप्रमेयानामनवधिकानामन्तर्बहिश्च व्यापनात् अप्रमेयात्मा। (वि.स.भा.)

एकैकशोऽप्रमेया या ह्यसंख्याता विभूतयः।
तासां चैवाऽप्रमेयात्मा व्यापनाद्बहिरन्ततः॥ (वि. स. नि.)

**अप्रवृत्तप्रवर्तनम्**—विधिगतो व्यापारविशेषः।

स्वतः अप्रवृत्तस्य प्रवर्तनम्। यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ यागे स्वतः अप्रवृत्तं पुरुषं यागस्य स्वर्गफलकत्वबोधनद्वारा विधिः प्रवर्तयति॥

**अप्रसङ्गः**—अव्याप्तिः।

अप्रसंगः-अव्याप्तिः, अतिप्रसंगः-अतिव्याप्तिः॥ (वि.को.)

**अप्राकृतदेशः**—शुद्धसत्त्वमयः परवासुदेवस्य आवासस्थानभूतलोकः।

पुरुषसूक्ते 'ते ह नाकं महिमानः सचन्ते' इति मुक्तप्राप्यदेशस्य नाकशब्देनोक्तत्वात्, मुक्तस्य च दुःखमिश्रकार्यलोकानां हेयत्वात् नास्मा,अकं भवतीत्यवयवार्थ-पौष्कल्योपपत्तेः। तत्रैव 'तमसः परस्तात्' इति विशेषितत्वात्, 'क्षयन्तमस्य रजसः पराके' इति निवासशब्दात् ['क्षि-निवासगत्योः' इति निवासार्थकधातुना निष्पन्नोऽयं क्षयन्तशब्दः] 'तदक्षरे परमे व्योमन्' 'विश्वं पुराणं तमसः परस्तात्' इति तमसः परस्य स्थानस्य स्थानिनः ब्रह्मणश्च व्यतिरेकनिर्देशात्, तस्य तमसःपरत्वविशेषणेन पुरुषसूक्त-प्रत्यभिज्ञानाच्च दिवीति अप्राकृतं स्थानमुच्यते। (श्रु. प्र. 1-1-25)

शुद्धसत्वमयः वैकुण्ठलोकः। अयं चतुर्मुखादि सर्वपदापेक्षया निरतिशयभोग्य-भूतः परमपदवाच्यः। (द.उ.207)

**अप्राकृतविग्रहः**—शुद्धसत्त्वमयो विग्रहः।

[परमात्मनः अनन्तविष्वक्सेनादीनां, रामकृष्णादीनाञ्चाप्राकृतविग्रहं प्रतिपादयति]

प्रख्यातं शुद्धसत्त्वं किमपि तदनघं द्रव्यमव्यक्ततोऽन्यत्।
तद्रूपं रूपमैशं दिवि कनति तथा शेषशेषाशनादेः॥ (अ. सा.64)

इत्युक्तरीत्या भगवतो रूपं प्राकृतं स्वरूपञ्च न भवति, अपितु अप्राकृतं द्रव्यान्तरं। तेन विप्रतिपन्नं रूपं प्राकृतं रूपत्वात्, तदनित्यं सावयवत्वादित्यादयः परेषां हेतवो निरस्ताः। तादृग्विधरूपसिद्धौ धर्मिग्राहकप्रमाणविरोधः। अप्राकृतनित्यत्वादि विशेषणयोगेनैव प्रमाणसिद्धत्वात्। असिद्धौ चाश्रयासिद्धेरिति स्वकीयां प्रक्रियां स्वयमेव स्मरतु हैतुकः।

नन्वस्तु भगवतस्तादृशं रूपं, अनन्तगरुडादीनां का गतिरिति चेत् भगवानेव गतिः। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्यादि प्रमाणशतव्याहतत्वात् शङ्कापिशाचिकायाः।

अतएवोक्तमाचार्यपादैः – 'तथा शेषशेषाशनादेः' इति अस्तु सर्वं गुणजातं वैकुण्ठवासिनो भगवतः। रामकृष्णादीनान्तु प्राकृताः सुखदुःखादिभाजश्च स्युरिति चेत् तत्राह—

'नित्यं तत्सूरिसेव्यं परतरमजहत्स्वस्वभावः स देवः।
पुंसां संसारशान्त्यै विपरिणमयति व्यूहपूर्वैः विभागैः'॥ इति। (अ.सा.64)

पराशरपाराशर्यादिमतानुसारेणाप्राकृतत्वादिकं गुणजातमाह–अजहदित्यादिना। तेनावतारेषु शोकमोहाद्यनुकरणं नटानां नाटकेष्विव परिहासरूपमेवेति मन्तव्यम्। परव्यूहादिविभागः पञ्चरात्रादिषु स्पष्टमेवानुसन्धेयः॥ (चिं. म.)

**अप्राकृतेन्द्रियलक्षणम्**—रजस्तमोरहितत्वे सति इन्द्रियत्वम्।

प्राकृतचक्षुरादेरिव अप्राकृतचक्षुरादेर्विषयनियमादिकं नास्ति; अतः चक्षुरादिलक्षणं तत्र तत्रोक्तं प्राकृतविषयम्। अप्राकृतस्य तु चक्षुरादिगोलकाधिष्ठितमिन्द्रियमिति रीत्या अधिष्ठानविशेषमादाय लक्षणं वाच्यम्॥ (न्या. सि.48)

**अप्राणः**—परमात्मा। प्राणाधीनस्थित्यभाववान्।

'अप्राणो ह्यमनाः' (मुं. उ. 2-1-2) 'अप्राणममुखम्' (सु. उ. 3)

प्राणाधीनस्थितित्वं निवर्तितम्। न तु प्राणसम्बन्धमात्रम्। प्राणस्यापि अन्तर्यामित्वात् तस्य, 'यः प्राणे संचरन्' इति हि वक्ष्यते॥ (श्रु.भा.)

**अप्राप्तकालम्**—निग्रहस्थानविशेषः।

विवक्षितक्रमस्य विपर्यस्तकरणम्। यथा सभ्यानुविधेयसंवरणादिकं अकृत्वा प्रयोगे वादारम्भविपर्यासः। प्रतिज्ञाहेतुदृष्टान्तादेर्विपर्यासेन वचने अवयवविपर्यासः, अनित्यः शब्दः इत्यादावयवांशविपर्यासः, एवमेवाङ्गाङ्गिविपर्यासः, वादविपर्यास इत्यादि॥ (न्या. प. 147)

**अप्राप्ते हि शास्त्रमर्थवत्**—न्यायविशेषः। अप्रतिपन्नार्थविषयं शास्त्रं अज्ञातज्ञापनरूपप्रयोजनवत्।

'तत्त्वमसि' इत्यत्रोद्देश्योपादेयविभागः कथमिति चेत्– 'नात्र किंचिदुद्दिश्य किमपि विधीयते' 'ऐतदात्म्यमिदं सर्वं' इत्यनेनैव प्राप्तत्वात्। अप्राप्ते हि शास्त्रमर्थवत्।

(श्री.भा. 1. भा. 2-57)

अतः तदेवोद्देश्योपादेयविभागवत्, न तु प्रकृतनिगमनरूपं वाक्यम्। अतोऽस्य निगमनवाक्यस्य (तत्त्वमसीत्यस्य) प्रतिपन्नार्थविषयत्वात् (अनेनन्यायेन) नोद्देश्योपादेय विभागवत्त्वमित्यर्थः। (श्रु. प्र.)

'अप्राप्ते तु शास्त्रमर्थवत्' इति पाठान्तरम्। तुशब्दः अवधारणे। 'स्युरेव तु पुनर्वै चेत्यवधारणवाचिनः' इति हि नैघण्टुकाः। वैपम्ये वा।
(श्रु.प्र.1-1-3)

अन्यतः प्राप्त तु शास्त्रं अनर्थकं स्यात्। तथाहि 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यः निदिध्यासितव्यः' इति श्रुतिः। अत्र श्रोतव्य इति अनुवादः। अध्ययन-विधिना साङ्गस्य स्वाध्यायस्य ग्रहणे, अधीतवेदस्य पुरुषस्य प्रयोजनवदर्थदर्शनात्। तन्निर्णयाय स्वरसत एव श्रवणे प्रवर्तमानतया तस्य प्राप्तत्वात्। मन्तव्य इति चानुवादः श्रवण प्रतिष्ठार्थत्वेन मननस्यापि प्राप्तत्वात् 'अप्राप्ते तु शास्त्रमर्थवदिति'॥ (मी.को.)

**अप्रामाण्यम्**—प्रामाण्याभावः।

. अननुष्ठानलक्षणं अप्रामाण्यम्। (श्रुतिविरुद्धस्मृतीनाम्) (त.टी. 31)

2. प्रमाजनकत्वाभावः॥

**अप्रामाण्यकारणम्**—अप्रमात्वे हेतुः।

अबोधकत्वं; बाधितत्वं च। अप्रामाण्यकारणयोः अबोधकत्वबाधितत्वयोः अभावात् प्रामाण्यं स्वतः सिद्धमेव प्रमाणानाम्॥ (मी. को.)

**अप्रामाण्यं परतः**—अप्रामाण्यं औपाधिकम्।

अप्रामाण्यस्यैव स्वतस्त्वमनुपपन्नम्; प्रामाण्यस्यैव भूयस्त्वात् अन्यस्याभूयस्त्वाच्च। भूयसां स्वतस्त्वं अल्पीयस औपाधिकत्वं च हि युक्तम्। घटपटादिज्ञानेषु, शुक्तिरज-तादिज्ञानानामिदमंशेष्वपि प्रामाण्यदर्शनाद् तस्य भूयस्त्वम्। अतः स्वतःप्रामाण्यं परतोऽप्रामाण्यमिति। (श्रु.प्र. 165)

अप्रामाण्यं अर्थान्यथात्वम्.— बाधकज्ञान-कारणदोषज्ञान-विसंवादज्ञानैः गृह्यते इति परतः॥ (मी.को.)

**अफलता**—नैष्फल्यम्।

निष्प्रयोजनत्वं, अनपेक्षितप्रयोजनत्वं वा।

त्र्यन्तस्वान्तवादिनि अधिकरणगणे पौनरुक्त्योक्तबाधौ ।
मन्दत्वासंगतत्वे विशयमफलतां मानबाधं च मन्तॄन् ।।

. . . . . . . . . . . . .

हृद्या पद्यावलीयं हृदयमधिगता सावधानान् धिनोतु ॥ (अ.सा. 3.)

यथा पूर्वकाण्डोक्तापशूद्राधिकरणन्यायेनैव सिद्धे ऐकशास्त्र्यवादिनां अपशूद्राधिकरणं निष्फलमिति शङ्का च पूर्वकाण्डोक्तकर्माधिकाराभावेऽपि, वेदान्तवाक्यैरेव उपासने विशिष्टाधिकारः सूच्यत इत्याक्षेपे प्राप्ते तत्परिहारार्थत्वात्सफलमेवेति स्थापितम् । एवमेव अन्यत्रापि ऊह्यम् ॥

**अफलत्वम्**—मुख्यफलाजनकत्वम् ।

यथा स्वर्गोद्देशेन कृतस्य चैत्यवन्दनादेरफलत्वम् ।। (न्या. को.)

**अबाधाच** — (ब्र.सू.3-4-29) (सर्वान्नानुमत्यधिकरणे द्वितीयं सूत्रम्)

आहारशुद्धिविधेः अबाधाच्च प्राणात्यय एव सर्वान्नानुमतिः प्राणविदाम्,

'आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः' इति ब्रह्मविद्योत्पत्तौ आहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वम् आपद्विषयमवगम्यते । एवं ब्रह्मविदां अतिशयितशक्तीनामपि सर्वान्नीनत्वस्य आपद्विषयत्वात् प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिः आपद्विषयैव ।

सर्वान्नानि भक्षयतीयर्थे 'अनुपदसर्वान्नायानयं बद्धाभक्षयति नेयेषु' (पा.सू. 5-2-9) इत्यनेन 'ख'प्रत्यये सर्वान्नीन इति रूपम् ।

आहारशुद्धाविति च शुद्धाहारविधेर्बलात् ।
अबाधाय च तस्यापि तत्प्राणात्यय इष्यते ॥ (ब्र.प.मा. 447)

**अबाधितविषयत्वम्**—अनुमानाङ्गभूतम् ।

प्रबलेन प्रमाणेन पक्षे निश्चितसाध्याभाववत्त्वं बाधितविषयत्वम् । यथा–महाह्रदोऽग्निमान्' इत्यादौ । तदभावस्तु अबाधितविषयत्वम् ।। (न्या.प.107)

**अबाह्यान्धकारः**—अबाह्यपरमात्मविषये निर्गुणत्वभ्रान्तिः ।

[illegible] (न्या.)

[illegible] — [illegible]

ब्रह्म आत्मा अस्य (सर्वस्य वस्तुनः [illegible]) तत् [illegible], [illegible]

[illegible]।

सिद्धान्तेऽपि प्रधानं कारणत्वेन निषिध्यते। तथापि तत् [illegible] कारणमिति ब्रह्मात्मकप्रधानस्यैव कारणता, न तु स्वतन्त्रतया।

अत एव सूत्रितम् 'तदधीनत्वादर्थवत्' इति॥

**अप्त्वम्** — शीतस्पर्शवत्त्वं, निर्गन्धत्वे सति विशिष्टरसवत्त्वम्।

आपः प्राणरसनाप्यायनादिनोपकुर्वते शरीरत्वमासां अप्प्रचुरेषु वरुणलोक शरीरेषु स्पष्टं। विषयत्वं सरित्समुद्रेषु। (न्या.सि. 15)

प्राणाप्यायकरसनाप्यायकशरीरविषयभेदात् चतुर्धा अपां विभागः। 'आपोमयः प्राणः' 'आप्यायन्ते च नित्यम्' इत्युक्तेः॥ (र.पं.)

**अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः** —अयं च न्यायविशेषः।

तद्यथा 'अभक्ष्यो ग्रामकुक्कुटः' 'अभक्ष्यो ग्रामसूकरः' इत्युक्ते, गम्यते एतदारण्यो भक्ष्यः इति पस्पशायाम् (महाभाष्ये) (मी.को.)

एवमेवाहार नियमे 'विशिष्ट' एतेऽभक्ष्याः इति निषेधवचनेन, अन्येषां शेषाणां भक्ष्यता प्रतीयते॥

**अभंगुरधियः** —अप्रतिहतज्ञानाः।

स्वयोगमहिमसाक्षात्कृतपरावरतत्वतया कुत्रापि अप्रतिहतज्ञानाः॥ (वि.को.)

**अभयम्** —निरुपाधिकाभयस्याश्रयः ब्रह्म।

'य एशोऽक्षिणि पुरुषो दृश्यते एतदमृतमभयं एतद्ब्रह्म। (छां.उ.4-15-1) (छां. उ.4-15-1) 'अभयं वै ब्रह्म' (बृ.उ.6-4-25)

2. मोक्षः ।

'अथ सोऽभयं गतो भवति' (तै.आ.30) ब्रह्मविद्याफलत्वेन श्रवणात् ।

3. भयाभावाय । 'यदा ह्येवैष एतस्मिन्नदृश्ये. . . . .अनिलयने अभयं प्रतिष्ठां विन्दते' (तै.आ. 37) अभयं-अभयाय, 'नाव्ययीभावात्' (पा.सू. 2-4-83) इति चतुर्थ्यर्थः अम्भावः । (अर्थाभावे यदव्ययम्) 'अव्ययं विभक्ति' (पा.सू.2-1-6) इत्यव्ययीभावसमासः । अभयसाधनभूतां प्रतिष्ठां निरन्तरस्मृतिलक्षणां निष्ठां यो विन्दते-लभते, सः अभयं प्राप्नोति । (रं.भा.)

4. इष्टानिष्टवियोगसंयोगरूपस्य दुःखस्य हेतुदर्शनजं दुःखं भयम्; तन्निवृत्तिः । 'अभयम् सत्त्वसंशुद्धिः' । (गी.16-1)

**अभयमुद्रा**—विस्तृतोर्ध्वाङ्गुलिविशिष्टहस्तमुद्राविशेषः ।

प्रायःप्रपदने पुंसां पौनःपुन्यं निवारयन् ।

हस्तः श्रीरङ्गभर्तुर्मामव्यादभयमुद्रितः ॥ (निक्षे. र. 2) मा भैषीः सकृदेव प्रपदने उपाये कृते, फलं दातुं सज्जोऽस्मीति प्रपदनस्य पौनःपुन्यनिवारणपरिका मुद्रा ।

'पौनः पुन्यं निवारयन्' इति 'लक्षणहेत्वोःक्रियायाः' (पा.सू.-) इत्यनेन हेत्वर्थे 'शतृ' प्रत्ययः - हेतुः फलं कारणञ्च ॥

**अभयस्थानविवेकः** – निर्भयत्वम् ।

भगवद्रक्षकत्वाध्यवसयादिना निर्भय वम् ॥ (वि.को.)

**अभाक्तः** – मुख्यः ।

'चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तः' । (ब्र.सू. 2-3-17)

**भाक्तः** – वाच्यैकदेशे भङ्क्त्वा प्रयुक्तः । अमुख्य इति यावत् (त.मा.) तद्भिन्नः ।

**अभागिप्रतिषेधः** – अप्राप्तप्रतिषेधः ॥

**अभावः** – स्वविरोध्यवस्थान्तरादिः भावरूपः ।

न तावत् अभावाख्यं किञ्चित् पदार्थान्तरं विविच्य उपलभामहे । नापि नास्ति

व्यवहारादिना कल्पयितुं युक्तम् । उभयसम्प्रतिपन्नावस्थान्तरादिनैवं तन्निर्वाहात् । न च श्यामावस्थाप्रहाणेन रक्तावस्थापरिग्रहे घटनाशव्यवहारप्रसंगः । कपालाद्यवस्था-वत् रक्तावस्थायाः घटावस्थाविरोधित्वस्य भवताऽपि अनभ्युपगमात् । न च भावत्वेन एकराश्यनुप्रविष्टानां विरोधो न युज्यत इति वाच्यम्, तेजस्तिमिरशीतोष्णतृणदहनादीनां भावानामेव सहानवस्थान नियमेनभिन्नाधारत्व वध्यघातुकत्वलक्षणविरोधदर्शनात् अभावाभावस्य च भावत्वस्वीकारात् । अन्यथा पदार्थत्वेन एकराशेः अभावस्याऽपि भावविरोधो न कथञ्चिदुपपद्यते ।

स च चतुर्विधः इति परे वदन्ति । प्रागभावः, प्रध्वंसाभावः, अन्योन्याभावः अत्यन्ताभावश्चेति । सिद्धान्ते तु विरोधिपूर्वावस्था प्रागभावः। विरोध्युत्तरावस्था प्रध्वंसः। वस्त्वन्तरगतासाधारणविरोधिधर्म एव समानाधिकरणव्यधिकरणनिषेधभेदेन अन्योन्या-भावः अत्यन्ताभावश्च । देशकालसंभेदविशेषः, तत्कृतावस्थाविशेषो वा संसर्गाभावः । प्रतियोग्यादिभेदाच्च पितृत्वपुत्रत्वादिव्यवहारवत् अस्तिनास्तीत्यादिव्यवहारवैचित्र्यमिति (ता.चं. 2-27) न काप्यनुपपत्तिः । आरम्भणाधिकरणे 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च' इति सूत्रेण, अभावस्य भावान्तरत्वं समर्थितञ्च । (विस्तरस्तु तत्र द्रष्टव्यः)

2. प्रतिकूलानुभवहेतुको मनसोऽवसादः ।
'सुखं दुःखम् भवोऽभावः भयञ्चाभयमेव च' (गी. 10-4)

भवः – भवनम् । अनुकूलानुभवहेतुकं मनसो भवनम्; अभावः –प्रति-कूलानुभवहेतुको मनसोऽवसादः (गी.भा)

सुखदुःखभयाभयमध्यपठितत्वात् भवोऽभावः इत्यत्रापि परस्परविरुद्धार्थविषयत्वं सम्भवदपरित्याज्यं; ततश्च भवभावशब्दयोः प्रत्ययभेदमात्रमेव , न त्वर्थभेदः । तत्रचाभाव इत्येव पदच्छेदः । तयोरपि मनोवृत्तिरूपत्वं वक्तव्यम् । प्रस्तुतयोरेव च सुख-दुःखयोः तद्धेतुत्वमुचितम् । अत एव 'भवो भव्यता भावोऽभिप्रायः' इत्यादि परव्याख्यानं मन्दम् । (ता.चं.)

1. भावभिन्नः प्रतियोगिज्ञानाधीनज्ञानविषयः ।

2. माध्वास्तु प्रथमप्रतीतौ यः नास्ति इति प्रमाविषयः सः अभावः इत्याहुः । (न्या.को.)

[प्रथमप्रयुक्तनञः अभावः अर्थः । यथा 'घटो नास्ति' इति । द्वितीयाभावस्तु भावरूपः । यथा 'घटाभावो नास्ति' इति ।]

अनुपलब्धिः – अभावः इति मिमांसकाः ।

आस्तां चेयं प्रसिद्धिः मीमांसकानां षष्ठं किलेदं प्रमाणमिति । अभावः प्रमाणं लौकिकमेव । सर्वप्रमाणप्रत्यस्तमये च षष्ठेन (प्रमाणेन) अभावः परिच्छिद्यते इत्यादिना । (मी. को.) अभावः – अनुपलब्धिरिति प्रमाणगणनायां पर्यायः ॥

**अभावत्वम्** — 1. इदमिह नास्ति इदमिदं न भवति इत्यादि प्रतीतिनियामको भावाभाव-साधारणः स्वरूपसम्बन्धविशेषः । 2. प्रतियोगिज्ञानाधीनज्ञानविषयत्वं । 3. द्रव्यादि-षट्कान्योन्याभाववत्त्वम् । 4. भावभिन्नत्वम् । 5. भावव्यावृत्तोऽखण्डोपाधिः अनु योगिताविशेषो देति संप्रदायः । (न्या.को.) सिद्धान्तेत्वभावस्यातिरिक्तता नाङ्गीकृता भावान्तररूपत्वात् ॥

**अभावं बादरिराह ह्येवम्** — (ब्र.सू. 4-4-10) (अभावाधिकरणे प्रथमं सूत्रम्

मुक्तौ शरीरेन्द्रियाणां अभावं बादरिः आचार्यो मन्यते । कुतः ? आहह्येवं-श्रुतिः –

'तन्वभावे सन्ध्यवदुपपत्तेः' इत्युत्तरसूत्रस्य तनुशब्देन प्रतियोगिविशेषावगमः ।

किं मुक्तस्य देहेन्द्रियाणि सन्ति ; उत न सन्ति, अथवा यथासंकल्पं सन्ति न सन्ति च इति विशये सति न सन्त्येवेत्याह बादरिः । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोः अपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रि येस्पृशतः' इतिह्याह श्रुतिः । अत एव तस्य शरीरात्समुत्थानमनन्तरमेव वदति । 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाये-त्यादिना' । न च मुक्तस्य स्वशरीरसृष्टौ तदर्थपित्रादिसृष्टौ वा अपेक्षा स्यात् । तदा-

तस्य ब्रह्मानुभवादन्यपरत्वं, ब्रह्मणो निरतिशयभोग्यत्वहानिश्च प्रसज्येत। 'स एकधा भवति, त्रिधा भवति' इत्याद्याम्नानं तु अर्थवादमात्रम्। अणोः जीवस्य युगपदनेकदेह व्याप्त्ययोगादिति पूर्वपक्षपरमिदं सूत्रम्।

सिद्धान्तस्तु मुक्तस्येच्छया शरीराणि सन्ति, न सन्ति चेति वक्ष्यते श्रुतिद्वया नुरोधात्। न च एतावता मुक्तस्य ब्रह्मानुभवादन्यपरत्वप्रसंगः। नहि ते स्वभोगलाम्पट्येन पित्राद्युपकरणादि सृजन्ति। किन्तु सविभूतिकब्रह्मानुभवार्थं ब्रह्मविभूतिविशेषतयैव सृजन्ति।

अशरीरं वाव सन्तं इति मुक्तस्य तत्र तु।
अभावं च शरीरादेः बादरिर्मनुते मुनिः॥ (ब्र.प.मा. 533)

अभावाधिकरणम् — (4-4-5)

1. अभावं बादरिराह ह्येवम्।
2. भावं जैमिनिः विकल्पामननात्।
3. द्वादशाहवदुभयविधं बादरायणोऽतः।
4. तन्वभावे सन्ध्यवदुपपत्तेः।
5. भावे जाग्रद्वत्।
6. प्रदीपवदावेशस्तथाहि दर्शयति।
7. स्वाप्ययसम्पत्योरन्यतरापेक्षमाविष्कृतं हि।

इति सूत्रसप्तकं अभावपदोपक्रान्तं एवं व्यपदिश्यते। शरीरस्य दुःखहेतुत्वात मुक्तस्य शरीरं नेति बादरिमतमनूद्य – 'स एकधा भवति' इत्यादिषु मुक्तस्यानेकधाभाव-श्रवणादच्छेद्यस्य निरवयवस्य शरीरेण विनाऽनेकीभावानुपपत्तेः, कर्मकृतशरीरस्यैव दुःख-हेतुत्वाच्च सशरीर एवायमिति जैमिनिमतेन प्रतिक्षिप्य सत्यसङ्कल्पत्वश्रुत्या इच्छानुरोधेन कदाचित्सशरीरः, अशरीरश्च कदाचिदिति स्वमतमुपन्यस्तम॥

मुक्तोऽशरीरस्त्वशरीरशब्दात्
इच्छाशरीरी 'बहुधा' इति यावत्।

नैषा व्यवस्था 'बहुधा' तु शब्दात्
बहुश्रुतेश्च स्वयमैच्छिकः स्यात् ॥ (न्या.क.सं. 4-40)

**अभास्वरत्वम्** — भास्वरत्वाभावः तद्विरोधि वा ।

देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यं अभास्वरत्वं मनसोऽवसाद इति । (श्री.भा. 1-65) भास्वरत्वं इह प्रकाशकत्वम्; तदभावः ।। (त.टी.76)

**अभिगमनम्** — भगवन्तं प्रति (अभि) आभिमुख्येन गमनम् ।

ब्राह्मान्मुहूर्तादारभ्य प्रागंशं विप्र वासरे ।
जपध्यानार्चनस्तोत्रैः कर्मवाक्चित्तसंयुतैः ।
अभिगच्छेज्जगद्योनिं तच्चाभिगमनं स्मृतम् ॥ (पां. र. 125)

अभिगमनोपादानेज्यास्वाध्याययोगाः इति पञ्चविधः कालः । तेषु अभिगमन काले कर्तव्यविशेषोऽयम् ।

अन्वेषणं दर्शनं वा ॥ (वि. को.)

**अभिचारः** — शत्रुवधार्थम् अथर्वणवेदोक्तरीत्या क्रियमाणं कर्म ।
'श्येनेनाभिचरन् यजेत' 'षट्सु अभिचरन् यजेत' ।

इदं षड्विधम्, । मारणम्, मोहनम्, उच्चाटनम्, विद्वेषणम्, स्तम्भनम्, वशीकरणम् इति ॥ (सं. अ.)

**अभिजनः** — यत्र पूर्वैरुषितम् सोऽभिजनो देशः ।
'अभिजनश्च' ॥ (पा. सू. 4-3-90)

**अभिजातः** — 1. दैवीं सम्पदमभिमुखीकृत्य जातः ।
'भवन्ति सम्पदं दैवीमभिजातस्य भारत' (गी. 16-3) ताम् निर्वर्तयितुं जातः । (गी.भा.)

अभिमुखीकृत्य – अभिलक्ष्य; यथा दैवीसम्पद्भवति, । तथा कृत्वा जातस्येति यावत् । ईदृशगुणयुक्तानामेवंविधायाः संपदोऽवश्यंभावित्वमत्र अभिमुखीकरणं विवक्षितम् । तथा च स्मर्यते –

जायमानं हि पुरुषं यं पश्येत् मधुसूधनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ।। इति । (ता.चं.)

2. सत्कुलप्रसूतः ।। (आभिज़ात्यम्)

**अभिजित्** — 1. हरिः ।

'ददर्श तत्राभिजितं धराधरम्' (भाग. 3-18-2) अमितः सर्वतः जयतीति अभिजित् । 'जी - जये' इति धातोः कर्तरि क्विप् । (भाग. वी.)

2. नक्षत्रविशेषः ।

3. मुहूर्तविशेषश्च । श्रवणनक्षत्रस्यान्तिमपादः श्रविष्ठायाः आद्यश्च ।। (सं.अ.)

**अभिजिन्मुहूर्तः** — 1. सूर्योदयानन्तरं चतुर्दशनाडीतः पश्चात् नाडिकाद्वयम् ।
2. सूर्यस्थितलग्नापेक्षया चतुर्थलग्नम् ।। (सं. अ.)

**अभिज्ञा** — इदमिति ग्रहणम् ।

अन्यत्गृह्णात्यभिज्ञा तदिदमिति पुनः प्रत्यभिज्ञान्यदैक्यम् ।
कालक्षेत्रादिभेदग्रहजनितभिदाभ्रान्तिशान्तिः ततः स्यात् ।। (त.मु. 403)

इदमितिग्रहणं तावत् अभिज्ञा । सा खलु एकदेशकालवर्तिनः स्वस्मिन् ऐक्यं गृह्णाति । तदिदमिति पुनः प्रत्यभिज्ञा देशकालभेदप्रसक्तभेदविरोध्यैक्यं गृह्णाति । अतो विषयभेदात् भेदभ्रान्तिशान्तिः स्यात् । (स. सि.)

अयं देवदत्त इत्येवमादिरूपज्ञानम् । (वि.को.)

अभिज्ञाप्रत्यभिज्ञयोः विषय वैषम्यं नास्तीति शङ्कां वारयति —

अभिज्ञायां एकस्य धर्मिणः एकदेशकालसम्बन्धित्वं प्रतिपन्नम्, न तु कालद्वय-देशद्वयसम्बन्धित्वम् । तत्तु प्रत्यभिज्ञायां प्रतिपन्नम् । एकदेशकालसम्बन्धित्वप्रतीतिः

न द्वित्वविरोधिनी । एकस्य धर्मिणः कालद्वयदेशद्वयसम्बन्धित्वं ह्यैक्यम् । तत्तु द्वित्ववि-रोधीति तत्प्रतिपत्तिर्द्वित्वभ्रमं निवर्तयति । अतस्तत्रापि विषयवैषम्यमस्तीति फलितम् ।
(श्रु. प्र. 1. भा. 2-2)

अनेनाभिज्ञाप्रत्यभिज्ञयोरपि विषयवैषम्यमुक्तं भवति ॥

**अभिधानम्** — मुख्यवृत्त्या बोधनम् ।

ब्रह्मशब्देन च . . . . . . पुरुषोत्तमोऽभिधीयते । (श्री.भा.1-17)

मुख्यवृत्तिरेवाभिधानमिति सर्वसम्मतम् । तथापि प्रकरणाद्यनुरोधेन कुत्रचित् गौणमुख्यसाधारण्येनाप्यभिधानशब्दव्यवहारः वर्तते । अत एवाभिहितं व्यासार्यैः (श्रु.प्र. 2-3-4) 'अभिधानशब्देन अत्र मुख्यामुख्यसाधारणशब्दव्यापारमात्रं विवक्षितम्' इति ॥

**अभिधावृत्तिः** — शब्दशक्तिः ।

व्युत्पत्तिसिद्धार्थ एव वृत्तिः, अभिधा । यथा सिंहशब्दस्य मृगेन्द्रे । सा जाति-गुणादिविषयभेदात् योग–रूढ– तत्समुच्चयभेदाच्च बहुविधा । तत्त्वरत्नाकरे तु –

'अभिधाऽर्थावगत्यात्मा शब्दव्यापार इष्यते' ।

इत्युक्तम् ॥ (न्या.प. 236)

**अभिधानावृत्तिः** — बोधनव्यापारावृत्तिः ।

'अनुषङ्गे च श्रवणावृत्ताविवाभिधानावृत्तिः विद्यत एव' (श्री. भा. 2-3-4)

अनुषङ्गश्रवणावृत्त्योः फलमभिधानावृत्तिरेव । अभिधानशब्देन अत्र मुख्यामुख्य साधारणशब्दव्यापारमात्रं विवक्षितम् ।। (श्रु. प्र.)

**अभिधेयत्वम्** — शब्दशक्तिविषयत्वम् ।

भगवदिच्छारूपशब्दशक्तिविषयत्वम् । तच्च सर्वत्रैव वर्तते । सर्वस्यैव भगव-दिच्छाविषयत्वात् । वस्तुपदशक्यत्वात् । (न्या. को.) शब्दनिष्ठैव बोधनानुकूला स्वाभाविकी शक्तिः तद्विषयत्वमित्यन्ये ॥

**अभिध्या** — 1. सङ्कल्पः ।

'अभिध्योपदेशाच्च' (ब्र. सू. 1-4-24) 'सोऽकामयत बहु स्यां प्रजायेय' इति स्रष्टुः ब्रह्मणः स्वस्यैव बहुभवनसंकल्पोपदेशात् । (श्री. भा. )

2. परकीये स्वत्वबुद्धिः; यद्वा निष्फलचिन्ता; परकृतापकारचिन्ता वा । (श्रु.प्र. 1-65)

3. परप्रतिकूलचिन्ता; अभिचारादौ अभिः प्रातिकूल्यार्थः; परकृतद्रोहे निरन्तरस्मृतिर्वा, वितथाभिनिवेशो वा, परस्वे ग्राह्यत्वधीर्वा । (त.टी. 76)

**अभिध्यानम्** — 1. आलम्बनसंशीलनम् ।

'तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे. उ.1-10) योजनम्—योगः । तत्त्वभावः - तत्त्वाविर्भावः - साक्षात्कारः [अन्वैतयोः पृथगुक्तेः अभिध्यानशब्दः व्युत्थानकाले दिव्यमङ्गलविग्रहविशिष्टचिन्तनपरः इति भावः । ]

2. सङ्कल्पः । 'पराभिध्यानात्तु तिरोहितम् . . . '(ब्र.सू. 3-2-4)

3. आभिमुख्येन ध्यानम् । 'परं पुरुषमभिध्यायीत ' (प्र.उ. 3-5-5) निरन्तरं ध्यायतीत्यर्थः । (रं.भा.)

4. निपुणतया निरूपणम् । 'अभिध्यायन् वर्णरतिप्रमोदान् अनतिदीर्घे जीविते को रमेत' (क.उ. 1-28) आदित्यवर्णत्वादिरूपविशेषान्, ब्रह्मभोगादिजनितानन्द-विशेषान् निपुणतया निरूपयन् ऐहिके को रमेत ॥ (रं.भा.)

**अभिध्योपदेशाच्च** — (ब्र.सू. 1-4-24)

(प्रकृत्यधिकरणे द्वितीयं सूत्रम)

इतश्च ब्रह्मैव निमित्तमुपादानञ्च । 'सोकामयत बहु स्यां प्रजायेयेति' 'तदैक्षत बहु स्यां प्रजायेय' इति स्रष्टुर्ब्रह्मणः स्वस्यैव बहुभवनसंकल्पोपदेशात् ।

विचित्रचिदचिद्रूपेण अहमेव बहु स्याम्, तथा प्रजायेयेति सङ्कल्पपूर्विका हि सृष्टिरुपदिश्यते ।

'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति पूर्वसूत्रस्य प्रतिज्ञावाक्येन अस्यः हेतोरन्वयः । 'सङ्कल्पोपदेशात्' इत्यन्तेन सूत्राक्षरार्थः उक्तः । बहुभवनं रामकृष्णादिवच्च संभवतीति तद्व्यावृत्त्यर्थं आह विचित्रचिदचिद्रूपेणेति — 'तत्तेजोऽसृजत' इति तेजः प्रभृति सृष्टेः अनन्तरोक्तत्वात् चिदचिद्रूपेण बहुत्वस्य विवक्षितत्त्वमित्यर्थः ।

स्वस्यैव बहुभवनादुपादानत्वं, बहुभवनस्य सङ्कल्पसामानाधिकरण्यात् निमित्तत्वमिति भावः ।

बहु स्यामिति सङ्कल्पश्रुत्या ब्रह्मैव कारणम् ।
उपादानं निमित्तं च जगतोऽस्येति निश्चितम् ॥ (ब्र.प.मा. 133)

**अभिनयः** — अवतारकाले परस्यापि अशक्तत्वनटनम् ।

1. साक्षादिवार्थाकाशादिप्रदर्शिका हस्तादिक्रिया ।
2. अभिलापकशब्दोच्चारणम् ।। (न्या.को.)

**अभिन्ननिमित्तोपादानम्** — निमित्तत्वमुपादानत्वञ्चब्रह्मगतं ।

नोपादानं निमित्तं किमपि तदितरत् कारणं तद्धि विद्मो
यद्वा सिद्धं निमित्तं न भजति तदुपादानतामित्ययुक्तम् ।
इष्टादाकारभेदादुभयघटनतो लोकवेदानुरोधे
सिद्धे स्वच्छन्दलक्ष्मप्रणयनकुसृतिः पाकचिन्ताविपाकः ॥ (अ.सा. 147)

यत् समवायिकारणं यच्चासमवायिकारणं (तदुभयव्यतिरिक्तकारणं) निमित्तकारणमिति हि न्यायवादिभिः लक्षणं अभाणि । तेन यदुपादानं तन्निमित्तं न भवति । यच्च निमित्तं तदुपादानं न भवति इति नियमस्य सिद्धत्वात् निमित्तोपादानैक्यवादो न घटत इति पूर्वपक्षः ।

लोके हि तुलायां प्रमाणप्रमेयव्यवहारन्यायेन एकस्यैव पदार्थस्य सर्वलक्षणयोगे सति आकारभेदात् नानात्वव्यवहारयोगित्वं सिध्यतीति नियमेसिद्धे सति स्वकपोलकल्पितन्यायेन उपादानव्यतिरिक्तं निमित्तं निमित्तव्यतिरिक्तं उपादानं इति परस्पर विरोधप्रणयनकुसृतिः बालचिन्ताविपाक एव । किञ्च युष्मत्सङ्केतसिद्धनिमित्तशब्द-

वाच्यत्वाभावेऽपि उपादानकारणस्यैव कर्तृत्वं सुप्रसिद्धमेव । तदेवं ईश्वरस्य उपादानत्वं कर्तृत्वं चाविरुद्धमिति न किञ्चित्सङ्कटम् । (चि. म.)

अयंभावः – सिद्धान्तमुक्तावल्यां 'नीलघटयोरभेदः' इत्यादौ भावप्रधाननिर्देशेन पदार्थतावच्छेदकधर्मयोः भेदात् द्वन्द्वः कृतः, ततः अभेद इत्यत्राश्रयाभेदः इत्यर्थो वर्णितः । तथैव प्रकृतेऽपि भावप्रधाननिर्देशेन निमित्तत्वोपादानत्वयोः आश्रयाभेदेन 'अभिन्ननिमित्तोपादानं ब्रह्म' इति प्रयोगः प्रामाणिक एव । एतेन निमित्तभूतस्यैव ब्रह्मणः उपादानत्वात् भेदाभावेन द्वन्द्वोऽनुपपन्न इति शङ्का च दूरीकृता ॥

**अभिनिवेशः** — मनोवृत्तिविशेषः ।

'अभिनिवेशवशीकृतचेतसां बहुविदामपि सम्भवति भ्रमः' । (आ. प्रा. 3)

1. दृढाध्यवसायः । 2. आग्रहः । (सं.अ.)

क्लेशः । पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलात्सर्वस्य प्राणभृन्मात्रस्य आकृमेः आविदुषः संजायमानः शरीरविषयादे र्मम वियोगो माभूदिति प्रत्यहं निमित्तं विना प्रवर्तमानो भयरूपोऽभिनिवेशः ॥ (न्या. को.)

**अभिनिष्पत्तिः** — 1. आविर्भावः ।

'स्वेनरूपेणाभिनिष्पद्यते' (छां.उ. 8-12-2)

स्वरूपाविर्भावेऽप्यभिनिष्पत्तिशब्दो दृश्यते, युक्त्या अयमर्थो निष्पद्यते इत्यादिषु ।(श्री.भा.4-4-2)

2. तिरोधाननिवृत्तिः । अतो नित्यप्राप्तस्यापि स्वरूपस्य तिरोधाननिवृत्तिः अत्राभिनिष्पत्तिः उच्यते । (श्री.भा. 4-4-2)

3. धर्मभूतज्ञानविकासरूपाविर्भावः । विकासस्य जन्यत्वेऽपि, निर्मुक्तकर्मरूपोपाधिकात्मस्वरूपनिबन्धनत्वात् तस्य अभिनिष्पत्तिशब्दो योयुज्यते ।

4. उत्पत्तिः । घटः अभिनिष्पद्यते इत्यादौ ॥

**अभिप्रायः** — (स.ना. 875)

सत्यधर्मनिष्ठेन स्वच्छेन निरुपाधिकोद्देश्यतया अभिप्रेतः । (वि.स.भा.)
सत्यधर्मनिष्ठेन स्वच्छेन सद्यो निरुपाधिकोद्देश्यतया अभिप्रेयते अभिसन्धीयते इति । (वि.स.निर्व.)

निरुपाधिकोद्देश्यत्वादभितः प्रेयते च यः ।
अभिप्रायस्सविज्ञेयः वस्स्वर्णो मनुरुत्तमः ॥ (वि.स.नि.)

**अभिभूतः** — 1. सम्पन्नः ।
'स यदा तेजसा अभिभूतो भवति' (प्र.उ. 4-6)

'तेजसा हि तदा सम्पन्नो भवति' इति श्रुत्युक्तरीत्या परप्रकाशकतया तेजश्शब्दितेन परमात्मना अभिभूतो भवति, सम्पन्नो भवति, सम्परिष्वक्तो भवति तिइ यावद् । (रं.भा.)

2. तिरस्कृतः । परतन्त्रः ॥ (वि.को.)

**अभिमन्त्रणम्** — आभिमुख्येन मन्त्रोच्चारणम् ।
द्रव्यशुद्ध्यापादकमन्त्रपठनम् ॥ (सं.अ.)

**अभिमानिदेवता** — इष्टदेवता ।

स्वस्य विभूतिभूतचक्षुरादीनि सङ्कल्परूपेण, स्वस्वरूपेण वा अधिष्ठाय तेषां कार्यसामर्थ्यापादकदेवता । यथा चक्षुरिन्द्रियाभिमानिदेवता सूर्यः । सर्वेषामभिमानि देवता तु परमात्मैव ॥ (सं.अ.)

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** — (ब्र.सू. 2-1-5)
( विलक्षणत्वाधिकरणे द्वितीयं सूत्रम् )

विशेषण, अनुप्रवेशाभ्यां अभिमानिदेवता व्यपदिश्यते । विशेषः —विशेषणम्, अनुगतिः —अनुप्रवेशः । 'तंपृथिव्यब्रवीत्' 'आपो वा अकामयन्त' इत्यादौ ज्ञानकार्यव्यपदेशः तत्तदभिमानिदेवताविषयः इति ।

'हन्ताहमिमास्तिस्रो देवताः' इति तेजोबन्नानि देवताशब्देन विशेष्यन्ते; 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्' इत्यादिना वागाद्यभिमानित्वेनाग्न्यादीनामनुप्रवेशः श्रूयते । सलक्षणयोरेव कार्यकारणभावस्य दर्शनात् जगतोऽचेतनत्वेन विलक्षणत्वात् ब्रह्मकार्यत्वं न घटते सलक्षणयोरेव तद्दर्शनात्, प्रधानमेव जगत्कारणं स्यादिति शंका प्रस्तुता —

ततः अचेतनत्वेनाभिमतानामपि चैतन्ययोगः श्रुतिषु श्राव्यते 'तं पृथिव्यब्रवीत्' इत्यादिना । अतो न वैलक्षण्यमिति चेत्; तदप्यनेन निरासि, पृथिव्याद्यभिमानिदेवतानामेव तत्र तत्र ग्रहणात् । तथा च पृथिव्यादीनां न चैतन्यमिति विलक्षणत्वात् जगतः ब्रह्मकारणं नैव भवितुमर्हति इति पूर्वपक्षः दृढीकृतोऽनेनेतिबोध्यम् । सिद्धान्ते 'दृश्यते तु' इत्यादिसूत्रैः विलक्षणयोरपि कार्यकारणभावसमर्थनात् ब्रह्मकारणत्वं प्रसाध्यते ।

अभिमानिविवक्षातः तं पृथिव्यब्रवीदिति ।
देवतास्तित्र इत्युक्तेः प्रवेशादपि कीर्तितात् ॥ (ब्र.प.मा. 143)

**अभियुक्ततमः** — ब्रह्मविद्योपदेष्टा ।

'केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत् तदानीमेव 'अहं तावत् जीवतः पुत्रः; मत्पिता च सर्वसम्पत्समृद्धः' इति निरतिशयहर्षसमन्वितो भवति' ।
(श्री.भा. 1-1-4)

यदा अध्ययनादिकारयिता गुरुरेव ब्रह्मोपदेष्टा सम्भवति, तदायमभियुक्ततमः-शब्दः, तमेवाभिधत्ते । तदसंभवे ब्रह्मोपदेष्टृपुरुषमात्राभिप्रायः । (श्रु.प्र.)

ज्ञानी । विरक्त इति यावत् ॥ (वि.को.)

**अभियुक्तत्वम्** — वेदप्रामाण्यादिनिरूपणाधिकृतत्वम् ।

अभियुक्ताश्च ये यत्र यन्निबन्धप्रयोजनाः ।
तत्तत्यगुणदोषाणां ज्ञाने चाधिकृता मताः ॥

इत्युक्तत्वात् ॥ (श्री.भू.व्या. 80)

**अभियुक्ताः** — सर्वशरीरकपरमात्मस्वरूपादिप्रतिपादकशास्त्रप्रवर्तकाः ।

'स्वव्यतिरिक्तचेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः शारीरः आत्मा । अत एवेदं परंब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते' ।
(श्री.भा1-1-13)

भगवद्बोधायन टङ्क द्रमिड गुहदेव कपर्दि भारुचि प्रभृतयः । (वे.सं.156)

अर्वाचीनाः शठकोप नाथ यामुन रामानुजमुनयश्च विवक्षिताः ॥

2. अभियोगं काङ्क्षमाणाः ।

'तेषां नित्याभियुक्तानाम्' (गी. 9-22) 'आशंसायां भूतवच्च'(पा.सू. 3-3-132) इत्यनेन 'क्त' प्रत्ययः ॥

**अभिरक्षणम्** — अभितो रक्षणम् ।

क्रतुफलाप्रतिबन्धकरणादि । (श्रु. प्रदी. 504)

'मन्त्रादिना सर्वतः श्वेतसर्षपादिविक्षेपैः यातुधानादिभ्यः रक्षणम्' इति वाचस्पत्यम् ॥

**अभिवदनम्** — आशिषः प्रयोगः ।

'त्वत्प्रसृष्टं माऽभिवदेत्' (क.उ. 1-10) 'अभिवदति नाभिवादयते' इति स्मृतिषु अभिवदनस्य आशीर्वादे प्रयोगात् । (रं.भा. ) नमस्कारः ॥ (वि.को.)

**अभिविधिः** — तेन सहाभिव्याप्तिः ।

'आङ्मर्यादाभिविध्योः' (पा.सू.2-1-13) यथा 'आबालं हरिभक्तिः' इत्यादिषु । तेन विना मर्यादा ; तेनसहाभिव्याप्तिः अभिविधिः इति भिदा । अभिविधिः द्विविधः । कालिकः दैशिकश्च ॥

**अभिविमानः** — सर्वव्यापकः परमात्मा ।

'यस्त्वेतमेवं प्रादेशमात्रं अभिविमानमात्मानं वैश्वानरमुपास्ते'(छां. उ. 5-18-1) सर्वाभिव्याप्ततया विगतमानः वैश्वानरशब्दवाच्यः परमात्मा । (रं.भा.)

प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयत इति अभिविमानः । अभिगतो वाऽयं प्रत्यगात्मत्वात्, विमानश्च मानवियोगात् इत्यभिविमानः । अभिविमीते वा सर्वं जगत्कारणत्वात् इत्यभिविमानः इति वाचस्पत्यम् ॥

**अभिव्यक्तिवादः** — दर्शनयोग्यतावादः ।

कार्यकारणभावविषये सत्कार्यवादिनः सांख्यास्तु कारणे कार्यं देवेति-कारकव्यापारेण तदभिव्यज्यते । अत एव कारकप्रयत्नसाफल्यमित्याहुः । अत्रोच्यते-

काचेयमभिव्यक्तिः, किं कार्यात्मनावस्थानं, अथ संस्थानविशेषः, उत प्रतीतिरिति। नाद्यः, तत्पूर्वम् नाभूत् अधुना भूतमिति, असदेव कार्यम्। पूर्वमपि यदि तदासीदिति कारकव्यापारवैफल्यम्। संस्थान (अवस्था) मपि अनित्यमेव। अनित्यधर्मोह्यवस्था। तदानीं घट इत्यादिप्रतीतिरपि नास्तीति सांख्यसम्मताभिव्यक्तिवादः न घटते।

सिद्धान्ते तु उत्पत्तिविनाशादीनां कारणभूतस्यैव द्रव्यस्य अवस्थाविशेषत्वाभ्युपगमात् सर्वे दोषाः परिहृताः। द्रव्यस्य तत्तदवस्थत्वं कारकव्यापारायत्तमिति तस्यार्थवत्त्वम्। अवस्थायाः अभिव्यक्तिरनभ्युपेता चेत् उत्पत्तिः स्वीकृता स्यात्। तदानीं असत्कार्यवादः प्रसज्येत इति चेत् तदभ्युपगमेपि सत्कार्यवादो न विरुध्यते, सत एवोत्पत्तेः। विप्रतिषिद्ध मिदमभिधीयते। पूर्वमेव सत् तदुत्पद्यते च इति। अज्ञातोत्पत्तिविनाशयाथात्म्यस्येदं चोद्यम्। द्रव्यस्योत्तरोत्तरसंस्थानयोगः पूर्वपूर्वसंस्थानस्थितस्य विनाशः, स्वावस्थस्य-तूत्पत्तिः। अतः सर्वावस्थस्य द्रव्यस्य सत्वात् सत्कार्यवादो न विरुध्यते। संस्थानस्य असतः उत्पत्तौ असत्कार्यवाद प्रसंग इति चेत् असत्कार्यवादिनोपि उत्पत्तेः अनुत्पत्तिमत्त्वे सत्कार्यवादप्रसंगः। उत्पत्तिमत्त्वेच अनवस्था। अस्माकं तु अवस्थानां पृथक्प्रतिपत्ति-कार्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यम्। (श्री.भा. 2-253)

तथा च सिद्धान्तेपि सत्कार्यवादस्यैव सम्मतत्वेपि सांख्यसम्मतः कार्यस्याभिव्यक्ति-वादः नांगीक्रियते इति बोध्यम्॥

**अभिव्यक्तेरित्याश्मरथ्यः — (ब्र. सू. 1-2-30) (वैश्वानराधिकरणे षष्ठं सूत्रम्)**

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मनः इत्याश्मरथ्यः आचार्यो मन्यते। 'द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः, पृथिवी पादौ' इति द्युप्रभृति प्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नं अभिव्याप्त-वतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोः भवति।

फलस्यापि हेतुत्वविवक्षया हेतौ पञ्चमी प्रयुक्ता। एतेन 'यस्त्वेतमेवं प्रादेशमात्र अभिविमानं' इत्यपरिच्छिन्नस्य परस्य ब्रह्मणः द्युप्रभृतिपृथिव्यन्तप्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते इति शङ्का पर्यहारि।

द्युमूर्धत्वादिमात्राभिः परिच्छिन्नत्वमत्र तु।
उपासकाभिव्यक्तेरित्याश्मरथ्यमुनेर्मतम्॥ (ब्र. प. मा. 62)

**अभिव्यापकः** — सकलावयवव्याप्तिकृतः आधारः ।

आधारः त्रिधा । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेति । (सि. कौ. 633) यथा–'सर्वस्मिन् आत्मास्ति' इत्यादौ ॥

**अभिव्याप्तिः** — अभिविधिः ।

स च तदारम्भकयावदवयवावच्छेदेन तत्संयुक्तत्वम् । (न्या.को.) यथा आसकलाद्‌ब्रह्मेत्यादौ, आङ्द्योत्योऽभिविधिरूपः सम्बन्धः पञ्चम्यर्थः । सकलव्यापकं ब्रह्मेति बोधः ॥

**अभिश्रीः** — श्रीविशिष्टः ।

'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानां अभिश्रीः' (यजु. 1-5-11) 'श्रियमिच्छेत् हुताशनात्' इत्युक्तत्वात् अभितः श्रीः यस्य सः अभिश्रीः । (श्र. प्र. 1-2-25) वैश्वानरशब्दवाच्यपरमात्मविषयक उपासकाः स्याम । श्रीविशिष्टः स एव हि सकलप्रपञ्चस्य राजा सकलफलप्रदश्च ।

तद्धेतुव्यपदेशन्यायेन स्वयं श्रीविशिष्टत्वादेव तस्मात् श्रियं इच्छेत् इत्युक्तिः । वैश्वानरोपासकस्य श्रियःप्राप्तिः फलम् । 'श्रियमिच्छेत् हुताशनात्' इत्यत्र हुताशनपदमपि वैश्वानरशरीरकपरमात्मपरमिति व्यासार्याशयः ॥

**अभिष्टुतः** — स्तूयमानः परमात्मा ।

'सनकाद्यैरभिष्टुतः' (वि.पु. 1-4-10) 'स्तूयमाना हि देवता वीर्येण वर्धते' इति न्यायात् सृष्ट्यर्थमुद्‌बोधितमहिमा । (वि. चि.)

भगवतः स्तोत्रकरणे निदानमनेन प्राकाशि ॥

**अभिष्वङ्गः** — 1. मनोविकारविशेषः ।

विषयमभुक्त्वा स्थातुं न शक्नोति येन, स विकारो अभिष्वङ्गः । (श्र.प्र. 1-64)

2. अतिसक्तिः । (ता.चं. 13-9)

अत्यासक्तिः अनुरागो वा ॥ (वि.को.)

**अभिसन्धिः** — सङ्कल्पः ।

'अभिसन्ध्यादिष्वपि चैवम्' (ब्र.सू. 2-3-51)

1. अध्यवसायः । 2. अभिप्रायः । 3. उद्देशः ।। (सं.अ.)

**अभिसन्ध्यादिष्वपि चैवम्** — (ब्र.सू. 2-3-51) (अंशाधिकरणे दशमं सूत्रम्)

अनिष्टादिहेतुभूताभिसन्ध्यादिष्वपि एवं उक्तादेवहेतोः अनियमं एव ।

अभिसंधिः – संकल्पः, आदिशब्दादुद्योगानुष्ठानादिकं विवक्षितम्; तथा च पारमार्थिकोपाध्युपहितब्रह्मजीववादे उपाधिभेदात् भोगव्यवस्थादयो नोपपद्यन्ते । उपाधिपरंपराहेतुभूतादृष्टसंकल्पादिभिः, उपाध्याश्रयस्यैकत्वेन तस्यचाच्छेद्यत्वात् भोगव्यवस्थानुपपत्तिः । अतः जीवः ब्रह्मणो भिन्नः, अंशः इत्येव स्वीकर्तव्यमिति भावः ।

अभिसन्धेस्त्वदृष्टादि जायते चेति चेन्न हि ।
नियमस्त्वभिसन्ध्यादौ न वक्तुं शक्यते यतः ।। (ब्र.प.मा. 267)

**अभिसमावर्तनम्** — अध्ययनानन्तरकालिकव्रतविशेषः ।

'गुरोः कर्मातिशेषेणाभिसमावृत्य' (छां. उ. 8-15-1) समावर्तनं कृत्वा, गुरुकुलान्निवृत्येत्यर्थः ।। (रं. भा.)

**अभिसम्भवः** — प्राप्तिः ।

'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूमं अभिसम्भवन्ति'
(छां. उ. 5-10-3)

धूमदेवतां प्रतिपद्यन्ते आतिवाहिकत्वेनेत्यर्थः । (रं. भा.)

अत्र भवतिः – प्राप्तिवाची, परस्मैपदित्वं तु छान्दसम् । यद्वा सत्तार्थो भवतिरेवोपसर्गवशात् प्राप्त्यर्थः । (श्रु. प्र. 3-1-6)

'भू – प्राप्तौ' आत्मनेपदी । 'णिचूसन्नियोगेनैवात्मनेपदमित्येके' इति कौमुदयुक्तरीत्या 'णिचः' वैकल्पिकतया प्राप्त्यर्थकत्वमस्य स्वरसमेवेति च बोध्यम् । अभिसम्भवन्ति – अभिप्राप्नुवन्ति इति प्रयोगाः द्रष्टव्याः ।।

**अभिसम्भविता** — प्राप्ता (उपासकः) ।

'एतमितःप्रेत्याभिसम्भविताऽस्मि' (छां. उ. 3-14-4) प्राप्यतया परंब्रह्म,

प्राप्तृतया च जीवः व्यपदिश्यते । अतः प्राप्ता जीवः उपासकः, प्राप्यं परंब्रह्म उपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते । (श्री. भा. 1-2-4) अतः उपास्यं ब्रह्म उपासकाज्जीवात् विलक्षणमित्यर्थः ; स्वरूपस्यैव प्राप्यत्वमिति चेत् श्रुतिस्वारस्यभङ्गः । (श्रु. प्र.) अभिसम्भाव्यः परमात्मा, अभिसम्भविता जीवः इति भेदः । अयं च प्राप्यप्राप्तृभेदः 'कर्मकर्तृव्यपदेशाच्च' इति सूत्रेण प्रत्यपादि । ताच्छील्ये तृन्नन्तोयम् । अतः 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा.सू.2-3-69) इति सूत्रेण षष्ठीनिषेधात् द्वितीयैव । अतः कृद्योगे षष्ठीविधानात् लुडन्तताश्रयणपक्षः वारितः । अनेन ताच्छील्यार्थकतृन्प्रयोगेण परब्रह्मप्राप्तिरपि दायप्राप्तिवत् सहजैव , प्राप्तेः भविष्यत्कालिकत्वेपि 'वर्तमानसामीप्ये वर्तमानवद्वा ' (पा.सू.3-3-131) इत्यनेनास्मीति प्रयोगोपि स्वरस एवेति चासूचि ॥

**अभिसंहितफलम्** — अपेक्षितफलकं कर्म ।

अभिसंहितं फलं यस्य । ऐहिकामुष्मिकपशुस्वर्गादिफलमुद्दिश्य क्रियमाणं काम्यं कर्म ॥ (सं. अ.)

**अभिस्नेहः** — प्रवृत्तिपर्यन्तस्नेहः ।

उपसर्गसमभिव्याहारबलात् अर्थविशेषः ॥ (वि.को.)

**अभिहितान्वयवादः** — अभिहितानामर्थानामन्वयः ।

द्विविधं हि वाक्यार्थप्रक्रियाभेदमाहुः, तत्तत्तन्त्रनिष्ठाः । अन्विताभिधानं अभिहितान्वयः इति ।

संसर्गं वाक्यवेद्यं स्फुटमभिदधते कानिचिद्भाष्यवाक्या-
न्याद्यव्युत्पत्तिरुक्ता प्रतिपदमिह च क्वापि नान्यस्य हानिः ।
इत्थं मत्वा सयूथ्याः कतिचिदभिहितान्योन्यसंसर्गमीषुः
तत्तत्स्वारस्यलोकप्रतिपदनुगमात्तच्च नाधिक्षिपामः ॥ (त.मु. 18 )

संसर्गमेव वाक्यवेद्यं कानिचिद्भाष्यवाक्यान्यभिदधति । तदनुकूलं चाम्बाताततमातुलादिभिर्बालानां प्रतिपदव्युत्पत्त्यभिधानं भाष्यकारस्य । तदेतदाह - आद्येति ।

एतत्पक्षस्वीकारे नान्यस्य प्रधानार्थस्य हानिः । तदिदमाह - इह चेति । यत्तु शक्तित्रयकल्पनागौरवमभिहितं, तदपि नास्ति; पदानामेव पदार्थाभिधानशक्तेः स्वीकारात् । अर्थानां संसर्गबोधनसामर्थ्यं स्वाभाव्यमेव; शब्दाभिधानमन्तरेणपि प्रतीतानामर्थानां संसर्गबोधनसामर्थ्यस्य लोके दृष्टत्वात । अन्यथा कथमिव कवयः परामृश्यमानैः पदार्थैं र्वाक्यार्थं प्रतिपद्य स्वयमेव वाक्यं रचयेयुः ? शाब्दत्वं च शब्दान्वयव्यतिरेकाभ्यामेव युज्यते; वाक्यार्थस्याव्यवधाने त्वनादरः; अतोऽभिहितान्वय एव स्यादिति केचिदाचार्याः। तदेतदाह - इत्थमिति । (स.सि.)

इदन्तु भाट्टमतम् । अन्विताभिधानं प्राभाकरमतम् । अभिहितानामर्थानामन्वयः अभिहितान्वयः । अत्रमते पदार्थानामन्वयः न अभिधाविषयः । अन्यत्र तु अर्थान्तरान्विते क्रियान्विते वा अर्थे एव पदस्य शक्तिः; न शुद्धे अर्थे । अत्रान्वयोऽपि शक्तिविषयः । अर्थान्तरेण क्रियया वा अन्वितस्यार्थस्य पदेनाभिधानं इत्यन्विताभिधानमित्युच्यते । तत्रापि सामान्यान्वितत्वं विशेषान्वितत्वमिति पक्षद्वयम् ॥ (मी. को.)

अभेदः -- 1. ऐक्यम् ।

ऐक्यवादाश्च शरीरात्मभावेनसामानाधिकरण्यमुख्यार्थतोपपादनादेवसुस्थिताः —

एवञ्च सति, अभेदो वा - भेदो वा - द्व्यात्मकता वा वेदान्तवेद्यः कोऽयमर्थस्समर्थितोभवति ? सर्वस्य वेदवेद्यत्वात् सर्वं समर्थितम् । सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदः समर्थितः । एकमेव ब्रह्म, नानाभूतचिदचिद्वस्तुप्रकारम् , नानात्वेनावस्थितम इति भेदाभेदौ । अचिद्वस्तुनश्च चिद्वस्तुनश्च ईश्वरस्य च, स्वरूपस्वभाववैलक्षण्यात् असंकराच्च भेदस्समर्थितः । (वे.सं. 214)

परैरुक्तोऽभेदः, भेदाभेदौ च, भेदश्रुतिविरोधात् अमुख्यत्वाच्च न प्रामाणिकाः, भेदश्रुत्यविरुद्धौ भेदाभेदौ, अभेदश्चास्मदभिमताः इत्यभिप्रायः । (ता.दी. )

परोक्तभेदाभेदवादः अङ्गीकृत एवेत्याघ्रातः अज्ञानमूलैव - जातिव्यक्त्योः भेदाभेदवादिनस्तु एकनिष्ठतामभिप्रयन्ति, सिद्धान्ते तु नैयायिकादाविव त्यन्तभेद एव सविशेषधर्मिगतः अभेदः प्रकारगतश्च भेद इति विवेकः । अत एवोक्तम् -

'एकत्वे सति नानात्वं नानात्वे सति चैकता' इति ।

साजात्यनिबन्धनाभेदव्यवहारस्तु 'सेयं दीपज्वाला' इत्यादौ गौण एव ।

2. पक्षपातशून्यः । वैषम्यनैर्घृण्यशून्यः इति यावत् ।

3. भेदाभावः ॥

**अभेदव्यपदेश** :—ऐक्यबोधकमुख्यव्यवहारः ।

अभेदव्यपदेशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तत्वं आश्रित्य मुख्यत्वेन उपपद्यन्ते । 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिषु तच्छब्दब्रह्मशब्दवत् 'त्वम्' 'अयमात्मा' इति शब्दा अपि; जीवशरीरक ब्रह्मवाचकत्वेनैकार्थाभिधायित्वात् ।
(श्री.भा.2-3-45)

[अभेदस्य स्वरूपैक्यपरत्व-औपचारिकत्व शङ्काच 'अंशोनानाव्यपदेशात्' इति सूत्रघटक 'अपि दाशकितवादित्वमधीयत एके' इत्यनेननिवार्यते ।] सौत्रोऽपि शब्दो भेदतात्पर्यं द्योतयति । उत्कृष्टैः सामानाधिकरण्ये अभेदस्यौपचारिकत्वशङ्का स्यात्, इह तु दाशकितवादिनिकृष्टसामानाधिकरण्यमभेदस्य तात्त्विकत्वं द्योतयतीत्यर्थः ।
(श्रु.प्र. 2-3-42)

उत्कृष्टैः सामानाधिकरण्य इति – श्रुताध्ययनसम्पन्नः साक्षाद्विष्णुरित्युक्ते स्तुति परत्वमुपपद्यते, निकृष्टसामानाधिकरण्यं तु न ब्रह्मणः स्तुतये भवति, विरुद्धत्वात्, नापि दासादीनां स्तुतये, तेषां स्तुत्यनर्हत्वात्, नापि ब्रह्मणो निन्दायै - ब्रह्मणो निन्द्यत्वाभावात्, नापि दासादीनां निन्दायै वा - असम्भवात्, तस्माद्ब्रह्मणः दासादिसामानाधिकरण्यमभेदस्य तात्त्विकत्वमेव द्योतयतीत्यर्थः ॥ (भा.प्र.)

माध्वास्तु — सर्वेषां घटादिपदानां घटत्वावच्छिन्ने तदवच्छिन्ननियामकत्वावच्छिन्ने च शक्तिद्वयम् । तत्र ब्रह्मणि मुख्यशक्तिः इतरत्रामुख्य शक्तिरिति भेदः । तथाच 'सर्वं खल्विदं ब्रह्म' इत्यत्र सर्वपदस्य सर्वनियामकत्वावच्छिन्नपरतया तदभेदस्य ब्रह्मण्यबाधात् सामानाधिकरण्योपपत्तिः । एवमेव 'व्यक्तं विष्णुस्तथाऽव्यक्तं' 'ज्योतींषिविष्णुः' इत्यादाव प्यूह्यम्।नियामकत्वं च तदीयचेष्टासामान्यप्रयोजकेच्छावत्त्वं अतो न 'राजा भृत्यः' इति व्यवहारापत्तिः; भृत्यचेष्टासामान्यस्य राजेच्छाप्रयुक्तत्वविरहात् ईश्वरातिरिक्तस्थले गुणगुणिनोः भेदाभेदांगीकारात् नीलमुत्पलं, उत्पलस्य रूपं इत्यादिव्यहारोपपत्तिः ब्रह्म-

तद्गुणयोरत्यन्ताभेदाच्च सत्यंज्ञानमित्याद्युपपत्तिश्च अभेदे भेदकार्यकरण समर्थस्यविशेषस्याभ्युपगमात् आनंदं ब्रह्मणोविद्वान् इत्यादि भेदव्यवहारोपपत्तिः इत्याहुः ।

अत्र घटादिपदानां घटत्वावच्छिन्ने तदवच्छिन्ननियामकत्वावच्छिन्ने च शक्तिरित्यत्र नास्माकं विरोधः; शरिरवाचिशब्दानां शरीरिपर्यन्तत्वमितिवदतां अस्माकमपि शक्तिद्वयस्येष्टत्वात् ; 'यस्य चेतनस्य यद्द्रव्यम् सर्वात्मना स्वार्थे नियाम्यं तत्तस्य शरीरम् ' इति श्रीभाष्योक्त शरीरत्वप्रतिसम्बन्धिशरीरीत्वस्य उक्तनियामकतायामेव पर्यवसानात् । भेदाभेदाभ्युपगमस्तु पूर्वमेवनिरस्तः । विशेषबलात् आनन्दं. ब्रह्मणः इति भेदव्यवहारसमर्थनं तु हेयं; विशेषस्य षष्ठ्यर्थत्वाभावेन आधाराधेयभावस्य च तदर्थस्य भेदव्याप्यत्वेन प्रकृते च आनन्दे ब्रह्मभेदाभावेन तद्व्याप्यस्य ब्रह्माधेयत्वस्यापि बाधेन आनंदं ब्रह्मणः इति वाक्यस्य बाधितार्थकत्वप्रसंगात् ।

सिद्धान्ते तु घटादिपदानां घटादि शरीरकपरब्रह्मण्येव शक्तिः, घटादौ निरूढलक्षणा, कोशादिश्च निरूढलक्षणाग्राहकः, न शक्तिग्राहकः; तद्ग्राहकश्च 'सर्वे वेदा यत्पदमामनंति' 'वेदैश्च सर्वैरहमेववेद्यः' 'वचसां वाच्यमुत्तमम्' इत्यादिश्रुतिस्मृतिपुराणादिः आकरे व्यक्तः । (वे.वा. 15-12-13)

निष्कर्षस्तु — अपर्यवसानवृत्त्या सर्वशब्दानां परमात्मन्येव मुख्यता । लोकव्यवहारानुरोधेन अन्यत्र शक्तिरपि स्वीक्रियते ।

**अभेदव्यापी** — अभेदेन - सामान्याकारेण व्यापी ।

'अभेदव्यापिनो वायोस्तथाऽस्य परमात्मनः (वि.पु. 2-4-32)

अभेदेन - वायुत्वाकारेण व्यापिनः । अत्र परमात्मशब्देन आत्मैवोच्यते परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः । तैरेव दिगतः शुद्धः परमात्मा निगद्यते । इत्यादिदर्शनात् ।। (वि.चि.)

**अभेदश्रुतितात्पर्यम्** — जगद्ब्रह्मणोरैक्यबोधकश्रुतितात्पर्यम् ।

कार्यकारणभावस्थले कार्यावस्थापन्नस्य कारणावस्थापन्नेनैक्यं अवस्थाद्वयापन्नवस्त्वेकत्वम् । यथा मृत्पिण्डोऽयं घटः सदेवेदं ब्रह्मैवेदम् इत्यादौ । अन्यत्र एकविशेषणविशिष्टस्यापरविशेषणविशिष्टेनैक्यम् । यथा - नीलोघटः तत्त्वमसि इत्यादौ ।

इयाननयोर्विशेषः - कार्यकारणभावस्थले भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्म्यैक्यम् । यथा 'सएवायं तरुणोऽभूत्' इति । अन्यत्र समानकालीनाद्वारकविशेषणाश्रयधर्म्यैक्यम् । यथा, 'वेदवित् ब्राह्मणः' इति । आद्यस्थले बाल्ययौवने भिन्नकालीने शरीरद्वारा विशेषणभूते अवस्थे । अनन्तरस्थले वेदनं ब्राह्मणशरीरं च समकालीने अद्वारकविशेषणे । एवमुभयविधविशेषणविशिष्टयोः धर्मिणोः एकत्वं अभेदश्रुत्यर्थः । सामानाधिकरण्यतात्पर्यभूमिरिति यावत् । (द.उ. 196)

केचिदाहुः – लोकेतावत् राजभृत्ययोरिव जीवेश्वरयोः भेदः श्रुत्या प्रतिपाद्यते इति चेत् श्रुतेः अनुवादकत्वप्रसङ्गः अतः स्वरूपैक्यरूपाभेद एव श्रतितात्पर्यमिति । अत्रोच्यते – जीवपरयोः नियन्तृनियाम्यता, आधाराधेयता शेषशेषिभावादिभेदस्य अलौकिकत्वात् तादृश भेदस्य अनुवादासम्भवः । अतएव अभेद श्रुतेः न स्वरूपैक्ये तात्पर्यम् । ऐक्यं तावत् भेदाविरोधेन विशिष्टनिष्ठं मुख्यमेव । तथोक्तं व्यासार्यैः दहराधिकरण व्यख्यानावसरे जीवपरयोः नियन्तृनियाम्यतादिलक्षणभेदस्यालौकिकत्वात् इति ॥

**अभेदान्वयबोधनियामकता** — प्रवृत्तिनिमित्त भेदस्य अभेदान्वयबोधनियामकता ।

अतएव भाषितम् – सत्यत्वादीनां ब्रह्मस्वरूपत्वे सामानाधिकरण्यासिद्धिश्च एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणादिति ॥ (वे.वा. 15-3)

**अभेदी** — देवादिभेदरहितः ।

'भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्' (वि.पु. 6-8-95)

ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः तदन्वयोऽस्य कर्मरूपाज्ञानमूलः, न स्वरूपकृतः स तु देवादिभेदः परब्रह्मध्यानेन कारणभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावात् निवर्तते इत्यभेदी भवति । यथोक्तम्-

एकस्वरूपभेदस्तु बाह्यकर्मवृत्तिप्रजः ।

देवादिभेदेऽपध्वस्ते नास्त्यनावरणो हि सः ॥ इति । एतदेव विवृणोति,

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।

आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ इति ।

विभेदः – विविधो भेदः, देवतिर्यङ्मनुष्यस्थावरात्मकः । यथोक्तं शौनकेनापि,

चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः । इति ।

आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशं गते सति हेत्वभावादसन्तं परस्मात् ब्रह्मणः आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः । 'अविद्या कर्मसंज्ञाऽन्या' इति ह्यत्रैवोक्तम् ( श्री.भा. 1-255 )

ब्रह्मणः इति पदस्य पञ्चम्यन्तत्वसूचनाय परस्मादित्युक्तम् । उभयोरपि पदयोर्वैयधिकरण्येन षष्ठ्यन्तत्वमयुक्तम्; चशब्दाभावात् । अनन्तरपूर्वश्लोके परमात्मना भवत्यभेदीति परमात्मनः प्रतियोगितया निर्देशाच्च । अत एवसमानाधिकरणषष्ठ्यन्तत्वमप्ययुक्तम् ; पूर्वप्रपञ्चितार्थविरोधाच्च । पञ्चम्यन्तत्वं षष्ठ्यन्तत्वं च विपर्ययेण स्यादिति चेन्न; परब्रह्मणोऽपि हेयार्हत्वापत्तेः स्वाभाविकत्वप्रसङ्गात् । अतः परस्मात् ब्रह्मणः इत्युक्तम् । (श्रु.प्र.) अनेन जीवब्रह्मणोः स्वरूपैक्ये तात्पर्यं नास्तीति सिद्धम् ॥

**अभ्यधिकराहित्यम्** — परमात्मनिष्ठो धर्मः ।

स्वावधिकोत्कर्षाश्रयराहित्यम् । उत्कर्षावधिशून्यत्वम् ।। (वि.को.)

**अभ्यात्तः** — स्वीकृतवान् ।

'सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तः' ( छां.उ. 3-14-2 ) सर्वमिदं कल्याणगुणजातं स्वीकृतवान् । अभ्यात्तः इति भुक्ता ब्राह्मणाः इतिवत् कर्तरिक्तः प्रतिपत्तव्यः । ( श्री.भा.1-2-2 ) [ आङ्पूर्वकदाधातोः क्तप्रत्यये 'अच उपसर्गात्तः' इत्यनेन धातोराकारस्य तकारादेशे इदं रूपम् ] अभ्यात्त इत्यत्र स्वीकरणरूपगुणविधिः । ननु नायमादिकर्मणि क्तः गुणगणादानस्य नित्यत्वात् न चाभ्याददातिः गत्यर्थः स्वीकरणार्थत्वात् । नाप्यकर्मकः सर्वमिदमितिश्रवणात् । तत्कथं कर्तरि क्तः 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोरेव हि तत्स्मरणात् इत्यत्राह भुक्ता इति प्रयुक्तानुशासनत्वात् व्याकरणशास्त्रस्य, यथाप्रयोगमनुशासनं कार्यं न तु यथानुशासनं प्रयोगान्यथाकरणं इति भावः ।

ये तु 'भुक्ता ब्राह्मणा' इत्यत्र मत्वर्थीयाकारप्रश्लेषमिच्छन्ति, तेषां भुक्तशब्दस्य अर्शआदिगणान्तर्भावकल्पनम् अकारप्रश्लेषणमिति यत्नगौरवं पश्यतोक्तं कर्तरीति । कर्त्रर्थताय प्रयोग एव हि भुक्तादीनां आकृतिगणान्तर्भावकल्पननिमित्तम् ।

तेनैव कर्त्रर्थत्वं क्तप्रत्ययस्य कल्प्यताम् ; किमश्रूयमाणाकारप्रश्लेषेणेति भावः । यद्वा कर्तरि क्त प्रतिपत्तिः (कर्तरि प्रतीतिः) सा यथा भुक्ता ब्राह्मणा इत्यत्र प्रतिपाद्यते - निरूप्यते एवमत्रापि निर्वोढव्येत्यर्थः । (श्रु.प्र.) एवञ्च अभ्यात्तः इत्यत्र सकर्मकधातु-प्रकृतिकक्तप्रत्ययान्तेन कर्त्रर्थप्रतीतिः निराबाधेति सिद्धम् ।

**अभ्यारोहः** — मन्त्रविशेषः ।

'अथातः पवमानानामेवाभ्यारोहः' (बृ.उ.3-3-28) बहिष्पवमानमाध्यन्दिनपवमानार्भवपवमानभेदभिन्नानां त्रयाणां पवमानानामेवाभ्यारोहः – अभ्यारोहमन्त्रः इति संज्ञा । ब्रह्मलोकाभ्यारोहहेतुतया अभ्यारोह इति युज्यते । प्रस्तोता यदा प्रस्तौति तदा यजमानो एतानि यजूंषि जपेदित्यर्थः । 'असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मा अमृतं गमयेति' (रं.भा.)

**अभ्याशः** — 1. अभ्यागन्तारः ।

'तद्य इह रमणीयचरणाः अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्' (छां.उ. 5-10-7) अभ्याङ्पूर्वात् 'अशू व्याप्तौ' इति धातोरेवं रूपं भवति । इदं प्रथमा-बहुवचनम् । ( श्रु.प्र.3-1-8 )

2. क्षिप्रम् । 'अभ्याशो ह आगच्छेयुः' (छां.उ. 3-19-4)

**अभ्यासः** — 1. गुणितः। (आनन्दः)

"आनन्दमयोऽभ्यासात्' (ब्र.सू. 1-1-13)

[ अभ्यस्यते अयमिति कर्मणि व्युत्पत्तिः ] 'सैषाऽनन्दस्य मीमांसा भवति इत्यारभ्य, 'यतो वाचो निवर्तन्ते' इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशय-दशाशिरस्कोऽभ्यस्यमानः आनन्दः । (श्री.भा.) अत्र श्रुत्यनुसारेणायमेवार्थः विवक्षणीयः ।

2. गुणनम् , आवृत्तिः ) (श्रु.प्र.) [भावार्थकप्रत्ययः]

3. द्विरुक्तिः । पदाभ्यासः, सूत्राभ्यासश्चेति । पदाभ्यासः अध्यायसमाप्ति द्योतकः । यथा - 'एतेन सर्वे व्याख्याता व्याख्याताः' इति । सूत्राभ्यासस्तु शास्त्रपरि-

समाप्तिद्योतकः । यथा 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इति । अत एवोक्तम् तत्राध्यायावसान-शास्त्रावसानवैषम्यद्योतनार्थमाद्याध्यायत्रयावसानेषु पदाभ्यासः शास्त्रावसाने सूत्राभ्यासश्च कृतः इति । (श्रु.प्र. 1-4-29)

4. आरम्भणसंशीलनं पुनःपुनरभ्यासः । (इतिवाक्यकारः) निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण 'सदा तद्भावभावितः इति । (श्री.भा. 1-6-4) आरम्भणम् आलम्बनम् शुभाश्रयः; (दिव्यमङ्गलविग्रहः) तस्य संशीलनम् । (श्रु.प्र.)

5. तात्पर्यलिङ्गेष्वन्यतमः । अविशेषेण पुनः पुनः श्रवणम् । यथा - 'तत्त्वमसि' 'एष त आत्मान्तर्याम्यमृतः' इत्यादौ ।

6. तत्र स्थितौ यत्नोऽभ्यासः (यो.सू. 1-13) चित्तस्यावृत्तिकस्य प्रशान्तवाहितास्थितिः तदर्थः प्रयत्नो वीर्यमुत्साहस्तत्संपिपादयिषया तत्साधनानुष्ठानमभ्यासः । (यो.भा.)

अविशेषेण पुनः श्रुतिः॥ (मी.को.)

**अभ्यासयोगः** — अभ्यासरूपः योगः ।

'अभ्यासयोगयुक्तेन चेतसा नान्यगामिना । (गी .8-8) अभ्यासः नित्यनैमित्तिकाविरुद्धेषु सर्वेषु कालेषु मनसोपास्यसंशीलनम् । योगस्तु अहरहर्योगकालेऽनुष्ठीयमानं यथोक्तलक्षणमुपासनम् । (गी.भा.) आलम्बने पुनः पुनः स्थापनमभ्यासः, स एव योगः ॥ (ता.चं.)

**अभ्युच्चयहेतुः** — अप्रधानकारणम् ॥

**अभ्युच्चयोक्तिः** — प्रधानहेतोरुपोद्बलकयुक्तिः ॥

**अभ्युदयः** — ऐहिकामुष्मिकत्रैवर्गिकपुरुषार्थसाधनम् ।

'प्रेयो मन्दो योगक्षेमाद्वृणीते' इति प्रेयःपदवाच्यम् ॥

**अभ्युपगमवादः** — अङ्गीकृत्योक्तिः ।

स्वानभिप्रेतमपि 'तुष्यतु दुर्जनन्यायेन' अङ्गीकृत्य तस्य समाधानोक्तिः ॥ (सं.अ.)

**अभ्युपगमसिद्धान्तः —** त्रिविधसिद्धान्तेषु अन्यतमः ।

सिद्धान्तत्रयं तु सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः अभ्युपगमसिद्धान्तश्चेति । अव्यापकः स्वतन्त्रस्य तन्त्रान्तरस्य च साधारणोऽभ्युपगमसिद्धान्तः । यथा नैयायिकादीनां सामान्यविशेषसमवायादिः, सांख्यादीनां भेदाभेदादिः सौगतादीनां प्रपंचमिथ्यात्वादिः परतन्त्रैस्साधितः स्वतन्त्रे च समाश्रितः इति वा, तन्त्रान्तरसिद्धसद्भावस्य वस्तुनो विशेष-परीक्षणं इति वा केचिदाहुः । अत्र स्वतन्त्रपरतन्त्रसाधारण्यमेव निष्कृष्टलक्षणं भवति(न्या. प. 145) अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणं अभ्युपगमसिद्धान्तः (न्या.सू.1-1-31)

**अभ्युपगमेप्यर्थाभावात् (ब्र.सू. 2-2-8) (रचनानुपपत्त्यधिकरणे अष्टमंसूत्रम्)**

अनुमानेन प्रधानसिद्ध्यभ्युपगमेपि प्रधानेन प्रयोजनाभावात् न तदनुमातव्यम् ।

'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य इति प्रधानस्य प्रयोजनं पुरुष भोगापवर्गौ अभिमतौ । तौ च न संभवतः। पुरुषस्य चैतन्यमात्रवपुषः निर्विकारस्य निर्मलस्य तत एव नित्यमुक्तस्वरूपस्य प्रकृतिदर्शनरूपो भोगः तद्वियोगरूपो अपवर्गश्च न संभवति । एवं रूपस्यैव प्रकृतिसंनिधानात् तत्परिणामविशेषसुखदुःखदर्शनरूपभोग संभावनायां प्रकृतिसंनिधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सेत्स्यति । इति स्वतन्त्र-तया प्रधानाभ्युपगमो निष्फल एवेति भावः ।

प्रधानसाधनेऽप्यत्र फलाभावाद्विपर्ययः ।
भोगमोक्षौ च नस्यातांप्रधानेन सदा स्थितेः ॥ (ब्र.प,मा. 182)

**अभ्रमेघादिभावः —** अभ्रमेघादिसंसर्गः । (अवरोहतोजीवस्य)

'अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' । (छां.उ. 5-10-6) अपः बिभर्ति इत्यभ्रं 'मिह सेचने' इति धातोः मेघः इति रूपं । जलधारणावस्था वर्षोन्मुखावस्था च अभ्रमेघशब्दाभ्यां विवक्षिता । (श्रु. प्र. 3-1-22) मेघसंश्लिष्टो भूत्वा वर्षधारारूपेण भूमौ पततीति फलितार्थः ॥ (रं.भा.)

**अमः —** प्राणः ।

'एष उ एव साम । वाग्वै सा अमैषः । साचामश्चेति तत् साम्नस्सामत्वम् ।
(बृ.उ. 3-3-22)

'अमगतिभजनशब्देषु' इति गमनार्थादमतेरः। अमति गच्छतीत्यमः। (रं.भा.) पचादित्वादच् इति भावः॥

**अमतम्** — कार्त्स्न्येन मननाविषयः ब्रह्म।

'यस्यामतं तस्य मतं मतं यस्य न वेद सः' (के.उ. 2-3) उक्तञ्च भगवता भाष्यकृता- 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति ब्रह्मणोऽनन्तस्यापरिमित-गुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्मैतावदिति ब्रह्म परिच्छेद-ज्ञानवतां ब्रह्म अविज्ञातं अमतमित्युक्तम्; अपरिच्छिन्नत्वात् ब्रह्मणः। अन्यथा 'यस्यामतं तस्य मतम्' ''विज्ञातमविजानताम्' इति तत्रैव मतत्वविज्ञातत्ववचनं विरुद्ध्येत इति। ततश्चाविज्ञातत्वादिवचनम् कार्त्स्न्येन ज्ञानाविषयत्वपरम्; न तु सर्वात्मना ब्रह्मणः ज्ञानागोचरत्वपरमिति द्रष्टव्यम्। तथाहि सति 'ब्रह्मविदाप्नोति परम्', 'तमेव विदित्वाऽति मृत्युमेति' इत्यादिशास्त्राणामसङ्गतार्थकत्वप्रसङ्गात्; वेदान्तानां नैरर्थक्य-प्रसङ्गाच्च। (रं.भा.) स्थाणुपुरुषाद्यर्थविचारदशायां तद्विषयवदप्रतिपन्नम्॥ (वि.को.)

**अमनस्कः** — अनिगृहीतमनाः।

'यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाऽशुचिः। (क.उ. 3-7) अत एव अशुचिः; सर्वदा विपरीतचिन्ताप्रवणत्वात्॥ (रं.भा.)

**अमनाः** — मन आयत्तज्ञानाभाववान् परमात्मा।

'अप्राणो ह्यमनाः' (मुं.उ. 2-1-2) उपकरणोपकरणित्वलक्षणसम्बन्धविशेषो निषेध्य इत्यभिप्रायः॥

**अममाः** — ममतारहिताः।

'वृत्तौ ममेति ममताबोधकं विभक्तिप्रतिरूपकमव्ययम्' इति भावः।

अस्वे स्वत्वबुद्धिहीनाः॥ (वि.को.)

**अमरप्रभुः** — (स.ना. 49)

अमराणां सृष्ट्याद्यधिकारदानेन निर्वाहकः। (वि.स.भा.) पद्मभूप्रभृतीनाममराणां सृष्ट्याद्यधिकारदानेन, प्रभुः - निर्वाहक इति। (वि.स.निर्व.)

सृष्ट्यादिष्वपि देवानामधिकारप्रदानतः ।

अमरप्रभुरित्युक्तो नवार्णः सर्वतो मनुः ॥ (वि.स.नि.)

**अमर्यादः** — लोकवेदसमयातीतः ।

'अमर्यादः क्षुद्रः चलमतिः असूयाप्रसवभूः' (स्तो.र. 62)

'वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।

वेषवाग्वृत्तिसारूप्यमाचरन् विचरेदिह' ॥

इत्यादिपूक्तां श्रुतिस्मृतिमर्यादां अतिक्रान्तः । (स्तो.र.भा.)

त्यक्तस्वप्रकृत्यवस्थानः ॥ (वि.को.)

**अमलः** — मलरहितः मुक्तात्मा ।

'क्षीणपापोऽमलस्तथा' (वि.पु. 6-8-106) क्षपितप्रारब्धकर्मविशेषः । (वि.चि.)

निर्विघ्नः ॥ (वि.को.)

**अमलत्वम्** — हेयप्रत्यनीकत्वम् परमात्मासाधारणधर्मः ।

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलं अनणु अह्रस्वम् अदीर्घं अलोहितम् अस्नेहं अच्छायम्' । (बृ.उ. 5-8-7) तथा आथर्वणे 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम् अग्राह्यं अगोत्रम् अवर्णम् अचक्षुश्श्रोत्रं तदपाणिपादम्' (मुं. उ. 1-1-5) इति श्रुत्युक्ताः अस्थूलत्वादयः- स्थूलत्वादिविरोधिशब्दाभिलप्याः आकाराः अमलशब्देन बोध्यन्ते; भावान्तरस्यैव अभावशब्दार्थत्वात् । अत एव ह्यस्थूलत्वं सुसूक्ष्मशब्देनोक्तं श्रुत्यन्तरे । अक्षरध्यधिकरणार्थमुपजीव्य पूर्वमानन्दादिषु अमलत्वं च सहपठितम् । (श्रु.प्र.3-3-33) हेयगुणनिषेधरूपाः अक्षरसम्बन्धिगुणाः सर्वेऽपि अमलपदेन क्रोडीकृताः ॥

**अमलात्मकः** — अमलस्वभावः परमात्मा ।

अत्र आत्मशब्दः स्वभाववाची । कर्मसम्बन्धानर्ह इति यावत् ।

'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्मच' इति निघण्टुः ॥

**अमा** — सह ।

'अमावास्या' इत्यादिषु सद्यः इत्यर्थः । 'अमा सह समीपे च' इति निघण्टुः । सूर्यचन्द्रयोरेकस्मिन्नेवाहनि सञ्चारात् सद्यः इति कालकृतस्सहभावः ॥ (वि.को.)

**अमात्रः** — अंशरहितः परमात्मा ।

'अमात्रोनन्तमात्रश्च' (मां. उ. 4-7) मात्राः अंशाः; तद्विहीनः अमात्रः मूलरूपेण स्थित इति यावत् । अनन्तमात्रः जगद्व्यापारनिर्वहणार्थं इच्छाकृतविश्वा द्यनन्तांशः 'इच्छागृहीताभिमतोरुदेहः' इति स्मृतेः । अत्र विश्वादीत्यनेनानिरुद्धा-दयोंऽशाः विवक्षिताः ॥ (कू.भा.)

**अमात्रम्** — 1. परिच्छेदरहितं ब्रह्म ।

'अप्राणममुखममात्रम्' (बृ.उ. 5-8-7)

2. इन्द्रियरहितम् । मात्राः– इन्द्रियाणि; यद्वा मात्रा–परिच्छेदः; तद्रहितम् इत्यर्थः । (रं.भा.) मीयतेऽनयेति मात्रा परिच्छित्तिः ॥

**अमानवः** — आतिवाहिकेष्वन्तिमः दिव्यः पुरुषः ।

'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' (छां.उ. 5-10-2) (विद्युत ऊर्ध्वं वरुणेन्द्रप्रजापतिभिस्सह, पश्चात् पृथक् च ब्रह्मगमयिता आतिवाहिकः)

असंसारी वैद्युतः पुरुषः । (रं. भा.)

'आदिष्टो विश्वनेत्रा स्वयमतिवहने देवयानाध्वगानां

यः प्रोक्तोऽमानवाख्यः स तटिदधिपतिः विश्रुतो मानसोऽपि' । (त. मु. 130)

इत्युक्तरीत्या अस्य मानसः इत्यपि आख्या ॥

**अमानित्वम्** — उत्कृष्टजनेषु अवधीरणारहितत्वम् ।

'अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम्' (गी. 13-7)

विद्याभिजनधनादिसंपत्तिमूलोत्कृष्टजनावमानहेतुः गर्वोऽत्र मानः, तद्वान् मानी, तदन्योऽमानी, तस्य भावस्तत्त्वम् ; मानित्वस्याभावो वाऽत्रामानित्वम् ॥

(ता. चं.)

**अमानी** — (स. ना. 753)

भक्तेषु अनहंयुः । (वि. स. भा.)

मानः– चित्तसमुन्नतिः अस्यास्तीति मानी ।

दूत्याधिकारादौ अनपत्रपिष्णुत्वप्रयोजिकया भक्तेषु अनहंयुतया, सः (मानः) अस्य नास्तीति । (वि. स. निर्व.)

'अमानी योऽनहंकारी भक्तेष्वेव स ईरितः' ।। (वि. स. नि.)

**अमानी** — ममतारहितः परमात्मा ।

न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वास्त्यमानिनः । (भाग. 10-46-37)

ममताभिमानरहितः सर्वसमानः इत्यर्थः ।। (भाग. वी.)

**अमायी** — अनभिसंहितफलः ।

त्रैवर्गिकफलकामनायाः मायानिबन्धनत्वात् इति भावः ॥

**अमितविक्रमः** — (स. ना. 519)

तेषां (भागवतानां) ध्यानाराधनानुसन्धेयतत्त्वनिकराधारशक्तिधारणात् अमित विक्रमः । (वि. स. भा.) अमितः– अपरिमितः, विक्रमः–पराक्रमः बलं अस्येति । (वि. स. निर्व.)

'तेषां ध्यानानुसन्धेयतत्त्वसन्दोहधारिणीम् ।

तां शक्तिं धृतवान् योऽसौ स्मृतो ह्यमितविक्रमः' ।। (वि. स. नि.)

**अमितविक्रमः** — (स. ना.647)

त्रैलोक्येऽपि अपर्यवसितविक्रमत्वात् त्रिविक्रमः । (वि. स. भा.)

यामुनतीर्थमाश्रित्य स्थितः त्रिविक्रमशब्दवाच्यः । अमितः त्रैलोक्येऽपि अपर्य व सितविक्रमः पादविक्षेपोऽस्येति अमितविक्रमः ।। (वि. स. निर्व.)

अधिष्ठाय स्थितः साक्षात् भक्तानां सुगतिप्रदः ।

लोकत्रयेऽप्यपर्याप्तविक्रमोऽमितविक्रमः ।। (वि. स. नि.)

**अमिताशनः** — (स. ना. 374)

अपरिमितं गोपैः इन्द्राय परिकल्पितं अशनं अस्येति । (वि. स. भा.)

अपरिमितमशनं गोपैः इन्द्राय परिकल्पितं भोजनमस्येति । (वि. स. निर्व.)

'इन्द्राय कल्पितं गोपैरमितं चाशनं स्वयम् ।
भुक्तवान् यश्च निश्शेषं प्रोच्यते सोऽमिताशनः' ॥ (वि. स. नि.)

**अमितौजाः** — योगपर्यङ्कः ।

'अमितौजाःपर्यङ्कः' (कौ. उ. 1-30) अमितौजा नाम योगपर्यङ्को ब्रह्मणः ॥ (रं. भा.)

**अमुखम्** — मुखरहितं ब्रह्म ।

'अप्राणममुखमश्रोत्रमवाक्' (मु. उ. 3) अपरभागसापेक्षः पुरोभागावयवविशेषो मुखम् । तदस्य न विद्यते सर्वत्राभिमुखत्वात् ।। (श्रु. भा.)

**अमुख्यस्यापि धर्मस्य आश्रयणम्** — न्यायविशेषः ।

कांस्यभोजिवत् । तद्यथा शिष्यस्य कांस्यपात्रभोजित्वनियमः, उपाध्यायस्य न नियमः, यदि तयोरेकस्मिन् पात्रे भोजनमापद्यते, अमुख्यस्यापि शिष्यस्य धर्मोऽनुगृह्यते तद्वदिति । (मी. को.)

एवमेव शिष्टानां शिष्यानुग्रहार्थमेव गौणाश्रयणं कदाचित् दृश्यते ॥

**अमूढाः** — आत्मानात्मस्वभावज्ञाः ।

'द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः गच्छन्त्यमूढाः पदमव्ययं तत्' । (गी.15-5)

'त्रिभिर्गुणमयैर्भावैः एभिः सर्वमिदं जगत् । मोहितम्' इत्युक्तमायातरणादिहामूढत्वम् । तच्च देहात्मभ्रमनिवृत्तेः 'निर्मानमोहाः' इत्यनेनोक्तत्वात् तद्व्यतिरिक्तात्मानात्मविषयसमस्तभ्रमनिषेधरूपं इत्यभिप्रायेणाह—आत्मानात्मस्वभावज्ञा इति । यद्वा मोहहेतुनिवृत्तिलक्षकोऽत्रामूढशब्दः. अन्योन्यव्यावर्तकासाधारणधर्मप्रतीत्या ह्यात्मानात्मैक्यमोहो निवर्तनीय इति भावः ॥ (ता. चं.)

**अमूर्तम्** — शरीरवियुक्तस्वरूपम् ।

'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च' (वि. पु. 1.22.55)

**अमूर्तिः** — (स. ना. 834)

अधिष्ठेयेभ्यः स्वभावविप्रकर्षः अमूर्तिः । स्थूलभौतिकमूर्तिव्यावृत्तः ।
(वि. स. भा.)

स्थूलभौतिकमूर्तिभ्यो व्यावृत्तोऽमूर्तिरुच्यते ॥ (वि. स. नि.)

**अमूर्तिमान्** — (स. ना. 725)

अमूर्तयः अव्यक्तपुरुषादयोऽपि एवमस्य स्वमिति । (वि. स. भा.) नास्ति मूर्तिः येषां ये च अमर्तयोऽव्यक्तपुरुषादयः ते च शरीरभूताः अस्य सन्तीति ।
(वि. स. निर्व.)

अमर्तिशब्देनोच्यन्ते ह्यव्यक्तपुरुषादयः ।

त एव यस्य स्वमिति स स्मृतः स्यादमूर्तिमान् ॥ (वि. स. नि.)

**अमृतः** — (स. ना. 120)

तेषां (भक्तानां) निरवधिकमाधुर्येण, जरामरणवारणेन, सदा सेवायामप्यतृप्तिकरत्वेन वा अमृतः । (वि. स. भा.)

नास्ति मृतं–मृतिः, अस्मात् इति अमृतः । (वि. स. निर्व.)

जरामृत्योर्वारणेन ह्यतृप्तेर्वापि सेवनात् ।

अमृतस्यान्निरतिशयमाधुर्येण च सर्वदा ॥ (वि. स. नि.)

**अमृतः** — 1. हेयप्रत्यनीकः । (अन्तर्यामी नारायणः)

'एष ते आत्मा अन्तर्याम्यमृतः' (बृ. उ. 5-7-९)

'स त आत्मा अन्तर्याम्यमृतः' (माध्यन्दिने)

अमृतशब्दस्य सकृदुक्तिश्चेत्, नित्यत्वपरत्वं स्यात् । असकृदावृत्तत्वात् प्रतिपर्यायं उक्ततत्तद्वस्तुगतदोषसंबन्धराहित्यमेवामृतशब्देन उच्यते । (श्रु. प्र. 3-2-12) [शाखाभेदेन द्वाविंशतिवारं असकृदुक्तेः अमृतशब्दः हेयप्रत्यनीकपरः इति सिद्धम्]

'आनन्दतृप्तमचलममृतमच्युतं विष्णुसंज्ञं सर्वाधारं धाम' (मै. उ. 6-23) इति विष्णावमृतशब्दः ; प्रयुक्तः अमृतशब्दोऽपि भगवत्येवासाधारणः ; 'नित्यं निरञ्जनं निर्विकल्पं परं ज्योतिरमृताख्यं परं ब्रह्मस्वरूपम् ध्यात्वा तस्मिन्नेव लयमाप' इति नारसिंहपुराणे नारायणमुपक्रम्य तस्य अमृताख्यत्वनिर्वचनात् । ब्रह्माण्डे-- 'विष्ण्वाख्यममृतं साक्षात् विज्ञाय परिमुच्यते' इत्यत्र विष्णोः साक्षादमृतमिति अमृत-शब्दमुख्यार्थत्वप्रतीतेश्च । साक्षात्पदस्य मुख्यार्थव्यवधानाभावपरत्वात् । लाक्षणिकत्वे मुख्यार्थव्यवधानं हि गंगापदादौ दृश्यते । एवं सुबालोपनिषदि 'सर्वेश्वरमचिन्त्यशरीरं निहितं गुहायाममृतमिति' । वाराहे ब्रह्मपरस्तोत्रे--

'क्षराक्षरं क्षीरसमुद्रनिद्रं नारायणं नौम्यमृतं परेशम्'

इति नारायणे प्रयुक्तः । अतः अमृतशब्दवाच्यो नारायण एव ॥

(वे. मं. दी. 93, 94)

2. मुक्तः । 'विमुक्तोऽमृतो भवति' (मुं. उ. 3-2-9) आविर्भूतगुणाष्टकः ।

(रं. भा.)

**अमृतम्** — 1. निरतिशयसुखस्वरूपं ब्रह्म ।

'एतदमृतमभयमेतद्ब्रह्म' (छां. उ. 8-7-4)

2. अस्पृष्टसंसारगन्धम् । 'आनन्दरूपममृतम्' । (मुं. उ. 2-2-8)

3. मोक्षः । 'विद्यया अमृतमश्नुते' (ई. उ. 11)

4. अमृतवत् भोग्यं कल्याणगुणजातम् । (तै. उ. रं. भा. 76)

5. मरणधर्मशून्यम् । 'वायुरनिलममृतम्' (ई. उ. 17)

म्रियमाणेऽपि देहसन्ताने स्वयममृतम् । इदं विजरत्वादीनां उपलक्षणम् । परि-शुद्धजीवविषये प्रजापतिवाक्ये 'विजरः विमृत्युः' इत्यादि पाठात् । (वे. भा.)

6. जन्मजरामरणादि प्राकृतधर्मरहितमात्मस्वरूपम् ।

'जन्ममृत्युजरादुःखैर्विमुक्तोऽमृत मश्नुते' । (गी. 14-20)

1. अयाचितद्रव्यम् । 2. चिरकालस्थायी । 3. धारोष्णं पयः ।

'धारोष्णं अमृतं पयः' इति वैजयन्ती । 4. निरतिशयभोग्यम् । 5. प्राणः । लोकान्तरेचिरस्थायित्वरूपामृतत्वप्राप्तेः प्राणाधीनोपायानुष्ठानसाध्यत्वात् प्राणः अमृतम् ।। (वि. को.)

**अमृतत्वम्** — 1. ब्रह्मप्राप्तिः ।

'तयोर्ध्वमायन्नमृतत्वमेति' (क. उ. 6-16) देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकस्व स्वरूपाविर्भावलक्षणा मुक्तिः । (रं. भा.) अमृतशब्देन देशविशेषविशिष्टब्रह्मप्राप्तिमतः अभिधानेन तदुत्तरभावार्थकप्रत्ययेन तत्प्रकारभूता ब्रह्मप्राप्तिः बोध्यते इति भावः ।

2. उत्तरपूर्वाघयोरश्लेषविनाशौ । 'अमृतत्वं चानुपोष्य' (ब्र. सू. 4-2-7)

अत्र च शब्दो अवधारणे । अनुपोष्य– शरीरेन्द्रियादिसम्बन्धं अदग्ध्वैव यत् अमृतत्वं प्राप्यते तत् उच्यते 'यदा सर्वे प्रमुच्यन्ते' इत्यादिकया श्रुत्या ॥

**अमृतत्वप्राप्तिहेतुः** — परमपुरुषः ।

परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुषः । (श्री.भा.1-2-1)

परमकारणस्यासाधारणम् तस्य प्रदेयत्वेन असाधारणम्–अमृतत्वम् ; तत्प्राप्तिहेतु रित्यर्थः । यद्वा परमकारणस्यासाधारणम्–चिह्नभूतमित्यर्थः । उपासकस्यामृतत्वप्राप्तिः उपास्यस्य परमकारणत्वमावेदयति । यद्वा परमकारणासाधारणम् तद्धर्मभूतममृतत्वम्, तत्प्राप्तिः- परमसाम्यापत्तिः इत्यर्थः । (श्रु.प्र.)

आद्ययोजनायां परमकारणस्य प्रदेयत्वेन असाधारणं अमृतत्वम् । द्वितीयस्यां परमकारणस्य असाधारणं उपासकस्य अमृतत्वप्राप्तिरूपचिह्नम् । तृतीयस्यां परम-कारणनिष्ठः असाधारणधर्मः अमृतत्वं ; तस्य अन्यत्र असंभवात् तत्साम्यापत्तिः इति व्याख्यातम् ॥

**अमृतत्वस्येशानः** — परमपदस्य नायकः । (मोक्षप्रदः)

'उतामृतत्वस्येशानः' (श्वे.उ. 3-15) अत्र अमृतत्वशब्देन मुक्तिवाचिना मुक्ति स्थानं लक्ष्यते । अप्राकृतभोग्यभोगोपकरणसमृद्धस्य परमपदस्य असौ ईशानः इत्यर्थः । अतश्चोभयविभूतिनायकत्वमुक्तं भवति । (रं.भा.) न विद्यते मृतत्वम् कस्यापि यत्र, तत् स्थानममृतत्वम् । तस्येशानः इति । (सु.उ. 6. टि.) अमृतत्वस्य मोक्षस्य ईशानः ।

सायुज्यादिचतुर्विधमोक्षप्रदो भवति । 'मोक्षे नित्येऽमृते देवे कीर्तितं त्वमृतं बुधैः' इति नैघण्टुकोक्तत्वात् अमृतशब्दो मोक्षपर्यायः । मोक्षस्येशानो भवति ॥ (पु.सू.भा. 2)

**अमृतपः** — (स. ना. 506)

हविःपरिणामरूपममृतं स्वयमेव पिबति चेति, स्वानुष्ठानानुविधायिभ्यः स्वानुभवरूपममृतं परमे व्योम्नि पातीति वा । (वि. स. भा.) स (परमात्मा) एव च स्वयज्ञभोक्तृतया अमृतं तद्वदास्वाद्यं वह्नौ हूयमानं यत्किञ्चिद्धविः पिबतीति वा । स्वानुष्ठानानुविधायिभ्यः परमे व्योम्नि स्वानुभवरूपममृतं पाति रक्षतीति वा ।

(वि. स. निर्व.)

परिणामोऽस्य हविषां पीयूषमिति चोच्यते ।
तत्पानात्स्यादमृतपः परमे व्योम्नि वा स्थितः ।
मुक्तेभ्यो यः स्वानुभवं पातीत्यमृतपः स्मृतः ॥ (वि. स. नि.)

**अमृतमयः** — परमात्मा ।

'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः' (बृ. उ. 4-5-1) मरणादिधर्मशून्यः, अपहतपाप्मत्वादिगुणाश्रयः इति यावत् । (रं. भा.)

अत्र अमृतमयशब्दे 'तत्प्रकृतवचने मयट्' इत्यनेन प्राचुर्यार्थे मयट् प्रत्ययः निरुपाधिकापहतपाप्मत्वादिकं च परमात्मन्येव संभवति ॥

**अमृतवपुः** — (स. ना. 820)

रूपमप्यमृतमस्येति । (वि. स. भा.) अमृतं तद्भक्तेभ्यः, स्वदमानं वपुः रूपमस्येति । (वि. स. निर्व.)

वपुर्यस्यामृतमिति स चामृतवपुस्स्मृतः ॥ (वि. स. नि.)

**अमृताक्षरम्** — जीवः ।

'क्षरं प्रधानममृताक्षरं हरः' । (श्वे. उ. 1-10)

भोग्यमात्मनो भोगार्थं हरतीति हरो जीवः । सः अमृताक्षरम् । अमृतत्वात्-मरणधर्मशून्यत्वात् अक्षरं इत्यर्थः ॥ (रं. भा.)

**अमृताशः** — (स. ना. 819)

तान् (भक्तान्) स्वगुणामृतमाशयतीति । (वि. स. भा.) तान् (भक्तान्) अमृतं स्वगुणामृतं आशयतीति भोजयतीति । (वि. स. निर्व.)

यश्चाशयति भक्तान्वै स्वगुणामृतमादरात् ।
अमृताशस्स इत्युक्तः श्रितपीयूषदो मनुः ॥ (वि. स. नि.)

**अमृतांशूद्भवः** — (स. ना. 284)

सर्वतापहराप्यायनमृतसञ्जीवनामृतमयांशुश्चन्द्रोऽपि तन्मनश्शैत्यादिगुणोपस्नेहात् तथोद्भवतीति । (वि. स. भा.) अमृतांशोः सर्वतापहराप्यायनमृतसञ्जीवनामृतमयांशोश्चन्द्रस्यापि, तन्मनश्शैत्यादिगुणोपस्नेहात् तथोद्भूतत्वेन उद्भवति अस्मादिति उद्भवः उत्पत्तिस्थानम्, इति । (वि. स. निर्व.)

सर्वतापहरस्यैव मृतसंजीवनस्य च ।
अमृतांशोर्हि तज्जत्वादमृतांशूद्भवस्स्मृतः ॥ (वि. स. नि.)

**अमृत्युः** — (स. ना. 200)

मृत्युविरोधी, मृत्युमृत्युत्वात् । (वि. स. भा.) मृत्युमृत्युतया मृत्युविरोधीति । (नृसिंहावतारः) (वि. स. निर्व.)

नारसिंहमथ स्तौति सर्वमृत्युनिवारणम् ।
मृत्योर्विरोधिरूपो यो मृत्युमृत्युस्वरूपतः ।
अमृत्युरिति तं प्राहुः सप्तार्णो मृत्युनाशकः ॥ (वि. स. नि.)

**अमेध्यम्** — अयज्ञार्हम् । (तामसाहारः)

'उच्छिष्टमपि चामेध्यम्' (गी. 17-10) अयज्ञार्हं, अयज्ञशिष्टमित्यर्थः । (गी.भा.) मेधाऽविरोधिन्यपि मेध्यशब्दप्रयोगात् तस्य च दृष्टप्रत्यवायमात्रपर्यवसानात् ततोऽपि दोषातिशयसूचनाय मेधोऽत्र यज्ञः, तदर्हं मेध्यम् , तद्विपरीतममेध्यं इत्याह— अयज्ञार्हमिति । (ता.चं.) 'पूतं पवित्रं मेध्यञ्च' इत्यमरः ॥

**अमेयात्मा** — (स. ना. 103)

इयान् इति अपरिच्छेद्यस्वरूपः । (वि. स. भा.) आश्रितानुग्रहस्रोतसि, अमेयः—अपरिमेयः—इयानित्यपरिच्छेद्यः, आत्मा—स्वरूपं, अस्येति । (वि. स. निर्व.)

इयानित्यपरिच्छेद्यस्वभावात्सर्वतोऽधिकः ।

अमेयात्मा समुद्दिष्टो ह्यौन्नत्यफलदो मनुः ।। (वि. स. नि.)

**अमेयात्मा** — (स. ना. 181)

विविधगुणरूपानुरूपांभोधिगंभीरभावः । (वि.स.भा.) विविधगुणरूपानुरूपांभोधि गाम्भीर्यात्, अमेयः—अपरिमेयः, आत्मा—स्वभावः, अस्येति । (वि. स. निर्व.)

सिन्धुगम्भीरभावो योह्यमेयात्मा स कीर्तितः ॥ (वि. स. नि.)

**अमोघः** — (स. ना. 111)

अवितथस्वस्पर्शः । यथा— 'अमोघं दर्शनं राम न च मोघस्तव स्तवः । अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः' ॥ इति । (वि.स. भा.) मोघः वितथस्पर्श नेति अमोघः । (वि. स. निर्व.)

वितथस्पर्शरहितः सह्यमोघः प्रकीर्तितः ॥ (वि. स. नि.)

**अमोघः** — (स. ना. 156)

नास्य व्यर्थोऽस्तीति । (वि. स. भा.) अपरिमितप्रभावतया नास्ति मोघः व्यर्थोऽस्येति । (वि.स.निर्व.)

बलेश्च वासवस्यापि कृतार्थीकरणात्समम् ।

मानातीतप्रभावत्वादमोघः परिकीर्तितः ।

न मोघं चेष्टितं यस्य सोऽमोघः परिकीर्तितः ॥ (वि. स. नि.)

**अम्बरान्तः** — अव्याकृतं—प्रधानम् ।

'अक्षरमम्बरान्तधृतेः' (ब्र. सू. 1-3-9)

अम्बरस्य—आकाशस्य, अन्तः —पारभूतं अव्याकृतम् । (श्री. भा.)

अत्र अन्तश्शब्दः अवधिवचनः। कार्यस्य अम्बरस्य देशतः कालतश्च अवधिः–कारणम्, नियतपूर्वभाविनः कारणत्वात्, कार्यं प्रति कारणतत्त्वानां आवरणतया बहिः विद्यमानत्वाच्च। अतः अम्बरान्तशब्दः अव्याकृतवाचीति भावः॥

(श्रु. प्र.)

**अम्बुवदग्रहणात्तु न तथात्वम्** (ब्र.सू.3-2-19) (उभयलिङ्गाधिकरणे नवमं सूत्रम्)

अम्बुनि सूर्यवत् परमात्मनोऽग्रहणात् न दोषशून्यत्वम्। 'तु' शब्दश्चोद्यं द्योतयति। अम्बुनीव अग्रहणात्। यथा अम्बुनि सूर्यः तत्रानवस्थित एव भ्रान्त्या तत्र स्थित इव गृह्यते; न तथा परमात्मा पृथिव्यादौ गृह्यते; किन्तु 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' इति परमार्थतः स्थितः गृह्यते। अतः न तथात्वम्-न सूर्यस्येव तत्प्रयुक्तदोषगन्धाभावः परमात्मनः, परमार्थतः स्थितत्वात् (पृथिव्यादिषु परमार्थतः स्थित्यभ्युपगमे दार्ष्टान्तिकस्य परमात्मनः दृष्टान्ततुल्यत्वाभावात् तुल्यत्वसिद्धये पृथिव्यादिषु स्थितेरपरमार्थत्वमभ्युपेयमिति तात्पर्यम्) इदन्तु पूर्वपक्षपरम्। सिद्धान्तस्तु 'वृद्धिह्रासभाक्त्वम्' इति सूत्रे द्रष्टव्यः।

अतः 'अत एव चोपमा सूर्यकादिवत्' इति पूर्वसूत्रोक्तदृष्टान्तेन पृथिव्यादिषु सर्वत्रान्तस्थितस्य नियन्तुः निर्दोषत्वं स्थापयितुं दुश्शकमिति भावः।

वस्त्वभावेऽप्यम्भसीव ब्रह्मणोऽग्रहणात् स्थितेः।
सर्ववस्तुष्वतो ब्रह्म सदोषमिति शङ्कते॥ (ब्र.प.मा. 333)

**अम्भांसि** — रसतन्मात्राणि।

'विकुर्वाणानि चांभांसि गन्धमात्रं ससर्जिरे' (वि.पु. 1-2-43)
रसतन्मात्रेभ्यःअपामुत्पत्तेः कारणे कार्योपचारः बोध्यः॥

**अम्भोनिधिः** — (स.ना.520)

पातालाम्भसि अखिलजगदाधारपीठकमठात्मना निधीयते इति। (वि.स.भा.)
'अनन्तबलशक्तये भुवनभृते कच्छपात्मने' इति मन्त्रवर्णानुरोधात् अखिलजगदाधारपीठकमठात्मतया, अम्भसि पातालार्णवपयसि निधीयते स्वयं निक्षिप्यते इति।

(वि.स.निर्व.)

आधारशक्तिकमठस्वरूपेणार्णवाम्भसि ।
विधीयते स्वयं येन सद्यम्भोनिधिरुच्यते ।। (वि.स.नि.)

**अयथानुष्ठितम्** -- विध्युक्तप्रकारेणाननुष्ठितं कर्म ।

'अश्रद्धाय अविधिना हुतमासप्तमान् तस्य लोकान् हिनस्ति' (मुं.उ.1-2-3) इत्यस्यार्थ उक्तः 'अयथानुष्ठितस्य चाननुष्ठितसमत्वं इति । (श्री.भा.1-2-23) इदं त्रिवर्ग फलसाधनकर्मविषयमुक्तम्; 'प्लवा ह्येते अदृढा' इति तत्प्रकरणत्वात्; 'नेहाभि-क्रमनाशोऽस्ति' इति मोक्षसाधनकर्मणां यथोक्तविपरीतत्वप्रतिपादनाच्च ॥ (श्र.प्र.)

**अयथार्थबुद्धिः** — अप्रमात्मकं ज्ञानम् ।

1. अर्थव्यभिचार्यप्रमाणजन्यं ज्ञानम् । 2. प्रमाणाभासजन्यं ज्ञानम् । 3. तदभाववति तत्प्रकारकं ज्ञानम् ॥ (न्या.को.)

**अयशः** —सदोषत्वप्रथा ।

'तपो दानं यशोऽयशः (गी. 10-5) नैर्गुण्यप्रथा । (गी.भा.) अयशश्शब्दे नञः विरोधिपरत्वं प्रयोगप्रकर्षसिद्धमाह नैर्गुण्यप्रथेति । सदोषत्वप्रथेत्यर्थः ॥ (ता.चं.)

**अयास्यः** — प्राणः ।

अयमास्ये अन्तरिति, स अयास्यः ।
2. कश्चिदृषिः । मुखनिर्गतश्च । अयते आस्यात् इति ॥ (वि.को.)

**अयुक्तः** — सङ्गरहितः ।

'अयुक्तः कामकारेण' (गी.5-12) युक्तः-आत्मव्यतिरिक्तफलेष्वचपलः। अयुक्तः आत्मव्यतिरिक्तफलेषु चपलः, आत्मावलोकनविमुखः । (गी.भा.)

'अयुक्तः प्राकृतः स्तब्धः' (गी. 18-28) शास्त्रीयकर्मायोग्यः, विकर्मस्थः ॥ (गी.भा.)

**अयुतसिद्धम्** — अपृथक्सिद्धम् ।

युतसिद्धं पृथक्सिद्धं तद्भिन्नमित्यर्थः । 'यु- मिश्रणामिश्रणयोः' इति धातुः । रूपादिकं द्रव्यापृथक्सिद्धम्, चेतनाचेतनञ्च ब्रह्मापृथक्सिद्धम् । (श्रु.प्र.1-1-13)

ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । नाशपूर्व-क्षणपर्यन्तमित्यर्थः । अत्रेदं बोध्यम्- न घटाद्यवयवी कपालाद्यवयवासम्बद्धः सन् तिष्ठति । अवयव्यादयो हि अविनश्यन्तोंवयवाद्याश्रिता एवावतिष्ठन्ते । अवयवादिनाशानन्तरं विनश्यन्तस्तु क्षणमात्रं निराश्रिता एवावतिष्ठन्त इति । अयुतसिद्धौ च पञ्चविधौ । यथा अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति ॥ (न्या.को.)

**अयोगव्यवच्छेदपादः** — असम्भवपरिहारपरः पादः ।

यथा 'चोदनालक्षणोऽर्थो धर्मः' इत्यत्र चोदनैव प्रमाणम्, प्रमाणमेव चोदनेत्य वधारणद्वयम् स्थापितम् । तथा जन्मादिसूत्रेऽपि ब्रह्म कारणमेव, ब्रह्मैव कारणमित्यवधारण द्वयमपि विवक्षितम्; जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वात् ; लक्षणस्याव्याप्ति, अतिव्याप्ति, असम्भवपरिहारावश्यम्भावात् । तत्र व्यक्त्यैक्यान्नाव्याप्तिः; असम्भवपरिहाररूप अयोग-व्यवच्छेदः प्रथमपादे उक्तः; अतिव्याप्तिपरिहाररूपान्ययोगव्यवच्छेदः त्रिपाद्या क्रियत इति विभागः । (श्रु.प्र.1-2-1)

अनेन ब्रह्मजगत्कारणमेवेति सिद्धम् ॥

**अयोगिप्रत्यक्षम्** — अदिव्यबाह्येन्द्रियप्रसूतं ज्ञानम् ।

तत् सामान्यादृष्टाऽऽलोकविशेषादिसहकृतेन्द्रियजन्यं दृष्टसामग्रीविशेषात् प्रति नियतविषयम् । तत् श्रोत्रादीन्द्रियासाधारणकारणभेदात् पञ्चधा । (न्या.प.74)
अयोगिनां प्रत्यक्षमित्युक्तौ योगिनामेव योगाद्यदृष्टनिरपेक्षं अस्माकमिव सहजं घटादि प्रत्यक्षं न गृहीतं स्यात् । अतो योग्ययोगिसाधारण्येन योगादिविशेषाजन्यप्रत्यक्षमेवा योगिप्रत्यक्षम् वाच्यमिति भावः ॥ (टी.)

**अयोध्या** — योद्धुमशक्या नगरी ।

'यायोध्येत्यपराजितेति विदिता नाकं परेण स्थिता' (श्री.र.23) परमात्माधिष्ठिता वैकुण्ठपुरी । एतदनुसारेण रामाधिष्ठितपुर्यपि एवं व्यवह्रियते । 'तदपराजिता पूर्ब्रह्मणः' इति छान्दोग्ये श्रूयमाणत्वात्॥

**अयोनिजः** — (स.ना.580)

1. सारस्वतावतारे भगवद्वाक्सम्भवत्वादयोनिजः । (वि.स.भा.) सारस्वतावतारे

भगवद्वाक्सम्भवतया,योनौ भगे जायत इति योनिजः स नेति । (वि.स.नि.)

सारस्वतावतारे हि भगवन्मुखसम्भवात् ।
स्मृतो ह्ययोनिज इति वस्वर्णः कर्मनाशकः ॥ (वि.स नि.)

**अयोनिजः** — दिव्यजन्मवान् ।

अण्डजोद्भिजस्वेदजजरायुजरूपयोनिचतुष्टयानन्तर्भूतः । सीतादिः ॥

**अरः** — अप्राकृतदेशस्थितह्रदस्य नाम ।

'तस्य हवा एतस्य ब्रह्मलोकस्यारो ह्रदः' (कौ.उ.1-22) ब्रह्मलोकस्य समीपे अरसंज्ञको ह्रदः । (रं.भा.) 'अरश्च ह वै ण्यश्चार्णवौ' (छां.उ.8-5) भूलोकापेक्षया तृतीये द्युशब्दिते ब्रह्मलोके अर-ण्यसंज्ञकावर्णवौ स्तः ॥ (रं.भा.)

**अरकरः** — शीघ्रकरः ।

अरमिति शीघ्रे । संकल्पमात्रेण करोतीत्यरकरः ॥(वि.को.)

**अरणः** — स्वप्रापकः भगवान् ।

'ऋ गतौ' करणे ल्युट् ॥ (वि. को. )

**अरण्यायनम्** — अर-ण्यसंज्ञकार्णवस्थानं–ब्रह्मलोकः ।

'अत यदरण्यायनमित्याचक्षते, ब्रह्मचर्यमेव तत् । अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि' (छां. उ. 8-5) इतः भूलोकापेक्षया तृतीये द्युशब्दिते ब्रह्मलोके अर-ण्यसंज्ञकावर्णवौ स्तः । अतश्च अरण्यास्यनस्य ब्रह्मलोकस्य च अरण्यवासस्य च अरण्यायनशब्दकृतोऽभेदः ।

भुवं चतुर्मुखलोकान्तान्तरिक्षलोकञ्चापेक्ष्य भगवल्लोकस्य तृतीयत्वम् ; न तु चतुर्मुखलोकस्य तृतीयत्वमिति मन्तव्यम् । प्रश्नोपनिषदि चतुर्मुखलोकस्यापि अन्तरिक्ष लोककोटौ निवेशितत्वात् । (रं.भा.) 'ब्रह्मचर्यमेव तत्' इत्यनेनैतदरण्यायनं ब्रह्मचर्य साध्यमिति भावः ॥

**अरयः** — कृत्रिमशत्रवः ।

'सुहृन्मित्रार्युदासीन- ' (गी.6-9) निमित्ततोऽनर्थेच्छवः । (गी.भा. ) द्वेष्य व्यावृत्त्यर्थं अत्र कृत्रिमेति विशेषणम् ॥

**अरविन्दाक्षः** — (स.ना. 349)

अरविन्दसुन्दरे, (तद्वत्सुन्दरे) अक्षिणी अस्येति । (वि.स.भा.)

रक्तारविन्दनयनस्त्वरविन्दाक्ष ईरितः ॥ (वि.स.नि.)

**अराः** — चक्रस्य नाभिनेम्योरन्तरालवर्तीनि काष्ठानि ।

'तद्यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः ,एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः' (कौ. उ. 3-61)

यथा रथस्य नाभौ रथचक्रमध्यवर्तिसरन्ध्रकाष्ठाविशेषे अरशब्दिता अर्पिताः ; अत्र नेमिशब्दितं वलयाकारं काष्ठं यथा अर्पितं–एवं प्राणशब्दितपरमात्मनि प्रज्ञामात्राशब्दनिर्दिष्टाश्चेतना अर्पिताः । तेषु च भूतमात्राशब्दितग्राह्यग्राहकजातं सर्वं समर्पितमित्यर्थः । (रं. भा.) अनेन दृष्टान्तेन चेतनाचेतनधारकत्वं परमात्मनः प्रतिपादितम् ॥

**अरिष्टनेमिः** — विष्णुः ।

'स्वस्तिनः तार्क्ष्यो अरिष्टनेमिः' (तै. आ. 1-1)

'अरिष्टनेमिरजितः श्रीधरो यज्ञपुरुषः' इति हि वैजयन्ती । 'अरिष्टं पापे शुभयोः' इति च वैजयन्ती । अनेन अरिष्टानां शुभानां नेमिवत् धारकः –शुभप्रद इति यावत् । 'रिष–हिंसायां' इति निष्पन्नस्य नाश इत्यर्थः । नेमिशब्देन तद्घटितं चक्रम् । तथा च नाशरहितजगच्चक्रवान् इति च विवक्षितम् ।

1. गरुडपिता । 2. गरुडस्यानुजः । 3. पौषमासि सूर्यरथस्थः एको यक्षः ॥ (सं. अ.)

**अरुणाधिकरणन्यायः** — शास्त्रीयन्यायविशेषः ।

'अरुणया एकहायन्या पिङ्गाक्ष्या (गवा) सोमं क्रीणाति' इति श्रुत्यर्थनिर्णयाय प्रवृत्तः 'अर्थैकत्वे द्रव्यगुणयोः ऐककर्म्यात् नियमः स्यात्' इति सूत्रन्यायः । यतः समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्, अत एव 'अरुणया एकहायन्या पिङ्गाक्ष्या (गवा) सोमं क्रीणाति' इत्यारुण्यादिविशिष्टैकहायन्या क्रयः साध्यतया विधीयते । तदुक्तम् 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' इति ।

तत्रैवं पूर्वपक्षी मन्यते— यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारैकस्वभावत्वात् द्रव्यपर्यन्तमेवारुणिमानमभिदधाति, तथापि एकहायन्यन्वयनियमोऽरुणिम्नो न संभवति ; एकहायन्या क्रीणाति ; तच्चारुणयेत्यर्थद्वयविधानासंभवात् ।

ततश्च अरुणयेति वाक्यं भित्वा प्रकरणविहितसर्वद्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति । अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः । तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यादिति ।

अत्राभिधीयते—'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' । 'अरुणयैकहायन्या' इत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोः सामानाधिकरण्येनार्थैकत्वे सिद्धे सति एकहायनीद्रव्यारुण्यगुणयोः अरुणयेति पदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाऽभिहितयोः क्रयारूयैककर्मान्वयाविरोधात् अरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमः स्यात् ।

यद्येकहायन्याः क्रयसम्बन्धवत् अरुणिमसम्बन्धोऽपि वाक्यावसेयः स्यात्, तदा वाक्यस्यार्थद्वयविधानं स्यात् । न चैतदस्ति, अरुणयेति पदेनैवारुणिमविशिष्ट द्रव्यमभिहितम् । एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रं अवगम्यते, न गुणसम्बन्धः । विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः । 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति हि सामानाधिकरण्यलक्षणम् ।

अत एव हि 'रक्तः पटो भवति' इत्यादिष्वैकार्थ्यादेकवाक्यत्वम् । पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः । रागसंबन्धस्तु रक्तपदेनैवाभिहितः । रागसम्बन्धिद्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्यावसेयम् । एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा, तेन तेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम्, 'देवदत्तः श्यामो युवा लोहिताक्षः दण्डी कुण्डली तिष्ठति' ; 'शुक्लेन वाससा यवनिकां सम्पादयेत्'; 'नीलमुत्पलमानय'; 'नीलोत्पलमानय' 'गामानय शुक्लां शोभनाक्षीम्'; 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्' इति । एवं 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इति ।

एतदुक्तं भवति । यथा 'काष्ठैः स्थाल्यां ओदनं पचेत्' इत्यनेककारक-विशिष्टैका क्रिया युगपत् प्रतीयते ; तथा समानाधिकरणपदसंघाताभिहितमेकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः ; खादिरैः शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेत्' इत्यादिष्विति । (श्री. भा. 1-1-13)

ननु कारकविभक्तेः क्रियान्वयबोधोपक्षीणत्वात् न परस्परान्वयबोधकत्वम् । उच्यते–कारकविभक्तिः क्रियान्वयबोधिका स्यात् । किमत्रायोगव्यवच्छेद एव उतान्ययोगव्यवच्छेदश्च । अयोगव्यवच्छेदमात्रं न विरुद्धम् । अन्ययोगव्यव च्छेदश्चेत्– तर्हि क्रियान्वयबोधोपक्षीणा कारकविभक्तिः 'पशुनायजेत' इत्यादि सङ्ख्यान्वयमपि न बोधयेत् । कारकविभक्तित्वाकारात् क्रियान्वयबोधनम्, एक-वचनत्वद्विवचनत्वाकारात् सङ्ख्यान्वयबोधनमित्याकारभेदादविरोधइतिचेत् समान-विभक्तित्वाकारविशेषेण तद्वत् परस्परान्वयमपि बोधयेत् ।

क्रियान्वयसङ्ख्यान्वयवत् परस्परान्वयस्यापि विरोधाभावात् विलम्बाविलम्बाव किञ्चित्करौ । 'पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्' इति न्यायेन युगपद्बोधनात् क्रमभावित्वाभावात् न विशेषणान्तरविशिष्टे विशेषणान्तरान्वयविधानेन विशेषणानां अन्योन्यसमवायप्रसङ्ग इत्यर्थः । . . . . यथा पट इत्येकपदप्रयोगे तत्स्थमेकवचनं न विशेषणविशेष्यैक्यं प्रतिपादयति, किन्तु विशेष्यैक्यमेव । तत्र नियामिका प्रत्यक्षमूला व्युत्पत्तिः –इहापि तद्वत् । युगपत् सर्वैर्विशेषणैरेकस्यैवार्थस्य विशेष्यत्वेन न विशेषणानामन्योन्यसमवायप्रसङ्गश्चेति । एवं सूत्रकाराभिप्रेतपूर्वपक्षराद्धान्तौ अभिहितौ ।

अस्माकन्तु पूर्वपक्षे सिद्धान्ते चारुणयेतिपदस्य द्रव्यपर्यन्तत्वमनुयायि । परेषान्तु गुणमात्रपर्यन्तत्वमुभयत्रानुयायि । आकृत्यधिकरणे गुणवाचिशुक्लादिपदानां जाति-वाचिगवादिशब्दवत् द्रव्यपर्यन्तत्वं निर्णीतम् । 'आक्षिप्तद्रव्ये गुणजाती' इति हि टीकाकारः । तत्रचात्रच को विशेष इति चेत्, एकैकप्रातिपदिकार्थनिरूपणमाकृत्यधि-करणे; अत्रत्वनेकप्रातिपदिकस्थसमानविभक्त्यर्थनिरूपणमिति भेदः ।

एवं प्रातिपदिकेन गुणान्वयः, समानविभक्त्या परस्परान्वयः; वाक्येन क्रयान्वयश्च बोध्यत इति कृत्यत्रयमुक्तम् । (श्रु.प्र.) अनेन परोक्तपूर्वपक्षसिद्धान्तौ सूत्रकारानभि प्रेताविति प्रादर्शि ॥

**अरुन्धतीनिदर्शनन्यायः** — लौकिकन्यायविशेषः ।

अरुन्धतीनिदर्शने बह्वीष्वपि तारासु अमुख्यासु अरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते सा मुख्यैवारुन्धती भवति । (मी.को.)

एवं तैत्तिरीये 'स वा एष पुरुषोऽन्नरसमयः' इत्यारभ्य प्राणमय-मनोमय-विज्ञानमय-आनन्दमयपर्यन्तेषु परमात्मत्वबुद्धिरवतीर्णा, अन्त्ये आनन्दमये एव मुख्या भवति ।अत एव 'आनन्दमयोऽभ्यासात्' इति सूत्रितम् ॥

**अरुन्मुखाः** — वेदाभ्यासरहिताः ।

'अरुन्मुखान् यतीन् सालावृकेभ्यः' (कौ. उ. 3-10) रौतीति रुत्-वेदः । रुत् मुखे न विद्यते येषां ते अरुन्मुखाः वेदान्तविमुखाः ॥ (रं.भा.)

**अरूपम्** — कर्मकृतरूपरहितं ब्रह्म ।

'तेजस्कायमरूपम्' (सु. उ. 8) रूपरसादिहेयरहितस्वरूपम् ॥ (टि.)

**अरूपवदेवहि तत् प्रधानत्वात्** — (ब्र.सू. 3-2-14) (उभयलिङ्गाधिकरणे चतुर्थं सूत्रम्)

ब्रह्म रूपरहिततुल्यमेव निर्वाहकत्वेन प्रधानत्वात् । मनुष्यादिशरीरेषु शरीरत्वमेव जीवस्य नामरूपभाक्त्वेन कर्मवश्यताहेतुः, तत्परस्याप्यविशिष्टं चेत् कथं परस्य ब्रह्मणः अकर्मवश्यत्वेन कर्मफलानशनमुच्यते इत्यत आह- 'अरूपवदित्यादि' । मनुष्यादिशरीरेषु शरीरित्वेऽपि अरूपवदेव हि तत्-परंब्रह्म, कुतः प्रधानत्वात्-निर्वाहकत्वात् । जीवस्य नामरूपभाक्त्वेन कर्मफलाशनं निर्वोढुः परस्य तत्तच्छरीरे शरीरित्वेनावस्थानम्-यथाह 'यस्य पृथिवी शरीरम्, यस्य आत्मा शरीरम्' आकाशो ह वै नामरूपयोः निर्वहिता ते यदन्तरा तद्ब्रह्मेति । अतः उभयलिङ्गमेव परंब्रह्म । अत्रारूपमित्यनुक्तेः रूपसम्बन्धस्य पारमार्थिकत्वं असुसूचत् ।

ननु तच्छरीरकत्वेन तदन्तर्यामित्वे कथमरूपवदिति रूपसम्बन्धरहिततुल्यत्वमुच्यते । इत्थं-यथा जीवस्य तत्तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसम्बन्धः तथा तदभावात् परस्यारूपवत्त्वम् । विधिनिषेधशास्त्राण्यपि कर्मवश्यमेवाधिकुर्वन्ति । तस्मादरूपतुल्यमेव परंब्रह्म । ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिलदोषत्व- कल्याणगुणाकरत्व-रूपोभयलिङ्गमेवेत्यनेन प्रसाधितम् ।

शरीरस्थमपि ब्रह्म रूपाभाववदेव हि ।

नामरूपादिकरणे प्रधानत्वात्परात्मनः ॥ (ब्र.प.मा. 328)

**अरौद्रः** — (स.ना. 906)

परमैश्वर्येऽपि गुणशीतळिम्ना अरौद्रः । (वि.स.भा.)

परमैश्वर्येऽपि गुणशीतळिम्ना रौद्रः उग्रः स नेति । (वि.स.निर्व.)

सर्वैश्वर्येऽपि सुगुणः शीतलोऽरौद्र उच्यते ॥ (वि.स.नि.)

**अर्कः** — (स.ना. ९01)

अहो महात्मा अतिधार्मिकः इति तैः (भक्तैः) स्तुतः । (वि. स. भा.)

स चाहो–अयं महात्मा–अतिधार्मिक इति तैः भक्तैः अर्च्यते ऋच्यते वा स्तूयते इति वा, तैरर्च्यते पूज्यते इति वा । (वि.स.निर्व.)

अत्यन्तधार्मिक इति स्तुतस्तैरर्क ईरितः ॥ (वि. स. नि.)

**अर्कः** — परमात्मा ।

'अर्चते वै मे कं अभूत् इति । तदेवार्कस्यार्कत्वम् ' (बृ.उ. 3-2-1) अर्चन-प्रवृत्ताय मह्यं कं-जलम् अभूत् इति सः परमात्मा अमन्यत इत्यर्थः । यस्माद्धेतोः एवममन्यत अतः एतादृशमननमेव अर्कशब्दितस्य परमात्मनः अर्कशब्दप्रवृत्तौ निमित्त मित्यर्थः । अर्कशब्दितत्वं च परमात्मनः, 'अर्को वाजसनिःशृङ्गी' इति भगवन्नाम सहस्रपाठादिति द्रष्टव्यम् । (रं.भा.)

'तस्यार्चतः आपः अजायन्त' इति श्रुत्यनुसारेण कं अभूत् इति अपां उत्पत्तेः अर्कशब्दवाच्यत्वं परमात्मनः ॥

**अर्चन् अचरत्** — स्वात्मप्रीणनाय सृष्टवान् ।

'सोऽर्चन्नचरत् । तस्यार्चत आपोऽजायन्त' (बृ. उ. 3-2-1) अर्चन्–प्रीणयन्, आत्मानमिति शेषः । कर्मकारकं च स्वयमेव । अर्चन् इत्यत्र 'लक्षणहेत्वोः क्रियायाः' इति हेतौ शतृप्रत्ययः । [अर्जयन् वसतीत्यादाविव फलस्यापि हेतुत्व-विवक्षा] जगद्व्यापारलीलया स्वात्मानं प्रीणयितुं अचरदित्यर्थः । उक्तं हि भगवता बादरायणेन [लोकवत्तु लीलाकैवल्यम् (ब्र. सू.2-1-33) इति] जगत्सृष्टेर्लीलारस एव

प्रयोजनमिति . . . . . . अर्चतः–प्रीणनाय प्रवृत्तस्य तस्य परमात्मनः सकाशात् आप उत्पन्ना इत्यर्थः । तत्र चापां प्राधान्यात् अप्छब्दप्रयोगः । अपां सृष्टिश्च स्रष्टुर्नारायणत्वे लिङ्गम् । 'एको ह वै नारायणः' इत्युपक्रम्य 'ता इमा आपः' इति श्रुतेः ॥ (रं. भा.)

अर्चा — 1. प्रतिमा ।

'अर्चा पूजाप्रतिमयोः' इत्युक्तेः अर्चाशब्दः प्रतिमावाची ।

(त. त्र. व्या. 183)

2. पूजा ॥

अर्चावतारः — भगवन्मूर्तिविशेषः ।

अर्चावतारः न परत्ववद्विप्रकृष्टः, सुरनराद्यवतारवत् क्वचित् कदाचिद्वा सदा सर्वेषु क्षेत्रायतनेषु गृहेषु च प्रत्यक्षत्वात् । अस्य च तत्त्वगुह्यं भगवच्छास्त्रे बोधायनवैष्णवस्मृतिपुराणादिषु निषेव्यम् । वैष्णवधर्मेषु–

'सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् ।
कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः' ॥
'तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् ।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्' ॥ इति । (वि. स. भा.559)

परव्यूहविभवान्तर्याम्यर्चाभेदेन भगवद्रूपं पञ्चविधम् । परव्यूहादिविग्रहवत् तत्तद्विग्रहानुप्रवेशात् अर्चाऽपि षाड्गुण्यप्रकाशकशुद्धसत्त्वद्रव्यमयी । 'समस्ताः शक्तयश्चैताः' 'समस्तशक्तिरूपाणि,'

'बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते ।
अर्चाऽपि लौकिकी या सा भगवद्भावितात्मनाम् ।
मन्त्रमन्त्रेश्वरन्यासात्साऽपि षाड्गुण्यविग्रहा' ॥

इत्यादिभिरुच्यते । देवतिर्यङ्मनुष्यादिविचित्रावतारदशायामपि 'आदित्यवर्णं तमसः परस्तात्' इत्यादिप्रसिद्धस्य परमपदनिलयविग्रहस्य सन्निवेशैकरूप्यं वा ।

(र. रक्षा. 110)

अर्चावतारो नाम देशकालविप्रकर्षरहितः आश्रिताभिमतद्रव्यादिकं शरीरतया स्वीकृत्य तस्मिन्नप्राकृतशरीरविशिष्टस्सन् अर्चकपराधीनस्नानभोजनासनशयनस्थितिः सर्वसहिष्णुः परिपूर्णो गृहग्रामनगरप्रशस्तदेशशैलादिषु वर्तमानो मूर्तिविशेषः ।

(य. दी. 138)

परव्यूहाश्रयणं देशविप्रकर्षाद्दुष्करं, विभवाश्रयणमस्मदादीनां कालविप्रकर्षाद्दुष्करम्, अन्तर्याम्याश्रयणं करणविप्रकर्षाद्दुष्करम्, अर्चावतारस्तु आश्रितपराधीनतानैयत्येनात्यन्तसुलभ इति तत्समाश्रयणमेव सुकरतमम् ।। (त. दी. 234)

**अर्चावतारभेदाः** — स्वयंव्यक्तदैवार्षादयः ।

अर्चावतारः स्वयंव्यक्त-दैव-सैद्ध—मानुषभेदात् चतुर्विधः ।। (य. दी. 139)

**अर्चितः** - (स. ना. 640)

अर्चा—अर्चावतारः, साऽस्य सञ्जातेति । (वि. स. भा.)

अर्चा ह्यर्चावतरोस्य क्षेत्रायतनसद्मसु ।
सञ्जातेत्यर्चितः प्रोक्तः सप्तार्णो वाञ्छितप्रदः ।। (वि. स. नि.)

**अर्चिमत्** — दीप्तिमत् । (ब्रह्म)

'यदर्चिमत् यदणुभ्योऽणु' । (मुं. उ. 2-2-2)

अर्चिश्शब्दितदीप्तिमत्त्वं विग्रहद्वारा । (रं. भा.) स्वरूपस्य नीरूपत्वादिति भावः ॥

**अर्चिरादयः** — आतिवाहिकाः देवताविशेषाः ।

'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न अर्चिषमेव अभिसंभवन्ति; अर्चिषोऽह्नः अह्नः आपूर्यमाणपक्षम्ः आपूर्यमाणपक्षात् यान् षडुदङ् एति मासाँस्तान् ; मासेभ्यः संवत्सरं संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युत्तम्; तत्पुरुषोऽमानवः ; स एनान् ब्रह्म गमयति' । (छां. उ. 4-15-5)

अर्चिराद्यात्मभूताः अभिमानिदेवताविशेषाः ॥ (श्री. भा. 4-3-4)

**अर्चिरादिगतिः** — अर्चिरादिदेवतातिवाह्यो मार्गः । (देवपथः—ब्रह्मपथः)

'मुक्तोर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दवातांशुमत्

ग्लौविद्युद्वरुणेन्द्रधातृमहितः सीमान्तसिन्ध्वाप्लुतः ।

श्रीवैकुण्ठमुपेत्य नित्यमजडम् . . . .' । (इति वरदगुरूक्तिः)

अर्चिरादिशब्देन 'अर्चिर्दिनपूर्वपक्ष' इत्यादिभिरुक्ताष्टादश (द्वादश) देवता विवक्षिताः । गम्यते अनेनेति गतिः । अर्चिरादिसंबन्धिनीं गतिः—अर्चिरादिगतिः; अर्चिरादिदेवतातिवाह्योमार्गः इति यावत् । (रह. मी. भा. 180)

'अयमप्यपरो मार्गः सदा ब्रह्मसुखैपिणाम् ।

परमैकान्तिसिद्धानां पञ्चकालरतात्मनाम्' ॥ इति ।

जयत्संहितादिभिः 'विभवार्चनाद्व्यूहं प्राप्य व्यूहार्चनात् परंब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यत इति वदन्ति' इत्यादि श्रीपाञ्चरात्राधिकारिभेदेन, मधुविद्यादिषु चोत्क्रमुक्तिपक्षाभिप्रायेण, गौणमुक्तिविवक्षया वा तत्र तत्र न्यूनाधिकव्यपदेशः ।

सत्यलोकादितः मुक्तानां गतिविशेषः तत्तदधिकारिभिरेव ज्ञातव्यः इति अस्माल्लोकात् मुक्तानां मार्गस्तु एकविधएवेति भावः ।।

**अर्चिरादिगतिसाफल्यम्** — गतिशास्त्रस्य वैयर्थ्यपरिहारः ।

'न च गमनानुपपत्तिः प्रमाणम् ; परस्य ब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्ट देशगतस्यैवाविद्यानिवृत्तिशास्त्राद अवगम्यते' इति । (श्री. भा. 4-3-11)

उत्क्रमणप्रभृतिचोत्तरोत्तरमतिशयितज्ञानानन्दशाली जायते । (न्या. सि. 163)

यतः प्रणष्टकर्मणोऽपि विदुषः स्वरूपाविर्भावप्रतिबन्धकसूक्ष्मशरीरानुवृत्तिः; अत एव निश्शेषप्रतिबन्धकनिवर्तकतया देशविशेषविशिष्टब्रह्मविषयकप्राथमिकसाक्षात्कारः अपेक्षितः इति तदर्थं गतिसाफल्यम् ।

यद्वा दर्शनसमानाकारोपासनादेव 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति निवृत्तसर्वप्रतिबन्धकस्यात्रैव स्वरूपाविर्भावावश्यंभावात् गतिर्मुधेत्याशङ्क्य, यथा प्रत्यूषो न सर्वसन्तमसनिवर्तकः तत्तुल्यः साक्षात्कारः इति गतिसाफल्यम् ।

(न्या. सि. टी.)

देहवियोगकाले कर्मरूपप्रतिबन्धकापनयः; अमानवकरस्पर्शदशायां प्रकृतिरूपप्रतिबन्धकापनयः; पर्यङ्कारोहणदशायां तदुभयविलक्षणभगवत्सङ्कल्परूपप्रतिबन्धकनिवृत्तिः। (न्या. सि. टी. 164)

एतेनात्रैव ब्रह्मप्राप्तिसम्भवात् तदर्थं गतिः व्यर्थेति वादो निरस्तः। देशविशेषविशिष्टब्रह्मप्राप्तेरेव मुक्तिरूपत्वात् अन्यथा गतिशास्त्रं निष्फलमेव भवेत्॥

**अर्चिराद्यधिकरणम् — (4-3-1)**

अर्चिरादिना तत्प्रथितेः।

अर्चिरादिपदोपक्रमं इदं सूत्रमेव तथा व्यपदिश्यते। छान्दोग्यकौषीतकीप्रभृतिषु बहुधा मार्गाम्नानात् ब्रह्मविदां अर्चिरादिनैव गतिरिति नियमो नास्तीत्याशङ्क्य- सर्वत्राप्यर्चिरादिमार्गैकत्वप्रत्यभिज्ञानात् एक एव मार्ग इति तेनैव सर्वे गच्छन्तीत्युक्तम्।

शाखासु बहुविधत्वात् गतिश्रुतेरर्चिरादिनियमो न।
तन्नैव नियमनं स्यात् सर्वत्रार्चिरादिचिह्नसंभवतः॥ (न्या. क. सं. 4-29)

**अर्चिरादिनातत्प्रथितेः — (ब्र. सू. 4-3-1) (अर्चिराद्यधिकरणम्)**

अर्चिरादिनैव गच्छति विद्वान्। कुतः? तत्प्रथितेः; प्रथितिः-प्रसिद्धिः; सर्वत्र तत्प्रत्यभिज्ञानात् इत्यर्थः। छान्दोग्ये श्रूयते 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदुच नार्चिषमेवाभिसंभवन्ति अर्चिषोहः अह्न आपूर्यमाणपक्षं आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासान् तान् मासेभ्यः संवत्सरं, संवत्सरादादित्यं, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति, एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तनावर्तन्ते' इति। तथा अत्रैवाष्टमे, 'अथैतैरेव रश्मिभिः ऊर्ध्व आक्रमते' इति। बृहदारण्यकादिष्वप्येवमेव प्रत्यभिज्ञायते। अतः विद्वान् एकेनैवार्चिरादिमार्गेण गच्छतीति सिद्धम्। एतैरेव रश्मिभिः इत्यत्र एवकारः अयोगव्यवच्छेदपर एव।

एकोऽर्चिरादिस्सर्वत्र ह्युच्यते तेन गच्छति।
मार्गेणैवेति तस्यैव प्रत्यभिज्ञानतः श्रुतौ॥ (ब्र. प. मा. 509)

अर्चिष्मान् — (स. ना. 639)

गूढप्रभवो हि तद्बाह्यान्तरचक्षुरुन्नयनक्षमदिव्यतेजोऽतिशयः । (वि. स. भा.)

भक्ताभ्यन्तरबाहीक चक्षुरुन्नयनक्षमम् ।

दिव्यं तेजः सदा यस्य अर्चिष्मानिति कथ्यते ॥ (वि. स. नि.)

अर्थः — (स. ना. 431)

एकभक्तेर्विशिष्टाधिकारिणः सम्यक् ज्ञानिनः स्वयं प्रयोजनत्वात् अर्थः ।
(वि.स. भा.)

विशिष्टाधिकारिणः सम्यग्ज्ञानिनः स्वयं प्रयोजनतया तेन अर्थते-प्राप्यते इति ।
(वि. स. निर्व.)

परमैकान्तिभिर्नित्यमीषणत्रयवर्जितैः ।

स्वयंप्रयोजनतया याच्यमानोऽर्थ उच्यते ॥ (वि. स. नि.)

अर्थः — 1. परमप्रयोजनम् ।

अर्थ्यते इति ह्यर्थः ; इष्यत इति यावत् । निरुपपदश्चार्थशब्दः स्वतः परम-प्रयोजनपरः । (श्रु. प्र. 1. भा. 2-95)

2. वस्तुसामर्थ्यम् । यौगिकशब्दानां अर्थप्रकरणादिभिः विनाऽर्थविशेष निश्चयायोगात् । (श्रु. प्र. 1-4-8)

3. स्ववाक्यस्थपदान्तरान्वययोग्यत्वम् । (श्रु. प्र. 1-4-16)

4. मोक्षः । 'अर्थस्स्याद्विषये मोक्षे' इत्यभिधानविदः । (श्रु. प्र. 2-1-9)

5. अर्चनीयभोगविशेषः । (ता. चं. 7-16)

6. निवृत्तिः । 'मशकार्थो धूमः' इति प्रयोगात् ।

7. अर्यमाणः - गम्यमानः, अभिधेयः । 'उषिकुषिगार्त्यर्तिभ्यस्थन्' इत्यादिना अर्तेरौणादिके 'थन्' प्रत्यये अर्थशब्दो निष्पन्नः ।

शब्दप्रतिपाद्यः इति यावत् । सः त्रिविधः । वाच्यः लक्ष्यः व्यङ्ग्य इति ।

४. धनम्—'अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु' इति ह्यमरः ॥

**अर्थकामादीनां वेदवेद्यता** — पुरुषार्थचतुष्टयस्य वेदवेद्यत्वम् ।

अर्थकामतदुपायानां लोकसिद्धत्वेऽपि धनेशपुरेशादिविभूतिरूपातिशयितार्थकाम तत्साधनानां, लोकसिद्धस्य पशुपुत्रादेः चित्रादिसाध्यत्वस्य च लौकिकप्रमाणागोचरत्वात् पुरुषार्थचतुष्टयस्य वेदवेद्यत्वोक्तिः युक्ता ॥ (श्रु. प्र. 1-33)

**अर्थक्रमः** — क्रमनियामकप्रमाणेष्वन्यतमः ।

श्रुत्यर्थपाठकाण्डमुख्यवृत्तिक्रमैर्हि तान्त्रिकाः कर्मणामानुपूर्वीमभिदधुः ।

अयमप्यर्थक्रमः -पूर्वकाण्डे हि ब्रह्मज्ञानमन्तरेण केवलकर्मानुष्ठानेनापरिमितफल-प्राप्तिरुच्यते । उत्तरकाण्डे तु कर्मपरिकर्मितात् ज्ञानात् ।

हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया ।

दावाग्निनान्धको दग्धः पश्यन्नपि च पंगुकः ॥ इति हि वदन्ति ।

तथाच लघूपायेन प्राप्ते फले गुरूपायस्य परित्याज्यत्वेन कर्मविचार एव प्रथमं क्रियते, तत्र दोषं दृष्ट्वा ब्रह्म विचार्यते इति ॥ (चिं. म. 7)

**अर्थक्रमेण पाठक्रमो बाध्यते** — अर्थक्रमस्य प्राबल्यम् ।

पाठक्रमादर्थक्रमो बलीयानिति हि न्यायः । अनेन न्यायेन पाठक्रमो बाधितः । पाठक्रमेणाण्डसृष्टेः पश्चात् त्रिवृत्करणमिति ज्ञायते, अण्डसृष्टेः प्रागपि त्रिवृत्करणमस्ति, अण्डसृष्ट्यर्थत्वात् त्रिवृत्करणस्य । त्रिवृत्करणमुपायः; अण्डसृष्टिः फलम् । उत्पत्तौ तत्फलंपश्चाद्भवति; सङ्कल्पे तु पूर्वभावि । उपायस्तूत्पत्तौ पूर्वभावी, सङ्कल्पे पश्चाद्भावीति लोकसिद्धम्, किं केन कथमित्यादौ । अतः 'नामरूपे व्याकरवाणि । तासां त्रिवृतं त्रिवृतं एकैकां करवाणि' इत्यस्मिन् व्यष्टिसृष्टिसङ्कल्पवाक्ये पश्चान्निर्दिष्टमण्डसृष्ट्यु पायभूतं त्रिवृत्करणं 'नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतं एकैकामकरोत्' इत्युत्प-त्तिवाक्ये पूर्वनिर्दिष्टस्यापि नामरूपव्याकरणस्य फलभूतत्वात् त्रिवृत्करणस्य फलरूपसृष्टेः पूर्वभावो निश्चीयते; अर्थक्रमेण पाठक्रमबाधस्य न्याय्यत्वात् । 'अग्निहोत्रं जुहोति, यवागूं पचति' इतिवत् ॥ (श्रु. प्र. 1. भा. 2-30)

**अर्थक्रियाकारित्वम्** — अर्थनिष्पत्तिहेतुत्वम् ।

'अर्थक्रियाकारित्वं अक्षणिकत्वमेव साधयेत्' (श्री. भा. 2-2-24)
एतेनार्थक्रियाकारित्वात् क्षणिकमिति पक्षः निरस्तः ॥

**अर्थज्ञानाभावेप्यनुष्ठेयम्** — अर्थज्ञानात्पूर्वमप्यनुष्ठेयं कर्म ।

अर्थज्ञानाभावेऽपि यावदर्थज्ञानं हितैषिवचनादनुष्ठानमप्युपपद्यत एव यथा ब्रह्मचर्ये । न च तावता मीमांसानैरपेक्ष्यं हितैषिणामाप्तत्वनिश्चयार्थं स्वयं शिष्याणामुपपादनार्थं च श्रवणोपपत्तेः । न चाध्ययनजन्यज्ञाननिरपेक्षं हितैषिवचनादनुष्ठानेऽपशूद्राधिकरणविरोधः । हितैषिवचनादनुष्ठानेऽपि मन्त्रविशेषाणां कृत्स्नवेदस्य च जप्यत्वात् तस्य चाध्ययनेनैव संपाद्यत्वात्, अध्ययनस्य चोपनयनाङ्गकत्वात् उपनयनस्य च त्रैवर्णिकाधिकारत्वाच्च शूद्रादेरुपनयनानधिकारात् अनुष्ठानानुपपत्तेः । 'न शूद्राय मतिं दद्यात्' इति निषेधाच्च शूद्रादेः नोपदिशन्त्येव । (श्रु: प्र. 3-4-12)

एतेन मन्त्रार्थज्ञानाभावेन सन्ध्यावन्दनादिकं नानुष्ठेयमिति शङ्का प्रत्युक्ता । हितैषिवचनादनुष्ठानेऽपि सर्वज्ञस्य परमात्मनः प्रीतिर्भविष्यत्येव । क्रमेणार्थज्ञाने सति श्रद्धातिशयो जायेतेति भावः ॥

**अर्थपञ्चकम्** — प्राधान्येन ज्ञेयानि पञ्च ।

'प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपायं फलं चैव तथा प्राप्तिविरोधि च ।
वदन्ति सकला वेदाः सेतिहासपुराणकाः' ॥

[प्राप्यभूतपरस्वरूपम्, उपेतृजीवस्वरूपम्, उपायस्वरूपम्, फलस्वरूपम्, प्राप्तिप्रतिबन्धकञ्चेति]

तत्र अध्ययनस्य सक्तुहोमवत् प्रधानकर्मत्वम्, स्वरूपेण विधेयत्वम्, अध्यापनविधिप्रयुक्तत्वम्, उपनयनस्य अध्यापनाङ्गत्वञ्च प्राभाकराभिमतमनादृत्य अध्ययनस्य अवघातवत् गुणकर्मत्वम्, नियमस्य विधेयत्वम्, अध्ययनस्य स्वविधि प्रयुक्तत्वम्, उपनयनस्याध्ययनाङ्गत्वञ्चेति कौमारिलाभिमतमर्थचतुष्टयम्, उभयानभिमतं अक्षरराशिग्रहणमात्रपर्यन्तत्वञ्चेति अर्थपञ्चकमपि विवक्षितम् । (श्रु. प्र. 1-92)

शैवमते–

मलं कर्म च माया च मायोत्थमखिलं जगत् ।
तिरोधानमयी शक्तिः अर्थपञ्चकमिष्यते ॥ (वि. को.)

**अर्थबोधने शक्तिः सहकारिणी** — अर्थनिर्णये सामर्थ्यं सहकारि ।

यथा 'अञ्जलिना सक्तून् जुहोति' इत्यत्र यद्यपि द्विहस्तसंयोगो अञ्जलिः, तथापि गुरुदेवतादिप्रसादनार्थाञ्जलिवत् निश्छिद्रसंयोगो न भवति; तादृशाञ्जलौ सक्तूनामवकाशाभावात् । अतः (पुरुष) सामर्थ्यात् संयुक्ताप्रसृतिद्वयात्मको मध्यगतावकाशोपेतः अञ्जलिर्गृहीतः । (मी. को.)

अत एवाभियुक्तैरुच्यते–

'अर्थात्प्रकरणाल्लिङ्गात् औचित्यात् देशकालतः ।
शब्दार्थाः प्रविभज्यन्ते न शब्दादेव केवलात्' ॥ इति ।

**अर्थयाथातथ्यम्** — पदार्थानां पारमार्थिकता ।

'कविर्मनीषी परिभूस्स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यस्समाभ्यः' ।
(ई. उ. 8)

परमपुरुषार्थतदुपायतद्विरोधिप्रभृतीन् सर्वान् पदार्थान् यथावद्विविच्य हृदयेन धृतवान् ।

ईश्वरः अर्थान्–कार्यपदार्थान्, शाश्वतीभ्यस्समाभ्यः–यावद्विलयमवस्थातुम्, याथातथ्यतो व्यदधात्–परमार्थतः व्यदधात्, न पुनरैन्द्रजालिकवत्केवलं प्रकाशितवान् ।
(वे. भा.)

अर्थान्–प्रणवार्थान् 'तस्य वाचकः प्रणवः' 'तज्जपस्तदर्थभावनम्' इति सूत्रोक्तान् यथावद्विविच्य हृदयेन धृतवान् इत्यर्थः ।

अर्थान्-मोक्षतदुपायतद्विरोधिप्रभृतीन्सर्वान्पदार्थान् शाश्वतीभ्यस्समाभ्यः – याव द्ब्रह्मप्राप्तीत्यर्थः । यथावत् विविच्य हृदयेन धृतवान् । (कू. भा.)

अत एव 'नाभाव उपलब्धेः' इति सूत्रेण ज्ञानातिरिक्तार्थसद्भावः साधितः । तथाच कार्यस्य मिथ्यात्वं वक्तुं न शक्यते इति भावः ॥

**अर्थयाथात्म्यम्** — अर्थनिर्णयः ।

'अनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्तन्यायमार्गाणाम्' ।
(श्री. भा. 1-113)

तात्पर्यविषयः । अत्रात्मशब्दः स्वरूपवाचीति भावः ॥ (श्रु. प्र.)

**अर्थवशीकरणम्** — विषयपरवशत्वाभावः ।

विषयासन्निधापनम्, हेयतया ज्ञापनञ्च । स्वसन्निधाविन्द्रियाणां दुर्निग्रह त्वापादनमेवार्थानां वशीकार्यत्वे परत्वम् । अत एवोच्यते 'इन्द्रियेभ्यः पराः ह्यर्थाः' इति ॥ (श्रु. प्र. 1-4-1)

**अर्थवादः** — 1. तात्पर्यलिङ्गविशेषः, स्तुत्यादिफलकः ।

'प्रामाण्यं न कथं भजन्ति विधिवन्मन्त्रार्थवादोक्तयः' । (तत्त्व. सा. 15)

पुराकल्पसरूपः भूतार्थप्रतिपादकांशः । (व्या.)

2. विध्यधीनप्रवृत्त्युत्तम्भकवाक्यविशेषः । सोऽपि प्रत्यक्षाद्यविरुद्धे स्वार्थे प्रमाणम् । स चतुर्धा । निन्दा, प्रशंसा, परकृति, पुराकल्पभेदात् ।
(न्या. प. 263-264)

अर्थवादसाध्या प्राशस्त्यादिप्रतीतिरपि अर्थस्य मिथ्यात्वे विध्युपकाराय न कल्पते । अतोऽर्थवादप्रतिपन्नार्थतथात्वं प्राशस्त्यमेव दृढीकरोति । तदुक्तम्—

'प्राशस्त्यादिप्रतीतिर्न च भवति मृषा वर्णनैरर्थवादैः' इति ।

नह्यसौ चतुर्वेदाभिज्ञः मयोच्यमानं मिथ्येत्युक्तौ प्राशस्त्यं प्रतीयते । न चैतद्वेदमात्रनियतम् ; लोकेऽपीयमेव गतिः । सप्तद्वीपाधिपतिर्महीपतिः चतुर्दश-विद्यास्थानवित् ब्राह्मणः इत्यादि लोकव्यवहारः स्वार्थ(प्रामाण्य)मेव पुरस्कुरुते । अन्यथा तत्तदाधिक्यप्रतिपादकानां श्रुतिस्मृतीतिहासपुराणानां साकल्येनाप्रामाण्य प्रसङ्गः । (स. सि. 442)

[ एतेनार्थवादवाक्यानां स्वांशे प्रामाण्यं साधितम् । अत्यन्तानुपपत्तिस्थले तु लक्षणादिः स्वीकर्तव्य इति भावः ।]

ऋगादिबहुप्रकारवान् वेदो मन्त्रार्थवादविधिरूपेण त्रिविधः। विध्यधीन-प्रवृत्त्युत्तम्भकवाक्यविशेषः अर्थवादः। (य. दी. 40)

विधिवाक्यानुगुणस्तुतिनिन्दान्यतररूपवाक्यम्। स च त्रिविधः ; गुणवादः, अनुवादः, भूतार्थवादः इति।

यत्र विशेष्यविशेषणयोरनन्वयः सः गुणवादः। 'अग्निर्माणवकः' इति वाक्यं अग्निवत् शुद्धं ब्रह्मचारिणं वदति।

प्रमाणान्तरसिद्धार्थकथनं अनुवादः। 'अग्निर्हिमस्य भेषजं' इति वाक्यं हिम-सान्निध्ये अग्निः शीतलो भवतीति प्रत्यक्षसिद्धार्थमेव बोधयति।

प्रमाणान्तरविरोधो प्रमाणान्तराधीननिश्चयश्च यस्य नास्ति तद्वाक्यं भूतार्थवादः। 'इन्द्रो वृत्राय वज्रमुदयच्छत्' वृत्रासुरं हन्तुं इन्द्रो वज्रायुधं उद्धृतवान् इति।

(सं. अ.)

निन्दाया अपि 'न हि निन्दान्यायेन' स्तुतावेव पर्यवसानम्॥

**अर्थशास्त्रम्** — अष्टादशविद्यास्थानेष्वन्यतमम्। अथर्वणवेदस्योपवेदश्च।

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः'॥

(वि. पु. 3-6-27 ; 28)

आयुर्वेदादिचतुष्कस्य दृष्टप्राधान्यात्केवलविद्यास्थानत्वात् न धर्मस्थानत्वमिति तस्य पृथगुक्तिः।

'आयुर्वेदो वैद्यशास्त्रं गान्धर्वो गीतशासनम्।
अर्थशास्त्रं दण्डनीतिर्धनुर्वेदोऽस्त्रशासनम्॥
चत्वार उपवेदास्ते' इति वैजयन्ती। (वि. चि.)

भूमिः, धनं, इत्याद्यर्थागमोपायप्रतिपादकं नीतिशास्त्रम् ॥ (सं. अ.)

**अर्थसामर्थ्यम्** — अर्थनिष्ठप्रकृतान्वययोग्यता ।

यथा- सर्वेश्वरनिष्ठाखिलहेयप्रत्यनीकत्वकल्याणगुणाकरत्वमोक्षप्रदत्वमुमुक्षूपास्यत्वादीनां प्रकृततापत्रयातुरजिज्ञास्यत्वान्वययोग्यता । (सं. अ.) ब्रह्मणि एतेषां धर्माणां सद्भावादेव तत् जिज्ञास्यं भवतीति भावः । अत एव भाषितम्–'तापत्रयातुरैः अमृतत्वाय स एव जिज्ञास्यः' इति ॥

**अर्थसामानाधिकरण्यम्** — अर्थनिष्ठं एकाधारवृत्तित्वम् ।

सामानाधिकरण्यं द्विविधं, शब्दनिष्ठं अर्थनिष्ठञ्चेति । शब्दनिष्ठन्तु भिन्नप्रवृत्तिनिमित्तकशब्दानामेकार्थबोधकत्वम् । अर्थनिष्ठन्तु विभिन्नपदार्थानां एकाधारकत्वमेव ॥

**अर्थसामान्यम्** — स्वरूपसाम्यम् । (स्वरूपनिरूपकधर्मस्य)

'इतरे त्वर्थसामान्यात्' (ब्र. सू.3-3-13) आनन्दादयः अर्थसामान्यात् सर्वत्रानुवर्तन्ते । ये त्वर्थसमानाः-अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिनः, तेऽर्थ स्वरूपवत् सर्वत्रानुवर्तन्ते । ते च गुणाः सत्यज्ञानानन्दामलत्वानन्तत्वानि । (श्री. भा.) अर्थप्रतीतिकाले प्रतीयमानत्वनियमः सामान्यशब्दाभिहितं साम्यमित्यर्थः ।(श्रु. प्र.)

ऋ-गतौ इति धातुना निष्पन्नः अर्थशब्दः । अनेन अर्यते प्रतीयते इति गत्यर्थानां ज्ञानार्थकत्वात् प्रतीयमानः इति लभ्यते । साम्यञ्च प्रतीतिनिबन्धनम् । तथा च यादृशधर्मं विना स्वरूपप्रतीतिः न जायते तेषां धर्माणां (अर्थसाम्यं) अर्थ सामान्यं भवति । ते च आनन्दत्वादय एव इति ते स्वरूपनिरूपकधर्माः इत्युच्यन्ते ॥

**अर्थसिद्धम्** — अर्थात् सिद्धम् ।

साक्षात् निरूपणाभावेऽपि अन्यनिरूपणेनैव स्वस्यापि सिद्धिः । (सं. अ.) अर्थापत्तिसिद्धमिति तात्पर्यम् ॥

**अर्थस्वरूपम्** — प्रकाराश्रयभूतं विशेष्यम् ।

'अर्थस्वरूपवद्भाति समाधिस्सोऽभिधीयते' इति हि शौनकवचनम् ।

अर्थस्वरूपशब्देन धर्मिस्वरूपमुच्यते । (श्रु. प्र. 3-3-13)

न च तावता विशेष्यं निर्धर्मकं, धर्म (गुण) रहितस्य शशविषाणायमानत्वात् इति भावः ॥

**अर्थान्तरम्** — (निग्रहस्थानविशेषः) प्रकृतानुपयुक्तवचनम् ।

यथा - क्षित्यादिकं सकर्तृकं प्रमेयत्वादित्युक्त्वा, स्वयमेव दूषणप्रतिभासे प्रमाविषयः प्रमेयम् । तत्र च त्वप्रत्ययान्तं प्रमेयत्वपदमित्यादि । एवं कुशकाशावलम्बेन प्रकृतानन्वितराजवार्तावतरणादिकमपि । ईदृशानां स्वाज्ञानसंवरणार्थं परव्यामोहनार्थं च प्रयोगसंभवः । अन्वितमपि अयुक्तमेव वदेत् इत्युपदेशः ॥ (न्या. प. 115)

**अर्थान्तरत्वाधिकरणम्** — (1-3-10)

1. आकाशोऽर्थान्तरत्वादिव्यपदेशात् ।
2. सुषुप्त्युत्क्रान्त्योर्भेदेन ।
3. पत्यादिशब्देभ्यः ।

इति सूत्रत्रयात्मकं आकाशपदोपक्रान्तं इदं एवं व्यवह्रियते ।

'आकाशो ह वै नामरूपयोः निर्वहिता' इत्यादिवाक्ये आकाशशब्दनिर्दिष्टः मुक्तात्मा, 'अश्व इव रोमाणि' इत्यनन्तरवाक्ये मुक्तस्य प्रकृतत्वात् इत्याशङ्क्य— नामरूपयोर्निर्वहितेति नामरूपनिर्वोढृत्वस्य परमात्मासाधारणस्य श्रवणात्, ब्रह्मलोकमभिसंभवानीति परमात्मनोप्यनन्तरप्रकृतत्वाचाकाशः परमात्मेति राद्धान्तितम् ।

धूत्वेति वाक्ये प्रकृतस्तु पूर्वं आकाशतां ऋच्छतु मुक्त एव ।
एतन्न हि प्राणिति नामरूपनिर्वाहकौ नैव हि बद्धमुक्तौ ॥

(न्या. क. सं 1-38)

**अर्थापत्तिः** — प्रमाणविशेषः । (अनुमानेऽन्तर्भूतः)

'अर्थापत्तिः परोक्ता न पृथगनुमितेर्व्याप्तिबोधादिसाम्या-
दव्याप्यानामयुक्तिर्नहि भवति न चाव्यापकाः स्थापकाः स्युः ।

जीवन् क्वापीति बोधो न गृह इति मतिं निश्चितां नोपरुन्धे
नातस्तच्छान्तये सा न यदि सममिदं सम्मते चानुमाने । (त. मु. 353)

उपमानस्यागमान्तर्भावमुक्त्वा तद्वदेवार्थापत्तेरनुमानान्तर्भावमाह -अर्थापत्तिरिति । व्याप्तिज्ञानादिसाम्यात् परोक्तार्थापत्तिर्नानुमानात् पृथक् भवति । आदिशब्दात् पक्षधर्मत्वमप्याह । जीवन् देवदत्तो बहिरस्ति, विद्यमानत्वे सति गृहे असत्त्वादिति देवदत्तनिष्ठतया हि हेतुरभिधीयते । अत्र व्याप्तिम् 'अनियाम्यस्य नायुक्तिः' इत्युक्तप्रकारेण विशदयति–अव्याप्यानामिति । जीवनवत्त्वे सति यो यत्र नास्ति स ततोऽन्यत्रास्तीति हि व्याप्तिप्रकारः । तमेवानुस्मृत्यानुपपद्यमानदर्शनादुपपादकभूतार्थान्तरकल्पनमर्थापत्तिरित्यभिधीयते, अनुपपद्यमानं व्याप्यं, व्यापकमन्तरेण व्याप्यस्यानवस्थानात् । तदिदमाह–अव्याप्यानामयुक्तिर्न हि भवतीति । उपपादकाश्च नाव्यापकाः । तदप्याह–न चाव्यापकाः स्थापकाः स्युरिति ।

[ अर्थापत्तेरनुमानेऽन्तर्भावः कथ्यते –

अनियाम्यस्य नायुक्तिः नानियन्तोपपादकः ।
न मानयोः विरोधोऽस्ति प्रसिद्धवाचाप्यसौ समः इति ।।]

अनेन अनियाम्यस्येत्यादिश्लोके पूर्वार्धं विवृतम् । अनियाम्यस्य-अव्याप्यस्य, नायुक्तिः–नानुपपद्यमानता, नानियन्तोपपादकः – नाव्यापक उपपादक इत्यर्थः । तथा च व्याप्तिरेव नामान्तरेणानुपपत्तिरित्युच्यते अर्थापत्तिवादिभिः । (स. सि.)

दिवाऽभुञ्जानस्य पुरुषपीनत्वदर्शनात् रात्रौ भोजनं कल्प्यते । एतस्यानुमानेऽन्तर्भावः । (य. दी. 34)

अतिरिक्तं प्रमाणमिति मीमांसकाः ।।

अर्थापत्तिविषयस्य शाब्दबोधे भानम् —

एतज्जीवस्येदं शरीरमिति वाक्यात् आधेयत्वादित्रितयस्य बोधेऽपि न त्रितयस्य शक्यतावच्छेदकत्वावश्यकता, तत्राधेयत्वमात्रस्य शक्यतावच्छेदकत्वेऽपि विधेयत्वशेषत्वयोरर्थापत्तिवशेन भानसम्भवात् । सिद्धान्ते पदजन्यपदार्थोपस्थितिविषयस्येव अर्थापत्तिविषयस्यापि शाब्दबोधे भानाङ्गीकारात् शरीरत्वमाधेयत्वशेषत्वाभ्यां विना अनुपपन्नमित्यर्थापत्तेः प्रकृतेऽपि सम्भवात् ।

अत एव हि घटेन जलमाहरेत्यादौ छिद्रेतरत्वं विना जलाहरणमनुपपन्नमिति अर्थापत्तिविषयीकृतस्य छिद्रेतरत्वस्य शाब्दबोधभानमानुभाविकं इति चेन्न ; 'आक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात्' इति भाष्यानुरोधेन अर्थापत्तिविषयस्य शाब्दबोधे भानस्य शक्त्यसम्भवस्थल एव स्वीकारात् ॥ (वे. वा. 17-9)

**अर्थापरोक्ष्यम्** — अर्थसाक्षात्कारः ।

प्रत्यक्षज्ञानविषयत्वमेवार्थापरोक्ष्यम् ॥ (वे. मं. दी. 27)

**अर्थार्थी** — ऐश्वर्यकामः ; चतुर्विधभक्तेष्वन्यतमः ।

'आर्तो जिज्ञासुरर्थार्थी' (गी. 7-16)

अप्राप्तैश्वर्यतया ऐश्वर्यकामः । (गी. भा.) अर्थशब्दोऽत्रार्थनीयभोगविशेषपरः । (ता. चं.) अपूर्वैश्वर्यकामः ॥ (य. दी. 113)

**अर्थिकल्पकः** — परमात्मा ।

'समर्थमापत्सखमर्थिकल्पकम्' । (स्तो. र. 45)

स्वार्थे कः । अर्थिनां कल्पद्रुमवत् सर्वापेक्षितप्रदमिति यावत् । तथा च सूत्रितं 'फलमत उपपत्तेः' इति । यद्वा अर्थिनः कल्पद्रुमभूताः यस्य सोऽर्थिकल्पकः ; तदाह- 'उदाराः सर्व एवैते' इति । अथवा स्वयमर्थिनः कल्पयतीत्यर्थः । क्षेत्रज्ञानां तत्तत्पुरुषार्थाधिकारदशापि हि परमपुरुषकल्पिता । (स्तो. र. भा.)

'अर्थिकल्पक, आपत्सख' (श. ग. 108)

अर्थी च कल्पकश्चेति विग्रहः । अर्थिनां कल्पद्रुम इति वा । उक्तंहि- स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य चेति । अर्थिनः कल्पद्रुमा यस्य सः अर्थिकल्पक इति वा विवक्षितम् । यदगीयत-'उदारास्सर्वे एवैते' इति अभिमतपुरुषार्थदानार्थमर्थिनामुत्पादकः शास्त्रादिमुखेनार्थित्वापादकश्चेति वा ॥ (र. रक्षा.)

**अर्थितोऽर्थतोऽनर्थः** — स्वयं प्रार्थितोऽभ्युदयः फलतः अनर्थावह एव ।

'अर्थतोऽनर्थमप्यर्थितं दिशता संसारतन्त्रवाहिनाऽप्यवसरप्रतीक्षेण श्रीमता पुण्डरीकाक्षेण समीक्ष्यमाणः' (नि. रक्षा. 4)

अभ्युदयरूपपुरुषार्थस्यऽऽपाततो अर्थत्वेऽपि पर्यवसाने फलतः अनर्थतैवेति भावः । यद्वा मोक्षार्थमेव सर्वकर्मणां विहितत्वात् प्रत्ययार्थञ्च मोक्षस्य फलान्तरसाधनत्वस्यान्यथाऽनुपपत्त्या भगवता आरोपितत्वात् अर्थतः-अन्यथानुपपत्त्या अगतिकतया दिशतेत्यन्वयार्थः । यद्वा अर्थतः-सामर्थ्यात्-अनर्थावहत्वस्वभावादित्यर्थः ॥ (टि.)

एतेन मुमुक्षोरपि ध्यानानुष्ठानाय ऐहिकायुरारोग्यैश्वर्यादीनां आवश्यकतया, अनर्थावहत्वोक्तिः कथमिति विशयः व्यावर्तितः ।

'शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् ।
ददाति ध्यायिनां नित्यं अपवर्गप्रदो हरिः' ॥

इत्युक्तेः तेषां आनुषङ्गिकत्वात् ॥

**अर्थेनैव विशेषो हि निराकारतया धियाम्** — अयं च न्यायविशेषः ।

अस्य समन्वयस्तु, 'परो मा अस्येति परमः' परमेश्वरविषयज्ञानस्यैवापवर्गोपायवेदनत्वमाह-'संज्ञायते येन तदस्तदोषं . . . . . तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्' । अस्तदोषमित्यादि ब्रह्मविशेषणम् । येन शास्त्रजन्यज्ञानेन विज्ञायते; येनोपासनात्मकेन सन्दृश्यते, येन परमभक्तिरूपेणानुभवरूपेण च प्राप्यते-अनुभूयते इत्यर्थः ।

'भक्त्या त्वनन्यया शक्यः . . . . . प्रवेष्टुं च परन्तप' इति वचनात् । स ज्ञायते इति पाठे अस्तदोषमित्यादि ब्रह्मज्ञानविशेषणम् ।

'अर्थेनैव विशेषो हि निराकारतया धियां' इति वचनात् ज्ञानस्यास्तदोषत्वादिकं विषयद्वारा । अस्तदोषमिति दोषास्पदाचिद्विषयज्ञानात् व्यावृत्तिः । शुद्धमिति 'अशुद्धास्ते समस्तास्तु' इत्याद्युक्तकर्मवश्याशुद्धबद्धजीवविषयज्ञानाद्व्यावृत्तिः ।

(श्रु. प्र. 1-212)

तथा च एवं सर्वत्र ज्ञानस्य वैलक्षण्यं विषयनिबन्धनमेवेति सिद्ध्यति ॥

**अर्थैकत्वात् एकं वाक्यम्** —

वाक्यस्य नानाकारकान्वितएकाख्यातार्थाभिधायित्वात् प्रधानभूतार्थैकत्वमेव

विवक्षितम् । अतः विभागे साकाङ्क्षत्वकथनं युज्यते । एवं महावाक्यस्थले अवान्तर-वाक्यानि पदस्थाने परिकल्प्य एकवाक्यता ग्राह्या । अत एव 'विभागे' साकांक्षत्वे सत्यत्वे ह्येकवाक्यत्वमित्युक्तं व्यासार्यैः ॥ (भा. प्र. 1-1-13)

**अर्धपञ्चमाः** — अर्धाधिकचत्वारः श्रावण्यादिमासाः ।

'मासान् विप्रोऽर्धपञ्चमान्' अर्धं पञ्चमं येषां ते अर्धपञ्चमाः ॥

(त. टी. 33)

**अर्धमात्रा** — प्रणवान्ते श्रूयमाणनादविशेषः ।

अथर्वशिखायां 'ब्रह्मविष्णुरुद्रेन्द्राः ते सर्वे संप्रसूयन्ते' इति ब्रह्मादेरिव भगवतोऽपि प्रसूतिः श्रूयते । अतः तदतिरिक्तं कारणं तत्र ध्येयतया उच्यते, इत्यत्राह-

'शुद्धैः स्वेच्छावतारैः भजति सुलभतां तावता उत्पत्त्यनूक्तिः' ।

इति तत्रैव प्रणवनिरूपणे एतत् स्थापितम् । तथाहि प्रणवस्य तिसृणां मात्राणां वर्णभेदां त्रिमूर्तिदेवताकत्वं च उक्त्वा तस्य चतुर्थ्या अर्धमात्रायाः सर्ववर्णत्वं पुरुषदेवताकत्वं च उक्तम् । स च पुरुषः 'सृष्टिस्थित्यन्तकरणीं' इत्यादावुक्त एव जनार्दनः । 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः' 'यथा पाण्ड्वाविकं' 'यथेन्द्रगोप' इत्यादिना च पुरुषस्य सर्ववर्णविग्रहः श्रुतः । भारतादौ च विश्वरूपादिविग्रहे व्यक्तमेतत् । तदुक्तम्-

'प्रोक्तो विष्णुः शिखायामपि हि स पुरुषः प्रासतारार्धमात्रः' इति ।

(त. मु. ; स. सि. 155)

ननु अवसाने श्रूयमाणनादात्मिकायाः अर्धमात्रायाः, 'अर्धमात्रात्मको नादो ब्रह्मनादैकविग्रहः' इति प्रमाणप्रतिपन्नायाः ओंकारभिन्नत्वात् कथमस्याः अर्धमात्रायाः ओंकार इत्युक्तिः इति चेत्–'अर्धमात्रात्मको नादो ब्रह्मनादैकविग्रहः' इत्योंकारं प्रस्तुत्य, 'तन्नोऽभूत् त्रिवृदोंकारः' इति ओंकारप्रकृतित्वस्य श्रवणात् तस्य ओंकाराभेद-व्यपदेश इति द्रष्टव्यम् । 'याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोकः ओंकारः' इति श्रुतिः । (अ. उ. रं. भा. 1-7)

[अनेन अर्धमात्रायाः प्रणवमूलत्वेन प्रणवाभेदः सिद्धः ]

'भास्वती स्मृता प्रथमा रक्तपीता महद्ब्रह्मदे(दै)वत्या । द्वितीया विद्युमती कृष्णा विष्णुदेवत्या । तृतीया शुभाशुभा शुक्ला रुद्रदेवत्या । याऽवसानेऽस्य चतुर्थ्यर्धमात्रा विद्युमती सर्ववर्णा पुरुषदेवत्या । स एष हि ओंकारः चतुरक्षरः चतुष्पादः चतुश्शिरः चतुरर्धमात्रः (चतुर्थी अर्धमात्रा यस्य सः) । स्थूलमेतं सत् (स्थूलमेतत्) ह्रस्वदीर्घप्लुतमिति । ओं १ ओं २ ओं ३ [सः] इति त्रिरुक्त्वा चतुर्थश्शान्त आत्मा . . . . . .' । (अ. उ. 1; 7-15)

तुरीयमात्रार्धभूतः पुरुषशब्दितो वासुदेवः शान्तावचो महात्मा चतुर्मात्रप्लुतप्रयोगेण [प्रणवविशिष्टतया] अनुसंधीयमानस्सन् स्वप्रकाशज्ञानमयः हृदये वर्तते इति उक्तेः चतुर्थार्धमात्रयाऽनुसंहितः परमात्मा हृदये प्रतिष्ठितो भवति ।

न च एचो ह्रस्वाभावात् कथमोंकारस्य ह्रस्वत्वं इति शङ्कनीयम्, न्यूङ्खेषु ह्रस्वस्यापि प्रयोगदर्शनात् । (रं. भा.)

अत्र द्वितीयमात्रावाच्या विद्युमती विष्णुदेवत्या तुरीयवाच्या विद्युमती पुरुषदेवत्या च इति अनयोः पर्यायत्वात्, तुरीयवाच्यायाः परत्वे सर्वसम्मतत्वात् तदभिन्नद्वितीयमात्रावाच्याया अपि विष्णुदेवतायाः अवताररूपत्वमेवेति सर्वैरप्यंगीकरणीयमेव ॥

**अर्धमात्रः**— अर्धमात्राप्रतिपाद्यः विष्णुः ।

'प्रोक्तो विष्णुश्शिखायामपि हि स पुरुषः प्रास्तताराधमात्रः' इति ।

(त. मु. 155)

'चतुर्थ्यर्धमात्रा विद्युमती सर्ववर्णा पुरुषदैवत्या' (अथ-शि-1-11) इति अत्र मात्राप्रतिपाद्यः पुरुष इत्युच्यते । पुरुषशब्दश्च—

भगवानितिशब्दोऽयं तथा पुरुष इत्यपि ।

निरूपाधी च वर्तेते वासुदेवे सनातने ॥

इत्यादौ विष्णुपरः प्रसिद्धः । 'द्वितीया . . . . . . विष्णुदैवत्या' इत्यत्र, अत्र च 'विद्युमती' इति पदप्रयोगात् उभयोरैक्यं, सर्वात्मकस्य भगवत उभयत्र परिगणनं च युक्तं अर्धमात्रा आस्यस्तीति मत्वर्थीयोच्प्रत्ययः ॥

**अर्धवृगलम्** — एको भागः ।

'तस्मादिदमर्धवृगलमिव' (बृ. उ. 3-4-3) अर्धविदलम् । (रं. भा.) वृगलशब्दः

विकारार्थः इत्यानन्दगिरिः । बृगलम्-विदलम्, एको भागः । अर्धभूतं बृगलं-अर्धविदलम् । तस्मात् ब्रह्मोत्पन्नविराट्शरीरे एवं दर्शनात् इदं लौकिकपुरुषशरीरमपि स्वः संपरिष्वक्तस्त्रीपुरुषसमुदायरूपेणैव स्वशब्दात्मशब्दवाच्यस्यार्धविदलमर्धरूपो भागः । (टि.)

**अर्धवैनाशिकाः** — वैशेषिकाः ।

वैनाशिकाः - बौद्धाः सर्वद्रव्यविनाशवादित्वात् । अर्धवैनाशिकास्तु वैशेषिकाः सावयवद्रव्येषु अवयविनो विनाशं वदन्ति, न परमाणुपरममहतोः । तेनार्धवैनाशिका इत्युच्यन्ते । (चिं. म. 165)

एकक्षणमात्रवृत्तित्वं वस्तूनां वदन्ति बौद्धाः । ज्ञानादीनां क्षणद्वयमात्रावस्थायित्वाङ्गीकारात् वैशेषिका अर्धवैनाशिका इत्यपि केचित् ॥

**अर्धसम्पत्तिः** — मूर्च्छावस्था ।

'मुग्धेऽर्धसम्पत्तिः परिशेषात्' (ब्र. सू. 3-2-10) मरणायार्धसम्पत्तिः मूर्च्छा । मरणं हि सर्वप्राणदेहसम्बन्धोपरतिः । सूक्ष्मप्राणदेहसम्बन्धावस्थितिः मूर्च्छा ॥ (श्री. भा.)

**अर्धोक्तिरपि पूर्णोक्तिकार्यकरी** — अयञ्च न्यायविशेषः ।

अस्य न्यायस्य समन्वयं प्रदर्शयति–

'नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे' । (स्तो. र. 1) अत्र नाथशब्देन 'नामोक्तौ अर्धोक्तिरपि पूर्णोक्तिकार्यकरीति' न्यायेन श्रीरङ्गनाथः इति नामधेयं स्वापेक्षितसिद्ध्यै याचनीयत्वं स्वामित्वं च विवक्षितम् । (स्तो. र. भा.)

'नाथृनाधृयाच्ञोपतापैश्वर्याशीःषु' (भ्वा. 6-7) इति धातोः कर्मणि घञ् । याच्ञार्थविवक्षायां याचनीयत्वं ऐश्वर्यार्थविवक्षायां च स्वामित्वं च लभ्यते । 'विनापि प्रत्ययं पूर्वोत्तरपदयोः लोपो वा वक्तव्यः' (वा. 3299) इति अनुशासनं अत्र विवक्षितम् । यथा-देवदत्तः, दत्तः, देवः इति । सत्यभामा; सत्या, भामा, इत्यादि । अयमेव नामैकदेशे नामग्रहणन्यायः ॥

**अर्भकौकस्त्वम्** — अल्पायतनत्वम् ।

'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च'

(ब्र. सू. 1-2-7)

'एष मे आत्माऽन्तर्हृदये अणीयान्' (छां. उ. 3-14-3) मदीये हृदये व्रीह्याद्यपेक्षया अणुत्वेन अल्पत्वेन एषः परमात्मा उपासनार्थं अवस्थितः इत्यर्थः । तथानुसंधानं कर्तव्यमिति भावः ॥ (रं. भा.)

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ।** (ब्र. सू. 1-2-7)

(सर्वत्रप्रसिद्ध्यधिकरणे सप्तमं सूत्रम्)

अल्पायतनत्वात् अल्पत्वव्यपदेशाच्च नायं परः इति चेन्न; उपास्यत्वाद्धेतोः; तथा व्यपदेशः व्योमवत् । स्वरूपमहत्वं च अत्रैव व्यपदिश्यते ।

'एष म आत्माऽन्तर्हृदये' इत्यल्पस्थानत्वात् 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यल्पत्वव्यपदेशाच्च शाण्डिल्यविद्या न परब्रह्मपरेति चेन्न । निचाय्यत्वादेवं, एवमुपास्यत्वाद्धेतोः अल्पायतनत्वाल्पत्वव्यपदेशः, न स्वरूपाल्पत्वेन । 'ज्यायान् पृथिव्यां' इत्यादिना सर्वस्मात् ज्यायस्त्वोपदेशात् । ज्यायसोऽप्यस्य हृदयायतनावच्छेदेनाल्पत्वानुसंधानमुपपद्यते । व्योमवत् - यथा महतोऽपि व्योम्नः सूचीपथादिष्वल्पत्वानुसंधानम् । च शब्दोऽवधारणे । तद्वदेवेत्यर्थः । स्वाभाविकञ्चास्य महत्वं अत्राभिधीयते इत्यर्थः । ('चायृ-दर्शने' इति हि धातुना निष्पन्नोऽयं निचाय्यशब्दः)

ज्यायान् पृथिव्याः, ज्यायानन्तरिक्षात्, ज्यायान् दिवः, ज्यायानेभ्यो लोकेभ्यः इति ह्यनन्तरमेवोपपद्यते ।

अर्भकं-अल्पं, ओकः - नीडं यस्य सोऽर्भकौकाः तस्य भावः तत्त्वम् ।

'ओतुः पाकोऽर्भको डिम्भः' इति कोशानुसारेण अर्भकशब्दो बालपरोपि स्यात् । तदायमर्थः द्योत्यते । अतएवोक्तं वेदान्ताचार्यैरन्यत्र—

'दहरकुहरे देवस्तिष्ठन् निषद्वरदीर्घिका
निपतितनिजापत्यादित्सावतीर्णपितृक्रमात्'. इत्यादिना ।

अयं भावः - निषद्वरः - जम्बालः, तादृशकूपे पतितं निजापत्यं उद्दिधीर्षुरिव अगाधसंसारकूपे निपतितं निजापत्यं रक्षितुकामस्य हृदयकुहरएव परस्यापि वासस्थान-मभूदिति सूक्ष्मांशं असुसूचत् सूत्रकारः । अर्भकस्य शिशोः, ओक एव ओकः यस्येति बहुव्रीहिः विवक्षितः । अत्र समासः लोपः उष्ट्रमुखादिवत् ।

अल्पत्वाल्पस्थानवत्त्वव्यपदेशात्स नेश्वरः ।
इति चेन्न निचाय्यत्वान्महत्त्वं व्योमवत्स्वतः ॥ (ब्र. प. मा. 39)

**अर्यमा** — आदित्यविशेषः ।

'शन्नो भवत्वर्यमा' (तै. उ. 1)

इयर्ति-अस्ताचलं गच्छतीति, अर्यमा । 'ऋ गतौ' इति धातुः । 'असौ वादित्योऽर्यमा' इति । कर्मणामीश्वरत्वमत्र विवक्षितम् । एवमादयोऽपि सुखहेतवो भवन्तु ॥ (कू. भा.)

**अर्हः** — (स. ना. 877)

अनन्यस्पृहाणां तेषां (ज्ञानिनां) अपि अयमेव योग्य इति । (वि. स. भा.)

अनन्यस्पृहाणां तेषामप्ययमेवार्हति प्राप्तुं योग्यो भवतीति । (वि. स. निर्व.)

अनन्येच्छावतां पुंसां योग्यस्सोऽर्हं इति स्मृतः ॥ (वि. स. नि.)

**अलक्षणम्** — 1. अनुमानागम्यम्-परमात्मस्वरूपम् ।

'अग्राह्यमलक्षणम्' (मां. उ. 2-5) लक्ष्यतेऽनेनेति लक्षणम्, अनुमानम् । अनुमानागम्यम् । (रं. भा.)

2. अनुमापकरहितम् । लक्षणम्-अनुमापकम् । जाग्रदादिप्रवृत्तिरूपानुमाप-कराहित्यम् । (कू. भा.)

3. अननुमेयम्-तमोवस्थापन्नं प्रधानम् । 'आसीदिदं तमोभूतमप्रज्ञातम-लक्षणम्' । (मनु. स्मृ. 1-5)

अलक्षणं-अननुमेयम् । लक्ष्यतेऽनेनेति लक्षणं लिङ्गम् ; तदस्य नास्तीति

अलक्षणम् । (व्या.)

4. रूपादिरहितम् । (श्रु. प्र. 1-4-23)

5. स्त्रीत्वादि रहितम् - आत्मस्वरूपम् । 'सत्तामात्रमलक्षणम्'

(वि. पु.1-22-50)

स्त्रीत्वादिरहितम्; लिङ्गजन्यज्ञानागम्यमिति वा । (वि. चि.)

**अलक्ष्मीः** — लक्ष्मीप्रतिभटभूता ।

'अलक्ष्मीर्मे नश्यतां त्वां वृणे' (श्री. सू. 5)

'सा हि श्रीरमृता सताम्' इत्युक्तब्रह्मविद्यायाः अभावः । यद्वा, अलक्ष्मीः-स्वप्राप्ति विरोधिनी दुस्सहभार्या नश्यतु । लैङ्गे–

'अलक्ष्मीश्च मया प्रोक्ता पत्नी या दुस्सहस्य च ।
नारायणपदं ध्यात्वा नश्यत्येव न संशयः' ।। इत्युक्तेः ।।

**अलीकत्वम्** — तुच्छत्वम् ।

यथा शशशृङ्गादेरलीकत्वम् ।। (न्या. को.)

**अलूक्षाः** — क्रोधलोभादिरहिताः ।

'अलूक्षा धर्मकामाः स्युः' (तै. उ. 1-22)

**अलेपकमतनिरासः** — शतदूषण्यां ६५ तमो वादः ।

इह जगति केचित् अवधूतसकलवर्णाश्रमधर्माः चार्वाकसधर्माणः विधिनिषेध-यन्त्रणामतन्त्रयन्तः पारिभाषिकब्रह्मविदः अलेपकमतावलम्बिनः परमहंसविशेषाः गूढवेषाचाराः विश्वमाविलयन्ति । तेषामवलेपोऽत्र निरस्यते ।

ननु द्विविधाः परमहंसाः, विवृतवेषाचारः, गूढवेषाचाराश्चेति; तत्र जाबालि-कौषीतकादिश्रुतिषु तन्मूलबोधायनशौनकक्रतुकापिलविश्वामित्रादिस्मृतिषु परमहंसस्य दण्डादिविधानात् विवृतवेषाचाराः सिद्धाः । वाजसनेयतैत्तिरीयकाथर्वणबाष्कलादि-श्रुतिषु तन्मूलभगवद्गीतादिषु च सर्वत्यागमात्रविधानात् गूढवेषाचाराः सिद्धाः इति चेन्न ; त्यागोक्त्यादीनां फलसङ्गकर्तृत्वादित्यागविषयत्वस्य स्थापितत्वात् ।

यदुक्तं वैखानससूत्रे चतुर्विध(वर्ण)चतुराश्रमवर्णनावसरे 'परमहंसा नाम वृक्षैकमूले शून्यागारे श्मशाने वा आसीना वा सांबरा दिगम्बरा वा न तेषां धर्माधर्मौ, सत्यानृते, शुद्ध्यशुद्ध्यादि द्वैतं ; सर्वसमास्सर्वात्मानः, समलोष्टाश्मकाञ्चनाः सर्ववर्णेषु भैक्षाचरणं इत्यादि'। तत्रापि न हि अधर्मासत्याद्यनुमतिः क्रियते। तथासति तेषामित्यविशेषेण परामृष्टानां विवृतवेषाणामपि तदनुमतिप्रसङ्गात्। न च तदिच्छसि। अतः तत्रापि अधर्मासत्यादेः स्वाश्रमाङ्गभूतकतिपयधर्मव्यतिरिक्तधर्मादीनां च स्वरूपतः प्रहाणमुच्यते। यच्चाविद्वद्विषयं दण्डग्रहणञ्चेति तदपि साहसिकप्रलपितम्। विद्वांसमधिकृत्यैव तद्विधानात्। कथञ्चातिशयितविद्येन भवता इतिहासपुराणादिपठितकाषायदण्डशिखाधारिणः कपिलादिमहर्षयः, शङ्करादयश्च अद्वैतसिद्धान्तप्रतिष्ठापकाः (दण्डधारिणः) भगवन्नाथमुन्यादयश्चाविद्वांसः इति उन्नीतं ? तदेतदवैदिकसिद्धान्तसारस्यमन्तरेण न कस्मैचिद्रोचेत। एकदण्डत्रिदण्डादिकं तु प्रमाणानुसारेण विकल्प्यत एव। अतः 'मनीषी वैदिकाचारं मनसापि न लङ्घयेत्' इत्युक्तदिशा शास्त्रविरोधेनैव सर्वाश्रमनिष्ठैः वर्तितव्यमेव।

ये च नग्नचर्यामातिष्ठन्ते महात्मानः ते हि ब्रह्मचर्यकाष्ठामधिष्ठाय तथा भवन्ति। 'ऋषयो वातरशनाः' इति हि श्रूयते। सनत्कुमारादीनां नग्नता नित्यबाल्यावस्थया। केवलब्रह्मभावनाभावितात्मानः कुमाराः हि ते महात्मनः श्रूयन्ते। ऋभुशुकसंवर्तादिषु नग्नचर्यादिदर्शनादनाश्रमित्वमवगम्यत इति चेन्न ; नग्नचर्याया अपि वर्षवातातपादितितिक्षालक्षणकम्बलकबलिताशेषविशेषाकारपुरातनाधिकारिविशेषविषयव्रतविशेषरूपत्वात्। आश्रमित्वाभावे कथं वाताशनस्यैव संवर्तस्य महीभृता ऋत्विक्त्वेन वरणम् ? अतस्सर्ववर्णाश्रमसाधरणव्रतविशेष एव नग्नचर्या। स्मरन्ति हि—

दृष्टो धर्मव्यतिक्रमः साहसञ्च पूर्वेषां।
तेषां तेजोविशेषेण प्रत्यवायो न विद्यते।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरजः॥ इत्यादि।

एतेन सर्वेश्वरस्य भगवतो वसुदेवनन्दनस्य स्वच्छन्दलीलया गोपवधूदर्शनव्याकुलीकरणं व्याख्यातम्। परिहृतञ्चैतदकर्मवश्यतया भगवत्पराशरादिभिः ; कामाद्गोप्य इति भगवत्यनुरागानुवृत्तिरपवर्गायैव जायत इति चोक्तम्।

ननु धर्मसंस्थापनार्थाय सम्भवः तत्क्षोभकरणञ्चेति कथमिदमुपपद्यते ? न, उक्तोत्तरत्वात् । नन्दगोपनन्दनत्वाभिमानमभिनयतः तस्य न तावत्तदानीं वर्णाश्रमाचारानुवृत्तिनियमः । आभीरकन्यका अपि भगवन्तमेव भर्तारमभ्यर्थ्य जन्मान्तरचरितव्रता दिव्यप्रकृतय एवेति तास्वप्सरस्समाधिरनुसन्धेयः । तत्तदभिमतफलप्रदानञ्चेश्वरस्यादोषायेति ।

यदा तु भगवान् वसुदेवतनयतया प्रतिबोधमभिनयन् यदुवंशोदितं क्षत्रधर्ममनुप्राविशत्, तदा सावधान एव सर्वदा सर्वान् धर्माननन्वपालयत् ।

तथा हि सर्वत्र कथ्यते—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ इति ।

अतः न कदाचिदपि बुद्धिपूर्वपापानामलेपसंभवः ॥

**अलोक्यता** — ब्रह्मलोकार्हत्वाभावः ।

'न हैवालोक्यताया आशास्ति' (बृ. उ. 3-3-28) लोक्यता – लोकार्हता-तदभावः अलोक्यता – ब्रह्मलोकार्हत्वाभावः ॥ (रं. भा.)

**अलोलुप्त्वम्** — विषयेषु निस्स्पृहत्वम् । (दैवीसंपाद्विशेषः)

'दया भूतेष्वलोलुप्त्वं' (गी. 16-2) अलोलुप्त्वं – अलोलुपत्वम् । अलोलुत्वमिति वा पाठः । (गी. भा.) लुपि धातौ यङ्लुगन्ते क्विपि कृते लोलुबिति पकारान्तं पदं अचि कृते तु लोलुपः इति; तद्व्यञ्जयति अलोलुप्त्वं, अलोलुपत्वमिति । 'लूञ् छेदने' इति धातौ लोलू इति यङ्लुगन्तम् । तत्र 'त्वे च' इति छान्दसं ह्रस्वमभिप्रेत्याह–अलोलुत्वंइति वा पाठः इति । अयोग्यस्पृहारूपं लौल्यमिह निषिध्यते इत्यभिप्रायेणाह-विषयेषु निस्पृहत्वमिति ॥ (ता. चं.)

**अलौकिकत्वम्** —1. वेदबोधितेष्टसाधनताकत्वम् ।

2. लोकावगतेष्टसाधनताश्रयान्यत्वम् ॥ (न्या. को.)

**अलौकिकप्रत्यक्षम्** — अलौकिकसंनिकर्षजन्यं प्रत्यक्षम् ।

अत्र संनिकर्षे अलौकिकत्वं च सामान्यलक्षण-ज्ञानलक्षण-योगज-एतदन्यतमत्वम् । विषयताविशेषो वा । यथा धूमत्वज्ञानानन्तरं सामान्यलक्षणप्रत्यासत्त्या जायमानं सर्वधूमविषयकं प्रत्यक्षं इति नैयायिकाः ।

[सिद्धान्ते तु अलौकिकसन्निकर्षः न स्वीक्रियते । व्याप्तिग्रहणसिद्धये धूमत्वेन निखिलधूमज्ञानसंभवेऽपि तस्य मानसिकत्वेन, प्रत्यक्षत्वाभावात् न तदर्थं सन्निकर्षविशेषस्यावश्यकता । अतः सामान्यलक्षणप्रत्यासत्तेर्नावसरः । एवमेव सुरभि चन्दनमिति विशिष्टप्रत्ययेऽपि ज्ञानलक्षणप्रत्यासत्तिः नोच्यते ।]

अयं भावः – यत्र विशिष्टप्रत्ययस्य पृथग्विशेषणविशेष्यग्रहणपूर्वकत्वं, तत्र भिन्नसामग्रीवेद्यत्वनिबन्धनस्तथाभावः ; सुरभिचन्दनत्वयोरन्योन्यनिरपेक्षभिन्नेन्द्रियग्राह्यत्वात् । तदपेक्षस्तु पश्चात् कुतश्चित् सुरभि चन्दनमिति विशिष्टप्रत्ययः । स तु चाक्षुषो मानसो आनुमानिकोवेत्यवसरे चिन्त्यम् । (स. सि. 257)

योगजप्रत्यक्षन्तु प्रकृष्टादृष्टविशेषजम् । तत् युक्तावस्थायां मनोमात्रजम् । वियुक्तावस्थायां तु बाह्येन्द्रियजन्यमपि । (न्या. प.95) अतः परोक्तसंनिकर्षत्रयस्य नावकाशः ॥

**अल्पबुद्धयः** — देहात्मविवेकशून्याः ।

'नष्टात्मानोऽल्पबुद्धयः' (गी. 16-9) घटादिवत् ज्ञेयभूते देहे ज्ञातृत्वेन देहव्यतिरिक्तात्मोपलभ्यते इति विवेकाकुशलाः । (गी. भा.) स्वयंज्योतिषः प्रत्यगात्मस्वरूपस्य देहाध्यासाधिष्ठानतया नित्यमुपलम्भाद्देहातिरिक्तत्वेन विशेषितम् । नष्टात्मत्वहेतुरिहाल्पबुद्धित्वमुच्यते इति पुनरुक्तिपरिहाराभिप्रायेणाह-घटादिवदिति । यद्वा पशुमृगादिवत् कर्मवशात् स्वारसिको विविक्तात्मानुपलम्भः । 'अल्पबुद्धयः' इति तु तत्परिहाराशक्तिरुच्यते इति भावः । एवं परावरात्मविषयविपरीतदृष्टिरुक्ता ॥ (ता. चं.)

**अल्पमेधसः** — अल्पगोचरबुद्धयः ।

'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' (गी. 7-23) अल्पेषु इन्द्रादिषु, तदधीनफलेषु च मेधा–बुद्धिः येषां ते अल्पमेधसः । अल्पगोचरत्वात् अल्पा मेधा येषां इति वा ॥ (ता. चं.)

अल्पश्रुतेरिति चेत् तदुक्तम् — (ब्र. सू. 1-3-20)

(दहराधिकरणे अष्टमं सूत्रम् )

दहरोऽस्मिन् अन्तरआकाशः इति अल्पपरिमाणश्रुतिः आराग्रोपमितस्य जीवस्यैवोपपद्यते, न तु सर्वस्मात् ज्यायसो ब्रह्मणः इति चेत् ; तत्र यदुत्तरं वक्तव्यं तत्पूर्वमेवोक्तं (ब्र. सू. 1-2-7) निचाय्यात्वात् उपास्यत्वाद्धेतोः इत्यनेन ।

अनेन व्यापकस्य परमात्मनः अल्पपरिमाणत्वं उपासनार्थमेवेति पूर्वोक्तं स्मारयति ।

अल्पत्वाल्पस्थानवत्त्वश्रुत्या ब्रह्म न तद्यदि ।
निचाय्यत्वादेवमिति दत्तोत्तरमिदं पुरा ॥ (ब्र. प. मा. 85)

अवकीर्णिपशुः — अवकीर्णिकर्तृकप्रायश्चित्तयागपशुः-गर्दभः ।

'ब्रह्मचार्यवकीर्णि नैरृतं गर्दभमालभेत' इति विधिः ॥

(श्रु. प्र. 3-4-40)

अवकीर्णी — क्षतव्रतः । (भग्नब्रह्मचर्यव्रतः )

'अकार्यकार्यवकीर्णी' (तै. ना. 49)

ब्रह्मचर्यभ्रष्टः अवकीर्णी । ब्रह्मचर्य—स्त्रीनियतिः, [स्त्रीतः स्वस्य नियन्त्रणं; तदसंगमः] सा गृहस्थव्यतिरिक्तानां त्रयाणामपि तुल्या । तस्मात् तेषां अवकीर्णिप्रायश्चित्तं कर्तव्यम् ॥ (श्रु. प्र. 3-4-40)

अवच्छेदकम् — व्यावर्तकम् ।

विशेषणम् । (सं. अ.)

अवच्छिद्यते व्यावर्त्यते अनेनेति हि व्युत्पत्तिः ॥

अवज्ञा — उपेक्षा । (धर्मभूतज्ञानावस्थाविशेषः)

क्षुद्रत्वेन प्रतिपत्तिः । प्रतीयमानोत्कर्षापह्नवेन निकर्षापादनम् ॥ (वि. को.)

**अवतारः** — प्रादुर्भावः । (परमात्मनः)

[अप्राकृतदिव्यमङ्गलविग्रहस्य नित्यत्वे कथमनित्यवद्भवतारसंभवः ? कथं च निकृष्टदेवादिसाजात्यम् ? इत्यत्राह तदेवेति–]

तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोति अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यजलनिधिर्निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परंब्रह्म पुरुषोत्तमो नारायण इति । (श्री. भा. 1-1-21)

तदेव-अप्रच्युतसंनिवेशमेव । संस्थानाशैथिल्येऽपि देवाद्यनेकदेहोत्पादकत्वं चतुर्मुखदेहे दृष्टं परमात्मविग्रहे युज्यत इति भावः । 'नित्याऽलिङ्ग्या स्वभावसंसिद्धिरिन्द्रियाकारा अङ्गप्रत्यङ्गव्यञ्जनवती' 'उज्जहारात्मनः केशौ सितकृष्णौ' 'अंशांशेनावतीर्योर्व्याम्' 'समस्तशक्तिरूपाणि तत्करोति जनेश्वर' 'कल्पे कल्पे जायमानः स्वमूर्त्या' 'सोंऽशो विष्णुमयं स्थानम्' इत्यादि अत्रानुसन्धेयम् ।

जीवानुप्रवेशेषु शोकादयो जीवांशगताः । साक्षादवतारेष्वभिनयमात्रम् ।

(श्रु. प्र.)

[पर-व्यूह-विभव-अन्तर्यामी-अर्चारूपेण अवतारः पञ्चविधः । प्रादुर्भावावतार इत्यपि व्यवह्रियते । एतेषां विवरणं तत्तत्पदे द्रष्टव्यम् । एतेषां अवताराणां स्वेच्छैव हेतुः ; न तु कर्म । प्रयोजनं तु दुष्कृतिविनाशपूर्वकं साधुपरित्राणमेव । 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति गीतोक्तेः ।]

सर्वासु अवस्थासु श्रीविशिष्ट एव भगवान् वर्तते इति श्रुत्या प्रमाणसिद्धोऽर्थः । एतेन एकायनोक्त निःश्रीकवादो निरस्तः ॥ (य. दी. 139)

**अवतारप्रयोजनम्** — भगवदवतारस्य फलम् ।

'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे' ॥ (गी. 4-8)

साधवः—उक्तलक्षणधर्मशीला वैष्णवाग्रेसरा मत्समाश्रयणे प्रवृत्ता मन्नामकर्मस्वरूपाणां वाङ्मनसागोचरतया मद्दर्शनेन विना स्वात्मधारणपोषणादिकमलभमानाः क्षणमात्रकालं

कल्पसहस्रं मन्वानाः प्रशिथिलसर्वगात्रा भवेयुरिति मत्स्वरूपचेष्टितावलोकनालापादिदाने। तेषां परित्राणाय, तद्विपरीतानां विनाशाय च, क्षीणस्य वैदिकस्य धर्मस्य मदाराध-रूपस्याराध्यस्वरूपप्रदर्शनेन स्थापनाय च देवमनुष्यादिरूपेण युगेयुगे संभवामि ; कृत-त्रेतादियुगविशेषनियमोऽपि नास्तीत्यर्थः । (गी. भा.)

ये पुनरुक्तलक्षणधर्मेण देवतान्तराण्येव उपासते ; ये च वैष्णवाः प्रतर्दनविद्या न्यायेन तत्तद्देवताविशिष्टवेषेणैव भगवन्तमुपासते ; न तेषामवतारप्रदर्शनेऽत्यन्त निर्बन्धः । तत्तद्देवताकञ्चुकितवेषेणैव तदपेक्षितसकलप्रदानोपपत्तेरित्यभिप्रायेणोक्तं – वैष्णवाग्रेसर; इति । भगवद्भक्तवर्या इत्यर्थः ।

न ह्यपवर्गसुखादिवत् अवतारमन्तरेण स्वसङ्कल्पमात्रेणैव तद्दातुं शक्यमिति भावः । 'परित्राणाय' इत्यत्र उपसर्गेण विविधानिष्टनिवृत्तिपूर्वकविविधेष्टप्राप्तिः सूचिता । . . . . . . अनुष्ठानमुखेनोपदेशमुखेनच धर्मप्रवर्तनं व्यासादिद्वारापि शक्यम् ; आराध्यरूपप्रदर्शनेन भक्त्युत्पादानं अवतारासाधारण प्रयोजनं इति भाव्यम् ।

अचिन्त्यशक्तेरीश्वरस्य स्वच्छन्दवृत्तेः एकस्मिन्नप्यवतारे नरसिंहरूपे सप्तसप्तति-भेदाः ; श्रीकृष्णस्यापि तदानीमेव बहुरूपाणि च पुराणप्रसिद्धानि ।

सर्वेश्वरस्य सर्वज्ञस्य सत्यसङ्कल्पस्यावाप्तसमस्तकामस्य कर्मपरवशदेवमनुष्यादि सजातीयं जन्म किमिन्द्रजालादिवन्मिथ्या, उत सत्यम् ? सत्यत्वे च कथं जन्मप्रकारः ? किमात्मकोऽयं देहः ? कश्च जन्महेतुः ? कदा च जन्म ? किमर्थं च जन्मेति प्रश्नाः परिहारक्रमेण विज्ञायन्ते । तस्योत्तरं–

'अजोऽपि सन् अव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया' ॥

इत्यारभ्य 'धर्मसंस्थापनार्थाय संभवामि युगेयुगे' इत्यन्तेन अभिहितम् । (ता. चं.)

अयं भावः –

'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप' ॥

इत्यनेन जन्मतः सत्यत्वमुक्तं, 'बहूनि मे व्यतीतानि' इति वचनात्, तव चेति

दृष्टान्ततयोपादानाच्च । 'संभवाम्यात्ममायया' इत्यनेन स्वसंकल्प एव कारणं न तु कर्मादिकमित्युक्तम् । ('माया वयुनं ज्ञानमिति' हि यास्कनिघण्टुः) 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत' इत्यादिना अवतारकालः । 'परित्राणाय साधूनां' इत्यादिना अवतारफलञ्च प्रादर्शि ।

ब्रह्मादीनां जन्महेतुः कर्मः तत्फलं तदनुभवः, वपुश्च प्राकृतं; अस्यतु स्वेच्छैव कारणं, जगदुपकारः फलं अप्राकृतञ्च वपुरित्यवतार इति व्यपदिश्यते ॥

**अवताररहस्यज्ञानप्रयोजनम्** — भगवदवतारतत्त्वज्ञानफलम् ।

'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' ॥ (गी. 4-9)

साधुपरित्राणमत्समाश्रयणैकप्रयोजनं दिव्यं—अप्राकृतं; मदसाधारणं मम जन्म चेष्टितं च तत्त्वतो यो वेत्ति, स वर्तमानं देहं परित्यज्य पुनर्जन्म नैति, मामेव प्राप्नोति, मदीयदिव्यजन्मचेष्टितयाथात्म्यविज्ञानेन विध्वस्तसमस्तमत्समाश्रयणविरोधिपापोऽस्मिन्नेव जन्मनि यथोदितप्रकारेण मामाश्रित्य मदेकप्रियो मदेकचित्तो मामेव प्राप्नोति ।
(गी. भा.)

ननु प्रारब्धे कर्मावसाने हि मोक्षश्शारीरके निर्णीतः ; प्रारब्धस्य च कर्मणः कियन्ति जन्मानि साध्यानीति न नियमः ; व्यासादिष्वनियमदर्शनात् । न च जन्म-कर्मज्ञानमात्रान्मोक्षः, दीर्घकालनैरन्तर्यादरसेवनीयदुष्करतरकर्मज्ञानानुगृहीतोपासनशास्त्रार्थ-नैरर्थक्यप्रसङ्गादित्यत्राह—मदीयेति । दिव्यजन्मचेष्टितज्ञानेनोपासनविरोधिनां समस्तानां पापानां निवृत्तत्वादस्मिन्नेव जन्मनि जन्मान्तरारंभकपापांशप्रशमनसमर्थपुष्कलोपासननिष्पत्तेर्न जन्मान्तरपरिग्रहः । स्मरन्ति च 'विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि' इति । एवं चोपासनपौष्कल्यहेतुतयाऽस्याभिधानात्परंपरया मोक्षसाधनत्वमिति नोपासनशास्त्र-वैयर्थ्यमिति भावः । (ता. चं.)

निरतिशयप्रीतिरूप-दर्शनसमानाकारापन्नोपासनस्य अवताररहस्यज्ञानपूर्वकत्वेतु तस्मिन्नेव जन्मनि प्रारब्धनाशकत्वं, तदभावे प्रारब्धकर्मावसानएवेत्यभिप्रेत्योक्तं भाष्ये

'वर्तमानदेहे' इति तदेव विवृतं पौष्कल्यहेतुतयेति चाचार्यैः । प्रपत्तेस्तु इष्टकालानुरोधेन अभिमतफलप्रदत्वमिति भावः ॥

**अवतारविग्रहस्य प्राकृतसंसर्गसमर्थनम्** — अप्राकृतस्य प्राकृतसंसर्गसमर्थनम् ।

शुद्धसत्त्वमयस्याशुद्धसंसर्गो बाधित एवेति शङ्कामपनुदति—

भगवतः अवतारविग्रहाः शुद्धसत्त्वद्रव्यमयपरवासुदेवविग्रहांशमूलाः । भगवत इव विग्रहस्यापि व्यापित्वाद्याः विचित्राश्शक्तयस्सन्ति । अत एव विश्वरूपविग्रहप्रदर्शनमपि युज्यते । लक्ष्मीविग्रहास्तु पररूपस्य वक्षःस्थले विराजमानः हरिमरतके तप्तजाम्बूनदाभः मध्यस्थनीलतोयदविद्युत्पुञ्जसदृशो यो विग्रहविशेषः तदंशमूला इति निर्णयः ।

अत्रैव नित्यविभूतौ आमोदप्रमोदसम्मोदवैकुण्ठरूपा विभागाः श्रूयन्ते । अत्र पूर्वाः त्रयो विभागाः प्राकृतमण्डले एवेति सिद्धान्तः । सालोक्यसामीप्यसारूप्यलाभोऽपि क्रमेण तेष्वेवेति केचित्समरसयन्ति । सायुज्यं परं समानानन्दवत्त्वरूपं वैकुण्ठप्राप्त्यनन्तरमिति विशेषः ।

अप्राकृतपदार्थस्यावतारविग्रहादेः प्राकृतमण्डले, प्राकृतपदार्थस्य भूतसूक्ष्मस्य विरजानदीतीरभागेऽप्राकृतमण्डले चाभ्युपगमात् प्राकृताप्राकृतासंसर्गो नानुपपन्नः । ततश्च प्राकृतमण्डले अप्राकृतानामनन्तानां विष्णुलोकानामपि संभवस्य प्रामाणिकत्वे वैदिकपुत्रानयनवृत्तान्तः जयविजयवृत्तान्तः शिशुपालवृत्तान्तः सर्वोप्येऽवमादिः निराक्षेप संपनीपद्यत इत्युत्पश्यामः । विरोधपरिहाराख्यं रहस्यमप्यस्यार्थस्यानुकूलं भवति ॥ (द. उ. 209)

**अवतारेष्वभिनयः** — अवतारेषु दुःखादिप्रकटनं अभिनयमात्रम् ।

'यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थम्' । (अ. सा. 65)

[अवतारकालेषु भगवद्विग्रहस्य स्वतः अप्राकृतत्वात् सर्वत्र षाड्गुण्यपरिपूर्णत्वाच्च रामकृष्णाद्यवतारेषु दुःखसम्बन्धः कथमिति शङ्का वार्यते यत्तु इत्यादिना]

स्वेच्छावतारेषु-स्वेच्छाकृतेषु रामकृष्णाद्यवतारेषु यत्त्वभिनयति—

'राज्याद्भ्रंशो वने वासः सीता नष्टा द्विजो हतः ।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्' ॥

इत्यादिरीत्या दुःखमभिनयतीति यत् , तदपि-तथा दुःखनटनमपि ; आसुरोपप्लवार्थ- आसुरः-असुरसंबन्धी उपप्लवो मनुष्यत्वभ्रान्त्या प्रातिकूल्याचरणेन स्वयमेव विनाशस्तदर्थ- मिति मन्तव्यमित्यर्थः । तथाचावतारेषु दुःखबाणक्षतरुधिरदर्शनादिप्रतिपादकप्रमाणा- भासानां अन्यथासिद्धत्वात् तैरुपरोधो न संभवतीति भावः ॥ (प. यो.)

**अवतारेषु स्वशासनानुसरणम्** — भगवतापि धर्मानुष्ठानम् ।

'धर्माणां स्थापनार्थं स्वयमपि भजते शासिता शासनं स्वं स्वस्यापि प्रत्यवायान- भिनयति नृणां पापभीतिं विधित्सुः' । (त. मु. 155)

ननु अवतारेषु भगवतः शास्त्रार्थानुष्ठानं तत्फलभोगश्च श्रुतिस्मृतिषु बहुधा दृश्यते । अतः तस्यापि कर्मवश्यत्वं स्यादित्यत्राह-धर्माणामिति । तदेतत् 'न मे पार्थास्ति कर्तव्यम्' 'धर्मसंस्थापनार्थाय' इत्यादिभिः सिद्धम् । (स. सि. )

तथा च भगवतः शास्त्रार्थानुष्ठानं धर्मस्थापनेन लोकशिक्षणार्थमेवेति भावः ॥

**अवधूतः** — 1. देहसंस्कारादिरहितः ।

'सदाऽऽप्लुतोऽधश्शयनोऽवधूतः' । (भाग. 3-1-19)

जात्याश्रयनिमित्तादुष्टैरन्नादिभिः जीवनं कुर्वाणः अभ्यंगोद्वर्तनादिदेहसंस्कार- रहितः वल्कलाजिनधारणः हरितोपणानि व्रतानि कुर्वन् य आस्ते स एव अवधूतः । (भाग. वी.)

2. ज्ञाननिष्ठविशेषः ।

'कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः' ।

(भाग. 5-10-15)

सर्वैः परिभाव्यवेषो ज्ञाननिष्ठः अनभिव्यक्तब्रह्मतेजाः । (भाग. वी.)

अवधूतलक्षणं स्मृत्यन्तरेष्वपि उक्तम्—

गूढं समाश्रितो विद्वानज्ञातश्चरितं चरेत् ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥

स्वाचारस्यापरित्यागः स्वप्रभावस्य गोपनम् ।
अपरिग्रहशीलत्वं पावनानि पचक्षते ।। इत्यादिभिः । (श. दू. 65)
अतः सर्वथा वर्णाश्रमधर्मत्यागो नोच्यते ।।

**अवयवः** — 1. अंशः ।

'तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' (श्वे. उ. 4-10) अपृथक्सिद्धविशेषणतया (परमात्मा) तदंशभूतैर्जीवैः सर्वमचेतनं व्याप्तमित्यर्थः । (रं. भा.)

2. न्यायावयवः - प्रतिज्ञा, हेतुः, उदाहरणं, उपनयः, निगमनञ्चेति ।

एते पञ्चावयवाः प्रयोक्तव्या इति नैयायिकाः । उदाहरणान्तं तदाद्यं वा त्रितयं प्रयोक्तव्यं इति मीमांसकाः । उदाहरणोपनयावेवेति सौगताः ।

वयं त्वनियमं ब्रूमः । नियमवदनियमस्याप्याभिमानिकतया सिद्धान्तत्त्वोपपत्तेः । दृष्टश्चानियमेन भाष्यादिषु प्रयोगः—क्वचित् पञ्चावयवः, क्वचित् त्र्यवयवः, क्वचित् अवयवकल्पनारहितः इत्यादि । इदञ्च वादिनोः परस्परसंवादानुरूपयथाभिमतव्यवहाराभ्यनुज्ञालिङ्गम् । प्रतिवाद्यभिमतप्रस्थानेन व्यवहारमन्येऽपि केचिदिच्छन्ति, 'पिशाचानां पिशाचभाषयैवोत्तरं देयम्' इति न्यायात् । अतोऽप्यनियतावयव एव प्रयोगः । (न्या. प.108)

द्रव्यस्य समवायिकारणम् । यथा अवयवावयविनोः संबन्धः समवाय इत्यादौ कपालं घटस्यावयवः तन्तुश्च पटस्यावयवः । स चावयवः परमाणूनारभ्य कपालपर्यन्तं तन्तुपर्यन्तञ्चानेकधा ॥ (न्या. को.)

**अवयवशक्तिः** — योगरूपा शक्तिः ।

यत्तु श्रुतिप्रसिद्धात् प्रमाणान्तरप्रसिद्धं प्रथमं प्रतीयत इति तन्न; अक्षरशब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात्, संबन्धग्रहणदशायां अर्थस्वरूपं येन प्रमाणेनावगम्यते, न तत् प्रतिपादनदशायामपेक्षणीयम् । (श्री. भा. 1-3-9)

'प्रोक्षणीष्वर्थसंयोगात्' इति न्यायेन अवयवशक्त्या अर्थप्रतिपादनसंभवे समुदायशक्तिकल्पनायोगात् अयमक्षरशब्दः न रूढ्या वर्तते इत्याशयः । (श्रु. प्र.)

प्रतिपदं अवयवभूतप्रकृतिप्रत्यययोः प्रत्येकं जायमानार्थबोधनसामर्थ्यम् ॥

(सं. अ.)

**अवयवी** — अवयवजन्यः । (काणादमते)

'हन्त त्र्यणुकपक्षे कणभुगभिमतो नावयव्यस्ति कश्चित् ।

संघातो नांशतोऽन्यः तदणुषु न भवेत् दृश्यतेत्यन्धचोद्यम्' ॥ (त. मु. 246)

अत्र चोदयति-अवयवी तावत् त्र्यणुकवादिभिः नाङ्गीक्रियते; संघातस्तु संघातिभ्यो नातिरिच्यते; तत्संबन्धश्च स्वरूपातिरिक्तो न संभवति । संभवेऽपि संघातिनामप्रत्यक्षत्वे तत्संघातस्य प्रत्यक्षत्वं न स्यात्; संघातिनां चान्ततः परमाणुपरिशेषात्, तेषां चाप्रत्यक्षत्वादिति । तद्दूषयतीत्यन्धचोद्यमिति । तत्त्वनिरीक्षणासामर्थ्यादन्धत्वोपचारः । त्रसरेण्ववयवा एव परमाणव इति पक्षे तत्संसर्गविशेषैरेव ह्रस्वत्वदीर्घत्वत्र्यश्रचतुरश्रवृत्तवक्रकुटिलत्वादिविचित्रसन्निवेशं विश्वमेतत् यथादर्शनं दृश्यं स्यात् इति ।

वयं तु न त्रसरेणुव्यतिरिक्तं तदवयवादिकं कल्पयामः, येन तदप्रत्यक्षतया विश्वाप्रत्यक्षत्वशङ्का स्यात् । ननु श्रुतेऽपि सूक्ष्मद्रव्ये (प्रधाने) प्रत्यक्षत्वादिकं न मन्यसे, अतः तदात्मकस्य प्रपञ्चस्य कथं प्रत्यक्षत्वादिकमित्यत्राह—'नादृष्टं कल्पयामः परिणतिभिरसौ दृश्यतादिः श्रुते स्यात्' इति ।

[अवस्थाविशेषादिभिरेव दृश्यत्वादिकमुपपन्नं इत्यवयविकल्पनं मुधेति भावः ।] तदुक्तम्—

'रूपस्पर्शादिजननात् दृश्यत्वस्पृश्यतादयः ।

तन्नाशात्तदभावश्च युज्येत श्रुतिचक्षुषाम्' ॥ इति । (स. सि.)

सेनावनादिष्विव संघातविशेष एव अवयविशब्देन निर्दिश्यते ॥ (न्या. प. 87)

**अवयुत्यानुवादः** — एकदेशानुवादः ।

यथा—ननु 'मनुष्यानन्दमारभ्य चतुर्मुखानन्दपर्यंतमुत्तरोत्तरमानन्दातिशयमुक्त्वा

'श्रोत्रियस्यचाकामहतस्य' इति निष्कामश्रोत्रियस्याप्यनुक्रमात् स एवानन्दोऽतिदिश्यते । तेन परमपदस्थानामपि निष्कामश्रोत्रियाणां मनुष्यानन्दादितुल्यानन्दवत्त्वमङ्गीकार्यम्' इति चेत् ।

सत्यम् । मुक्तस्य नित्यसूरिवत् परिपूर्णानन्दवत्त्वात् सर्वसांसारिकानन्दानां तदेकदेशत्वेन तदन्तर्गतत्वात् (शते पञ्चाशदिति न्यायेन) तदतिदेशवचनं, द्वादशकपाला-न्तर्गताष्टाकपालादिवाक्यवत् अवयुत्यानुवादः इति न कोऽपि दोषः । (प. यो. 545)

अनेन मनुष्यानन्दादिचतुर्मुखपर्यंतगतानन्दापेक्षया अविशेषेण मुक्तानन्दस्य आधिक्यं फलितं न तु तारतम्यमिति भावः ॥

**अवशः** — परतन्त्रः । (जीवः)

'कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः' (गी. 3-5)

'वशो जनस्पृहायत्नेष्वायत्तत्वप्रभुत्वयोः' इति वैजयन्तीकोशः । न विद्यते वशः - प्रभुत्वं यस्येति विग्रहः ॥

**अवसरः** — क्रमप्राप्तनिरूपणविषयार्थगतः सङ्गतिविशेषः ।

'सप्रसङ्ग उपोद्धातः हेतुतावसरस्तथा ।
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते' ॥

**अवसादः** — मनसोऽभास्वरत्वम् ।

देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यं अभास्वरत्वं मनसोऽवसादः । (वाक्यकारवचनम्) (श्री. भा. 1-65) मनसोऽभास्वरत्वम् । यद्वा, मनसो यदभास्व-रत्वं यच्च तज्जं दैन्यं तदुभयमवसादः ॥ (त. टी. 76)

**अवस्तु** — 1. परिणामशीलं अचेतनम् ।

विनाशोपलक्षितपरिणामवृद्ध्यादिभिः पूर्वावस्थाप्रहाणेन संज्ञान्तरयोगि (अचेतनम्) अवस्तुशब्दवाच्यम् । (ता. चं. 2-16)

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।

परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ।। (वि. पु. 2-13-100)

इत्यादिना परिणामादिनिबन्धनसंज्ञान्तरभाजामेवावस्तुता पुराणादिषु न्यरूपि । वसत्येकरूपेणेति वस्तु, (आत्मतत्त्वं) ततोऽन्यत् अवस्तु इति च विवक्षितम् ।

2. अपरमार्थम् ।। (शुक्तिरूप्यादिकम् )

**अवस्था** — आगन्तुकापृथक्सिद्धो धर्मः ।

प्रमेयत्वादिकमादाय शब्दादौ अतिव्याप्तिवारणाय आगन्तुकेति । आगन्तुकत्वं च स्वाश्रयसमानकालिकप्रागभावप्रतियोगित्वम् । न तु जन्यत्वमात्रम् । शब्दादावपि शक्तिस्वीकारपक्षे अतिव्याप्तितादवस्थ्यात् । अद्रव्येषु शक्तेः सहजत्वमेवेति न स्वाश्रयसमानकालिकप्रागभावप्रतियोगित्वसंभवः । आधेयतासंबन्धेन गगनादिमत्त्वमादाय शब्दादौ तद्दोषतादवस्थ्यवारणाय अपृथक्सिद्धत्वनिवेशः । गगनस्यापि हि स्वाश्रयीभूतब्रह्मनिष्ठप्रागभावप्रतियोगितया आगन्तुकत्वसंभवः ।

. . . . . . . . .

ननु गगनादेरपि ब्रह्मापृथक्सिद्धतया तद्दोषतादवस्थ्यम् । अपृथक्सिद्धिसंबन्धेनागन्तुकधर्मवत्त्वविवक्षायां धर्मे अपृथक्सिद्धित्वविशेषणवैयर्थ्यम् । स्वापृथक्सिद्धधर्मवत्त्वं स्वस्य लक्षणमित्युक्तौ तु अननुगमात् सामान्यलक्षणत्वहानिरिति चेन्न । अपृथक्सिद्धसंबन्धेन आगन्तुकधर्मवत्त्वस्यैव लक्षणतया विवक्षितत्वात् । धर्मे अपृथक्सिद्धत्वविशेषणं तु अपृथक्सिद्धे लक्षणतावच्छेदकत्वतात्पर्यग्राहकमेव । ईश्वरेऽपि 'नित्यं विभुं सर्वगतम्' इति श्रुत्या सर्वद्रव्यसंयुक्तत्वसिद्धया अनवरतपरिस्पन्दमानपवमानादिसंयोगसत्त्वान्नाव्याप्तिः । (र. पे. 7)

2. गर्भजन्मबाल्ययौवनजरामरणनरकाणि । (सं. अ.)

3. कालकृतपरिणामविशेषः ।

सा चावस्था जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यति इति भावविकारः षड्विध इति यास्को वक्ति । अविद्याऽस्मितारागद्वेषाभिनिवेशभेदेन पञ्चविधेति योगिनः । अनागतावस्था अभिव्यक्त्यवस्था तिरोहितावस्थेति त्रिविधेति सांख्याः । जाग्रत्स्वप्नसुषुप्तिरूपास्तिस्रोवस्थाः चतुर्थी मोक्षावस्था चेति चतुर्विधेति वेदान्तिनः ।

कौमारपौगण्डकैशोरयौवनबाल्यतारुण्यवृद्धत्ववर्षीयस्त्वभेदेनाष्टविधेति पौराणिकाः । बाल्यकौमारयौवनवृद्धत्वभेदेन चतुर्विधेति भिषजाः ॥ (न्या. को.)

**अवस्थावादः** — परिणामवादः ।

श्रीभाष्ये अवस्थावादोऽप्यनूदितः । स च स्वरूपपरिणामः उपाधिलक्षणांशपरिणामः शक्तिपरिणामश्चेति त्रिविधस्संपद्यते । आद्यः भर्तृप्रपञ्चादिसम्मतः स्यात् । द्वितीयः भास्करसम्मतः । तृतीयः यादवसम्मतः। स एवसर्वानुगतसन्मात्रब्रह्मवाद 'प्रकाशाश्रायवद्वा तेजस्त्वात्' इत्यत्र श्रीभाष्ये विवृतः । . . . . . .

तमेतं सर्वानुगतसामान्यात्मकसल्लक्षणब्रह्मवादं श्रीशङ्कराचार्यः ब्रह्मणः सामान्यविशेषरूपतानिराकरणेन निराचकारेति सुविदितम् । एवञ्च श्रीभाष्यानुसारेण आश्मरथ्यमतावलम्बी यादवप्रकाशाचार्यः । औडुलोमिमतावलम्वी भास्कराचार्यः । काशकृत्स्नमतावलम्बी आचार्यबादरायणः । तदनुसारी श्रीरामानुजाचार्य इति निर्णयः सिद्धयति । (द. उ. 193)

सिद्धान्ते तु सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म । तत् कदाचित् स्वस्मात् विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति । तत्कारणावस्थं ब्रह्म । कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरम् ; तच्च कार्यावस्थम् । तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति । चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति । उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति ।

कारणावस्थायाः अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः । अत एव एकस्य अवस्थान्तरापत्तिरूपविकारापेक्षया 'येनाश्रुतं श्रुतम्' इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तः 'यथा सोम्येकेन' इत्यादिना निदर्शितः । ईदृशज्ञान संकोचविकासकरतत्तद्देहसंबन्धवियोगाभिप्रायाः जीवस्योत्पत्तिमरणवादिन्यः, 'प्रजापतिः प्रजा असृजत' इत्याद्याः श्रुतयः । अचिदंशवत् स्वरूपान्यथात्वाभावाभिप्रायाः उत्पत्ति-

प्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च 'न जायते म्रियते' इत्याद्याः 'नित्यो नित्यानां' इत्याद्याश्च श्रुतयः ।

स्वरूपान्यथात्वज्ञानसंकोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः 'स वा एष महानज आत्माऽजरोऽमरोऽमृतो ब्रह्म' 'नित्यो नित्यानां' इत्याद्याः परविषयाः श्रुतयः । एवं सर्वदा (सूक्ष्मस्थूलावस्थापन्न) चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणञ्च नामरूपविभागाभावात् उपपद्यते ।

'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इति हि नामरूपविभाग-भावाभावाभ्यां नानात्वैकत्वे वदति इति । (श्री. भा. 2-3-18).

विशिष्टं कारणञ्चेत् मृत्पिण्डदृष्टान्तः कथं घटत इत्यत्राह अत एवेति—

यथा मृत्पिण्डदृष्टान्ते पार्थिवत्वाचेतनत्वादिकं नोपेक्षितं तथा चिदचिद्विशिष्टत्वं स्वरूपान्यथाभावलक्षणविकाराभावञ्च ब्रह्मणि न बाधते मृत्पिण्डलोहमण्यादि दृष्टान्तः । अपित्वनेकविशेषणविशिष्टैकद्रव्यावस्थान्तरयोगमात्रे स दृष्टान्तः; रूपादिमत्वान्मृ-त्पिण्डादेरित्यर्थः । (श्रु. प्र.)

विकारशब्दः क्वचित् अवस्थासामान्यवाची । क्वचित् अनिष्टावस्थाविशेष-वाची च इति भावः ।।

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि — (ब्र. सू. 2-3-25)

(ज्ञाधिकरणे सप्तमं सूत्रम्)

आत्मनो देहैकदेशविशेषस्थितिः नास्तीति न, हृत्प्रदेशविशेषस्थित्यभ्युप-गमात् ।

आत्मनोऽणुपरिमाणत्वेन सकलदेहव्यापिसुखाद्यनुभवः कथमित्यत्र मतान्तरेण परिहारः उक्तः 'अविरोधश्चन्दनवत्' इति पूर्वसूत्रेण । तदुपरिशङ्कते-चन्दनबिन्दोः देहैकदेशविशेषस्थित्यपेक्षः तथाभावः; आत्मनो न तथेति चेत् न ;आत्मनोऽपि तथा-भावाभ्युपगमात् । तथा च आत्मनोऽपि सर्वदेहव्याप्तिमन्नाडीस्थानभूतहृदयदेशवर्तिनः

सर्वदेहव्यापिसुखानुभवजनकता न विरुद्धा । 'हृदि ह्ययमात्मा तत्रैकशतं नाडीनां योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्यादिश्रुतेः तस्य हृदयदेशस्थत्वात् । एवञ्चात्मा धर्मभूतज्ञानशून्योऽपि यावद्देहव्यापिसुखादिकमनुभवत्येवेति भावः । इदमपि पूर्वपक्षपरमेव ।

जीवस्य देशविशेषस्थत्वज्ञापनायैव चन्दनस्यावस्थितिवैशेष्याभिधानम्; न तु चन्दनस्य देशविशेषस्थत्वनियमः । कामिनीकरसंयोगादेः देशविशेषमनपेक्ष्यैव सर्वाङ्गीण-सुखानुभवजनकतादर्शनादिति सूचनायैव हृदि हि इति प्रसिद्धिद्योतक 'हि' शब्द-प्रयोगः । जीवस्य हि देशविशेषस्थितिः वेदान्तेषु प्रसिद्धा । न तु चन्दनस्य देश-विशेषस्थत्वं प्रसिद्धमित्यर्थः ।

सिद्धान्ते तु 'गुणाद्वा आलोकवत्' इत्यनेन आत्मनः गुण(धर्म)भूतज्ञानद्वारैवा-नुभवो वक्तव्यः । सौभर्यादिषु अनेकशरीरविशिष्टस्यात्मनः अणोः चन्दनदृष्टान्तेन वेद-नानुभवो वक्तुं नैव शक्यः, तस्यैकशरीरावच्छेदेनैव वक्तुं शक्यत्वात् ।

अवस्थितेस्तु वैशेष्याच्चन्दनं तु तथा भवेत् ।
इति चेन्नात्मनोऽपि स्वे हृदये स्थितिरुच्यते ॥ (ब्र. प. मा. 241)

**अवस्थितेरिति काशकृत्स्नः — (ब्र. सू. 1-4-22)**

(वाक्यान्वयाधिकरणे चतुर्थ सूत्रम्)

अन्तरात्मतयावस्थानादेव जीवात्मशब्दः परमात्मवाचीति काशकृत्स्नः ।

'य आत्मनि तिष्ठन् आत्मनोऽन्तरः . . . . . स त आत्मान्तर्याम्यमृतः' योऽक्षरं अन्तरे सञ्चरन् . . . . . एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' 'अन्तः प्रविष्टश्शास्ता' इत्यादिभिः जीवात्मनि अन्तरात्मतया परमात्म-नोऽवस्थितेः जीवात्मशब्दस्य परमात्मनि पर्यवसानात् जीवात्मशब्देन परमात्मनोऽभिधान-मिति काशकृत्स्नः आचार्यो मन्यते ।

इदमेव सूत्रकाराभिमतमित्यवगम्यते; आश्मरथ्य–औडुलोमि–काशकृत्स्न मतत्रयाणां अन्योन्यविरोधात्, इतः परमवचनाच्च । बृहदारण्यके मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय . . . . . आत्मा

वा अरे द्रष्टव्यः, इत्युभयत्रापि आत्मशब्दौ परमात्मविषयाविति 'वाक्यान्वयात्' इत्यनेनास्थापयत्। ततः 'महद्भूतमनन्तमपारं' 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्यत्र विज्ञानघनशब्दो जीवविषयः, भूतानुविनाशित्वावगमात्, इति शङ्का चानेन समाहिता। सर्वत्र नियमनार्थस्थितिनिबन्धनमेव जीवसामानाधिकरण्यमिति सिद्धान्तकरणेन जीववाचिशब्दोऽपि परमात्मपर एवेति भावः।

जीवः परमात्मकार्यतया परमात्मैवेति, आश्मरथ्याचार्यः। संसारदशायां भेदेऽपि, मोक्षदशायां ऐक्यमेवेत्यौडुलोमिः। उभयत्र बहुप्रमाणविरोधात्, अन्ते स्वमतं प्रकटयामास 'अवस्थितेरिति काशकृत्स्नः' इत्यनेन।

अवस्थितेरात्मनि च ब्रह्मणो जीववाचकात्।
अभिधानं युक्तमिति काशकृत्स्नमुनेर्मतम्॥ (ब्र. प. मा. 131)

**अवाकी** — मौनी।

'अवाक्यनादरः' (छां. उ. 3-14-2)

वाकः—उक्तिः; सोऽस्य नास्तीत्यवाकी। कुत इत्याह—अनादर इति। अवाप्तसमस्तकामत्वेनाऽऽदर्तव्याभावात् आदररहितः, अत एव अवाकी—अजल्पाकः; परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यंतं निखिलं जगत् तृणीकृत्य जोपमासीनः इत्यर्थः।
(श्री. भा. 1-2-2)

वाकः—उक्तिः; अवाकः—तदभावः। अवाकोऽस्यास्तीत्यवाकशब्दात् तद्धितप्रत्ययः। यद्वा वाकी न भवतीत्यवाकी॥ (श्रु. प्र.)

**अवाक्शाखः** — संसारवृक्षः।

'ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थस्सनातनः'। (क. उ. 6-1)

विस्तरस्तु 'अधश्शाखपदे' द्रष्टव्यः॥

**अवाचकम्** — निग्रहस्थानविशेषः।

शब्दशास्त्रविरुद्धस्वरूपमवाचकम्। यथा-कृत्तद्धित-समास-आख्यात, लकार-

आत्मनेपद-परस्मैपद-सकर्मकाकर्मक-लिङ्ग-वचन-विभक्ति-वर्ण-आदेश-आगमप्रभृतीनां विपर्यासन्यूनातिरेकादयः ॥ (न्या. प. 145,146)

**अवान्तरप्रळयः** — महाप्रळयव्यतिरिक्तः ।

प्रळयः त्रिविधः । दैनन्दिनप्रळयः, अवान्तरप्रळयः, महाप्रळयश्चेति । आद्यः इहलोके प्रतिक्षणं जायमानमरणम् । द्वितीयस्तु चतुर्मुखकर्तृकः भूर्भुवस्स्वर्लोकप्रळयः । महाप्रळयस्तु चतुर्मुखप्रभृतिसर्वेषां लयः । तदेवोच्यते छान्दोग्ये 'सदेव सोम्येदमग्र आसीत्' इति । तदानीमपि चेतनाचेतनयोः सूक्ष्मरूपेण स्थितिः वर्तत एव ॥

**अवान्तरफलम्** — मुख्यफलमध्ये संभावितफलम् ।

यथा मोक्षकामस्य उपासकस्य कर्मारब्धशरीरपर्यन्तं आयुरारोग्यादिरूपं फलम् ॥
(सं. अ.)

**अवान्तरविभागः**— अवान्तरभेदबोधकशब्दः ।

यथा—चिदचिदीश्वरतत्त्वत्रयघटकचितः, बद्धमुक्तनित्यभेदेन त्रैविध्यवर्णनम् ॥
(सं. अ.)

**अवान्तरसंगतिः** — पूर्वाधिकरणानन्तर्यनियामकसङ्गतिविशेषः ।

[यथा—जिज्ञासाधिकरण जन्माद्यधिकरणयोः]

अथ शास्त्र-काण्ड-द्विक-अध्याय-पाद-पेटिका-अधिकरणरूपसंबन्धिभेदेन सप्तविधासु सङ्गतिषु सङ्गत्यन्तराणां स्पष्टत्वात् अधिकरणसङ्गतिमाह किं पुनरिति । शास्त्रसङ्गतिर्हि वेदार्थविचाररूपतया स्पष्टतरा ; वेदान्तार्थविचाररूपत्वात् काण्डसंगतिः ; कारणविषयत्वात् द्विकसंगतिः ; कारणविषयवाक्यतर्करूपत्वादध्यायसंगतिः ; अयोगव्यवच्छेदविश्रान्तेः पादसंगतिः, शास्त्रारंभार्थत्वात् पेटिकासंगतिः । अतोऽवान्तरसंगतिः 'किं पुनस्तद्ब्रह्म' इत्यादि भाष्येणोच्यते जन्माद्यधिकरणारंभे । (श्रु. प्र. 1-1-2)

पूर्वोत्तराधिकरणयोः उपोद्घाताद्यधिकरणसंगतिरेवावान्तरसंगतिरिति यावत् ॥

**अवाप्तसमस्तकामत्वम्** — 1. परमात्मधर्मः ।

'स्वेच्छा(यां)तत्सर्वसिद्धिं वदति भगवतोऽवाप्तकामत्ववादः' । (त. मु. 146)

अयं भावः—अवाप्तसमस्तकामवादो हि न काम्यनिवृत्तिपरः, अवाचकत्वात्, सत्यकामत्वश्रुतिविरोधाच्च । नापि कामनानिषेधार्थः; 'सोऽकामयत' 'सत्यसङ्कल्पः' इत्यादिबाधात् । अतो यथाकामं सर्वसिद्धिमभिसन्धत्ते इति । (स. सि.)

[अत्रायमाशयः—कामशब्दः इच्छाविषयवाची । अत्रावाप्तशब्दः अर्हार्थे क्तप्रत्ययः । तथा च स्वेच्छानुगुणप्राप्तियोग्यकाम्यविशिष्टः इति फलितः ।]

इच्छायां सत्यां अभिमतविनियोगानुगुणपरिकरसंपत्तिर्हि अवाप्तसमस्तकामत्वम् । यथाऽऽह भगवान् भाष्यकारः वेदान्तसारे, 'अस्याऽऽत्मतृप्तस्यावाप्तसमस्तकामत्वं हि सदाभिमतसकलभोगोपकरणसद्भावः' इति । (श्रु. प्र. 1. भा. 2-97)

अवाप्तसमस्तकामस्यापि लीलया जगत्कारणत्वं संभवति इति 'लोकवत्तु लीलाकैवल्यं' इत्यनेन साधितम् । तत्रेयमाशंकोदेति पूर्वमविद्यमानस्य सन्तोषविशेषस्य प्राप्त्यर्थं हि द्यूतक्रीडादिकं, तेन कथं ईश्वरस्यावाप्तसमस्तकामत्वमिति चेदाह—

'लीलासौ लोकवत्स्यात् अभिमतसमये सिद्धितस्त्वाप्तकामः' इति ।

(अ. सा. 172)

यत् यदेष्टं, तदा तस्य सिद्धिः अवाप्तसमस्तकामता न पुनरागामिनां पुरुषार्थानां प्रागेव सिद्धत्वं, तथा चेश्वरस्यापि बहु स्यामित्यादिसङ्कल्पात् यस्मिन्काले यदिष्यते जगत्सृष्ट्यादिकं मोक्षप्रदानादिकं तस्मिन्काले तस्य सिद्धिरेवावाप्तसमस्तकामत्वं, अतोऽवाप्तसमस्तकामत्वं लीलायोगश्च विरुद्धमिति भ्रान्तप्रलपितमेतत् । (चिं. म.)

2. सर्वत्राविहतेच्छत्वम् ।। (वि. को.)

**अविकल्पम्** — 1. जाति (देवत्वादि)गुणादि (सत्त्वादि) रहितम् ब्रह्म ।

'आनन्दमात्रमविकल्पमविद्धवर्चः' । (भाग. 3-9-3)

देवत्वादिजातिसत्वादिगुणरहितत्वाच्च चिदचिद्व्यावृत्तिरुक्ता भवति । (भाग. वी.)

विकल्प्यते अनेनेति विकल्पः जातिगुणादिः तद्रहितम् । 2. निर्विकल्पकज्ञानम् ।।

**अविकारः** — अचिद्विलक्षणः परमात्मा ।

'अविकाराय शुद्धाय नित्याय परमात्मने' । (वि. पु. 1-2-1)

कारणत्वाभिधानतः प्रसक्तं विकारित्वं निरस्यति अविकारायेति । अनेनाचेतना-व्यावृत्तिः । (वि. चि.)

विकारशब्दो धर्मिपरो धर्मपरश्च ; 'षोडशकश्च विकारः' इत्यादिप्रयोगात् । स्वयं कस्यचिद्विकारभूतः–कार्यभूतो न भवतीत्यविकारः । अनेन कार्याचिद्व्यावृत्तिः । यद्वा विकारः–अवस्था महत्त्वाहंकारत्वादिः ; नित्यं तत्संबन्धविरहादविकारः । अतो विकारवती प्रकृतिरविकारपदेन व्यावर्त्यते । एवं तत्पुरुषबहुव्रीहिभ्यां अविकारायेति पदेन कार्यकारणरूपोभयावस्थाऽचिद्व्यावृत्तिः ॥ (श्रु. प्र. 1-235)

**अविकार्यः** — आत्मा ।

'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' । (गी. 2-25)

विकारानर्हः । (गी. भा.)

आत्मा विकारानर्हः, विकारित्वग्राहकप्रमाणशून्यत्वात् । यथेश्वररूपं, इत्यन्वय-दृष्टान्तः । यथा घटादिः इति व्यतिरेकः । यद्वा सामान्येन व्याप्तिः । यत् यादृशाकारग्राहकप्रमाणशून्यं, तत् तादृशाकारं न भवति, यथा नीलं न पीताकारमिति । अविकार्य इत्येतावति निर्दिष्टे कादाचित्कविकाराभावमात्रेण सिद्धसाधनता(शङ्का) स्यादिति तत्परिहारकरं प्रत्ययार्थं विवृणोति विकारानर्ह इति ॥ (ता. चं)

**अविकृतिः** — अविकाररूपा मूलप्रकृतिः ।

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त' । (सां. का. 3.)

मूलप्रकृतिः न कस्यचित् विकृतिः–कार्यम् । सांख्यमते मूलप्रकृतिः सर्वविकृति-कारणम्, स्वयं कस्यापि न विकृतिः । सिद्धान्ते तु प्रकृतेः सूक्ष्मावस्थाङ्गीकारात् सापि परमात्मदृष्ट्या विकृतिः । निरूपाधिकाविकारत्वं तु परमात्मन एवेति विवेकः ॥

**अविज्ञातनामा** — अविज्ञात इति नामा (कश्चन सखा) ।

'तस्याविज्ञातनामाऽऽसीत्सखा विज्ञातचेष्टितः' । (भाग. 4-24-10)

परमात्मा हि जीवस्य मित्रं श्रूयते । 'माता पिता भ्राता निवासश्शरणं सुहृत् गति नारायण' इति । एवं हिताचरणशीलं, सखायं परमात्मानं, तदाज्ञामतिलङ्घ्य अयं संसारी जीवः, नामतोऽपि न जानाति, किमुत स्वरूपगुणविभूतिभिः इति ख्यापनाय अविज्ञातनामा इत्युक्तम् ।

यद्वा, सखेत्यनेनाभिप्रेतं यद्दोषानवेक्षणेन हिताचरणशीलत्वं तत्स्थापयितुं अविज्ञातनामेत्युक्तम् ।

अविज्ञात इति 'मतिबुद्धिपूजार्थेभ्यश्च' इति कर्तरि क्तः, अविज्ञाता इत्यर्थः । 'अविज्ञाता सहस्रांशुः' इति अविज्ञातृशब्दो हि नामसहस्रे भगवन्नामतया विनियुक्तः । तत्र स्वाश्रितान् स्वसमत्वेनानुसन्धाय तद्धितैषणपरः अपारकारुण्यपरवशः आश्रितदोषान् न जानातीति अविज्ञाता इति अभियुक्तैर्व्याख्यातम् । एवं च विपुलापराधवत्त्वेऽपि संश्रयणमात्ररूपकिञ्चिदानुकूल्येन रिरक्षिषुः इत्यर्थः । इह तु अविज्ञातशब्दः कर्तृसाधनः क्तान्तः इति विशेषः । (भाग. वी.) अत्र अविज्ञातः इति पूर्वोक्तरीत्या परमात्मनः नाम, तन्नामधेयवान् परमात्मा पुरञ्जनस्य सखासीत् इति ध्वन्यर्थः । वाच्यार्थस्तु—अविज्ञातनामकसखा कश्चन आसीदिति ॥

**अविज्ञाता** — (स. ना. 483)

साधुष्वपराधाननन्तानपि दृष्ट्वा न दण्डयति क्षमते चेति । नैतावदेव, परन्तु तदपराधेषूपेक्ष्या परुषभाषणेपि प्रत्युत्तरादानेन तेषां विज्ञाता नेति । (वि. स. निर्व.)

प्रपन्नकृतपापानां किंचिदप्यविचारणात् ।

अविज्ञातेति कथितः बुधैस्तद्गुणपारगैः ॥ (वि. स. नि.)

**अविज्ञातार्थम्** — अज्ञातार्थं वचनम् । (निग्रहस्थानविशेषः)

त्रिभङ्ग्यन्तराभिधानेऽपि प्राश्निकप्रतिवादिषु अन्यतमेनापि अज्ञातार्थं वचनम् । तच्चाप्रसिद्धप्रयोग-स्वसिद्धान्तमात्रसिद्धप्रयो-गअर्थान्तरसाधारणप्रयोगादिभेदात् बहुविधम् ॥ (न्या. प. 115)

**अविज्ञेयम्** — अविभागावस्थं तमोद्रव्यम् ।

'अप्रतर्क्यं अविज्ञेयं प्रसुप्तमिव सर्वतः' । (म. स्मृ. 1-5)

विभागेन ज्ञानम् विज्ञानम्, तदविषयः। परस्मात् ब्रह्मणः पृथग्व्यपदेशानर्हावस्थां क्षीरे नीरमिव प्राप्तमित्यर्थः। (श्रु. प्र. 2-1-1)

विविच्य ज्ञातुमशक्यं इति यावत् ॥

**अवितथानुभूतिः** — सत्यसङ्कल्पः परमात्मा।

'नमः परायावितथानुभूतये'। (भाग. 6-4-23) अवितथा–अमोघा, अनुभूतिः–सङ्कल्परूपात्मकं ज्ञानं यस्य सः ॥ (भाग. वी.)

**अविदितः** — अनुपासितः।

'स एनमविदितो न भुनक्ति' (बृ. उ. 3-4-15)

उपासनाभावे वस्तुगत्या शेषितया आत्मभूतोऽपि संसारं न निवर्तयतीत्यर्थः। यथाऽऽहयोगी याज्ञवल्क्यः–

गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम्।
निस्सृतं कर्मचरितं पुनस्तस्यैव भेषजम् ॥
एवं स हि शरीरस्थः सर्पिर्वत्परमेश्वरः।
विना चोपासनां देवो न करोति हितं नृणाम् ॥ इति। (रं. भा.)

अत एव श्रूयते 'यो वा एतदक्षरं अविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति' इति ॥

**अविद्धवर्चः** — अप्रतिहतसङ्कल्पवत्। (परं ब्रह्म)

'नातः परं परम यद्भवतस्स्वरूपमानन्दमात्मविकल्पमविद्धवर्चः' (भाग. 3-9-3)

अविद्धं–अप्रतिहतं वर्चः– सङ्कल्परूपज्ञानं यस्य सः। (भाग. वी.)

'व्यध-ताडने' एतस्मात् कर्मणि क्तान्तोऽयं विद्धशब्दः ॥

**अविद्या** — 1. विद्याविधुरं कर्म।

'अन्यदाहुरविद्यया' (ई. उ. 10)

विद्यान्या क्रिया-केवलकर्मेत्यर्थः । 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्ति-रिष्यते' इति स्मृतेः । (कू. भा.)

2. अलाभेन ।

'भगवतो वा अहमविद्याऽन्यानवृषि' (छां. उ.1-11-2) विदिः-लाभः, इक्-कृष्यादिभ्यः' इति औणादिकः इक् प्रत्ययः । सा न भवतीति अविदिः, तया-अविद्या—अलाभेन इमान् ऋत्विजः अवृषि—वृतवानस्मीत्यर्थः । (रं. भा.)

3. विद्याङ्गभूतं विद्येतरत् वर्णाश्रमविहितं कर्म ।

'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' । अत्र अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म । अविद्यया—कर्मणा, मृत्युं- ज्ञानोत्पत्तिविरोधिप्राचीनं कर्म, तीर्त्वा—अपोह्य, विद्यया—ज्ञानेन, अमृतं—ब्रह्म, अश्नुते—प्राप्नोतीत्यर्थः । मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरत् विहितम् कर्मैव । यथोक्तम्—

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' ॥ इति ।

ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयो-भयोरपि पापशब्दाभिधेयत्वम् । (श्री. भा. 1-66, 67)

4. अनात्मनि आत्मेति, अस्वे स्वमिति च मतिः ।

श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ।
अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ॥ इत्युक्तेः ।

(वे. सं. ता. दी. 9)

5. कर्म, भ्रान्तिज्ञानं वा ।

'करालसौम्यरूपात्मन् विद्याविद्यामयाच्युत' (वि. पु.1-20-11)

6. अज्ञानम् ।

विभर्ति यच्चासिवरमच्युतोऽत्यन्तनिर्मलम् ।
विद्यामयन्तु तज्ज्ञानं अविद्याकोशसंस्थितम्' ॥ (वि. पु. 1-22-74)

असिवद्ब्रह्मविद्यायाः संसारच्छेदकत्वं तदसिरत्नं विद्यामयं—विद्यामयज्ञानाधिदैवतमित्यर्थः। असिर्विद्यारूपमित्यर्थः। अविद्या-अज्ञानं, तस्य आत्मतिरोधायकत्वात् चर्मसाम्यम्। (वि. चि.)

7. ज्ञानानुदयान्यथाज्ञानविपरीतज्ञानरूपेण अविद्या बहुविधा।

(त. वर. व्या. 46)

माया, अविद्या, प्रकृतिः, सर्वे पर्यायाः। परमते इयं च (अविद्या) मिथ्या, प्रपञ्चाध्यासहेतुः भावरूपाज्ञानं इत्युच्यते। तस्याः एकस्या एव 'आच्छादकत्वं' 'विक्षेपकत्वं' इति अवस्थाद्वयम्। सिद्धान्ते तु त्रिगुणद्रव्यमेव तत्तत्पदेन व्यवह्रियते इति विवेकः।

1. ज्ञानाभावः।

2. अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या।

3. यदेव पररूपादर्शनं सैवाविद्या।

4. असत्प्रकाशनशक्तिरविद्या। अविद्या च (वैशेपिकमते) दूरत्वपित्तादीन्द्रियदोपजन्यो बुद्धिविशेषः (अयथार्थबुद्धिः)॥ (न्या. को.)

**अविद्यानिवृत्तिः** — 1. प्रतिबन्धनिवृत्तिः।

'यदुक्तं अविद्यानिवृत्तिरेव मोक्षः; सा च ब्रह्मविज्ञानादेव भवतीति, तदभ्युपगम्यते'। (श्री. भा. 1-49)

2. स्वाभाविकधीप्रसरप्रतिबन्धकस्य कर्मणोऽत्यन्तोच्छेदः; स च भावान्तररूपः।

(त. टी. 56)

अविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते। उत्क्रमणप्रभृति च उत्तरोत्तरमतिशयितज्ञानानन्दशाली जायते। प्राणेन्द्रियादिमत्वाच्च मध्ये भोगविहारसंवादाद्युपपत्तिः। अमानवकरस्पर्शादारभ्य चासौ मुक्तः। ततः पूर्वः सर्वोऽप्युपायव्यापारः। फलं परमपदपर्यङ्कारोहणादिकम्। तथाचायमीश्वरइवापहतपाप्मत्वसत्यसङ्कल्पत्वादिविशिष्टो भवति। तच्चास्य समस्तप्रतिबन्धकात्यन्तिकलयादाविर्भूतं स्वाभाविकं रूपम्। (न्या. सि. 164)

पर्यङ्कारोहणानन्तरभाविस्वरूपाविर्भावः प्रधानफलमित्यर्थः। (न्या. सि. टी.)

श्रवण-मनन-निदिध्यासनैः निरस्तायां समस्तभेदवासनायां, तत्त्वमसीत्यादि-वाक्यजन्यज्ञानमात्रं न मोक्षसाधनं, किन्तु उपासनात्मकज्ञानमेव। तत एव अविद्या-निवृत्तिः। उपासनं क्रियारूपमिति परे। सिद्धान्ते तु ज्ञानविशेष एवेति 'तमेवं विद्वान् अमृत इह भवति' इति श्रुतिविरोधो नास्ति ॥

**अविद्यायाः मूलम्** — अज्ञानादीनां आदिकारणम्।

अविद्यायाः मूलं अनादिभूताचित्सम्बन्धः; अचित्सम्बन्धेन अविद्या; ततः पुण्यपापादिकर्म; ततः जन्म; ततः रजस्तमसी; ततः अर्थपञ्चकज्ञानाभावः; ततः सांसारिकदुःखानुभवः इत्येवं चक्रवत् परंपरा बोध्या ॥ (आ. हृ. सं. 10)

**अविद्यावादः** —

अविद्यापदस्य मतभेदेन अनेकार्थत्वे सति क्वचित् अध्यासभाष्ये भ्रमपरत्वं, क्वचित्प्रपञ्चकारणप्रकरणे शक्तिपरत्वं, क्वचिच्च विद्याविनाश्यनिरूपणप्रकरणे अनिर्वचनीय-परत्वमित्येवं बहुधाऽभिप्रेत्याचार्येण प्रयुक्तमिदमविद्यापदम्। ततश्चाविद्यापदार्थः यथा-संदर्भं विनियोजित इत्यवधार्यते। अविद्यां क्वचिद्दोषस्थाने विनिवेश्य भ्रान्तिं तज्जन्यामि-त्यपि नवीनाः निरूपयन्ति। एवमविद्या आच्छादिका विक्षेपिका चेति विभज्यते। तत्र स्वरूपतः स्वभावतश्चेति केचिद्वदन्ति। आकारभेदादित्यन्ये। अवस्थाभेदादि-त्यपरे। शक्तिभेदादितीतरे। 'अविद्या च संवृतिः विकल्पश्च; सर्व एवायम-विद्यास्वभावः' इति बाह्या आहुः। माण्डूक्यकारिकाभाष्ये संवृतिपदमविद्यापरत्वेना-चार्यैः व्याख्यायते। ततश्च सर्वविधस्यापि निरूपणस्य मूलभूतेयमविद्या कल्पवृक्षस्था-नीयेत्यद्वैतविदामभिप्रायः।

तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥

इति स्मृतिरपि विवरणे समुदाहृता।

एवमविद्यापदं पुण्यपापलक्षणकर्मपरमिति वैष्णवादिपुराणेभ्योऽवगम्यते। उप-निषत्सु विद्यालक्षणब्रह्मज्ञानस्य सहकारितया वा विरोधितया वा यज्ञयागादिकर्मपरतया

प्रयोगः अविद्यापदस्य दृश्यते । तस्मादविद्यावादो विद्यावादादपि महत्तर इत्यवधेयम् ।।
(द. उ. 113)

**अविद्याश्रयत्वयोग्यत्वम्** — हेयसंबन्धार्हत्वम् । जीवनिष्ठो धर्मः ।

'नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः; अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासंभवात्' । (श्री. भा. 1-247)

अविद्याशब्दः समस्तहेयप्रदर्शनार्थः ; आश्रयत्वशब्दः संबन्धपरः ; हेयसंबन्धात्यन्ताभावानधिकरणत्वं तद्योग्यत्वम् । (श्रु. प्र.)

परोक्तरीत्या भावरूपाज्ञानं न विवक्षितम् । एतेन जीवपरयोः सर्वथा ऐक्यं न संभवतीति भावः ।।

**अविद्यास्वरूपानुपपत्तिवादः** — (शतदूषण्यां ४१ तमो वाद)

यः पुनरयं स्वप्रकाशचिन्मात्रैकरसस्य ब्रह्मणो विश्वभ्रमहेतुरविद्याख्यो दोषः, स किं परमार्थः ? उत अपरमार्थो वा ? आद्येऽपि ब्रह्मणः भिन्नोऽभिन्नो वा ? भिन्नत्वे परमार्थद्वित्वप्रसङ्गः । अभिन्नत्वे च ब्रह्मण एव विश्वभ्रमहेतुदोषत्वमुक्तं स्यात् । तथा च ब्रह्मणो नित्यत्वेन नित्यभ्रमप्रसङ्गः ।

अपरमार्थभावरूपदोषपक्षेऽप्ययमेव दोषः । अनादित्वान्न दोषान्तरापेक्षेति चेत् ; अनादित्वेऽपि तयोः कारणापेक्षा परिहर्तुं शक्यते । न पुनरपरमार्थस्य प्रतिभासे दोषाख्यनिबन्धननैरपेक्ष्यम् । अन्यथा दोषमन्तरेण प्रकाशमानस्य ब्रह्मवत् सत्यत्वप्रसङ्गात् ।

किञ्चेयमविद्या निराश्रया ? साश्रया वा ? पूर्वत्र ब्रह्मवत् सत्यत्वप्रसङ्गः । शशशृङ्गवत् तुच्छत्वप्रसङ्गो वा उत्तरत्राप्यसावाश्रयः किं ब्रह्मस्वरूपम् ? उत तदेवोपहितम् ? न प्रथमः, नित्यशुद्धस्याशुद्धिविरोधात् । नापि द्वितीयः ; अविद्याश्रयस्य ब्रह्मणः उपाधिमत्त्वे सत्यमिथ्याविकल्पिताविद्यान्तरादिपरिग्रहे अपसिद्धान्तानवस्थाविरोधादिदोषसमुन्मेषात् ।

ननु किमनेनानिष्टापादनप्रपञ्चेन, प्रासादनिगरणादिवत् अवस्तुभूतायामविद्यायां नैते वस्तुदोषाः क्षतिमावहन्ति ; यदाहुः 'दुर्घटत्वमविद्यायाः भूषणं न तु दूषणम्' इति,

अतोऽविद्याऽप्यनुपपन्नेति स्थितौ ब्रह्माद्वैतमकण्टकमिति चेत्; हन्त निष्प्रयोजनः प्रयासस्तव माध्यमिकादिमतनिरासे। ततोऽपि यदि सर्वशून्यत्वमपि दुर्घटं,ततोऽपि सर्वशून्यत्वमेव प्रतिष्ठितमितीष्टप्रसङ्गतां यदि ब्रूयुः, तदानीं किं वक्ष्यसि ? यदि सर्वशून्यत्वं दुर्घटं, तदा परपक्षविजयप्रसङ्गः, ततश्च दुर्घटपक्षं परित्यज्य परपक्षः स्वीक्रियतामिति ब्रूयामिति चेत्; तर्ह्यस्माभिरप्येवमभिधाने भव निरुत्तरः। विस्तरस्तु शतदूषण्यां द्रष्टव्यः॥

**अविधेयज्ञानवादभङ्गः — (शतदूषण्यां ४ वादः)**

समूलस्य संसारस्य संविन्मात्रे परस्मिन्ब्रह्मण्यारोपितत्वात् अलीककलधौतादेरिवाधिष्ठानयाथात्म्याध्यवसायादेव विलयः; न पुनः कर्मणा उपासनेन वा। न हि मायाकुण्डलिखण्डनं मणिमन्त्रादिभिः दण्डघातादिना वा संभवति; किंतु तत्त्वज्ञानादेव तन्निवृत्तिः। मिथ्याज्ञानहेतुभूतदोषस्यापि मिथ्यात्वाविशेषेण एकहेलयैव तत्त्वज्ञानेन निवार्यते। अतो विश्वभ्रमनिवृत्त्यर्थं तत्त्वमसीति वाक्यजन्यज्ञानेन विना नान्यं विधेयज्ञानमपेक्षते। अत एव 'ब्रह्मवेद ब्रह्मैव भवति' इत्यादौ ज्ञानमात्रस्यैव मोक्षहेतुत्वं श्रुयते। न हि प्रतिपन्नेऽर्थे नास्तिकत्वं न्याय्यम्। अतः 'तत्त्वमसि' इत्याद्युपदेशात् सोऽहं इत्यादिरूपेण विवर्तमानया धियैव विशुद्धाधिष्ठाननिष्ठया समूलभेदभ्रमोन्मूलनमिति।

अत्र ब्रूमः—

'सिद्धे विश्वस्य मिथ्यात्वे धीमात्रात्तन्निवर्तनम्।
तदेव न घटेतेति यथावदभिधास्यते'॥

ये च ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति प्रयोजकज्ञानवन्तः, तेऽपि चक्षुरादिगतदोषाणां निवारणाय भेषजशास्त्रादीन् प्रयुञ्जानाः दृश्यन्ते। न पुनर्मिथ्यात्वाध्यवसायमहाभेषजं प्रमाणयन्तो जोषमासते। अतो काचादिदोषाणां ज्ञानेतरनिवर्त्यत्ववत् विश्वभ्रमहेतुभूताविद्यायाः अपि कर्माङ्गकोपासनात् निवृत्तिरिष्यताम्।

ननु ज्ञानं स्वरूपेण विधातुं न शक्यमिति चेत् भवत्पक्षे वृत्तिरूपस्य, परपक्षे त्वात्मविशेषगुणस्य, अस्मत्पक्षे तु तदवस्थाविशेषरूपस्य करणाधीनतया भाव्यत्वसिद्धेः।

ध्यानं त्वप्राप्तत्वाद्विधेयमेव, यद्यपि चात्र विषयस्यानुकूलत्वात् तच्चिन्तनेऽपि रागस्संभवति, तथापि तत्तद्गुणविशेषविशिष्टस्य अहरहरनुवर्तनीयस्य साङ्गस्य तस्य फलसाधनत्व-

धियमन्तरेण तथाविधविशिष्टानुष्ठानस्य रागप्राप्तत्वं न संभवति । सा च धीश्चोदनयैव; तन्मूलश्च रागो यागादिष्वपि समानो विधेरपेक्षितश्चेति न दोषः । अतः वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितमिति सिद्धम् । विस्तरस्तु शतदूषण्यां द्रष्टव्यः ॥

**अविधेयत्वम्** — पुरुषेच्छाधीनकृत्यसाध्यत्वम् ॥

**अविनाभावः** — पृथक्स्थित्यभावः ।

'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' (गी. 10-39)

भूतजातं मया आत्मतयाऽवस्थितेन विना यत्स्यात्, न तदस्ति । 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इति प्रक्रमात् 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इत्यत्रापि आत्मतयाऽवस्थानमेव विवक्षितम् । सर्वं वस्तुजातं सर्वावस्थं मया आत्मभूतेन युक्तं स्यादित्यर्थः । अनेन सर्वस्यास्य सामानाधिकरण्यनिर्देशस्याऽत्मतयाऽवस्थितिरेव हेतुरिति प्रकटितम् । (गी. भा.)

न तदस्तीत्यादौ स्वव्यतिरिक्तासत्त्वादिविधिपरत्वभ्रमव्युदासायाविनाभावार्थतोक्तिः । (ता. चं.)

[अत्र उच्यमानाविनाभावशब्दस्य मिथ्यात्वपरत्वे प्रसिद्ध्यभावाच्च अतदात्मकस्य नास्तित्वमुच्यते ।]

इदमत्र बोध्यं–विना नानाशब्दौ 'विनञ्भ्यां नानाञौ न सह' (पा. सू. 2-5-27) असहार्थे (नस हेति सङ्घातः पृथक्त्वे वर्तते) पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौस्तः इत्यर्थपरसूत्रेण निष्पन्नौ । अतः शब्दशक्त्या पृथग्भावः इति लभ्यते । अविनाभावशब्देनापृथग्भावः (स्थितिः) स्वरसत एव बोध्यते । अनेन 'नेह नानास्ति किञ्चन' इति श्रुतिरप्युपबृंहिता ।

2. सम्बन्धनियमः ।

अविनाभावशब्दस्य संबन्धनियमवाचित्वात् । (श्रु. प्र. 1-256)

विनाभावः –पृथग्भावः–पृथक्स्थितिः, स नास्तीति अविनाभावः । एवं यौगिकः शब्दोऽयम् ।

अपृथक्सिद्धिः, अपृथक्स्थितिः, अयुतसिद्धिः, अविभागः इत्यादयः एतत्पर्याया एव । नैयायिकसंमतस्य समवायस्य सिद्धान्तेऽनङ्गीकारात् तत्स्थाने स्वीकृतोऽयं स्वरूपसंबन्धविशेषः । जगद्ब्रह्मणोः शरीरशरीरिणोः संबन्धश्च अविनाभाव एव इति बोध्यम् ।

1. व्याप्तिः । यथा–

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।

अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥ इत्यादौ ग्रन्थे अविनाभावशब्दार्थो व्याप्तिः ।

2. संबन्धमात्रम् । यथा–

मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे ।

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ॥

मीमांसकमते तु स्वदेशवृत्तित्वं तादात्म्यं च अविनाभावः । यथा 'व्यक्त्यविनाभावात्तु जात्या व्यक्तिराक्षिप्यते' इत्यादौ अविनाभावशब्दार्थः । अविनाभावो गुरुमते जातेर्व्यक्तिदेशत्वम् । भट्टमते तु तादात्म्यं इति ॥ (न्या. को.)

**अविभक्तं तमः** — अक्षरावस्थौन्मुख्यरहितं तमः ।

अक्षराद्यवस्थाप्रास्यौन्मुख्यविशिष्टं तदेव विभक्तं तमः । तदौन्मुख्यरहितमविभक्तं तमः । परमात्मशरीरतयाऽपि चिन्तयितुमशक्यं, सलिलविलीनलवण-चन्द्रकान्तस्थसलिल-सूर्यकान्तस्थवह्निकल्पं सर्वज्ञपरमात्मैकवेद्यमवतिष्ठते । भूतलविनिहितबीजस्थानीयंअविभक्तं तमः । (सु. उ. श्रु. भा. 2.)

अविभक्ततमस्त्वावस्था तु–'तमः परे देव एकीभवति' इति श्रुतिबोधिता शक्तिविशेषविशिष्टसंयोगात्मिका शक्तिविशेषात्मिकैव वा : सलिलनिलीनलवणन्यायेन पृथग्व्यपदेशानर्हत्वलक्षणाऽतिसूक्ष्मदशापत्तिरूपा एकीभावावस्था । (र. पे. 61)

निर्गताव्यक्ताक्षरावस्था, तमश्शब्दवाच्या, नामरूपविभागानर्हत्वेन सर्वेश्वरे एकीभूय स्थिता प्रकृतिः ॥ (त. वर. व्या. 72)

**अविभागः** — अपृथग्भावः ।

'अविभागो वचनात्' । (ब्र. सू. 4-2-15)

'अविभागेन दृष्टत्वात्' । (ब्र. सू. 4-4-4)

[सुषुप्तौ, प्रलये, उत्क्रान्तौ, मुक्तौ च श्रूयमाणाविभागं विशदयति ।]

भारवाहकस्य देहिनः सभारस्यैव यष्ट्यवष्टम्भेन विश्रमतुल्यः सुषुप्तौ विश्रमः । अपनीतभारस्य विश्रमतुल्यः महाप्रलये; यथा च कञ्चुकोष्णीषवतः तद्रहितस्य च विश्रमः, तद्वत् कारणे लीनस्य करणकलेबररहितस्य द्विपरार्धे काले विश्रमः इति प्रयोजनविभागः, सुषुप्तिप्रलययोः शरीरान्वयव्यतिरेकाभ्यामवगतः . . . . . सुषुप्तौ जीवमात्रस्याविभागापत्तिः ; प्रलय एव विशिष्टस्यलयापत्तिः ; उत्क्रान्तौ तु भूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या संयोगमात्रमेव । (श्रु. प्र. 4-2-15)

तथा च दृढ दृढतर दृढतम संयोगविशेषेणैव वैलक्षण्यं बोध्यम् । मुक्तौ तु आत्यन्तिकप्रकृति (कर्म) संबन्धविरहेण ब्रह्मणा अविभागस्थितिरेव इति विवेकः ॥

**अविभागाधिकरणम्** — (4-2-7)

'अविभागो वचनात्' इत्येकसूत्रात्मकमिदं अविभागपदादिमं एवं व्यपदिश्यते ।

तेजःप्रभृतीनां सर्वकारणभूते परमात्मनि लय इत्याशङ्क्य 'मनसि संपद्यत' इत्यस्यानुषङ्गात्तस्य च संयोगवाचित्वात् परमात्मनि तेषां संयोग एवेति समाधीयते ।

तेषां त्रयाणां तु परत्र पुंसि
स्वकारणत्वात् प्रलयस्तु भावी ।
तन्नैव पूर्वैः स्फुटमेकवाक्यात्
संश्लेषमात्रं तदबाधतश्च ॥ (न्या. क. सं. 4-21)

## अविभागेन दृष्टत्वात् — (ब्र. सू. 4-4-4)

(अविभागेन दृष्टत्वाधिकरणम्)

अहं ब्रह्मास्मीत्यविभागेनैव ब्रह्मानुभवति ;मुक्तः, कुतः ? दृष्टत्वात्—परब्रह्मोपसंपत्त्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् ।

किमयं मुक्तः आविर्भूतस्वरूपः प्रत्यगात्मा परंब्रह्म स्वात्मनो विभक्तमनुभवति- उत स्वात्मनोप्यात्मतया अविभागेन 'अहं ब्रह्मास्मि' इति संशयः । 'निरञ्जनः परमं साम्यमुपैति' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इत्यादि श्रुतिस्मृतिभ्यां मुक्तस्य परेण ब्रह्मणा साहित्यसाम्यसाधर्म्यावगमात् पृथग्भूतमनुभवति । पुत्रेण सह भुंक्ते' इत्यादौ भोक्तृसाहित्यं पितापुत्रयोः भेदग्राह्येव न तु नियतप्रकारप्रकारिभावावगाहि । एवमेव साम्यं सादृश्यमपि । तथा च तत्क्रतुन्यायः अपोदितः । साम्यस्य पारम्ये सति प्रकारप्रकारिभावादिलक्षणवैषम्यं बद्धावस्थायामेवेति पूर्वपक्षिणोऽभिप्रायः ।

राद्धान्तस्तु 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वं' 'तत्त्वमसि' इत्यादिना सामानाधिकरण्येन 'यः पृथिव्यां तिष्ठन्' 'यः आत्मनि तिष्ठन्' इत्यादिषु सर्वस्य चिदचिद्वस्तुनोः ब्रह्मशरीरत्वरूपब्रह्मप्रकारतया तत्तद्वस्तुबुद्धिशब्दाः तत्पर्यंतविषयाः इत्यवगम्य, 'आत्मेति तूपगच्छन्ति' इति न्यायेन स्वात्मनोऽप्यात्मतया 'अहं ब्रह्मास्मि' इत्युपासनेन यथावस्थितपरमात्मात्मकस्वात्मनो दृष्टत्वात् मुक्तः स्वात्मनोऽपि आत्मभूतं ब्रह्म अहं ब्रह्मास्मीत्यविभागेनैव अनुभवतीति ।

साधर्म्यश्रुतिस्तु परमात्मशरीरभूतस्य प्रत्यगात्मनोऽपहतपाप्मत्वादिगुणैः तत्साधर्म्यं प्रतिपादयति । 'सोऽश्नुते सर्वान् कामान् सहब्रह्मणा' इति च शरीरतया ब्रह्मप्रकारभूतत्वात् स्वात्मभूतेन ब्रह्मणा सह तद्गुणानुभवं क्षीरेण सह ओदनं भुंक्ते इत्यत्रेव भोग्यसाहित्यं वदतीति न कोपि विरोधः । तथा च साहित्यप्रतिपादकश्रुतिः न प्रकारप्रकारिभावेन विरुध्यते । अयं च न परमसाम्येन विरुध्यते । ब्रह्मानन्दानुभवादिगुणैः परमसाम्यस्य प्रकारप्रकारिभावेऽपि सत्त्वात् । न च सर्वैरपि गुणैः सर्वात्मना साम्यं विवक्षितम्, तथासति व्यावर्तकधर्माभावेन अभेदापत्तेः । एतेन मुक्तौ परमसाम्य-

श्रवणात् प्रकारप्रकारिभावश्रुतिः बद्धावस्थाविषयेति पूर्वपक्षाशयो निरस्तः; सर्वात्मना साम्यासंभवात् ।

परमसाम्यन्तु तुलाघृतयोः, स्वर्ण-शिलाशकलयोः, परमसाम्योक्ताविव विवक्षितांशे अत्यन्तसाम्यम् । अतः 'अविभागो वचनात्' 'अविभागेन दृष्टत्वात्' इत्युभयत्राप्यविभागशब्दस्य प्रयोगात् पृथक्स्थित्यनर्हसंसर्गविशेष एवाविभागः सूत्रकाराभिप्रेतः इति निर्णीयते; नत्वन्यः । अत्र ऐक्यं विवक्षितं चेत्—'अविभागो वचनात्' इत्यत्रापि अविभागपदश्रवणात् तथा स्यात्; तत्तु न विवक्षितं परेषामपि, तस्य उत्क्रान्तिविषयतया परमते अविद्वद्विषयत्वात् । सिद्धान्ते तु उभयत्राप्यविभागः विलक्षण संसर्गविशेष एव । तथा च ब्रह्मप्रकारतया तदविभागोक्तेः साम्य-साधर्म्य-भोग्यसाहित्यप्रतिपादकश्रुतयः सूपपन्ना एव ।

ब्रह्मणस्त्वविभागेन स्वात्मानं तु तदानघः ।

मुक्तोऽनुभवतीत्याह चैतदात्म्यमिति श्रुतेः ॥ (ब्र. प. मा. 527)

परे तु— स्वेनरूपेणाभिनिष्पद्यते यः सः किं परस्मादात्मनः पृथगेव भवति, उताविभागेनैव अवतिष्ठते इति संशये भेदेनैवावस्थानमिति यस्य मतिः, तं व्युत्पादयति 'अविभागेन' इति । अविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते । कुतः ? दृष्टत्वात् । 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'न तु तद्द्वितीयमस्ति' इत्यादिवाक्यानि अविभागेनैव दर्शयन्ति । यथादर्शनमेव फलं युक्तं तत्क्रतुन्यायात् । 'यथोदकं शुद्धे शुद्धमासिक्तं . . . . . . . आत्मा भवति गौतम' इत्यादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति, नदीसमुद्रादि निदर्शनानि च । भेदनिर्देशस्तु अभेदेऽप्युपचर्यते । 'स भगवन्कस्मिन्प्रतिष्ठितः' इति । 'स्वे महीम्नीति' आत्मरतिः, आत्मक्रीडः इति चैवमादिदर्शनात् इत्यत्राहुः ।

अन्ये तु 'ये भोगाः परमात्मना भुज्यन्ते ते एव मुक्तैः भुज्यन्ते' 'यानेवाहं शृणोमि, यान् पश्यामि, यान् जिघ्रामि तानेवैत इदं शरीरं विमुच्यानुभवन्ति' इति चतुर्वेदशिखायां दृष्टत्वात् इति सूत्रार्थं वर्णयन्ति ॥

## अविभागेनदृष्टत्वाधिकरणम् — (4-4-2)

('अविभागेन दृष्टत्वात्' इत्येकसूत्रात्मकम्)

'अविभागो वचनात्' इति पूर्वं अविभागाधिकरणस्य प्रवृत्तत्वात् तद्व्यावृत्तये सूत्रमिदं सम्पूर्णं अधिकरणनामधेयतया प्रयुज्यते ।

'निरञ्जनः परमं साम्यमुपैति' इति मुक्तस्य साम्यापत्तिश्रवणात् पृथग्भूतस्यैव साम्यसम्भवात् मुक्तस्स्वस्मात्पृथग्भूतमेव परमात्मानमनुभवतीत्याशङ्क्य, प्रत्यगात्मस्वरूपस्य ब्रह्मप्रकारैकस्वभावत्वात्तस्य निरस्ताविद्यातिरोधानतया याथार्थ्येन दृष्टत्वात्, प्रकारतया अपृथग्भूतस्यापि गुणाष्टकयोगेन साम्यसंभवाच्च, अविभागेनानुभवतीत्युक्तम् ।

परानुभूतिस्तु विभेदतः स्यात्
साधर्म्यशब्दादतिसाम्यशब्दात् ।
न स्यादिदं नाम तदात्मकत्वात्
साम्यश्रुतिस्तद्गुणसाम्यलम्बा ॥ (न्या. क. सं. 4-37)

## अविभागो वचनात् — (ब्र. सू. 4-2-16)

(अविभागाधिकरणम्)

उत्क्रान्तौ परदेवतासंपत्तिवचनं अविभागमात्रम् । तथोक्तेः— 'वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायां' इत्यादिना सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मा उत्क्रान्तिवेळायां परस्मिन् संपद्यते इत्युक्तम् । सैषा परमात्म-संपत्तिः प्राकृतलयवत् कारणापत्तिरूपा ? उत 'वाङ्म-सि संपद्यते' इत्यादिवत् अविभग-रूपेतिचिन्तायां—परमात्मनः सर्वेषां योनिभूतत्वात् कारणापत्तिरूपेति प्राप्ते उच्यते अवि-भाग इति । अपृथग्भावः—पृथग्व्यवहारानर्हसंसर्गः इत्यर्थः । कुतः ? वचनात् । 'तेजः परस्यां देवतायां' इत्यत्रापि 'वाङ्मनसि संपद्यते' इत्यतः 'संपद्यते' इति वचनस्या-नुषङ्गात्, तस्य च संसर्गविशेषवाचित्वात्, अनुषक्तस्याभिधानवैरूप्ये प्रमाणाभावात् । उत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाऽभावात्; पुनस्तत्राव्यक्तादिसृष्टयवचनाच्च । अतः परसंपत्तिः कारणापत्तिरूपा न; किंतु अविभाग रूपैवेति सिद्धम् ।

अविभागश्च संपत्तिः परमात्यमनि युज्यते ।
पूर्ववाक्यस्थसंपत्तिवचनावर्तनादिह ॥ (ब्र. प. मा. 503)

**अविरोधश्चन्दनवत्** — (ब्र. सू.2-3-24)

(ज्ञाधिकरणे षष्ठं सूत्रम्)

यथा हरिचन्दनबिन्दुः देहैकदेशवर्त्यपि सकलदेहव्यापिनमाह्लादं जनयति, तद्व-दणुरप्यात्मा देहैकदेशवर्ती सकलदेशवर्तिनीं वेदनामनुभवति । तथाच सार्वत्रिक सुखा-द्यनुभवाय न धर्मभूतज्ञानकल्पनापेक्षेति पूर्वपक्षपरमिदम् ।

'अणुत्वेऽप्यात्मनो देहे सर्वत्र सुखभागिता ।
एकदेशस्थितस्यापि चन्दनस्येव युज्यते ॥ (ब्र. प. मा. 240)

सिद्धान्तस्तु 'गुणाद्वाऽऽलोकवत्' इत्यनेन स्थापयिष्यते; अणुरप्यात्मा स्वगुणेन ज्ञानेनैव सकलदेहं व्याप्य सुखादिकमनुभवतीति । चन्दनादेः एकस्मिन्नेवावयविनि प्रदेशभेदेन सुखादिजनकता दृष्टा, नावयव्यन्तरे । आत्मनस्तु 'सौभर्यादेः अनेक-देहपरिग्रहेप्येकदेहैकदेशस्थस्यापि सर्वदेहावच्छेदेन सुखानुभवो दृष्टः । तदनुरोधेन एकस्मिन् देहेऽपि स्वधर्मभूतज्ञानद्वारैवानुभवतीति वक्तव्यम् ।

एवमेव मुक्तिकालेप्यनेकशरीरपरिग्रहे वक्तव्य इत्याशयेन 'प्रदीपवदावेशः तथाहि दर्शयति' इति च वक्ष्यते ।।

**अविरोधाध्यायः** — शारीरकमीमांसायां द्वितीयाध्यायः ।

प्रथमेऽध्याये प्रत्यक्षादिप्रमाणगोचरादचेतनात्तत्संसृष्टाचद्वियुक्ताच्च चेतनादर्थान्तरभूतं निरस्तनिखिलाविद्याद्यपुरुषार्थगन्धमनन्तज्ञानानन्दैकतानमपरिमितोदारगुणसागरं निखिलजग देककारणं सर्वान्तरात्मभूतं परं ब्रह्म वेदान्तवेद्यं इत्युक्तम् । अनन्तरं अस्यार्थस्य सम्भाव-नीयसमस्तप्रकारदुर्धर्षणत्वप्रतिपादनाय द्वितीयोऽध्यायः आरभ्यते इति । (श्री. भा. 2-'-1)

समस्तप्रकारशब्देन पादचतुष्टयेऽपि ये विरोधावतरणमुखभेदाः, ते विवक्षिताः । प्रथमेऽध्याये अयोगान्ययोगव्यवच्छेदमुखेन वेदान्तवाक्यानां ब्रह्मैककारणतापरत्वं वाक्य-तात्पर्यपर्यालोचनया समर्थितम् । अथ द्वितीयेऽध्याये बाह्यतर्कविरोधपरिहारः उच्यते इत्यर्थः । (श्रु. प्र.)

अत्र प्रथमे स्मृतिपादे कारणविषयकदूषणानां परिहारः, द्वितीये तर्कपादे परपक्षप्रतिक्षेपः, तृतीये वियत्पादे वियदादिप्रपञ्चस्य कार्यताप्रकारः, जीवस्य स्वरूपान्यथाभावलक्षणोत्पत्तिनिषेधः, ज्ञानसङ्कोचविकासप्रयुक्तोत्पत्तिः, प्रसङ्गात् जीवस्वरूपशोधनञ्च । चतुर्थे प्राणपादे जीवोपकरणानामुत्पत्तिप्रकारः निरूप्यते ।

**अविवाक्यम्** — द्वादशाहे दशमस्यान्हः नाम ।

'यथा द्वादशाहे अविवाक्ये दशमे अहनि मानसग्रहस्य . . . . . विद्यारूपस्यापि क्रियामयक्रत्वङ्गतया क्रियारूपत्वम्' । (श्री. भा. 3-3-44)

अविवाक्यं—विविधवाक्यरहितम् । 'विवाक्ये' इति छेदे तु विगतवाक्यं इत्यर्थः । (श्रु. प्र.)

अविवाक्यमित्येव नाम । यौगिकोऽयं शब्दः । 'द्वादशाहेविवाक्ये' इत्यत्र अर्थस्पष्टतायै विवाक्ये इत्यपि छेदः स्यादित्याशयः ॥ (टि.)

**अविशदग्रहणम्** — अल्पधर्मविशिष्टतया ग्रहणम् ।

'एकस्मिन् दूरतादेरविशदविशदप्रत्यभिज्ञादि तद्वत् ।
नैकत्वेऽप्यक्षभेदाद्विदुरमिव मिथस्संश्रयादिप्रसङ्गात्' ॥ (त. मु. 8)

आसन्नदेशे दृष्ट्वा दूरं गतस्याविशदा प्रत्यभिज्ञा, दूरे दृष्ट्वा समीपं गतस्य तु विशदा ; एवं क्रमात् बहलविरलालोकादिवशादप्युभयथा ग्राह्या । अल्पधर्मविशिष्टतया ग्रहणं अविशदग्रहणम् ; भूयोधर्मविशिष्टतया तु विशदग्रहणम् । न तु न्यूनाधिकदर्शनमात्रम् ; तथा सति घटपटदर्शने घटमात्रदर्शने च विशदाविशदव्यवहारप्रसङ्गात् . . . . . . ।

न चात्र रूपमेवाविशदं विशदञ्च भाति, पीतशङ्खादिभ्रमे रूपान्तरवत्तया भातस्यापि तथा प्रत्यभिज्ञानात् । अत्रोत्तरेणादिशब्देन संशयविपर्ययोः ग्रहणम् । संशयविपर्ययौतावत् अधिष्ठानग्रहे विशेषाग्रहात् समानधर्मग्रहाच्च भवतः । तथा दृष्टिनियमश्च नान्यथयितुं शक्यः ।

अधिष्ठानस्य कार्त्स्न्येन भानेऽभाने च न भ्रमः ।
भाताभाताकृतिभिदा कथं निर्धर्मके भवेत् ॥

बाधकधीश्चाधिष्ठानातिरिक्ततदसाधारणधर्मविषया, तत्स्वरूपग्रहस्यारोपसहत्वात् । जिज्ञासा च नात्यन्तानुपलब्धे, अदर्शनात् । न च निश्शेषविदिते, वेद्याभावात् । अतस्तद्विषये विदिताविदिताकारत्वं सिद्धम् । (स. सि.) अनेन धर्मधर्मिभावः स्थापितः ॥

**अविशिष्टफलत्वम्** — ब्रह्मविद्यानां तुल्यफलकत्वम् ।

'विकल्पोऽविशिष्टफलत्वात्' । (ब्र. सू. 3-3-57)

'विद्याः पञ्चाग्निवैश्वानरदहरमधुन्याससत्पूर्वसंज्ञाः ।
नानाशब्दादिभेदात्तुलितफलतया तद्विकल्पश्चशिष्टः' ॥ (त. मु. 101)

मुक्तितारतम्यं वदद्भिस्तु मुक्तिरेव शिक्षणीया । सर्वकर्मनिवृत्तौ स्वतः प्राप्तब्रह्मानुभवतारतम्यायोगात्, कतिपयकर्मनिवृत्तेः स्वर्गादावपि समत्वात् । अत एव सूत्रितं 'विकल्पोऽविशिष्टफलत्वात्' इति । (स. सि.)

एकस्मै स्वर्गादिफलाय विहिता ज्योतिष्टोमाग्निहोत्रादयः एकेनैवाधिकारिणा फलाधिक्यार्थं यथाकालभेदेन समुच्चयेनानुष्ठीयन्ते तद्वत् ,अधिकानन्दसिद्धये सद्विद्यादहरविद्यादीनामपि समुच्चयस्स्यादिति न वक्तव्यम् इत्याह—

कर्तुं ताः कालभेदात् क्षममिति न मिथो वासनास्थैर्यबाधात् ।
संपूर्णब्रह्मलब्ध्यै पृथगिह च विधिः प्रायणान्ते समाधौ ॥ इति ।
(अ. सा. 386)

अयमर्थः 'स खल्वेवं वर्तयन् यावदायुषम्' इति ब्रह्मविद्यायाः आशरीरपातमनुष्ठेयत्वं श्रूयते । तच्च सर्वासामपि ब्रह्मविद्यानां समानमेव । तेन एकयैव ब्रह्मविद्यया कृत्स्नस्यापि कालस्यावरुद्धत्वात् ब्रह्मविद्यान्तरानुष्ठानकालाभावात् समुच्चयो न भवत्येव । तदेव निगमयति—संपूर्णेति । अत्र एकमेव फलं दृश्यते या संपूर्णब्रह्मलब्धिः, तत्सिद्ध्यै पृथगेवानुष्ठेयान्युपासनानि, तानि च पृथगेव विधीयन्ते । तत्र हेतुमाह—'प्रायणान्ते समाधौ' इति ।

अयमर्थः —एकैक सद्विद्यादहरविद्यादिस्समाधिः प्रायणान्तो विधीयते । तेन विधेयानां सामस्त्येनानुष्ठानविरोधात् प्रत्येकानुष्ठानलाभाय पृथगेव साधनत्वमिति विकल्प एव स्वीकार्यः । (चिं. म.) अनेन ब्रह्मविद्यायाः विकल्पः समर्थितः ॥

**अविशेषणः** — अनुपयुक्तविशेषणरहितः । (परमात्मा)

'आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः' (भाग. 4-7-50)

विशेषणानि प्रकृतिपुरुषगतजडत्वपरिणामित्वासर्वज्ञत्वदुःखित्वादयो व्यवर्तकाकाराः, तद्रहितः इत्यर्थः । अविशेषण इति न सर्वगुणनिषेधः, स्वयंदृगिति कल्याणगुणविधानात्; कारणत्वोपयुक्तगुणकथनस्यापेक्षितत्वात् निषेधस्य विहितेतरविषयत्वाच्च ॥ (भाग. वी.)

**अविशेषाः** — भूतसूक्ष्माणि, पञ्चतन्मात्राणि ।

'तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः'। (सां. का. 38)

नास्ति विशेषः शान्तघोरमूढत्वादिरूपो यत्रेत्यविशेषाः । अभिव्यक्तशान्तघोरमूढत्वशून्याः कथ्यन्ते । अविशेषाः देवानां योगिनाञ्च विषयाः ॥ (व्या.)

सिद्धान्ते तु शब्दतन्मात्रात् आकाशं, आकाशात् स्पर्शतन्मात्रं इत्यादि क्रमः ॥

**अविश्वहेतुः** — सर्वस्यासाधारणकारणत्वाभाववान् (परमात्मा) ।

सृज्यकर्मसापेक्षत्वात् स्वतो विषमसृष्टेः अहेतुः । (वि. को.) अनेन सर्वजगत्स्रष्टुरप्यहेतुत्वोक्तेः सामरस्यं प्रादर्शि । वैशम्यांशे कर्मणामेवासाधारण कारणत्वात् । तदुक्तम्—

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥ इति ।

विश्वहेतुरप्यविश्वहेतुरितिनिर्देशः मत्स्थानानि सर्वभूतानि; न च मत्स्थानि भूतानीतिवत् तात्पर्यभेदेन युज्यते ॥

**अविषमा** — पक्षपातशून्या प्रकृतिरूपा गौः ।

'गौरनाद्यन्तवती . . पिबन्त्येनामविषमामविज्ञाताः कुमारकाः' (मं. उ. 6)

भोक्तृकर्मानुगुणपरिणामित्वादपक्षपातिनी, एनां देहात्मविवेकशून्याः पिबन्ति प्राकृतं भोगं कर्मपरवशाः अनुभवन्तीत्यर्थः ॥ (रं. भा.)

**अवेद्यत्वभंगवादः — (शतदूषण्यां २० तमो वादः)**

अनुभूतिस्स्वयंप्रकाशा, अनुभूतित्वात्, अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्व-प्रसङ्गः इति । तत्र स्वयंप्रकाशेत्यनेन किं स्वव्यवहारे स्वाश्रयस्य कदाचित् स्वगोचरानुभूत्यन्तरनैरपेक्ष्यमात्रं साध्यते ? उत सर्वदा सर्वस्य स्वगोचरानुभूतिविरहः ? नाद्यः, सिद्धसाधनात् । वयमपि संविदो विषयप्रकाशनवेळायां स्वाश्रयंप्रति संविदन्तरकर्मतामन्तरेण प्रकाशमङ्गीकुर्मः । नापि द्वितीयः, प्रत्यक्षविरोधात् । तदाह 'परानुभवस्य-होनोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्, स्वानुभवस्यापि अतीतस्याज्ञासिषमिति ज्ञानविषयत्वदर्शनाच्चेति ।

अतोऽनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः इति तर्कोऽपि स्ववधाय कृत्योत्थापनम् । प्रागुक्तप्रत्यक्षेण तत्रत्यानुभूतिशब्देनैव चानुभूतेरनुभाव्यत्वस्थितौ अननुभूतित्व प्रसङ्गात् । एतेनावाच्यत्वमपि ब्रह्मणो निरस्तं मन्तव्यम् ।

इदमखिलमभिप्रेत्योक्तम्—'घटादेरप्यज्ञानविरोधित्वमेवाननुभूतित्वनिबन्धनं, नानु-भाव्यत्वमित्यास्थीयताम्' इति ।

यदि ह्यनुभूतिरूपं ब्रह्म न वेद्यं, कस्तर्हि तत्त्वावेदकशास्त्रस्य विषयः । प्रपञ्च-मिथ्यात्वमात्रमिति चेन्न; 'अथातो ब्रह्मजिज्ञासा' 'ब्रह्मविदाप्नोति परं' इत्यादीनां समुद्रघोषत्वप्रसङ्गात् । उपहितं ब्रह्म शास्त्रवेद्यमिति चेन्न, अतत्त्वावेदकत्वप्रसङ्गात् ।

'यस्यामतं तस्य मतं' इत्यादिषु मतत्वविज्ञातत्वादेरपि तत्रैव स्वरसप्रतीतत्वात् आकारभेदेन मतत्वामतत्वयोः व्यवस्थायां न कापि क्षतिः ।

तत्तद्वाक्यप्रतिपन्नगुणविभूत्याकारितवेषेण मतत्वं, वस्त्वन्तरस्वभावविरहेण तत्तत्प्र-माणागोचरतयाऽनवच्छिन्नविषयत्वादिना चामतत्वमिति ।

एवमेव 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' इत्यत्रापि ब्रह्मानन्दस्य वाङ्मनसापरिच्छेद्यत्वे तात्पर्यं प्रकरणादौ व्यक्तम् । अन्यथा यच्छब्दादिभिस्तत्प्रति-पादनासंभवात् ; 'आनन्दं ब्रह्मणो विद्वान्' इति तद्विषयविहितवेदनासंभवाच्च । एतेन,

शब्दगोचरो यस्य' इत्यादिकमपि निर्व्यूढम् ; निष्कृष्टस्वरूपस्य देवादिशब्दागोचरत्वे वा तात्पर्यम् । एवमन्यान्यपि वेद्यत्वादिप्रतिक्षेपकाणि वाक्यानि प्रमाणान्तरश्रुत्यन्तरवाक्यशेषवाक्यस्थपदान्तराविरोधेन नेतव्यानि ।

विस्तरस्तु शतदूषण्यां द्रष्टव्यः ॥

**अवैदिकविप्रतिपत्तिः** — वेदविरुद्धा प्रतिपत्तिः ।

'अवैदिकविप्रतिपत्तेः पर्वत्रयं दृश्यते (वे. सं. ता. दी. 309)

'प्रकृतिरुपादानं रुद्रो निमित्तं' इत्येकम् । 'नारायणकारणत्वे श्रुतिभिरुपपादिते, नारायणः उपादानं, रुद्रो निमित्तम्' इत्येकं मतम् । तत्र 'निमित्तोपादानयोरैक्ये दर्शिते जगत्कारणं मुक्तिदं मुक्तप्राप्यमन्यत्परमस्ति' इत्येकम् ।

तत्र पूर्वोक्तं मतद्वयं 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः' इत्यादिश्रुतिभिः निरस्तम् ।

तृतीयविप्रतिपत्तिस्तु—'जगत्कारणं नारायणः । सः मोक्षप्रापकः । प्राप्यस्तु रुद्र एव' इति । सा तु 'परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' इत्याशङ्क्य, 'उपपत्तेश्च' इत्यादिभिः सूत्रकारेण भाष्यकारेण च निराकृता । (ता. दी.)

यदुक्तं प्रापकात्परं प्राप्यमस्तीति तन्न, प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैव उपायत्वोपपत्तेः । 'नायमात्मा प्रवचनेन लभ्यः . . . . यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां' इत्यनन्योपायत्वश्रवणात् । (श्री. भा. 3-2-34) अनन्योपायत्वश्रवणात्—प्राप्यस्यैवोपायत्वश्रवणादित्यर्थः । 'विवृणुते तनूं स्वां' इत्यनेन प्रापकत्वं प्राप्यत्वं च गम्यते । (श्र. प्र.)

इदमत्र अवधेयम्—अनन्योपायत्वश्रवणेन भक्तियोगादेः उपायत्वं न व्यवच्छिद्यते । उत्तरसूत्रेण 'तमेव विदित्वाऽति मृत्युमेति' 'नान्यः पन्था विद्यते अयनाय' इत्यादिभिः परस्य ब्रह्मणः महापुरुषस्य वेदनमेव अमृतत्वसाधनमिति प्रतिपादनात् । तथा च एवकारेण प्रस्तुता या प्रापकात् प्राप्यं अन्यदिति शङ्का सैव व्यवच्छिद्यते । अत एव भक्तिप्रपत्तिभ्यां प्रसन्नः ईश्वर एवोपायः प्राप्यश्चेत्युक्तं यतीन्द्रमतदीपिकायाम् ।

**अवैदिकागमाः** — वेदविरोध्यागमाः । (पाशुपतादयः)

[विरोधाभासानां सुपरिहरतया अवैदिकत्वं नास्तीति शङ्कां व्युदस्यति]

मोक्षप्रदजगत्कारणविषयाः तन्त्रेषु (अवैदिकागमेषु) शिवादिशब्दाः वस्तुमात्र-विषयाः स्युः, भगवद्विषया वा ; कार्यविषयाः नारायणादिशब्दाः भगवतोऽर्थान्तरपराः स्युः । अतो न विरोधः इति चेन्न, अतिप्रसङ्गात् । सर्वशब्दानाममुख्यार्थपरतया विरोधशमने सुगतागमादयोऽप्यविरोधेन नेतुं शक्यन्ते । क्षणिकशब्दः क्षणपरिणामित्वपरः ; चित्तसन्ततिशब्दोऽपि चित्तस्याविच्छेदपरः, नित्यज्ञानरूप आत्मेत्यर्थः । वेदा न प्रमाणमिति उक्तप्रमाणविलक्षणा इत्यर्थः ; तेषां पौरुषेयत्वं च पुरुषैरधीतत्वम् ।

अर्थान्तराणि तु व्याख्यातृबुद्धिदोषमूलानि, न तु सुगताभिमतानि इति किमिति न व्याख्यायते । अतोऽनुष्ठानविरोधात् तत्त्वविरोधाच्च विरोधो दुष्परिहारः इति अवैदिकत्वं सुस्थम् । (श्रु. प्र. 2-2-38)

अत एव भाषितम् । (2-2-42) 'योगपाशुपतयोश्चेश्वरस्य केवलनिमित्त-कारणता, परावरतत्त्वविपरीतकल्पना, वेदबहिष्कृताचारो निराकृतः ? न योगस्वरूपमात्रं पशुपतिस्वरूपश्च । . . जिन सुगताभिहिततत्त्ववत् सर्वं न बहिष्कार्यमित्युच्यते इति ॥

**अव्यक्तः** — (स. ना. 727)

इमं (परभावं) मनुष्यत्वेन गूहते इति अव्यक्तः । यथा 'नाहं प्रकाशः सर्वस्य' 'नाहं वेदैः न तपसा' इत्यादि । (वि. स. भा.)

उक्तस्य चास्य (परत्वस्य) मनुष्यत्वेन उपगूहनात् व्यक्तो नैवं सर्वस्येति ।
(वि. स. निर्व.)

मनुष्यत्वेन सर्वत्र परभावाप्रकाशनात् ।
बुधैरव्यक्त इति च कथितस्तत्त्व पारगैः ॥ (वि. स. नि.)

**अव्यक्तः** — प्रमाणान्तरागोचरः जीवात्मा ।

'परस्तस्मात्तु भवोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः' (गी. 8-20) तस्मादव्यक्तात् अचेतनप्रकृतिरूपात् पुरुषार्थतया परः उत्कृष्टो भावोऽन्यः ज्ञानैकाकारतया तस्माद्विसजातीयः, अव्यक्तः—केनचित्प्रमाणेन न व्यज्यत इत्यव्यक्तः, स्वसंवेद्यस्वासाधारणाकार इत्यर्थः । (गी. भा.)

व्यक्तः इति पदच्छेदो न युक्तः ; अव्यक्तोऽक्षरः इति अत्रैवाभिधानात् । दुर्ग्रहे च जीवे व्यक्तशब्दप्रयोगानुपपत्तेरित्यभिप्रायेणाह—केनचिदिति ।

ननु जीवस्याव्यक्तत्वमयुक्तम् । प्रत्यक्षानुमानागमैः यथासंभवं तद्व्यक्तेः ; अन्यथा खपुष्पत्वप्रसङ्गात् इत्यत्राह—स्वसंवेद्येति । प्रमाणान्तराणि हि साधारण्येन तत्प्रतिपादकानीति भावः ॥ (ता. चं.)

**अव्यक्तता** — अविभक्ततमोवस्था ।

'यस्मिन् भावाः प्रलीयन्ते लीनाश्चाव्यक्ततां ययुः' । (मं. उ. 2-8)

यस्मिन् आत्मनि भावाः—वियदादिपदार्थाः प्रलीयन्ते ; प्रलीनाश्चसन्तः शब्द-स्पर्शादिशून्याः पृथगुपलम्भानर्हाः, अविभक्तनामरूपाः, 'तमः परे देव एकीभवति' इति श्रुत्यनुरोधेनाविभक्ततमोवस्थां' भजन्ति ॥ (रं. भा.)

**अव्यक्तम्** — 1.प्रमाणान्तरागम्यं ब्रह्म ।

'तदव्यक्तमाह हि' (ब्र. सू. 3-2-22) ब्रह्म प्रमाणान्तरेण नैव व्यज्यते (श्री. भा.)

2. शरीरम् । 'इन्द्रियेभ्यः परा ह्यर्थाः . . . . . महतः परमव्यक्तम्, अव्यक्तात्पुरुषः परः । (क. उ. 3-10;11)

पूर्वत्र'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यादिना मन्त्रेण आत्मशरीरा-दीनां रथिरथत्वादिरूपणं कृतम् । तेषु रूपेषु अर्थेषु कस्मात् कस्य वशीकार्यत्वातिशय इति शङ्कायां 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना कस्माचित् कस्यचित् वशीकार्यत्वाति-शयः उच्यते । अत्र पूर्वमन्त्रोक्ताः अर्थाः सर्वेऽपि उत्तरमन्त्रे निर्दिष्टाः ; शरीरमेकमेव न निर्दिष्टम् । अतः पारिशेष्यात् तदेव शरीरं अनेन अव्यक्तशब्देन उच्यते । अतोऽत्र कपिलप्रक्रिया प्रत्यभिज्ञा नास्ति । (चिं. म. 133)

3. चतुर्मुखशरीरम् ।

'सहस्रयुगपर्यंतं अहर्यद्ब्रह्मणो विदुः ।
अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे' ॥ (गी. 8-17; 18)

अत्र चतुर्मुखब्रह्मणः अहरागमसमये त्रैलोक्यान्तर्वर्तिन्यः देहेन्द्रियभोग्यभोगस्थान-रूपाः व्यक्तयः चतुर्मुखदेहावस्थात् अव्यक्तात् प्रभवन्ति । (गी. भा.)

अत्र व्यक्तिशब्दस्तावत् न महदादिविषयः। चतुर्मुखात्प्रागेव तदुत्पत्तेः। अतः चतुर्मुखसृज्यमात्रविषय एवासौ। व्यज्यन्ते इति व्यक्तव्यः। तत्रापि सत्यलोकादेः प्रतिकल्पं प्रलयाभावात् त्रैलोक्यान्तर्वर्तिदेहेन्द्रियादिवस्तुमात्रमेव स्वीकार्यम्। तेषां चोत्पत्तिः चतुर्मुखब्रह्मशरीरादेव। ततश्चात्राव्यक्तशब्दोऽपि न मूलाव्यक्त विषयः; अपि तु तदुपादानकब्रह्मशरीरपरः। शरीरे चाव्यक्तशब्दप्रयोगः सूत्रेऽपि उपपादितः। 'सूक्ष्मं तु तदर्हत्वात्' इति। (ता. चं.)

4. प्रधानम्। प्रकृतेः भगवत्सङ्कल्पाधीनगुणवैषम्यात् या कार्योन्मुखावस्था तद्विशिष्टं अव्यक्तशब्देनोच्यते। (य. दी. 53)

1. गुणत्रयवैषम्यस्य पूर्वावस्था गुणसाम्यम्; तदवस्थं द्रव्यं मूलप्रकृतिः।

2. चक्षुरादिकरणानभिव्यक्तमात्मस्वरूपम्। 3. मायजन्यं गुणतत्त्वम् (शैवमते)॥ (वि. को.)

**अव्यक्तबन्धुः** — परमात्मा।

'योऽयं कालः तस्य तेऽव्यक्तबन्धो'। (भाग. 10-3-25)

अव्यक्तस्य निरतिशयसूक्ष्मदशामापन्नस्य प्रधानस्य बन्धो तदाश्रयत्वरूपं तद्बन्धुत्वमिह विवक्षितम्। इदं दृष्टान्तार्थं उक्तम्। यथा सूक्ष्मचिद्द्रव्यं त्वयि संश्लेषमापन्नं त्वदपृथक्सिद्धविशेषणं सत् त्वदेकत्वाविरोधि। तद्वत् अयं कालः अपृथक्सिद्धविशेषणभूतस्सन् एकत्वाविरोधीति भावः। (भाग. वी.)

अस्माभिरज्ञातोऽपि अस्मद्धितप्रवणत्वाद्वा अव्यक्तबन्धुः। आद्ये षष्ठीतत्पुरुषः, अन्त्ये कर्मधारयो विवक्षितः॥

**अव्यक्तस्वरूपः** — अव्यक्तशरीरकः ईश्वरः।

'स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः'। (वि. पु. 6-5-86)

पररूपेणाव्यक्तरूपः, व्यूहादिरूपेण व्यक्तरूपः। (वि. चि.)

व्यष्टिसमष्टिशब्दाभ्यां कार्यकारणावस्थश्चेतनवर्ग उच्यते। रूपं–शरीरम्। स्वरूपम्–स्वासाधारणशरीरम्॥ (श्रु. प्र.1-212)

अव्यङ्गः — (स. ना. 131)

तदङ्गैः (वेदाङ्गैः) छन्दःकल्पादिभिः स्वकल्पितैरविहीनः । (वि.स.भा.)

विगतानि-विहीनानि, - अङ्गानि - स्वकल्पितानिछन्दःकल्पादीनि अस्येति व्यङ्गः, तैः अविहीनतया सनेति । (वि. स. निर्व.)

शीक्षाव्याकरणाद्यङ्गैर्नहीनोऽव्यङ्ग उच्यते ॥ (वि. स. नि.)

अव्यतिरेकः — अभेदः । (कार्यकारणयोः)

प्रतिज्ञाहानिरव्यतिरेकात् । (ब्र. सू. 2-3-5)

छान्दोग्यश्रुत्यनुसारेणान्यासां वियदुत्पत्तिवादिनीनां श्रुतीनां गौणत्वम् कल्पयितुं न युज्यते । यतः छान्दोग्यश्रुत्यैव वियदुत्पत्तिरङ्गीकृता; येनाश्रुतं श्रुतमित्यादिना ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् । तस्या हि प्रतिज्ञायाः अहानिराकाशस्यापि ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवति । (श्री. भा.)

कार्यकारणभावाभावेऽपि नित्यसिद्धमुक्तात्मनामव्यतिरेको ब्रह्मशरीरत्वेन भवतीति तद्व्यावृत्त्यर्थं ब्रह्मकार्यत्वेन तदव्यतिरेकादित्युक्तम् । मृत्पिण्डकार्यादिदृष्टान्तवशात् कार्यतयैवाव्यतिरेको विवक्षितः । 'ऐतदात्म्यमिदम्' इति वाक्यं कार्यभूतं कृत्स्नं कारणभूतब्रह्मात्मकम् इत्येतदर्थपरम् । आत्मशब्दः अन्तर्यामिणमाह । एतच्छब्देन कारणत्वम् पूर्वप्रस्तुतं विवक्षितम् । यः कारणावस्थस्यात्मा स एव कार्यावस्थस्यापि जगतः आत्मा इत्यर्थः ॥ (श्रु. प्र.)

अव्यपदेश्यम् — व्यपदेष्टुमशक्यम् । (ब्रह्म)

'नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञम् अचिन्त्यमव्यपदेश्यम्' ।

(मां. उ. 2-5)

इदम् ईदृगिति चिन्ताव्यपदेशानर्हम् । (रं. भा.)

अचिन्त्यत्वादेव अव्यपदेश्यम् - व्यपदेष्टुम् अशक्यम् ॥ (कू. भा.)

अव्यभिचारः — ऐकान्त्यविशिष्टः । (भक्तियोगः)

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते' (गी. 14-26)

अव्यभिचारः – देवतान्तरादिपरित्यागरूपः । (ता. चं)

साध्याभाववदवृत्तित्वं व्यभिचारः ; तदभावः ॥ (न्या. को.)

**अव्ययः** — (स. ना. 13)

न वीय्यते - न व्यपगम्यतेऽस्मादिति । ( वि. स. भा. )

वीय्यते - व्यपगम्यते चेतनोऽस्मादिति व्ययः , सनेति । (वि. स. निर्व.)

'न वीय्यते च वैकुण्ठात् मुक्तोऽथस्तादतोऽव्ययः' ॥ (वि. स. नि.)

**अव्ययः** — व्ययरहितः । (परमात्मा)

'त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ' ( गी. 11-18 )

व्ययरहितः; यत्स्वरूपो यद्गुणो यद्विभवश्च त्वं तेनैव रूपेण सर्वदाऽवतिष्ठसे इत्यर्थः ॥ (गी. भा.)

अव्ययशब्देन 'तदव्ययम् ' 'अनन्तमव्ययं कविम् ' इत्यादिकं स्मारितम् । स्वरूपस्य, गुणस्य, विभवस्य वा यदाकदाचित्प्रच्युतिर्हि व्ययः, स सर्वोऽप्यस्य नास्तीत्यविशेषिताव्ययशब्देनोच्यते ॥ (ता. चं)

**अव्ययम्** — 1. व्ययरहितम् । (ब्रह्म)

'अशब्दमस्पर्शमरूपमव्ययम्' (कठ. उ. 3-15)

अवयवापचयशून्यम् । (रं. भा.)

2. सदैकरूपम् ।

'त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् ।

मोहितं नाभिजानाति मामेभ्यः परमव्ययम्' ॥ (गी. 7-13)

3. स्वतोगुणसत्त्वादिरूपसम्बन्धानर्हम् जीवस्वरूपम् ।

'देहे देहिनमव्ययम्' (गी. 14-5)

अव्ययशब्दोऽत्र गुणसम्बन्धकृतज्ञानसङ्कोचरूपव्ययनिषेधपरः ॥ (ता. चं.)

**अव्यवधानेन वाचकत्वम्** — व्यवधानमन्तरा (तत्तदन्तर्यामिपरत्वमन्तरा) वाचकत्वम् ।

जैमिनिस्त्वाचार्यो वैश्वानरशब्दवत् अग्निशब्दस्यापि परमात्मन एव साक्षात् अव्यवधानेन वाचकत्वे न कश्चिद्विरोधः इति मन्यते ।

यथा वैश्वानरशब्दः साधारणोऽपि परमात्मासाधारणधर्मविशेषितः विश्वेषां नराणां नेतृत्वदिना गुणेन परमात्मानमेवाभिदधाति इति निश्चीयते ।

एतदुक्तं भवति–

एवम् अग्नि शब्दोऽपि अग्रनयनादिना येनैव गुणेन योगात् ज्वलने वर्तते, तस्यैव गुणस्य निरूपाधिकाष्ठागतस्य परमात्मनि सम्भवात् । अस्मिन् प्रकरणे परमात्मा-साधारणधर्मविशेषितः परमात्मानमेव अभिधत्ते इति ॥ (श्री. भा. 1-2-29)

**अव्याकृतम्** — प्रधानशरीरकं ब्रह्म ।

'तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियते । (बृ. उ. 3-4-7)

अव्याकृतं हि अव्यक्तं, नामरूपाभ्यां न व्याक्रियते–न व्यज्यते इत्यर्थः । अव्यक्तं प्रधानमेव अभिधीयते इति नेत्युच्यते, तत्रापि अव्याकृतशब्देन अव्याकृतशरीरं ब्रह्मैव अभिधीयते । अतः अव्याकृतं–अव्याकृतशरीरं ब्रह्म । 'तन्नामरूपाभ्यां व्याक्रियते' इति तदेवाविभक्तनामरूपं ब्रह्म । सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनाम-रूपं स्वयमेव व्याक्रियतेत्युच्यते । एवं च सति ईक्षणादयो मुख्या एव भवन्ति । ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथञ्चित् उप-पद्येते ॥ (श्री. भा. 1-4-15)

**अव्याजत्वम्** — फलसदृश व्यापारनिरपेक्षत्वम् ।

'अव्याजवत्सल तथापि निरंकुशं माम्' ॥ (व. पं. 3)

**अव्याप्तिः** — लक्षणदोषः ।

1. लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । अत्र गोः कपिलत्वं लक्षणमित्युक्तौ गौर्लक्ष्या भवति । लक्ष्यतावच्छेदकं गोत्त्वम् । तस्य

समानाधिकरणः गोत्वस्याधिकरणे शुक्लगवि वर्तमानः कपिलत्वस्यात्यन्ताभावः । तस्य प्रतियोगि कपिलत्वं भवति । तथा च प्रतियोगित्वं कपिलत्वे वर्तत इति द्रष्टव्यम् ।

2. लक्ष्यैकदेशावृत्तित्वम् । यथा गोः कपिलत्वस्य लक्षणत्वाङ्गीकारे शुक्लगवि कपिलत्वस्याभावेन अव्याप्तिः ॥

**अव्याप्यवृत्तित्वम्** — स्वात्यन्ताभावसमानाधिकरणत्वम् ।

यथा वृक्षे कपिसंयोगतदत्यन्ताभावयोरव्याप्यवृत्तित्वम् ।

अत्रायमाशयः । अग्रे वृक्षः कपिसंयोगी न मूले इति प्रतीत्यैकस्मिन्नप्यधिकरणे वृक्षे कपिसंयोगकपिसंयोगाभावायोरग्रमूलात्मकप्रदेशविशेषावच्छेदेन विद्यमानत्वात्तयोरव्याप्यवृत्तित्वं सङ्गच्छत इति ॥ (न्या. को.)

**अव्रणम्** — व्रणशून्यं ब्रह्म ।

'अकायमव्रणम्' (ई. उ. 8)

कर्मायत्तशरीराभावादेव अक्षतम् । (कू. भा.) एतेन स्वरूपे व्रणस्य प्रसङ्गाभावात् विशेषणमिदं व्यर्थमितिशङ्का परास्ता । तादृशशरीरवत्त्वे तद्द्वारापि प्रसङ्गात् इति भावः ॥

**अशनाया** — मृत्युः ।

'मृत्युनैवेदमावृतमासीत् अशनायया । अशनाया हि मृत्युः' (बृ. उ. 3-2-1)

अत्र अशनाया नाम संजिहीर्षा । 'अशनायोदन्याधनाया बुभुक्षापिपासागर्धेषु' इति सूत्रेण बुभुक्षार्थे निपातितः अशनायाशब्दः संजिहीर्षां लक्षयित्वा तद्वति लक्षितलक्षणया वर्तते । ततश्चायमर्थः—संजिहीर्षुणा तमश्शरीरेण परमात्मना परिदृश्यमानं स्थूलावस्थं जगत्, आवृतमासीत्—तिरोहित स्थूलावस्थमासीत् । स्थूलावस्थां विहाय तमश्शरीरकपरमात्मावस्थमासीदित्यर्थः । अशनायाशब्दस्य मृत्युशब्दिते परमात्मनि प्रयोगे हेतुमाह—अशनाया हि मृत्युः । लोके बुभुक्षाविशिष्टो हि पुरुषः जन्तून् हिनस्ति । अतः बुभुक्षायाः मरणहेतुत्वेन मृत्युत्वं प्रसिद्धमित्यर्थः ।

यद्यपि तत्रत्याशनायामृत्युशब्दशब्दयोर्भिन्नत्वात् प्रकृतेः मृत्युशब्दप्रतिपाद्यस्य तमश्शरीरकपरमात्मनः संजिहीर्षावाच्यशनायाशब्दप्रयोगविषयतायां न तत् उपपादकम्, तथाप्येकशब्दरूपितत्वेनार्थद्वयैकीकरणेन श्रुतिप्रवृत्तिरुपपद्यत इति द्रष्टव्यम् । (रं. भा.)

[अत एव सुबालोपनिषदि 'यस्याक्षरं शरीरं यस्य मृत्युः शरीरं, एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देवएको नारायणः' इति श्रुयते ।]

2. बुभुक्षा ।
'उभे तीर्त्वा अशनायापिपासे' (क. उ. 1-12)

3. आपः ।

अशनायापिपासे मे सोम्य विजानीहीति । यत्रैतत्पुरुषोऽशिशिषति नाम, आप एव तदशितं नयन्ते । तत् यथा गोनायोऽश्वनायःपुरुषनाय इति, एवं तदप आचक्षते अशनायेति' । (छां. उ. 6-8-3)

गां नयतीति गोनायः । यथा गोनेतारं गोनाय इत्याचक्षते, यथा वा अश्वनेतारं पुरुषनेतारञ्च अश्वनायः पुरुषनाय इत्याचक्षते लौकिकाः, एवमशितनेत्रीरपः अशनायेत्याचक्षत इत्यर्थः ॥ (रं. भा.)

**अशब्दम्** — 1. नामरहितं ब्रह्म ।

'अशब्दमस्पर्शमरूपमरसमगन्धम्' (सु. उ. 3-1)
अशब्दमित्यादिना कालपरिच्छेदाविनाभूतधर्मव्यावृत्तिरुक्ता । (श्रु. भा.)
सहस्रनामवतः प्राकृतदेहनिबन्धननामरहितत्वं विवक्षितम् ।

2. शब्दप्रमाणागम्यम् (प्रधानम्) ।
'ईक्षतेर्नाशब्दम्' । (ब्र. सू. 1-1-5)

यस्मिन् शब्दएव प्रमाणं न भवति तत् अशब्दम् – आनुमानिकं प्रधानमित्यर्थः ॥ (श्री. भा.)

**अशमः** — इन्द्रियानुपरतिः ।

'लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा । रजस्येतानि जायन्ते . . .' ।
(गी. 14-12)

अत्र आरंभशब्दः दृष्टादृष्टफलसाधनभूतकृपियज्ञादिविषयः । अतश्च प्रवृत्ति-शब्दोऽत्र ततो व्यावृत्ततृणच्छेदाङ्गकम्पादि वृथाचेष्टाविषयः । द्वाभ्यां अपौनरुक्त्याय अशमोऽत्र प्रवृत्तिहेतुरिन्द्रियोद्रिक्ततेत्याह–

इन्द्रियानुपरतिरिति ॥ (ता. चं.)

**अशरणः** — 1. रक्षकान्तरशून्यः ।

'शरणमशरणानाम् । (पा. स. 55)

'शरणं गृहरक्षित्रोः' इत्यमरः ।

2. उपायान्तरशून्यः ।

'अगतिरशरणो भवाब्धौ' ॥ (व. स्त. 82)

**अशरण्यशरण्या** — श्रीः ।

'अशरण्यशरण्यां अनन्यशरणः शरणमहं प्रपद्ये' । (श. ग. 103)

येषां मोक्षोपायनिष्पत्तिकामानां सर्वलोकशरण्योऽपि न भवेच्छरण्यः, तेषामप्यसौ शरण्या ।

यथोक्तं त्रिजटया–

'भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया ।
राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥

प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ।
अलमेषा परित्रातुं राक्षस्यो महतो भयात्' ॥ इति ।

वानरपरिषदि चैतदनुवदन् वायुसूनुरेवमाह–

'अलमेषा परित्रातुं राघवात् राक्षसीगणम्'
'ततस्सा ह्रीमती बाला भर्तुर्विजयहर्षिता ।
अवोचत् यदि तत्तथ्यं भवेयं शरणं हि वः' ॥ इति ।

'पापानां वा शुभानां वा' इत्यादीनि च प्रभञ्जनसुतं प्रति तद्वाक्यानि । कुपितनरसिंहसमीपागतिभीताश्च प्रजापतिप्रभृतयः तामेव विश्वमातरं आश्रित्य तत्पुरस्कारेण

तमुपसेदुरिति पुराणप्रसिद्धम् । आहुश्च 'मातर्मैथिलि राक्षसीस्त्वयि तथैवार्द्रापराधा-स्त्वया रक्षन्त्येत्यादि' ॥ (र. रक्षा.)

अशान्तः — 1. शान्तिरहितः ।

'नाशान्तो नासमाहितः' । (क. उ. 2-24)

अनुपशान्तकामक्रोधवेगः । (रं. भा.)

2. विषयस्पृहायुक्तः । (गी. भा.)

'अशान्तस्य कुतः सुखम्' । (गी. 2-66)

3. वहिरिन्द्रियनिग्रहरहितः ॥ (वि. को.)

अशीर्यः — विशरणस्वभावानर्हः परमात्मा ।

'अशीर्यो न हि शीर्यते' । (बृ. उ. 5-9-26)

विशरणयोग्यावयवशून्यत्वान्न शीर्यते । (रं. भा.)

अत एव भाषितं 'आदरादलोपः' इति सूत्रे 'विशरणीयविसजातीयत्वान्न विशीर्यते' इति ।

अत्र अशीर्यत्वं अविद्यावर्तकम् । एवञ्च 'अशीर्यः न हि शीर्यते' इत्युभयोः कार्यकारणभावपरतया सफलता उपपदिता ॥

अशुद्धमितिचेन्न शब्दात् — (ब्र. सू. 3-1-25)

(अन्याधिष्ठिताधिकरणे द्वितीयं सूत्रम्)

स्वर्गोपभोग्यफलमिष्टादिकर्मैव, अशुद्धं पापमिश्रम्; अतः व्रीह्यादिभावेन, भोगाय अनुशयिनो जायन्त इति चेत्; तन्न । कुतः ? शब्दात्-अग्नीषोमीयादेस्संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात् । यद्यपि व्रीह्यादिभावेन जायन्त इत्यत्र जन्महेतुभूतं कर्म न श्रुतम्; तथापि पूर्वश्रुतं इष्टादिकर्म अग्नीषोमीयादि हिंसागर्भत्वेन अशुद्धम्; हिंसात्वेन अशुचिर्व्रीह्यादि जन्मनोऽपि हेतुर्भवतीति चेत्, न; अहिंसात्वशब्दात् । पशोर्हि संज्ञपनस्य स्वर्गावाप्तिसाधनभाववादिशब्दः श्रूयते

'हिरण्यशरीरः ऊर्ध्वः स्वर्गं लोकमेति' 'न वा उ एतन्म्रियसे नरिष्यसी'त्यादिः । हिंसात्वे सति हि उक्तदोषसंभवः, हिंसात्वाभावादेव दूरोत्सारितो दोषः ।

अल्पदुःखदोऽपि अतिशयिताभ्युदय साधको व्यापारः रक्षणम्; अनर्थोदर्को व्यापारः हिंसा इत्यर्थः । अतश्चन्द्रस्थलात् स्खलितानां अनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भावः इत्युपचर्यते ।

हिंसात्ववैदिकी या तु तयानर्थो ध्रुवं भवेत् ।
वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन ॥ इति च वराहे ।

अशुद्धशब्दस्याशुद्धियुक्तवाचित्वात्, पापस्याशुद्धिरूपत्वाच्च पापमिश्रमित्युक्तम् । दुःखहेतुः संज्ञपनं पापं स्यादिति शङ्का हिंसात्वे सति हि उक्तदोषः; हिंसात्वाभावादेव दूरोत्सारिता; अयमेव दुष्प्रधर्षणः परिहारः ।

अतः श्येनाग्नीषोमीयवैषम्यञ्चेदमेव अल्पदुःखदोप्यतिशयिताभ्युदयसाधको-व्यापारो रक्षणम् । अनर्थोदर्कोव्यापारो हिंसेति स्वीकारात् । श्येनयागेतु शत्रोः हिंसा-जनक एव व्यापारः; नहि पश्वालम्बनवत् शत्रोः स्वर्गप्राप्तिः श्रूयते ।

पश्वादि हिंसया स्वर्गं प्राप्तानां शिष्टकर्म च ।
अशुद्धमिति भोगश्चेत् न तत् शुद्धमिति श्रुतेः ॥ (व्र. प. मा. 312)

**अशुद्धसत्त्वम्** — मिश्रसत्त्वम् ।

सत्त्वरजस्तमोरूपगुणत्रययुक्तः बद्धचेतनानां ज्ञानानन्दयोस्तिरोधायकः, विपरीत-ज्ञानजनकः, नित्यः, ईश्वरस्य क्रीडापरिकरभूतः प्रदेशभेदेन कालभेदेन च सदृशानां विसदृशानां विकारणामुत्पादकः प्रकृतिः, अविद्या, मायेत्यभिधीयमानः, कश्चिदचि-द्विशेषः ॥ (तत्व. व्या. 148)

**अशुश्रूषुः** — शुश्रूषारहितः । श्रवणेच्छारहितः ।

'न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति' (गी. 18-67) भक्तायाप्यशुश्रूषवे न वाच्यम् । (गी. भा.)

'प्रब्रूहि तं श्रद्धधानाय मह्यं' इति श्रुत्या च शुश्रूषाप्राधान्यमवगतम् । (ता. चं.)

श्रद्धधानाय इत्येतत् समानार्थकत्वात् शुश्रूषत्वं तीव्रश्रवणेच्छावत्त्वं, न तु परिचरणकर्तृत्वम् । (टि.)

अत्र शुश्रूषाशब्दः यौगिकः, न तु रूढः इति भावः ; रूढिपरत्व एव सेवार्थकत्त्वदर्शनात् । अनेन 'नापृष्टः कस्यचित् ब्रूयात्' इत्यपि स्मर्यते ॥

**अशेषलोकशरण्यः** — भगवान् सर्वरक्षकः ।

'अपारकरुणाम्बुधे, अनालोचितविशेषाशेषलोकशरण्य' । (श्रीरं. ग. 139) जातिगुणादिनिकर्षानादरेण सर्वैः शरण्यतया वरणीयः इत्यर्थः । अनेन प्रपत्तेः सर्वाधिकारत्वं दर्शितम् ।

कारुणिकोऽपि यदि विषमः स्यात्, समोऽपि यदि निर्घृणः स्यात्, न तदा सर्वशरण्यः स्यादिति । (र. रक्षा.)

शरणे साधुःशरण्यः रक्षकत्वेन प्रार्थनीय इति यावत् ॥

**अशेषविशेषप्रत्यनीकं ब्रह्म** — समस्तभेदशून्यं ब्रह्म ।

(इदञ्च अद्वैतमते) विशेषः (भेदः) । सः त्रिविधः । सजातीय, विजातीय, स्वगतभेदात् इति । तादृश भेदत्रयरहितं ब्रह्म । सजातीयभेदरहितत्त्वं च सत्यभूतचेतनान्तरशून्यत्वम् । विजातीयभेदरहितत्त्वं च सत्यभूताचेतनान्तररहितत्वम् । स्वगतभेदशून्यत्वं च ज्ञातृत्व, ज्ञेयत्व, ज्ञानत्वादि स्वनिष्ठ धर्मरहितत्वम् । ब्रह्मव्यतिरिक्तं सर्वं चेतनाचेतनं ज्ञानादिब्रह्मगुणाश्च काल्पनिकाः । अत एव मिथ्याभूताश्चेति तेषां मतम् । सत्यभूतचेतनान्तरविजातीय अचेतनशून्यं, स्वनिष्ठधर्मशून्यं चैतन्यमात्रस्वरूपं ब्रह्म ।

सिद्धान्ते तु पूर्वोक्तत्रिविधभेदविशिष्टमेव ब्रह्म ॥ (सं. अ.)

**अशोकः** — (स. ना. 338)

आध्यत्मिकानां शोकमोहाशनायादीनां विरोधी । (वि. स. भा.)

शोकस्य तदुपलक्ष्याणामाध्यात्मिकानां शोकमोहाशनायादीनां विरोधीति ।
(वि. स. निर्व.)

'अशोकः शोकमोहादिनाशकः परिकीर्तितः' ॥ (वि. सं. नि.)

**अशोकः** — (स. ना. 637)

कस्यचिदपि अनाथस्य अहानात् तद्विषये (शोकरहितः) । (वि. स. भा.)

कस्यापि अनाथस्य अहानात् तद्विषये नास्ति शोकः–दुःखमस्येति ।
(वि. स. निर्व.)

नाथत्वाच्चापि सर्वेषां अशोकस्त्वेन ईरितः ॥ (वि. स. नि.)

**अश्मादिवच्च तदनुपपत्तिः** — (ब्र. सू. 2-1-23)

(इतरव्यपदेशाधिकरणे तृतीयं सूत्रम्)

चिदचिद्वाचकशब्दैः सामानाधिकरण्ये तुल्येऽपि यथा ब्रह्मणो जडस्य च स्वरूपैक्यासंभवात् व्यावृत्तिरभिप्रेता ब्रह्माज्ञानवादिना, तथा चेतनस्यापीत्यभिप्रायेणाह– अश्मादिवत् इति । अश्मकाष्ठलोष्टादीनामत्यन्तहेयानामचिद्विशेषाणां निरवद्यनिर्विकारनिखिलहेयप्रत्यनीककल्याणगुणैकतानब्रह्मस्वरूपैक्यं यथा नोपपद्यते, तथाऽनन्तदुःखयोगार्हस्य चेतनस्य तदनुपपत्तिः–निखिलहेयप्रत्यनीकब्रह्मभावापत्तिः न संभवति । ब्रह्मभावानुपपत्तिश्च न केवलं भेदश्रुत्या अर्थान्तरताऽवगम्यते, वस्तुतोऽभेदानुपपत्त्या-चेत्यर्थः । जीवसामानाधिकरण्यनिर्देशः 'यस्यात्माशरीरं' इत्यादिश्रुतिशतसिद्धजीवप्रकारक ब्रह्मप्रतिपादनपर इति 'अवस्थितेरिति काशकृत्स्नः' इत्यत्रैव प्रतिपादितः ।

तथा च 'सर्वं खल्विदं ब्रह्म' इति चेतनाचेतनयोः उभयोरप्येकविधमेव सामानाधिकरण्यं प्रमाणसिद्धम् । अतः जीवादर्थान्तरमेव ब्रह्मेति अभेदमादायापादिताः हिताकरणाहितकरणादिदोषाणां प्रसङ्गोदूरी कृत एवेति बोध्यम् ।

अश्मादीनां ब्रह्मभावो यथा नैवोपपद्यते ।
तथैवाघौघपूर्णस्य जीवस्यापि न युज्यते ॥ (ब्र. प. मा. 161)

**अश्रद्धधानाः** — श्रद्धारहिताः ।

अश्रद्धधानाः पुरुषाः धर्मस्यास्य परन्तप । अप्राप्य मां निवर्तन्ते . .' । (गी. 9-3)

धर्मस्योपादानयोग्यदशां प्राप्य अश्रद्दधानाः विश्वासपूर्वकत्वराराहिताः ।
(गी. भा.)

श्रद्धानिषेधः तत्प्रसंगे सति हीत्यभिप्रायः । कारणनिवृत्तेः कार्यानुष्ठाननिवृत्ति-पर्यन्तत्वप्रदर्शनायोक्तं विश्वासपूर्वकत्वराराहिता इति । (ता. चं.)

अनेन श्रद्धाशब्दस्य तत्पूर्वकत्वरापर्यंतवर्णने तात्पर्यं प्रदर्शितम् ॥

**अश्रुतकल्पनम्** — श्रुतावप्रतीयमानस्यार्थस्य कल्पनम् ।

'शब्दात्मा लौकिकार्थाकृतिरियमथवा देवताऽतो न तस्या ।
ब्रह्मोपासेत्यनार्षं श्रुतपरिहरणं कल्पनं चाश्रुतस्य ॥ (अ. सा. 118)

श्रुतहानिः अश्रुतकल्पना च परस्परसंश्लिष्टौ दोषौ । यथा 'इन्द्राय स्वाहा' इत्यादौ हविरुद्देश्यभूतः चतुर्थ्यन्तप्रतिपाद्यः कः इति विचारे, 'चतुर्थ्यंतः शब्द एव देवता, अथवा लौकिकाग्न्यादिरर्थ एव, यद्वा अर्थोपश्लिष्टशब्दो देवता'; इति विकल्प्य देवता-निरासो न युक्तः; देवताया अभावे सति देवतायाः फलप्रदत्वमेव न स्यात् । तथा च 'वायव्यं श्वेतमालभेत भूतिकामः वायुर्वैक्षेपिष्ठा देवता . . . . . स एव एनं भूतिं गमयति, स एनं प्रीतः प्रीणाति' इति श्रुतायाः देवतायाः प्रीतेः परिहरणं स्यात् । अश्रुतस्यापूर्वस्य कल्प्यस्य, वाच्यस्य वा मतभेदेन परिकल्पनं भवेत् । तच्चायुक्तमेव, श्रुतहानाश्रुतकल्पनयोरत्यन्तजघन्यत्वात् ॥ (चिं. म.)

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः** — (ब्र. सू. 3-1-6)

(तदन्तरप्रतिपत्त्यधिकरणे षष्ठं सूत्रम्)

प्रश्नप्रतिवचनयोः जीवस्याश्रुतत्वमिति न इष्टादिकारिणां जीवानां प्रतीतेः ।

'आपः पुरुषवचसो भवन्ति' 'श्रद्धांजुह्वति' इति द्युलोकादिष्वाप एव हिं गच्छतीति श्रूयते ; न तत्परिष्वक्तो जीवः गच्छतीति न शक्यते वक्तुं इति चेन्न, इष्टादिकारिणां प्रतीतेः – उत्तरत्र 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूम-ममिसंभवन्ति' इत्यादौ इष्टादिकारिणां जीवानां द्युलोकादिगमनपुनरावृत्तिप्रकारवचने

द्युलोकाग्निसंबद्धस्याप्च्छब्दवाच्यस्य सोमभावमापन्नस्य प्रत्यभिज्ञानात् अत्र आप इति तत्संयुक्तो जीव एवोच्यते ।

एतेन श्रद्धादयएव अंबवस्था विशेषाः होम्यत्वेन श्रुताः ; न तु जीवस्तत्परिष्वक्तः इति शङ्कायानावकाशः, इष्टादिकारिणां "जीवानामेवात्रप्रतीतेः—अतः श्रद्धात्रस्थ (श्रद्धा-शब्देन सूक्ष्म पञ्चभूताः विवक्षिताः । 'श्रद्धा वा आपः' इति श्रुतेः) देहविशिष्टः जीवएवास्मिन् प्रकरणे विवक्षित इति बोध्यम् ।

श्रद्धाशब्दः पञ्चभूतोपलक्षकः ।

अश्रुतत्वाच्च जीवस्य परिष्वङ्गः कथं च तैः ।

इति चेन्नात्र यज्ञादिकारिणां गमनश्रुतेः ॥ (ब्र. प. मा.293)

**अश्रुमुखाः** — पित्रादीनां संज्ञा ।

पिता पितामहश्चैव तथैव प्रपितामहः ।

त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ।।

तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः ॥ (न्या. को.)

'पुं नाम्नो नरकात् त्रायत इति पुत्रः' इति व्युत्पत्त्या इह पुत्राभावे तेषां शोकस्सञ्जायते इति भावः ॥

**अश्लेपविनाशौ** — ब्रह्मविदां पूर्वोत्तराघयोः अश्लेषविनाशौ ।

'तदधिगम उत्तरपूर्वाघयोरश्लेपविनाशौ तद्व्यपदेशात्' । (ब्र. सू. 4-1-13)

अघस्याश्लेषकरणं वैदिककर्माऽयोग्यतावासनाप्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम् । अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां, सजातीयकर्मान्तरारंभरुचिं, प्रत्यवायं च कुर्वन्ति । एतच्च अबुद्धिपूर्वकृतानां उत्तरपुण्यपापकर्मविषयम् । अघस्य विनाश-करणं —उत्पन्नायाः तच्छक्तेः विनाशकरणम् । शक्तिरपि परमपुरुषाप्रीतिरेव ।

तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम् । उत्पत्स्यमानस्य कर्मणः स्वकार्य-करणशक्तेः प्रतिबन्धः अश्लेषः । उत्पन्नस्य कर्मणः उत्पन्नायाः कार्यकरणशक्तेः विनाशकरणं, विनाशः इत्यर्थः । (श्री. भा.)

ननु पूर्वं शरीरपातादूर्ध्वं कर्मक्षय उक्तः । अत्र तु उपासनारंभे कर्मप्रहाण-मुक्तं, कथमिदमुपपद्यते ? इति चेत् उच्यते–उपासनारंभसमाप्त्योः भगवत्प्रीतिविशेषा-भिप्रायत्वात् अधिकरणद्वयाविरोधः । उपासनारंभप्रीतः परमात्मा उपासकस्याघं क्षमि-ष्यामीति सङ्कल्पयति । समाप्तौ तु क्षान्तमिति सङ्कल्पयति । अतः अधिकरणद्वयार्थः उपपन्नः ॥ (श्रु. प्र.)

**अश्वत्थः** — (स. ना. 828)

प्रादुर्भावान्तरसंज्ञः स्वाङ्गभूततत्तद्देवतामुखेन जगन्नियमनं, तत्र अद्यस्थितमपि न श्वः, अनित्यमिन्द्रादित्यादिपदं येषां तेषु नियामकतया तिष्ठतीति । (वि. स. भा.)

अथ प्रादुर्भावान्तरसंज्ञकः स्वाम्शभूत तत्तद्देवतामुखेन जगन्नियमनमुच्यते । तत्राद्यस्थितमपि यन्नास्ति श्वः तदश्वः, अनित्यमिन्द्रादिस्थानम् । तेन च तत्स्थलक्षणया तेषु वा तदेषामस्तीति अश्वाः, तेषु वा नियाम्येषु तिष्ठति ; नियामकतयावतिष्ठत इति ; अश्वत्थः । (वि. स. निर्व.)

अनित्यमिन्द्रादिपदं येषां तेष्वपि नित्यशः ।
नियामकत्वेनाश्वत्थः तिष्ठतीति स कीर्तितः ॥ (वि. स. नि. 701)

**अश्वत्थः** — संसाराख्यो वृक्षः ।

'ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थस्सनातनः' । (कठ. उ. 6-1)

'ऊर्ध्वमूलमधःशाखं अश्वत्थं प्राहुरव्ययम्' । (गी. 15-1)

श्वो न स्थास्यतीति अश्वत्थः ; छेद्यत्वाच्च वृक्षः । [संसारस्यैवसाक्षाद्वृक्षत्वेन कल्पनं, तेषु नियामकतया तिष्ठतीति ।] ऊर्ध्वमूलत्वमधःशाखत्वं च व्यष्टिसृष्टि प्रक्रियया घटयति ॥ (ता. चं)

**अश्वपूर्वा** — श्रीः ।

'अश्वपूर्वां रथमध्याम्' । (श्री. सू. 3)

अश्वपूर्वा–व्यापनभरणनियमनादि जगद्व्यापारेषु, अश्वः–व्यापनशीलः भगवान् यस्याः पूर्वप्रदेशे, सा अश्वपूर्वा ।

अश्वपूर्वां-यस्याः प्रयाणकाले सेनाग्रे असंख्येयानि अश्ववृन्दानि पुरस्ताद्गच्छन्ति तां अश्वपूर्वां इति वा ॥ (श्री. सू. भा.)

**अश्वमेधः** — 1. अश्वमेधशब्दवाच्यः प्रजापतिः ।

'सोऽकामयत . . . . . . . तदेवाश्वमेधस्याश्वमेधत्वम्' । (बृ. उ. 3-2-7)

अश्वरूपस्य प्रजापतेरश्वमेधत्वम् । अश्वयदित्यश्वः । मेधार्हत्वान्मेधः । यद्यप्यश्वमेधशब्दो यागनाम, तथापि यागद्रव्ययोरभेदोपचारात् तथोक्तिरुपपद्यत इति द्रष्टव्यम् । (रं. भा.)

2. यागविशेषः ॥

**अश्वस्तनवित्** — मुमुक्षुः ।

'असांपरायाभिमुखमश्वस्तनविदं पशुम्' । (भाग. 4-24-38)

श्वोभवं-श्वस्तनं कालान्तरानुभाव्यं, स्वर्गादि, भोग्यत्वेन न वेत्तीत्यश्वस्तनवित् । अत एव पशुतुल्यः ।

अत एवोक्तम्—

'एते वै निरयास्तात स्थानस्य परमात्मनः ।
वासुदेवे मनो यस्य जपहोमार्चनादिषु ॥
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्' ।

इति स्वर्गादिसुखस्य मुमुक्षोः हेयत्वादित्यर्थः । (भाग. वी.)

'सायंचिरं प्राह्णेप्रगेऽव्ययेभ्यः ट्युट्युलौतुट् च' इत्यनेन श्वस्तनमिति रूपसिद्धिः ॥

**अष्टकपट्कम्** — चक्रत्वेन निरूपितं ब्रह्म ।

'तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विम्शतिप्रत्यराभिः ।
अष्टकैः षड्भिः विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम्' ॥ (श्वे. उ. 1-4)

1. अणिमाद्यैश्वर्याष्टकमेकम् ।

अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टभूतयः ॥

प्राच्यादि दिगष्टकम् ।

2. दिक्पालाष्टकमेकम् ।

'इन्द्रो, वह्निः, पितृपतिः, नैऋतो, वरुणो, मरुत् । कुवेरः, ईशः' एते अष्टदिक्पालकाः ।

3. 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा' ॥ इति गीतोक्तं प्रकृत्यष्टकम् ।

'अष्टौ प्रकृतयः' इत्युक्तप्रकृत्यष्टकात्मकमन्यत् ॥

4. 'ब्रह्मप्रजापतिर्देवाः गन्धर्वाः यक्षराक्षसाः । पितरं च पिशाचाश्च' इति देवाष्टकमेकम् ।

5. अष्टौ वसवः । आप-ध्रुव-अध्वर-अनिल-प्रत्यूष-अनल-प्रभासाख्याः वसवः देवताः ।

6. अपहतपाप्मत्वादिब्रह्मगुणाष्टकम् । 'दया सर्वभूतेषु क्षान्तिः अनसूया शौचम्, अनायासो मङ्गळं अकार्पण्यं अस्पृहा' इति आत्मगुणाष्टकं वा ।

एवं एभिः षड्भिरष्टकैरुपेतं परमात्मानं चक्रत्वेन रूपयति ॥ (रं. भा.)

**अष्टगुणाः** — जीवपरमात्मगताः गुणाः ।

अपहतपाप्मत्व, विजरत्व, विमृत्युत्व, विशोकत्व, विजिघत्सत्व, अपिपासत्व सत्यकामत्व, सत्यसङ्कल्पाख्याः गुणाः ॥ (सं. अ.)

**अष्टचक्रम्** — चक्राणां अष्टविधत्वम् ।

'. . . . . विरचितभुवनानुग्रहान्विग्रहान्यश्चक्रेष्वष्टासु' । (सु. श. 90)

| | | |
|---|---|---|
| प्रथमं | पञ्चारं | ब्रह्मचक्रम् । |
| द्वितीयं | चतुररं | विष्णुचक्रम् । |
| तृतीयं | षडरं | नारायणचक्रम् । |
| चतुर्थं | अष्टारं | वासुदेवचक्रम् । |
| पञ्चमं | द्वादशारं | अजितचक्रम् । |

षष्ठं षोडशारं नारसिंहचक्रम् ।
सप्तमं शतारं सुदर्शनचक्रम् ।
अष्टमं सहस्रारं मातृकाचक्रम् । (व्या.)

**अष्टदेव्यः** — लक्ष्म्यादयः अष्टौ ।

लक्ष्मी, सरस्वती, आज्ञा, महाधी, धृतिः, कीर्तिः, प्रज्ञा, महाप्रज्ञा इति॥
(परा. सं. 78)

**अष्टधाप्रकृतिः** — पृथिव्यादि अष्टौ प्रकृतयः ।

'भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ (गी. 7-4)

अस्य विचित्रानन्तभोग्यभोगोपकरणभोगस्थानरूपेणावस्थितस्य जगतः प्रकृतिरियं गन्धादिगुणकपृथिव्यप्तेजोवाय्वाकाशादिरूपेण मनः प्रभृतीन्द्रियरूपेण महदहङ्काररूपेण चाष्टधा भिन्ना मदीयेति विद्धि ।। (गी. भा.)

'अव्यक्तञ्च महांश्चैव तथाऽहङ्कार एव च ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।।
एताः प्रकृतयस्त्वष्टौ . . . . . . . . . . . . .' ।

इति महाभारतमोक्षधर्मगत याज्ञवल्क्यजनकसंवादोक्त क्षेत्रारंभकद्रव्याणि अष्टौ ॥

**अष्टपादः** — तन्मात्राद्यष्टशरीरकः परमात्मा ।

'अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययम् । (मं. उ. 1-1)

पञ्चतन्मात्रप्रकृतिमहदहङ्काररूपप्रकृत्यष्टशरीरकः अष्टपादः ॥ (रं. भा.)

**अष्टवसवः** — वसूनां अष्टविधत्वम् ।

आप-ध्रुव-सोम-अध्वर-अनिल-प्रत्यूष-अनल-प्रभासाख्याः वसवःदेवताः ।
(सं. अ.) आहूताः वसन्तीति वसवः । 'वस निवासे' इति हि धातुः ।।

**अष्टविधपुष्पम्** — आत्मगुणरूपाणि अष्टपुष्पाणि ।

'अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वभूतदया पुष्पं क्षमापुष्पं विशेषतः' ।।

'ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तु सप्तमम् ।
सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं भवेत्' ।। (प्र. पा. 5-28,29)
एतानि विष्णोः प्रीतिकराणि अलौकिकानि पुष्पाणि, लौकिकानि प्रसिद्धान्येव ॥

**अष्टविधाभक्तिः** — भक्तेः अष्टविधत्वम् ।

मद्भक्तजनवात्सल्यं पूजायाञ्चानुमोदनम् ।
स्वयमभ्यर्चनञ्चैव मदर्थे दम्भवर्जनम् ॥
मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ।
ममानुस्मरणं नित्यं यच्च मां नोपजीवति ॥
भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते ।
स विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पण्डितः ॥
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथाह्यहम् ।

इत्युक्तरीत्याष्टविधम् ॥ (दि. सू. च. 122)

**अष्टशक्तयः** — मोहिन्यादि अष्टशक्तयः ।

'गायत्र्यर्णारचक्रे . . . . . . जयिजयाद्यष्टशक्तौ' (सु. श. 96)
मोहिनी, ह्लादिनी, अजिता, माया, अपराजिता, सिद्धयः, जयि, जयादयः अष्टशक्तयः ॥ (व्या.)

**अष्टसिद्धयः** — सिद्धेः अष्टविधत्वम् ।

ऊहस्तर्कोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ . . . . . . . . ॥

इत्युक्ताः अष्टौ सिद्धयः ॥ (वि. को. प.)

**अष्टाक्षरमन्त्रः** — नारायणाष्टाक्षरमन्त्रः ।

सर्वमन्त्रान्तरोत्कृष्टतमोऽयमेव । [मन्त्रराजः, तिरुमन्त्रं, मूलमन्त्रं इति अस्य संप्रदायनाम] अयमेव मन्त्रः सर्वाधिकारिणामात्मोज्जीवनार्थमनुसंधेय इति विज्ञायते ।

अस्य मन्त्रस्य अवतारप्रकारादपि अधिकृतमत्वमभिव्यक्तम् । तथा हि—श्रीबदरिकाश्रमे परमर्षिसंघमध्ये धर्मदेवतासूनुत्वमापन्नस्सर्वान्तर्यामी, प्रतिपाद्यदेवतात्वेनाऽवस्थितः परमात्मा नारायणः स्वयमेव ऋषिर्भूत्वा लोके शिष्याचार्यक्रमः व्युत्पादयितुकामः, स्वांशभूताय नराय शिष्याय श्रीमदष्टाक्षरं मन्त्रमुपदिष्टवान् इति ।

अस्याष्टाक्षरत्वं, पदत्रयात्मकत्वं, पदक्रमनीतिश्च श्रुतिस्मृतिभ्यां, अभिधीयते । तत्र तावच्छ्रुतिः—'ओमित्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि । इत्यष्टाक्षरं छन्दसा गायत्री चेति' । 'ओमित्यग्रे व्याहरेत् । नम इति पश्चात् नारायणायेत्युपरिष्टात्' इति च । स्मृतिरपि—

'प्रणवाद्यं नमो मध्यं नारायणपदान्तिमम् ।
मन्त्रमष्टाक्षरं विद्यात् सर्वसिद्धिकरं नृणाम्' ॥ इति ।

अतः नारायणपदस्य नारपदभेदेन षडक्षरत्वमापाद्य अस्य मन्त्रस्य प्रणवव्यतिरेकेण अष्टाक्षरत्वं वदतामनादरणीयत्वं सुव्यक्तम् । प्रणवस्यैकाक्षरत्वेन मन्त्रशरीरानुप्रवेशात् 'नारायणायेति पञ्चाक्षराणि' इति श्रवणाच्च ।

'एवं विदित्वा तं देवमोंकारं व्याहरन्मुहुः ।
नमो नारायणायेति ध्यायस्वानन्यमानसः' ॥
इति ब्रह्मणा नारदायोपदिष्टत्वाच्च ॥ (त. दी. 16,17,18)

**अष्टाक्षरमाहात्म्यम्** — नारायणाष्टाक्षरमन्त्रमाहात्म्यम् ।

1. भूत्वोर्ध्वबाहुरद्यात्र सत्यपूर्वं ब्रवीमि वः ।
हे पुत्र शिष्याश्शृणुत ! न मन्त्रोऽष्टाक्षरात्परः ॥

2. यथा सर्वेषु देवेषु नास्ति नारायणात्परः ।
तथा सर्वेषु मन्त्रेषु नास्ति चाष्टाक्षरात्परः ॥

3. व्यक्तं हि भगवानेषः साक्षान्नारायणः स्वयम् ।
अष्टाक्षरस्वरूपेण मुखेषु परिवर्तते ॥

4. सर्ववेदान्तसारार्थसंसारार्णवतारकः ।
गतिरष्टाक्षरो नणामपुनर्भवकांक्षिणाम् ॥

5. ऋचो यजूंषि सामानि तथैवाथर्वणानि च ।
सर्वमष्टाक्षरान्तस्थं यच्चान्यदपि वाङ्मयम् ॥

6. त्रयो वेदष्षडङ्गानि छन्दांसि विविधास्सुराः ।
सर्वमष्टाक्षरान्तस्थं यच्चान्यदपि वाङ्मयम् ॥

7. ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् ।
कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति ॥

8. किं तत्र बहुभिर्मन्त्रैः किं तत्र बहुभिर्व्रतैः ।
नमो नारायणायेति मन्त्रस्सर्वार्थसाधकः ॥

9. नमो नारायणायेति यो विद्यात् ब्रह्म शाश्वतम् ।
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ॥

10. यत्राष्टाक्षरसंसिद्धो महाभागो महीयते ।
न तत्र सञ्चरिष्यन्ति व्याधिदुर्भिक्षतस्कराः ॥ इत्यादि ॥ (त. दी. 11,13)

अष्टाङ्गपूजा —

1. अन्तःकरणयागादि यावदात्मनिवेदनम् ।
तदाद्यमंगं यागस्य नाम्नाभिगमनं महत् ॥

2. पूजनं चार्घ्यपुष्पाद्यैर्भोगैर्यदखिलं मुने ।
बाह्योपचारैस्तद्विद्धि भोगसंज्ञं तु नारद ॥

3. मध्वाज्याक्तेन दध्ना वै पूजा च पशुनापि वा ।
तत् तृतीयं हि यागांगं तुर्यमन्नेन पूजनम् ॥

4. निवेदितस्य यद्दानं पूर्वोक्तविधिना मुने ।
संप्रदानं तु तन्नाम यागांगं पञ्चमं स्मृतम् ॥

5. वह्निसंतर्पणं षष्ठं पितृयागस्तु सप्तमम् ।
प्राणाग्निहवनं नाम्ना त्वनुयागस्तदष्टमम् ॥ (पां. र. 49)

**अष्टाङ्गप्रणामः** — नमस्कारविशेषः ।

'मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥
प्रदक्षिणसमेतेन त्वेवंरूपेण सर्वदा ।
अष्टांगेन नमस्कृत्य ह्युपविश्याग्रतः प्रभोः' ॥ (नि. ग्रं.)

इत्युक्तोऽष्टाङ्गप्रणामः ।

'उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः' ॥

इत्युक्तरीत्या प्रणामविशेषः एवमुच्यते ॥ (सं. अ.)

**अष्टाङ्गयुक्ताबुद्धिः** — ग्रहणाद्यङ्गयुक्ताबुद्धिः ।

'बुध्याह्यष्टाङ्गया युक्तम्' । (रा. कि. 54-2)

'ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् ।
ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' ॥

इति अष्टाङ्गयुक्ताबुद्धिः ॥ (गो. रा.)

**अष्टाङ्गयोगः** — साङ्गयोगः ।

यमनियमासनप्राणायामप्रत्याहारध्यानधारणसमाधयः । (विवरणं तत्तत्पदे द्रष्टव्यम् ।) (दि. सू. च. 122)

अङ्गांगिसमुच्चयेन योगः अष्टाङ्गः उच्यते । समाधिरंगी ॥

**अष्टादशपुराणानि** — प्रसिद्धानि अष्टादशपुराणानि ।

विष्णु-नारद-भागवत-गरुड-पाद्म-वराह-ब्रह्माण्ड-ब्रह्मवैवर्त मार्कण्डेय-भविष्योत्तर-वामन-ब्राह्म-मात्स्य-कौर्म-लैङ्ग-शैव-स्कान्द-आग्नेयपुराणानि प्रसिद्धानि अष्टादश । भगवद्बोधायन-टङ्क-द्रमिडादिशिष्टपरिगृहीतपुराणानि श्रीविष्णुपुराणादारभ्य वराहपुराण-पर्यंतं षट्पुराणान्येव । तेषामेव सात्त्विकत्वेन परिगणितत्त्वात् । तदुक्तं वेदार्थसंग्रहे—श्रीभाष्यकारैः ।

'वेदावलम्बिनामपि यथावस्थितवस्तुविपर्यस्तदृशां बाह्यसाम्यं मनुनैवोक्तम् ।

'या वेदबाह्याः स्मृतयः याश्च काश्च कुदृष्टयः ।

'सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठाः हि ताः स्मृताः' ॥ इति ।

रजस्तमोभ्याम् अस्पृष्टमुत्तमं सत्त्वमेव येषां स्वाभाविको गुणः, तेषामेव वेदैकरुचिः वेदार्थयाथात्म्यावबोधश्च । यथोक्तं मात्स्ये 'सङ्कीर्णास्सात्त्विकाश्चैव राजसास्तामसास्तथा' इति । केचित् ब्रह्मकल्पाः संङ्कीर्णाः । केचित् सत्त्वप्रायाः, केचित् रजः प्रायाः केचित् तमः प्रायाः इति कल्पविभागमुक्त्वा सत्त्वरजस्तमोमध्यानां तत्त्वानां माहात्म्यवर्णनञ्च, तत्तत्कल्पप्रोक्तपुराणेषु सत्त्वादिगुणमयेन ब्रह्मणा क्रियते इति चोक्तम् । 'यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्यतस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते' ॥ इति । विशेषतश्च उक्तम् –

'अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ।

राजसेषु च माहात्म्यम् अधिकम् ब्रह्मणो विदुः' ॥

सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ।

तेष्वेव योगसंसिद्धाः गमिष्यन्ति परां गतिम्' ॥

सङ्कीर्णेषु सरस्वत्याः पितृणाम् । इत्यादि ।

एतदुक्तं भवति–आदिक्षेत्रज्ञत्वात् ब्रह्मणः । तस्यापि केषुचित् अहस्सु सत्त्वमुद्रिक्तं, केषुचिद्रजः, केषुचित्तमः । यथोक्तं भगवता -

'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।

सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात् त्रिभिर्गुणैः' ॥ इति । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः । ब्रह्मणोऽपि सृज्यत्वेन शास्त्रवश्यत्वेन च क्षेत्रज्ञत्वं गम्यते; सत्त्वप्रायेष्वहस्सुतदितरेषु च यानि पुराणानि ब्रह्मणा प्रोक्तानि तेषां परस्परविरोधे सति सात्त्विकाहः प्रोक्तं पुराणमेव यथार्थम् । तद्विरोधी अन्यदयथार्थम् इति पुराणनिर्णयायैव इदं सत्त्वनिष्ठेन ब्रह्मणाऽभिहितमिति विज्ञायते इति ।

एवं सर्वान् पुराणार्थान् ब्रह्मणस्सकाशादधिगम्यैव सर्वाणि पुराणानि पुराणकाराश्चक्रुः ॥ (वे. सं. 236-242)

**अष्टादशस्मृतयः** — प्रसिद्धाः अष्टादश स्मृतयः ।

वसिष्ठ–व्यास–भरद्वाज–वामन–अत्रि–कात्यायन–गौतम–संवर्त–साख्य–हारीत पराशर–काश्यप–याज्ञवल्क्य–दक्ष–विष्णु–बृहस्पति–यम–उशनस्मृतयः ।

एतासु पुराणवत् सात्विकराजसतामसविभागाः बोध्याः ॥ (सं. अ.)

**अष्टादशोक्तम्** — अष्टादशस्मृत्युक्तम् कर्म ।

'प्लवा ह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म' (मुं.उ. 1-2-7)

श्रुतेरपि प्रदर्शनार्थमिदम् । श्रुतिस्मृतिचोदितं कर्मेत्यर्थः । यद्वा षोडश-ऋत्विक् पत्नी यजमानरूपाष्टादशपुरुषेषु विहितम् ।

यद्वा 'नवग्राम्यान् पशूनालभते ; नवाऽऽरण्यान् ; उभयान् पशूनालभते' इति श्रुत्युक्ताष्टादशपशुहविष्कं कर्मेति । (श्रु.प्र. 1-2-23)

'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्' इति वार्तिकेनात्र मध्यमपदलोपः विवक्षितः ॥

**अष्टाविंशक** — तत्त्वपरिगणने अष्टाविंशकः पदार्थः ।

अव्यक्तमहदहङ्कारेन्द्रियतन्मात्रभूतसृष्टिप्रकरणेषु जीवपरौ पञ्चविंशक-षड्विंशकौ । अक्षरतमसोः पृथग्गणने, अन्यतरोपक्रमे कालस्य पृथग्गणने च षड्विंशक, सप्तविंशक अष्टाविंशकत्वादिकं यथासंभवं भाव्यम् ॥ (वि.को.)

**अष्टिः** —बीजम् ।

छन्दोविशेषः । अत्र प्रतिपादषोडशाक्षराणि ॥ (सं.अ.)

**अष्टीकरणम्** — अष्टतत्त्वमयं प्राकृतद्रव्यम् ।

'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इति क्षेत्रारम्भकद्रव्याणि; पृथिव्यप्तेजो वाय्वाकाशाः महाभूतानि, अहङ्कारो भूतादिः, बुद्धिर्महान्, अव्यक्तम् प्रकृतिः इति भाष्यानुसारेण अष्टीकरणं सिध्यति । (गी.भा. 3-5)

भूतशब्दस्य सशरीरचेतनादावपि प्रयोगात्तद्भ्रमव्युदासाय प्रकृतोपयुक्तमर्थमाह-पृथिव्यप्तेज इति। अहङ्कारशब्दस्य त्रिविधाहङ्कारवाचित्वेऽपि सात्विकाहंकारस्य इन्द्रियारंभकत्वात्, राजसस्य उभयानुग्राहकत्वात् तामसपरत्वमाह—अहंकार इति।

(ता. चं.)

एवञ्चाष्टद्रव्योपादानकत्वात् अष्टीकरणमित्युच्यते। त्रिवृत्करणपञ्चीकरणवत् इदमपि प्रमाणानुसारेण स्वीकरणीयमिति भावः॥

**अष्टौप्रकृतयः षोडशविकाराः —**

केचिदाथर्वणिकाः अधीयते— 'अष्टौप्रकृतयः षोडशविकारा' इति। तत्र तावदव्यक्तमहदहंकारतन्मात्राणां प्रकृतित्वमविगीतम्। इन्द्रियाणि एकादश पञ्चभूतानि इति षोडशेन्द्रियेभ्यः तत्त्वान्तरोत्पत्तिः श्रुत्यन्तरेषु पुराणेषु वा न क्वचित् दृश्यते इति केवल विकृतित्वं इन्द्रियाणां युक्तम्। भूतानां च आकाशादीनां चतुर्णां साक्षात् तन्मात्रद्वारेण वा तत्त्वान्तरोपादानत्वे प्रकृतयो विकृतयश्च पृथक्द्वादशा स्युः।

ननु उपबृंहणविशेषानुसारात् इन्द्रियाणि शब्दादिगुणाश्च षोडशविकाराः भूत-तन्मात्रभेदानादरणे प्रकृतयश्चाष्टौ अभ्युपगम्यन्ताम्। मैवम्; द्रव्यतत्त्वप्रकरणे गुण-परिगण नानौचित्यात् गुणशब्देनच क्वचित् गुणाश्रयविवक्षा स्यात्। गत्यभावे गुण-विवक्षायामप्यत्र द्रव्यविवक्षोपपत्तेः। 'आकाशाद्वायुः' इत्यादीन्यपि स्थूलसूक्ष्मभेदाना-दरेणेति साङ्ख्याः। (स. सि. 15)

सिद्धान्ते तु 'अष्टौप्रकृतयः षोडशविकाराः' इति श्रुतिरपि यथाकथञ्चित् नेया।

(न्या. सि. 51)

'मनो बुद्धिरहङ्कारः खानिलाग्निजलानि भूः।
एताः प्रकृतयस्त्वष्टौ विकाराः षोडशापरे॥

श्रोत्राक्षिरसनाघ्राणं त्वक् च सङ्कल्प एव च।
शब्दरूपरसस्पर्शगन्धवाक्पाणिपायवः॥
उपस्थपादाविति च विकाराः षोडश स्मृताः॥ (टी.)

प्रकृतिमहदहङ्कार पञ्चभूतानि, शरीरप्रकृतिपदवाच्यानि; शरीरमाश्रित्य वर्तमानाः एकादशेन्द्रियाणि शब्दादिपञ्चविषयाश्च विकृतिपदवाच्यानि इति भावः ॥

**असक्तविविक्तसाक्षी** — परमात्मा ।

'तस्मै नमोऽसक्तविविक्तसाक्षिणे' (भाग. 5-19-11)

असक्तः—रागादिरहितः, विविक्तः—असहायः, स्वतुल्याधिकद्वितीयवस्तुरहितः ; साक्षी-सर्वस्य चेतनाचेतनात्मकस्य जगतः द्रष्टा ॥ (भाग. वी.)

**असक्तिः** — सङ्गरहितत्वम् ।

'असक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृतां' (गी. सं. 7) परमपुरुषप्रीति-व्यतिरिक्तस्वर्गादिफलसंगत्यागः । (गी. सं. र.)

'असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु' । (गी. 13-9)

'आत्मव्यतिरिक्तपरिग्रहेषु संगरहितत्वम् । (गी. भा.)

आभिमानिकेषु संगरहितत्त्वम् ॥ (ता. चं.)

**असङ्कल्पः** — फलकामनात्यागः । (वि. को.)

**असंख्यातत्त्वम्** — अपरिच्छिन्नता ।

परार्धपर्यंतसंख्यारूपबुद्धिविशेषविषयत्वाभावः । तादृशैकसंख्यावच्छेदाभावः ॥ (वि. को.)

**असंख्येयः** — (स. ना. 248)

अनश्वरचिदचिद्विभूतिकसमूहाश्चास्यासंख्येयाः इति असंख्येयः । (वि. स. भा.)

अनश्वरचिदचिद्विभूतिकसमूहाश्चासंख्येयाः—अगणनगोचराः, अस्य सन्तीति वा, प्राग्वत् तद्वत्तया तद्व्यपदेशेन वा । (वि. स. निर्वं.)

अगण्यनरसंघो यः सोऽसंख्येय प्रकीर्तितः ॥ (वि. स. नि.)

**असङ्गः** — सङ्गविरोधी परमात्मा ।

'असङ्गो न हि सज्यते' । (बृ. उ. 6-5-15) संगानर्हत्वमर्थसिद्धम्, तेन संगाद्यभावः । न देशकाल विप्रकर्षात् संगाद्यभावः ; किंतु स्वभावविप्रकर्षात् इत्यर्थः । एतेन समस्तवस्तुविसजातीयं ब्रह्म इति सिद्धम् । असङ्गः इत्यादिना जीवधर्मनिषेधः । न हि अचित्संगः, अस्य स्वरूपतिरोधानकृद्भवति । 'न हि सज्यते' इत्यादावुक्त संगादियोग्यस्यापि दूरस्थतया तदभाव इति शङ्काव्यावृत्त्यर्थं असंगः इत्युक्तम् ॥ (श्रु. प्र. 1-4-22)

**असङ्गतत्त्वम्** — संगत्यभावः ।

'त्र्यन्तस्वान्तवादिन्यधिकरणगणे पौनरुक्त्योक्तबाधौ ।
मन्दत्वासंगतत्वे विशयमफलतां मानबाधञ्चमन्त्रून्' । (अ. सा. 3)
काण्ड-द्विक-अध्याय-पाद-पेटिका-अधिकरण-सूत्र-संगत्यभावः ॥ (चिं. म.)

**असङ्गशस्त्रम्** — असंगाख्यं शस्त्रम् ।

'अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्वा । ततः पदं तत् परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः' ॥ (गी. 15-3)

रूढमूलमश्वत्थं सम्यग्ज्ञानमूलेन दृढेन गुणमयभोगासङ्गाख्येन शस्त्रेण छित्वा । ततो—विषयासङ्गाद्धेतोः तत्पदं परिमार्गितव्यम् . . . . . . . . . . अन्वेषणीयम् ; यस्मिन् गता भूयो न निवर्तन्ते । (गी. भा.)

असङ्गोऽपि कदाचित् तादात्विकव्याध्यादिक्लेशादपि भवति; स तु न दृढः ; अतः सम्यग्ज्ञानमूलेनेत्युक्तम् ॥ (ता. चं.)

**असञ्जातविरोधन्यायः** — कश्चन न्यायविशेषः ।

उपक्रमे जायमानप्रत्ययस्य विरोधो न सञ्जात इति तस्यैव ग्राह्यतेत्यनेन प्रतिपाद्यते ।

अतएव 'उच्चैः ऋचा क्रियते' 'उपांशु यजुषा' 'उच्चैः साम्ना' इति वाक्येषु

ऋगादिपदस्य ऋगादिमन्त्रपरत्वं न, किंतु ऋग्वेदादिरेवार्थ इति निरणायि ॥
(श्री. भा. उपोद्घातः)

असत् — (स. ना. 481)

असतां नित्यनिरवधिकभवदुरितप्रदत्वात् असत् । (वि. स. भा.)

अधर्मिणां असतां अप्रशस्तपापातिप्रसक्त्यनुगुणनित्यनिरवधिकभवदुरितप्रदतया, तेषां कुमनीषिकया सङ्गत्या असदिति वेदनार्हं इति । (वि. स. निर्व.)

असतां यस्सदाऽनन्त भवाख्याऽघप्रदानतः । असदित्युच्यते सद्भिः . . . ॥
(वि. स. नि.)

असत् — 1. अप्रत्यक्षम् ।

'सदसच्चामृतं च यत्' (प्र. उ. 2-5)

सदसच्छब्दौ वर्तमानावर्तमानपरौ वा प्रत्यक्षाप्रत्यक्षपरौ वा स्थूलसूक्ष्मपरौ वा चेतनाचेतनपरौ वा । (रं. भा.)

'सच्चासच्च सर्वं पश्यति' (प्र. उ. 4-5)

विद्यमानं चानुभवति ; अविद्यमानं चानुभवति । (रं. भा.)

'असद्वा इदमग्र आसीत् । ततो वै सदजायत' (तै. आ. 31)

इदं स्थूलचेतनाचेतनशरीरकं ब्रह्म अनभिव्यक्तनामरूपं ब्रह्म सृष्टेः प्रागासीत् । तस्मात् इदं जगत् अभिव्यक्तनामरूपमभवदित्यर्थः । (रं. भा.)

2. अव्याकृतनामरूपम् ।

'असदेवेदमग्र आसीत्'। (छां उ. 3-19-1) 'असदेवेदमग्र आसीदेकमेवाद्वितीयम् । तस्मादसतस्सज्जायत' । (छां. उ. 6-2-1)

सदेवासीदिति सृष्टिप्राक्काले ब्रह्माभेदप्रतिपादनमुखेन सत्कार्यवादमुक्त्वा तद्विरोध्यसत्कार्यवादं नैयायिकाभिमतं वाचारंभणमित्यादिना प्रतिक्षिप्तमपि कण्ठतः प्रतिक्षेप्तुं तन्मतमुपन्यस्यति—असदेवेदमिति । नामरूपविभागाभावलक्षणमासीत् इति ।
(रं. भा.)

3. मृत्युः (संसारः)। 'असतो मा सद्गमयेति; मृत्युर्वा असत्'।
(बृ. उ. 3-3-28)

'असद्वा इदमग्र आसीत्'। (सु. उ. 3)

अविभक्तनामरूपमासीत्। महदहङ्कारदेवमनुष्यादिनामरूपशून्यमासीदित्यर्थः। (श्रु. भा.) असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च।
(ब्र. सू. 2-1-18)

[सृष्टेः प्राक् इदं जगत् असदेव आसीत् इति श्रुतेः असत्कार्यवादएव प्रतीयत इतिचेत् न, श्रुतावेव 'सदेव सोम्येदमग्र आसीत्' इति असत्कार्यवादं आक्षिप्य प्रतिक्षेपकरणात् कारणस्य सूक्ष्मरूपेण सत्त्वं स्वीक्रियते।]

कार्यद्रव्यस्य पूर्वकाले धर्मान्तरेण—संस्थानान्तरेण, न भवदभिमत तुच्छत्वेन। सत्त्वासत्त्वे हि द्रव्यधर्मावित्युक्तम्। तत्र सत्त्वधर्माद्धर्मान्तरमसत्वम्। इदंशब्दनिर्दिष्टस्य जगतस्सत्त्वधर्मो नामरूपे, असत्त्वधर्मस्तु तद्विरोधिनी सूक्ष्मावस्था। अतो जगतो नामरूपयुक्तस्य तद्विरोधि सूक्ष्मदशापत्तिः असत्त्वम्। (श्री. भा.)

अनन्तदेवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत्। (गी. 11-37)

सदसच्छब्दनिर्दिष्टं कार्यकारणभावेनावस्थितं प्रकृतितत्वं, नामरूपविभागवत्तया कार्यावस्थं सच्छब्दनिर्दिष्टं तदनर्हतया कारणावस्थमसच्छब्दनिर्दिष्टम्। (गी. भा.)

'असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह'। (गी. 17-28)

अश्रद्धया कृतं शास्त्रीयमपि होमादिकं असदित्युच्यते॥ (गी. भा.)

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा — (ब्र. सू. 2-2-20)

(समुदायाधिकरणे चतुर्थ सूत्रम्)

असतः उत्पत्तौ प्रतिज्ञाविरोधश्च भवताम्। अन्यथा युगपत् घटक्षणद्वयोपलम्भप्रसङ्गः।

असत्यपि हेतौ कार्यं उत्पद्येते चेत्, सर्वं सर्वत्र सर्वदा उत्पद्यतेत्युक्तम्। न केवलमुत्पत्तिविरोध एव; प्रतिज्ञाविरोधश्च भवताम्। अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारः विज्ञानोत्पत्तिहेतवः इति प्रतिज्ञानात्। अथैतत्परिजिहीर्षया पूर्वो घटक्षणः

तिष्ठतीत्युच्येत, तदा युगपत् घटक्षणद्वयोपलब्धिप्रसङ्गः, न च तथोपलभ्यते ; क्षणिकत्व-प्रतिज्ञा चैवं हीयेत। (उपरोधः-विरोधः)

अतः बौद्धोक्तं असतः कारणत्वं युक्तिविरुद्धं प्रतिज्ञाविरुद्धञ्च।

हेतावसति कार्यं चेत् प्रतिज्ञा चोपरुद्ध्यते।
चत्वारो हेतव(:) इति यौगपद्यं तदन्यथा ॥ (ब्र. प. मा. 194)

**असत्कार्यवादः** — आरम्भवादः।

कारणात् कार्यं अन्यदेव, असतः तस्यैव कार्यस्य सामग्रीवशात् उत्पत्तिः इति असत्कार्यवादः इत्युच्यते। असदेवोत्पद्यते इति नैयायिकाः। असतः शून्यादेवेति माध्यमिकाः। सिद्धान्ते तु सत एव द्रव्यस्यावस्थान्तरप्राप्तेः सत्कार्यवादः। अत एव कारणात् कार्यमनन्यत् ॥

**असत्ख्यातिः** — असत एव भानम्।

'आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथा अनिर्वचनीयख्यातिः इत्येतत् ख्यातिपञ्चकम्' ॥

इत्यभियुक्तोक्तिः।

'विषयस्य असत्वेऽपि भानांगीकारात्। ख्यात्यन्तरवादिनाञ्च सुदूरमपि गत्वा अन्यथावभासः अवश्याश्रयणीयः। असत्ख्यातिपक्षे सदात्मना'। इत्यादिभाष्य-ग्रन्थेन, दूषितोऽयं पक्षः। (श्री. भा. 1 भा. 2-27)

असदेव भासते इत्ययं माध्यमिकपक्षः। किमसदित्येव प्रतीयते उत सदिति; असदिति चेत् भ्रमत्वबाधप्रवृत्त्यसंभवः। सदिति चेत् अन्यस्य अन्यथा भानं स्यात् इत्यन्यथाख्यातावेव विश्रमेत् ॥ (श्रु. प्र.)

**असत्प्रतिपक्षत्वम्** —हेतुरूपेष्वन्यतमम्।

समबलतया प्रतीयमानप्रमाणोपरोधाभावः। यथा धूमानुमानादेः।

(न्या. प. 102)

पक्षसत्त्व–सपक्षसत्त्व–विपक्षासत्त्व–असत्प्रतिपक्षितत्त्व–अबाधितत्त्वानि हेतोपञ्चः-रूपाणि ॥ (य. दी. 24)

**असत्यम्** — अब्रह्मात्मकम् । (जगत्)

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' (गी.16-8) जगदेतत् सत्यशब्दनिर्दिष्ट-ब्रह्मकार्यतया ब्रह्मात्मकमिति नाहुः आसुराः । (गी. भा.) पूर्वं 'न सत्यं तेषु विद्यते' इति सत्यस्याभापणमात्रमुक्तम्; इदानीं तद्विपरीतभाषणं अस्तीत्युच्यते । असत्य-शब्दोऽत्र मिथ्यात्वपरः तस्य लोकोपलब्धि स्ववचनविरोधादिभिरेव प्रतिक्षिप्तत्वेन अतिस्थूलत्वात् परमार्थं स्थिरं चैश्वर्यमभिमत्य निरूढाभिनिवेशानामासुराणां प्रपञ्चमिथ्या-त्वकूटयुक्तिभिः प्रतार्यत्वासंभवाच्च । (ता. चं.)

**असत्यात्सत्यप्रतिपत्तिभङ्गवादः** — (शतदूषण्यां २० तमोवादः)

असत्यादपि शास्त्रादेः सत्यस्य ब्रह्मणःसिद्धिः सम्भवति । अस्ति चासत्यात् सत्योत्पत्तेः सत्यप्रतिपत्तेश्च लोके बहुलमुपलम्भः; आरोपितैरेव शुक्तिरजतरज्जुसर्पशङ्का-विषभावितगरुडादिभिः सत्यस्य हर्षभयमरणगरलहरणादेः दर्शनात् । तथा स्वाप्नार्थेन शुभादिः, प्रतिबिम्बेन बिम्बतत्त्वमित्यादिकं असत्यैरेव सत्यानि निश्चीयन्ते । अतो-वस्तुतो मिथ्याभूतादिशास्त्रादेः परमार्थसद्वितीयब्रह्मनिश्चयः उपपद्यत इति ।

अत्रोच्यते–यदुक्तं असत्यात्सत्योत्पत्तिर्दृश्यत इति तदसत्, सत्यैर्ज्ञानादिभि-रेव तत्र तत्र तत्सिद्धेः । यत्तूक्तं विषयमिथ्यात्वे तद्विषयज्ञप्तेरपि सत्यत्वं न सिध्य-तीति । तदपि हास्यं, कारणमिथ्यात्वे कार्यमिथ्यात्वस्य च तुल्यन्यायतया दुस्त्यज-त्वेन असत्यात्सत्योत्पत्तिभङ्गप्रसङ्गात् । एवं ज्ञापकमिथ्यात्वे ज्ञाप्यमिथ्यात्वमपि स्यात् । इदञ्च स्वसिद्धान्तोच्छेदनमनवेक्षमाणैः उच्यते । मिथ्याभूतप्रपञ्चसिद्धिरूपस्य ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गात् । ब्रह्मस्वप्रकाशात्मकमेव, तथापि साक्षिप्रकाशः, वृत्तिप्रकाशो वा प्रपञ्चसिद्धिरूप इति चेन्न, तयोः ब्रह्मव्यतिरेकेण सत्यत्वे भेदवादावतारात् । अव्यतिरेकेण सत्यत्वे तु उक्तदोषानतिक्रमात्; असत्यत्वे तु तयोरपि ब्रह्माधीनसिद्धित्वेन तत्रैवोक्तदोषप्रसङ्गात् । स्वप्नादिषु दर्शनं अस्त्येव, अर्थास्तु न सन्तीत्येव बाधक-

प्रत्ययोदयात् । विषयाभावे कथं विषयित्वं, विषयित्वाभावे च कथं ज्ञानत्वमिति चेन्न अतीतविषयानुमानादिषु विषयाभावेऽपि विषयित्वदर्शनात् । यद्देशकालादिवृत्तितया तस्य प्रतिभासः तद्देशकालादिवृत्तितया तस्य सद्भावे कथं तत्र विषयाभाव इति चेन्न, अत्रापि यथा कथञ्चित् विषयस्य विद्यमानत्वात् ।

तदुक्तं —

'जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा ।

तद्देशे वान्यदेशे वा स्वप्नज्ञानस्य गोचरः' ॥ इत्यादि ।

अतः सिद्धं सत्यादेव सत्यस्य ब्रह्मणःसिद्धिरिति । विस्तरस्तु शतदूषण्यां द्रष्टव्यः ॥

**असत्त्वम्** — 1. सत्त्वधर्मात् धर्मान्तरम् असत्त्वम् ।

इदंशब्दनिर्दिष्टस्य जगतः सत्त्वधर्मः नामरूपे । असत्वधर्मस्तु तद्विरोधिनी सूक्ष्मावस्था । अतः जगतः नामरूपयुक्तस्य तद्विरोधिसूक्ष्मदशापत्तिः असत्त्वम् । (श्री. भा. 2-1-18) घटोऽस्तीति सद्व्यवहारयोग्यस्यैव घटस्य, असत्त्वम् घटोनास्तीति तद्विरोध्यवस्थैव ।

2. अद्रव्यम् ।

लिङ्गसंख्याद्यनन्वितम्। (वैयाकरणमते) 'चादीनां वृत्तियोग्यं यदुत पदविदोऽसत्त्व मद्रव्यमाहुः' (त.मु. 365)

सत्त्वम्-द्रव्यम्, असत्त्वमद्रव्यम् इति पदविद्भिः अभिहितत्त्वात् अद्रव्याणां मिथ्यात्वमिति केचित् वदन्ति । तन्न; चादीनां द्योतकत्वम् [चादीनां असत्त्वं च लिङ्गसंख्यादिभिः अनन्वितत्वम् । अत्र आदिपदेन विशेषणसंबन्धानर्हत्वं विवक्षितम् ] अन्येषां वाचकत्वम्; यत् द्योत्यम् तस्य विशेषणसम्बन्धानर्हत्वम्; यद्वाच्यं तस्य विशेषण सम्बन्धार्हत्वम् इत्यादि विभागो यथाप्रमाणं चिन्तनीयः । अतोऽसत्वशब्दकथन मात्रादद्रव्याणां मिथ्यात्वप्रसङ्गाभावः ॥ (स. सि.)

**असत्समः** — अचेतनकल्पः । (जीवः)

'असत्समोऽप्यष्टभुजापदेश' (अ. अ. 2.)

चैतन्यवतामपि जीवानामसत्साम्यम् ।

'अचिदवशिष्टान् जन्तूनवलोक्य जातनिर्वेदा ।

करणकळेबरयोगं वितरसि वृषशैलनाथ करुणे त्वम् ' ॥

इति रीत्या प्रळये ज्ञानस्यात्यन्तसंकोचात् अचित्तुल्यता ॥

**असदवग्रहः** — अनात्मभूते शरिरे आत्मत्वाभिमानः ।

'तावन्ममेत्यसदवग्रह आर्तिमूलम्' (भाग. 3-9-6) दुःखपरम्परायाः निदानम् । एवं अस्वतन्त्र्यपि स्वातन्त्र्यबुद्धिः ॥

**असदिति चेन्न प्रतिषेधमात्रत्वात् ।** (ब्र. सू. 2-1-7) (विलक्षणत्वाधिकरणे चतुर्थं सूत्रम्)

कारणे कार्यम् असदिति न वक्तव्यम् । सालक्षण्यनियमप्रतिषेधमात्रत्वात् । विलक्षणयोरपि कार्यकारणभावः 'दृश्यते तु' इत्यनेन सिद्धान्तितः । तर्हि कारणे कार्यं न सद्भवतीति असत्कार्यवादोऽभ्युपगतः स्यात् । तथा सति 'सर्वं खल्विदं ब्रह्म' इति सामानाधिकरण्यव्यपदेशो न घटत इति चेत् ; तन्न, कार्यकारणयोः सालक्षण्यनियम-प्रतिषेधमात्रत्वात् कार्यकारणयोः एकद्रव्यत्वं स्वीकृतमेव । एकमेव कारणावस्थं द्रव्यं कार्यावस्थां भजमानं सलक्षणावस्थामपि भजते, विलक्षणावस्थामपि ।

एतदुक्तं भवति—न कार्यकारणयोः एकद्रव्यत्वं 'दृश्यतेतु' इत्यत्र प्रतिषिद्धम् । येनायं दोषः स्यात् । अपितु तयोः सालक्षण्यनियममात्रम् । क्रिमिमाक्षिकादेरपि हि अस्त्येव द्रव्यैक्यम् । सांख्यसम्मत सालक्षण्यन्तु न दृश्यते ; क्रिमिभावानन्तरम् अयं माक्षिकेति प्रत्यभिज्ञानाभावात् । तदिहापि कारणभूतं ब्रह्मैव स्वस्माद्विलक्षणभूतजगदा-कारेण परिणमत इत्येव विवक्षितम् ॥

नन्वसत्कार्यवादस्यादिति चेन्नात्र चोभयोः ।
सालक्षण्यस्य नियमः केवलं प्रतिषिध्यते ॥ (ब्र. प. भा.145)

**असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च** (ब्र. सू. 2-1-18) (आरम्भणाधिकरणे पञ्चमं सूत्रम्)

'असदेवेदमग्र आसीत्' इति असद्व्यपदेशात् कारणात् कार्यस्यानन्यत्वं नोपपद्यते इति चेन्न धर्मान्तरेणैवासद्व्यपदेशः युज्यते—वाक्यशेषात् युक्तेः, शब्दान्तराच्च ।

'असदेवेदमग्र आसीत्' 'इदं वा अग्रे नैव किञ्चन आसीत्' इत्यादिषु कारणावस्थायां कार्यस्य असत्त्वव्यपदेशात् कारणे कार्यं सदित्येतन्नोपपद्यते इति चेन्न; सदिति व्यपदेशहेतुभूतनामरूपावस्थाविरोधिसूक्ष्मावस्थाख्यधर्मान्तरेण योगादसदिति व्यपदिश्यते। कथमिदमवगम्यते? वाक्यशेषात् युक्तेः शब्दान्तराच्च। वाक्यशेषस्तावत् 'तदसदेव सन् मनोऽकुरुत स्यामिति। (अत्र हि असत एव सतःस्यामिति सङ्कल्प उच्यते) असदितिव्यपदिष्टस्यैव मनस्कारप्रतिपादनेन असद्व्यपदेशो धर्मान्तरयोगात् इत्यवगम्यते। युक्तिश्च धर्मान्तरयोगमेव असद्व्यपदेशहेतुमवगमयति। घटोऽस्ति घटो नास्तीति सदसद्व्यपदेशयोः घटत्वकपालत्वयोः परस्परविरोधिधर्मयोरेव हेतुत्वे सिद्धे, तदतिरिक्तानुपलब्धतुच्छत्वस्य हेतुत्वकल्पनानुपपत्तेः। तथा शब्दान्तरं च– 'सदेव सोम्येदमग्र आसीत्' इति समानप्रकरणस्थम् असच्छब्दं धर्मान्तरयोगनिमित्तमवगमयति।

अभावान्तरवादिना, अभावाभावो भावः इत्यभ्युपगतः। अन्यथा अनवस्थाप्रसङ्गात्। तद्वत्सर्वत्राभावव्यवहारस्य विरोध्यवस्थान्तरेणैव उपपन्नत्वात्, न तद्व्यतिरिक्तस्य कल्पनमित्यर्थः। पिण्डत्वकपालत्वे घटस्य प्राक्प्रध्वंसाभावौ। घटत्वमेव पटादन्योन्याभावः, कालविशेषविशिष्टदेशविशेषत्वं संसर्गाभावः, यथा मध्याह्नविशेषितप्राङ्गणत्वम्। यद्वा घटस्य अल्पत्वविशेषितदेशान्तरसंसर्गपिण्डत्वकपालत्वेष्वन्यतमः; तद्देशापेक्षया संसर्गाभावः।

तथा च श्रुतिरेवाह– 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इति। अतः सृष्टिकालीनस्थूलावस्थाविरोधिसूक्ष्मावस्थैव, असद्व्यपदेशहेतुरिति, न तन्मात्रात् असदेवकार्यमुत्पद्यते इति कल्पना युक्तेत्यन्यथासिद्धोऽयमसद्व्यपदेशः इति कारणात्कार्यस्यानन्यत्वं निराबाधम्।

> व्यपदेशादसदिति नेति चेन्न तदा जगत्।
> सूक्ष्मेणासीद्वाक्यशेषाद्युक्तेश्शब्दान्तरात्तथा ॥ (ब्र. प. मा. 156)

**असन्** — ब्रह्मज्ञानशून्यः।

> 'असन्नेव स भवति, असद्ब्रह्मेति वेदचेत्।
> अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः'॥

इति ब्रह्मविषयज्ञानासद्भावसद्भावाभ्याम्, आत्मनाशमात्मसत्तां च वदति ।
(श्री. भा. 1-200)

ननु 'असन्नेव स भवति' इत्यसत्त्वप्रकारज्ञानस्यैवात्मनाशहेतुत्वमुच्यते, न तु तदज्ञानस्येति चेत् – 'असद्ब्रह्मेति वेद चेत्' इत्यस्य 'ब्रह्म वेद' इत्येतत् असच्चेदित्यन्वयः । ब्रह्म न जानाति चेदित्यर्थः । 'अस्ति ब्रह्मेति चेत्' इत्यत्रापि 'ब्रह्मवेद' इत्येतदस्ति चेत् – ब्रह्म जानाति चेदित्यर्थः इति भाष्यकाराभिप्रायात् । यद्वा श्रुत्यनुसारेण भाष्यार्थो (फलितार्थो) वर्णनीयः । (भा. प्र. 182, 183) अत्र केचित् 'अ' इति निषेधवाचि भिन्नं पदम् । तथाच 'ब्रह्म सदिति अवेद' इत्यन्वयमाहुः ॥

**असन्ततिः** — अणुत्वम् ।

'असन्ततेश्चाव्यतिकरः' (ब्र. सू 2-3-48)
समन्तात् ततिः सन्ततिः - विभुत्वम् ; तदभावोऽसन्ततिः – अणुत्वम् ॥
(श्रु. प्रदी.)

**असन्ततेश्चाव्यतिकरः** — (ब्र. सू. 2-3-48) (अंशाधिकरणे सप्तमं सूत्रम्)

समन्तात् ततिः, सन्ततिः – विभुत्वम् ; तदभावो असन्तति – अणुत्वम् । व्यतिकरः - साङ्कर्यम । प्रतिदेहं भिन्नत्वात्, अणुत्वेन तत्र तत्र परिच्छिन्नत्वाच्च ज्ञानसुखाद्यव्यतिकरः ।

जीवानां ब्रह्मांशत्वेन ऐकरूप्येऽपि अणुत्वात् प्रतिशरीरं भिन्नत्वाच्च अव्यतिकरः, भोगसांकर्याभावः । अनेन विभुत्ववादिनां भोगसाङ्कर्यमस्तीति सूचितम् ।

भ्रान्तब्रह्मजीववादे चोपहितब्रह्मजीववादे च, अज्ञानसम्बन्धि चोपाधिसम्बन्धि च ब्रह्मैवेति भोगव्यवस्था न सिद्ध्यतीत्यभिप्रायः ।

प्रतिदेहं च भिन्नत्वात् अणुत्वेन च तत्र तु ।
सुखदुःखाव्यतिकरः निश्चितो मुनिसत्तमैः ॥ (ब्र. प. मा. 264)

**असन्निकृष्टवाक्** — लौकिकप्रमाणागोचरब्रह्मस्वरूपादि प्रतिपादनपरा श्रुतिः ।

यथाहुः– असन्निकृष्टवाचा च द्वयमत्रचिहासितम् । ताद्रूप्येण परिच्छितिः तद्विपर्ययतोऽपि वा ॥ इति (श्रु. प्र. 1-1-२)

ताद्रूप्येण परिच्छित्तिः—लोकगृहीताकारेणार्थप्रतिपादकत्वम्, तद्विपर्ययतः परिच्छित्तिः—गृहीताकारविरुद्धाकारेणार्थप्रतिपादकत्वञ्च शास्त्रस्य जिहासितम्—वारयितुमिष्टम् इत्यर्थः। (टि.)

तथा च श्रुतिः साधकान्तरसिद्धं बाधकान्तरबाधितञ्च न प्रतिपादयतीति भावः॥

**असन्न्यस्तसङ्कल्पः —**

'नह्यसंन्यस्तसङ्कल्पः योगी भवति कश्चन' (गी. 6-2)

आत्मयाथात्म्यानुसन्धानेन अनात्मनि प्रकृतौ आत्मसङ्कल्पः संन्यस्तः परित्यक्तः येन सः संन्यस्तसङ्कल्पः, अनेवम्भूतः असंन्यस्तसङ्कल्पः। (गी. भा.)

सङ्कल्पशब्दो न तावदत्र कुर्यामिति सङ्कल्पविषयः, तदभावे कर्मकरणस्यैव अशक्यत्वात्। नापि फलाभिसन्धिविषयः, तथात्वेऽपि कर्मयोगे ज्ञानयोगान्तर्भावप्रतिज्ञाया उपपादकत्वासिद्धेः। अत एव 'सङ्कल्पमूलः कामो हि (वै) यज्ञाः सङ्कल्पसम्भवाः' इत्यादि स्मृतिपठितः कामस्य कर्मणां च हेतुस्सङ्कल्पोऽत्र न विवक्षितः। तस्मादेकीकृत्य कल्पोऽत्र सङ्कल्पः। स चात्र देहात्मगोचरः। तत्परित्यागश्च तत्त्वज्ञानात्। एवं सत्येव 'नही'त्यादेरुक्तोपपादकत्वमुपपद्येत इति॥ (ता. चं.)

**असमवायिकारणम् —** समवायिकारणे प्रत्यासन्नं कारणम्।

यथा तन्तुसंयोगः पटस्यासमवायिकारणम्। तन्तुरूपं च पटगतरूपस्यासमवायिकारणम्। अत्र तन्तुसंयोगस्य पटसमवायिकारणेषु तन्तुषु प्रत्यासन्नत्वात् कारणत्वाच्च तन्तुसंयोगः पटस्यासमवायिकारणमिति ज्ञेयम्। (न्या. को.)

सिद्धान्तेतु—कारणावस्थाविशिष्टद्रव्यस्यैव, अवस्थान्तरप्राप्त्या कार्यत्वेन स्वीकारात् इदं नाङ्गीक्रियते। अतएवभाषिष्ट 'पटवच्च' इति सूत्रे भगवान् भाष्यकारः—यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इतिनामरूपकार्यान्तरादिकं भजन्ते इति॥

**असम्प्रज्ञातसमाधिः —** समाधि भेदः (निर्विकल्पसमाधिः)।

[समाधिः द्विविधः सम्प्रज्ञातासम्प्रज्ञातश्चेति। उभयोरपि सविशेषविषयकत्वमेव]

'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः'। (यो. सू. 3-3)

ध्यानमेव ध्येयाऽऽकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते । (भा.)

'संप्रज्ञातस्थितिमतिगते निर्विकल्पे समाधौ
शान्तावद्यं स्तिमितबहुलानन्दसन्दोहमन्तः ।
यत्तद्ब्रह्म स्फुरति यमिनां पूर्णषाड्गुण्यरूपं
सा मे नित्यं हृदि हयमुखी देवता सन्निधत्ताम्' ॥ (श. दू. 11)

यच्चोक्तम्—विशेषणग्रहणे सति न कथञ्चिदपि निर्विकल्पकसिद्धिरिति—तदप्यसत्, निर्विशेषग्रहणरूपनिर्विकल्पके शशविषाणायमाणे, यदि विशेषणग्रहणे, निर्विकल्पकं नाम न किंचित् स्यात्; न स्यादेव; न ह्यप्रामाणिकमवश्यमंगीकुर्मः ।

योगशास्त्रेषु निर्विकल्पकसमाध्युपदेशान्न तस्याप्रमाणिकत्वमिति चेन्न; तत्रापि निर्विशेषग्रहणस्यानुपदेशात् । आगमानां च सविशेषपरत्वस्य स्थापयिष्यमाणत्वात् । समाधिलक्षणानुप्रविष्टस्यार्थमात्रावभासत्वपरस्य 'स्वरूपशून्यमिव' इत्यस्य निर्विशेषग्रहणपरत्वाभावात् । ध्यानमेव हि यथावस्थित ध्येयार्थवैशद्यातिशयात् तन्निगीर्णस्वरूपमिव भवतीति तत्रोपदिश्यते । प्रह्लादवामदेवादिसमाधिषु चानन्तविशेषणविशिष्ट ब्रह्मानुभव एव श्रूयते । अतो न शास्त्रान्निर्विशेषविषयनिर्विकल्पकसिद्धिरिति । (श. दू.)

सिद्धान्ते ध्यानस्य ज्ञानविशेषरूपतया तस्यैव समाधित्वावस्थायां अनुध्यानशब्देन व्यपदेशः । अत एवभाषितम्—

'विशदतमप्रत्यक्षतापन्नानुध्यानरूपभक्त्यैकलभ्यः' इति (वे.सं. 228)

सविकल्पक समाधौ दिव्यमंगलविग्रहादिविशिष्टपरमात्मनः विषयता । निर्विकल्पेतु ध्यानस्वरूपं नापगच्छति, तदभावे समाधिरेव लुप्येत । अतोत्र षाड्गुण्यविशिष्टब्रह्मस्वरूपस्य वैशद्येन स्फुरणात्, 'ध्यानमेव स्वरूपेणशून्यमिव' इत्युक्तमिति नातितिरोहितम् ॥

**असम्भवः** — 1. अनुत्पत्तिः ।

'असम्भवस्तु सतोऽनुपपत्तेः' (ब्र. सू. 2-3-9)

2. सर्वप्रमाणासिद्धत्वम् ।

यथा—

वन्ध्या मे जननीत्येष विरोधः स्वोक्तिबाधतः ।
शशे शृङ्गमुदस्थादित्येवमादिरसम्भवः ॥ (न्या. प. 146)

3. लक्षणदोषप्रभेदः ।

अव्याप्त्यतिव्याप्त्यसम्भवाः लक्षणदोषाः । लक्ष्ये क्वाप्यविद्यमानत्वम् असम्भवः । यथा चक्षुर्विषयो जीवः इत्युक्ते असम्भव एव ॥ (य. दी. 6)

**असम्भवस्तु सतोऽनुपपत्तेः** — (ब्र. सू. 2-3-9) (वियदधिकरणे नवमं सूत्रम्)

'तु' शब्दोऽवधारणार्थः । असम्भवः—अनुत्पत्तिः, सतः—ब्रह्मण एव ; तद्व्यतिरिक्तस्य कस्यचिदपि अनुत्पत्तिः न सम्भवति, अनुपपत्तेः ।

अत्र सच्छब्देन सूक्ष्मावस्थचिदचिच्छरीरकः परमात्मा सद्विद्यावेद्यः उच्यते । तत्रैव 'कथमसतः सज्जायेत' इत्यसत्कार्यवादनिराकरणेन केवलस्य ब्रह्मणः कारणत्वानुपपत्तेः ।

एतदुक्तं भवति—वियन्मातरिश्वनोः उत्पत्ति प्रतिपादनम् उदाहरणार्थम् । उत्पत्त्यसम्भवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः । तद्व्यतिरिक्तस्य कृत्स्नस्य अव्यक्त-महदहङ्कारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्य एकविज्ञानेन सर्वविज्ञान प्रतिज्ञादिभिः अवगतकार्यभावस्य अनुत्पत्तिः नोपपद्यते इति ।

'आत्मन आकाशः सम्भूतः' इत्यादौ सम्भूतिशब्दस्य उत्पत्तिपरत्वं प्रसिद्धम् ।

सर्वहेतोः परस्यैव नोत्पत्तिस्सम्भवेत्क्वचित् ।
प्रतिज्ञानुपपत्तेश्च तदन्यज्जायतेऽखिलम् ॥ (ब्र. प. मा. 225)

**असम्भूतिः** — आसन्नप्रतिबन्धविनाशः ।

'येऽसम्भूतिमुपासते' (ई. उ. 12)

मानदम्भहिंसास्तेयादीनां बहिर्मुखेन्द्रियवृत्तीनां योगविरुद्धानां निवृत्तिः ।

(कू. भा.)

अत्र—

'सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते' ॥

इत्युत्तरवाक्यानुसारेण स्थानप्रमाणेन विनाश एवात्र विवक्षितः ।

कर्मणामन्य संक्रान्तिरूपो विनाशः ॥ (वि. को.)

**असम्मूढः** — विवेकवान् ।

'स्थिरबुद्धिरसम्मूढः ब्रह्मवित् ब्रह्मणि स्थितः' । (गी. 5-20)

अस्थिरेण शरीरेण स्थिरमात्मानमेकीकृत्य मोहः–सम्मोहः ; तद्रहितः ।
(गी. भा.)

असंमूढः इत्यत्र समित्युपसर्गः एकीकारपरः ॥ (ता. चं.)

**असम्सर्गाग्रहः** — परस्परासम्बन्धाज्ञानम् ।

भ्रान्तिस्थले प्राभाकराः शुक्तिरजतत्वयोः असंसर्गाग्रहात् शुक्तिरजतयोः भेदाग्रहाच्च इदं रजतमित्यादौ इदमिति रजतमिति च ज्ञानद्वयस्यैव ग्रहणस्मरणरूपस्य प्रवृत्तिजनकतामाहुः । (चिं. म. 201)

सिद्धान्तेपि पुरोवर्तिनः इदमिति इदन्त्वेन, तत्र दोषवशात् रजताल्पभागस्य च रजतत्वेन ग्रहणमेव प्रवृत्तिजनकम् । तत्र अपेक्षितरजतत्वस्य शुक्तेश्च असंसर्गाग्रहाधीनभेदाग्रहस्य सामग्रीकोटौ प्रवेश एवेति 'यथार्थं सर्वविज्ञान'मिति च रक्षितम् । प्रवृत्तेः विफलताच भ्रान्तिव्यवहारहेतुः ॥

**असह्यापचारः** — 1. अपचारविशेषः ।

'मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरणभगवदपचार – भागवतापचार–असह्यापाचररूपनानाविधानन्तापचारान् . . . . . ' (श. ग. 122)

भागवतभक्तविषयापचारः असह्यापचारः । आचार्यविषयापराधो वा । भागवते अभागवतत्वनिमित्तापराधो वा । अर्चावतारविग्रहस्य अवैलक्षण्यप्रतिपत्तिर्वा । (श्रु. भा.)

2. निर्निबन्धनभगवद्भागवतद्वेषावज्ञापरिहासादिः ।

भगवद्भागवतापचारवर्गयोः 'अपचारशतेनापि न क्षमामि वसुन्धरे' इत्यादिभिः विशेषिताः केचित् 'ब्राह्मणपरिव्राजक' न्यायात् असह्यापचाराः विभज्यन्ते । (र. रक्षा.)

**असाधारणः** — हेत्वाभासविशेषः ।

सपक्षविपक्षव्यावृत्तो हेतुः । (य. दी. 33)

**असाधारणकारणम्** — तन्मात्रकारणम् ।

'साधारण्येन हेतुः सलिलमिव विभुः सर्वकार्याङ्कुराणम् ।
वैषम्यन्त्वाविरिञ्चात् प्रतिनियतफलैः प्राणिनां कर्मबीजैः' ॥ (अ. श. 237)

इत्युक्तरीत्या लोके हि सर्वाङ्कुराणां साधारणकारणं सलिलम् ; विशेषकारणं बीजमित्युक्तमेव; दृष्टमेतत् । एवमीश्वरोपि अतीतानागतवर्तमानरूपाणाम् अशेषाणामपि कार्याणामेक एव कारणम् । तत्तत्पुरुषाश्रितानि पुण्यपापरूपाणि कर्माणि फलविशेषंप्रति विशेषकारणानि इति न वैषम्यगन्धः तस्य ॥ (चिं. म.)

**असांपरायाभिमुखः** — मुमुक्षुः । (मरणभयरहितः)

'असांपरायाभिमुखम् अश्वस्तनविदं पशुम्' (भाग. 4-24-38) साम्परायो मृत्युः, तदनभिमुखः ; मरणाभीरुरिति वा । 'कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्' इत्युक्तेः ॥ (भाग. वी.)

**असार्वत्रिकी** — (ब्र. सू. 3-4-10) (पुरुषार्थाधिकरणे दशमं सूत्रम्)

'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इति श्रुतिः । सर्वविद्यायाः कर्माङ्गत्वं विदधातीत्येतदसङ्गतम् । अत्र विद्याशब्दाभिहिता तु न सार्वत्रिकी, अपितु उद्गीथविद्या ।

'यत्करोति तद्विद्ययेति' नैवं पदान्वयः; अपितु 'यदेव विद्यया करोति, तदेव वीर्यवत्तरम्' इति । विद्यया क्रियमाणस्य अन्यतोऽवगतस्य वीर्यवत्तरत्वं प्रति साधन-

भावोऽवगम्यते । 'यदेवेति' प्रसिद्धवन्निर्देशात्, अन्यतोऽवगतिर्हि 'उद्गीथमुपासीत' इति सन्निहितोद्गीथविद्यायाः । अतः सर्वविद्यायाः कर्माङ्गत्वं विदधातीति, विद्यायाः कर्मसु कर्तृभूतात्मसंस्कारद्वारा कर्तृशेषत्वात्, तत्र फलश्रवणम् अर्थवाद एवेति पूर्वपक्षस्य नावसरः ।

न सर्वविद्याविषया यदेवेति श्रुतिर्हि सा।
उद्गीथविषयैवेति विद्यायाः नाङ्गता भवेत् ॥ (ब्र. प.मा. 428)

**असितः** — 1. कर्मसम्बन्धरहितः ।

'असितो न व्यथते न रिष्यति' (बृ. उ. 6-5-15)

अत्र सितशब्देन कर्म उपलक्ष्यते; कर्मवश्यतागन्धरहितत्वादेव व्यथारहितः । हिंसायोग्यश्च न ।

2. अबद्धः ।

'वाचानुतन्त्या यदि ते जनोऽसितः' (भाग. 4-19-31) 'षिञ् बन्धने'-आपाततःप्रतिपन्नफलाशानिर्मुक्तो मुमुक्षुः । (भाग. वी.)

3. महर्षिविशेषः ॥ (वि. को.)

**असिद्धः** — व्याप्तिपक्षवृत्तिनिश्चयरहितः । हेत्वाभासविशेषः ।

तद्भेदास्तु न्यायतत्त्वे संग्रहेणोक्ताः 'अज्ञातविपरीतसंदिग्धास्तिस्रोऽसिद्धयः' इति ॥

यत्र व्याप्तिः पक्षधर्मत्वं वा नास्ति सः असिद्धः ॥ (न्या. को.)

**असुर्याः** — अतिभीषणा लोकाः ।

'असूर्या नाम ते लोकाः अन्धेन तमसा वृताः' (ई. उ. 3)

'असुरस्य स्वम्' इति यत्; आसुरप्रकृतीनामनुभाव्या इत्यर्थः । (वे. भा.)

असुराणां स्वभूताः, असुर्याः, असुरस्वभावभूता वा, आसुरप्रकृतीनामेवानुभाव्याः, अन्येषां दैवप्रकृतीनाम् अनुभवितुमशक्या इत्यर्थः । अतिभीषणा इति यावत् ॥ (कू. भा.)

**असूया** — गुणेषु दो पारोपः ।

गुणेषु दोषाविष्करणंचित्त-वृत्तिविशेषः । (ता. चं. 9-1)

अनसूयालक्षणव्याजेनासूयामपि बृहस्पतिरलक्षयत् 'न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि । नान्यदोषेषु रमते साऽनसूया प्रकिर्तिता' । इति (वि. को.)

'असूया तु दोषारोपो गुणेष्वपि' इत्यमरः ॥

**असृष्टान्नम्** — अचोदितद्रव्यम् ।

'विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ' । (गी. 17-13) यज्ञार्थं सृष्टमिह सृष्टशब्देन विवक्षितम् ; न्यायागतमित्यर्थः । तदन्यत् असृष्टम् , यथा-

'न यज्ञार्थं धनं शूद्रात् विप्रो भिक्षेत धर्मवित् ।
यजमानो हि भिक्षित्वा प्रेत्य चण्डालतां व्रजेत् '॥ इति ॥ (ता. चं.)

**अस्तिकायः** — अनेकदेशवर्तिद्रव्यम् । (जैनमते)

अनेकदेशवर्तिनि द्रव्ये अस्तिकायशब्दः प्रयुज्यते । अणुव्यतिरिक्तानि द्रव्याणि पञ्च अस्तिकायाः इति च संगृह्यते । जीवास्तिकायः, धर्मास्तिकायः, अधर्मास्तिकायः, पुद्गलास्तिकायः, आकाशास्तिकायः, इति ॥ (श्री.भा. 2-2-31)

स च पञ्चविधः । जीवाकाशधर्माधर्मपुद्गलास्तिकायभेदात् । अत्र जीवादीनां पुद्गलान्तानां पञ्चानां द्वन्द्वः । ततश्च अस्तिकायशब्देन कर्मधारयः समासः । एवं च जीवादीनां पञ्चानाम् अस्तिकाय इति संज्ञा बोध्या । एतेषु पञ्चसु तत्त्वेषु कालत्रय सम्बन्धितया अस्तीति स्थितिव्यपदेशः। अनेक प्रदेशत्वेन शरीरवत् कायव्यपदेशः ॥
(न्या. को.)

**अस्ति तु** (ब्र. सू. 2-3-2) (वियदधिकरणे द्वितीयं सूत्रम्)

वियतः उत्पत्तिबोधकश्रुतिरस्त्येव ।

'आत्मनः आकाशः सम्भूतः' इत्येव हि श्रुतिः । अतीन्द्रियार्थविषया प्रमाणान्तराप्रतीतामपि वियदुत्पत्तिं प्रतिपादयितुं समर्थैव । तत्तत्सूत्रान्यथासिद्धिपरे अनन्तरसूत्रे गौणीति स्त्रीलिङ्गनिर्देशेन अस्तीति श्रुतिः साधकतया विवक्षिता इति भावः ।

श्रुत्याचात्मन(:) आकाशस्सम्भूत(:) इति शंसनात् ।
उत्पत्तिर्विद्यते तस्य त्वाकाशस्येति निश्चितम् ॥ (ब्र. प. मा. 218)

**अस्तित्वम्** — देशकालसम्बन्धित्वम् ।

उत्पद्यमानावस्था जन्म । उत्पन्नावस्था चास्तित्वम् । (सु॰ उ.; श्रु. भा.)
यथा घटोऽस्तीत्यादौ घटादेरस्तित्वम् ॥

**अस्तिनास्तिशब्दाभिधेयम्** — चिदचिदात्मकं जगत् ।

अस्ति नास्ति शब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत् परस्य ब्रह्मणः विष्णोः कायत्वेन तदात्मकम् ।

[अत्र केचित् मन्यते । अस्ति शब्दः सत्यवाची; नास्तिशब्दः मिथ्यावाची इति । अतः 'ब्रह्मैव सत्यम् जगन्मिथ्या' इति; तन्निराकरोति । ]

ज्ञानस्वरूपम् आत्मवस्तु आदिमध्यपर्यन्तहीनं सततैकस्वरूपमिति स्वत एव सदा अस्तिशब्दवाच्यम् । अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थगर्भम् इति नास्ति असत्यशब्दाभिधेयमिति । यथोक्तम् –

'यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादि सम्भूतां तद्वस्तु नृपतच्च किम् ' ॥

'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
तत्तु नास्ति (नाशि) न सन्देहः नाशिद्रव्योपपादितम् ' ॥
(श्री. भा. 1. भा. 2 . 51)

घटावस्थायां पिण्डो नास्ति. कपालावस्थायां घटो नास्ति, चूर्णावस्थायां न कपालसत्तेति सदा नाशगर्भत्वम् । उत्तरावस्थाप्राप्तिर्हि पूर्वावस्थस्य विनाशः । तदवस्थस्य सैवोत्पत्तिः ।

तस्मात् नास्तिशब्दाभिधेयत्वम् अचिद्वस्तुनः । चिद्वस्तुनस्तु अवस्थान्तरापत्त्यवस्थान्तरप्रहाणाभावेनैकरूपत्वात् न विनाशगर्भत्वम् । अतः तदस्तिशब्दवाच्यमेव ।

यत् सदाऽस्त्येव, तत् अस्तिशब्दवाच्यम् 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र सिद्धशब्दवत् अवधारणगर्भोऽयं शब्दः। (श्रु. प्र.) अतः अस्तिनास्तीतिशब्दानाम् इदमेव प्रवृत्तिनिमित्तम्; न तु सत्यत्वमिथ्यात्वे इति ॥

अस्तुः — क्षेपः।

'यामिषुं गिरिशन्त हस्ते ! विभर्ष्यस्तवे'। (श्वे. उ. 3-9)

असु- क्षेपे–मद्ब्रह्मज्ञानविरोधिक्षेपाय इषुं कुरु। (रं. भा.) अत्र क्षेपार्थक 'असु' धातोः औणादिकः तुन् प्रत्ययः ॥

अस्थूलत्वादीनां सर्वविद्यानुयायिता —

निषेधरूपाणामपि अस्थूलत्वादीनां ब्रह्मासाधारणाकारतया सर्वेषु मोक्षार्थोपासनेषु अन्वयः।

यस्यामस्थूलतादि प्रपठितमुचितं चिन्तनं तस्य तस्यां
नान्यस्यां मानहानेर्न यदि नियमनं कस्य कुत्रेति चेन्न।
हेतुत्वोन्नेयदोषव्यपनयनमिह ब्रह्मविद्यासु सर्वा-
स्वानन्दाधिक्रियोक्त क्रपनियमितमित्यस्य पार्वात्विकत्वात् ॥ (अ. सा.358)

अत्र पूर्वपक्षी मन्यते – ननु गार्गीब्राह्मणादिषु क्वचिदेवाक्षरत्वादिकमाम्नातम्, यस्यां तु विद्यायां यावद्गुणजातमाम्नातं तावदेव तत्रोपसंहार्यं तत्प्रकरणपठितत्वात्; अन्यथा सर्वं सर्वत्रोपसंहार्यमिति सद्विद्यादीनां गुणसङ्करस्स्यात्, ब्रह्मस्वरूपप्रतिपत्तिस्त्वानन्दादिभिरेवेति प्रागेवोक्तम्, तेन किमनेनाजागलस्तनायमानेन ब्रह्मस्वरूपप्रतिपत्त्यावक्षरत्वादिना गुणेनेति। तदिदमनुवदति-यस्यामिति।

अयमत्राभिप्रायः – न केवलं ब्रह्मगुणमात्रमत्रोच्यते, अपि तु कारणत्वाशङ्कितदोषपरिहारेण स्वरूपप्रतिपत्तिहेतुर्गुणविशेषः। स पुनरमलत्वम्, तेन सहितास्सत्यत्वादयोऽपि। तथाहि – सत्यत्वं सविकारमचिद्वस्तु व्यावर्तयति। ज्ञानत्वं विलुप्तबुद्धिकं तत्संसृष्टं जीवम्। अनन्तत्वं पूर्वावधिमन्तं मुक्तम्। आनन्दत्वमपि परवादिपरिकल्पितं निरानन्दमीश्वरम्। तेनामलत्वेन नित्यो व्यावर्त्यते। यद्यप्यनन्तपदेनैवाणुस्वरूपो नित्योऽपि व्यावर्त्यते तथापि धर्मभूतज्ञानतो देशकालाभ्यामानन्त्यस्य

तस्मिन् विद्यमानत्वात् कथञ्चिदानन्त्यं वक्तुं शक्यते । अमलत्वं तु सर्वेषां व्यावर्तकमेव । नित्योऽपि परतन्त्रचेतनत्वात् संसारे स्वरूपयोग्यतावान् केवलं भगवदपचाररूपसहकारियोग्यताभावात् नित्यमेवासंसारी वर्तते । ईश्वरस्तु स्वतन्त्रचेतनत्वात् संसारे स्वरूपयोग्यतारहितः । तेनेदमेवामलत्वमीश्वरस्यासाधारणमेव । किञ्चेतरसंसरणनिवर्तकत्वमीश्वरस्यासाधारणम्, तच्चामलत्वमेव । तेन स्वयं मलरहितत्वात् इतरमलप्रतिभटत्वाच्च ईश्वर एवामलइत्युच्यते ।

तर्ह्यमलत्वमेवास्तु किं सत्यत्वादिभिरिति चोद्यमवशिष्यते तच्चात्र नास्तीत्याह हेतुत्वेति ।

द्वेधा हि लक्षणमभिधीयते । एकेनैव विशेषणेन कृत्स्नालक्ष्यव्यावृत्तिरित्येकः पक्षः, अपरस्तु नानाविशेषणैर्बुद्ध्यवतरणक्रमेणालक्ष्यव्यावृत्त्या लक्ष्यस्वरूपनिरूपणं क्रियते तदिदमिति भाष्यकाराभिप्रायः ।

अयमत्र शब्दार्थः — कारणत्वेन वस्त्वन्तरनिष्ठदोषा आशङ्क्यन्ते । तेषां व्यपनयनं सत्यज्ञानानन्तानन्दामलपदैः क्रियते । तेन क्रमाद्दोषव्यपायप्रतिपत्तिः ।

प्रतिपत्तिसौकर्यार्थमनुक्रमादर्थविशेषप्रतिपत्तौ दृष्टान्तमाह—आनन्देति । आनन्दमयाधीकरणेऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया उत्तरोत्तरं क्रमादेवाधिकत्वेन प्रतिपाद्यन्ते । एवमत्राप्यनुक्रमेण सर्वाधिकत्वेन भगवान् प्रतिपाद्यते । तेन प्रथमत एवामलत्वेन भगवतस्सर्वाधिकत्वप्रतिपत्तौ किमेभिस्सत्यत्वादिभिर्विशेषणैरिति चोद्यं परिहृतम् । (चिं. म.)

यथा सत्यत्वादिकमन्तरेण ब्रह्मस्वरूपं प्रतिपत्तुमशक्यम्, तथा अस्थूलत्वादिकमन्तरेण जीवव्यावृत्तं ब्रह्मस्वरूपं सत्यज्ञानादिवाक्यैर्न प्रतिपत्तुं शक्यम् । सत्यत्वादेः प्रत्यगात्मसाधारणत्वेन प्रत्यगात्मव्यावृत्तत्वाभावात् । स्थूलत्वादिहेयानर्हत्वं तु न जीवसाधारणम् । ततश्च अस्थूलत्वादीनां निषेधरूपतया सत्यादिवाक्यजन्यब्रह्मप्रतीत्युपजीवकत्वेऽपि स्वेतरसमस्तव्यावृत्तब्रह्मस्वरूपप्रतीतेः अस्थूलत्वादिकमन्तरेणासम्भवात् अस्थूलत्वादिकं सकलपरविद्योपसंहार्यमेव ॥ (बृ. उ. रं. भा. 5-8)

**अस्नाविरम्** — ब्रह्म ।

'अस्नाविरं शुद्धमपापविद्धम्' (ई.उ. 8) स्नायुः–सिरा यस्मिन्विद्यते तत् स्नाविरम् । स्नाविरं न भवतीति–अस्नाविरम् ॥ (कू. भा.)

स्नावाः-सिराः 'ष्णु-प्रस्रवणे' इति धातुना स्नावयन्ति एकदेशस्थमपि कल्मषं कृत्स्नशरीरे प्रस्रावयन्तीति व्युत्पत्त्या निष्पन्नस्नावशब्दो नाडीपरः, तैत्तिरीयोपनिषदि शिक्षावल्यां सप्तमानुवाके—

'चर्ममाँसँ स्नावास्थिमज्जा' इत्यत्र स्नावशब्दस्य नाडीपरतया प्रयोगात् । 'तुन्दादिभ्य इलच्' इति पाणिनि सूत्रानुसारिणा 'स्वाङ्गाद्विवृद्धौ च' इति वार्तिकानुशासनेन, विवृद्धाः स्नावाः अस्मिन् सन्तीति मत्वर्थीये लच्प्रत्ययेरलयोरभेदेन लकारस्थाने रेफे च सति-स्नाविरमिति भवति । तन्न भवतीत्यस्नाविरं स्वप्रसार्यमाणकलुषप्रयोज्यदुःखभोगाश्रयत्वसम्बन्धेन नाडीयुक्तं न भवतीति यावत् । शरीरव्यापिन्यो हि नाड्यश्शरीरैकदेशवर्तिनो व्रणादेस्सम्बन्धिदुःखहेतुभूतं मलं शरीरे प्रदेशान्तरावच्छेदेनापि प्रत्यगात्मनि सम्बन्धयन्त्यो दुःखं जनयन्ति ; न तु तथा परमात्मनि, तद्धेतुकर्माभावादित्यर्थः ॥ (श्री. रं. भा.)

**अस्मन्माता** — लक्ष्मीः ।

'अखिलजगन्मातरमस्मन्मातरम्' (श. ग. 98)

अखिलजगन्मातरमित्यत्र अखिलशब्दः स्वान्तर्भावपरः न ह्यस्मद्वर्जितमिति भावः । अत्र 'अस्मात् स्वामिन्' इतिवत् 'अस्मन्मातरम्' इत्यपि श्रीविष्णुचित्तादयः पठन्ति । व्याचक्षते च यामुनमुनिवंशजननेन पुनश्च विशेषेण अस्मन्मातरमिति । (र. रक्षा. 103)

पूर्वं सामान्यतः उक्तस्य सर्वमातृत्वस्य विशेषे उपसंहारः इति भावः ॥

**अस्मरणनियमहेतवः** — सर्वथास्मृत्यभावे कारणानि ।

'प्रायणान्नरकक्लेशात् प्रसूतिव्यसनादपि । चिरातिवृत्ता प्राग्जन्मभेदा न स्मृतिगोचराः, इति । (श्रु. प्र. 139)

प्रायणादीनां देहविगमादीनां – निखिलसंस्कारतिरस्कृतिकरत्वं स्वभावः। पुण्यविशेषादपवादात् कस्यचिदेकस्य जातिस्मृतिः ।

'तदन्यधीरतात्पर्यं पटुत्वविरहोधियः ।
दुःखादि तीव्रमुन्मादोऽनभ्यासो दीर्घकालता ॥

एतैश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु ।
एतेष्वसत्स्वस्मरणात् ज्ञानाभावोऽनुमीयते' ॥ (भा. प्र. 134)

एवमादयः नियमेन अस्मरणहेतवः इति भावः ॥

**अस्मिता** — पञ्चक्लेशेषु अन्यतमः (हृदयग्रन्थिः) ।

दृग्दर्शनशक्त्योरेकात्मतेवाऽस्मिता । (यो. सू. 2-6)

'अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः' इत्युक्त पञ्चसु क्लेशेषु मध्येऽस्मिता द्वितीयः क्लेशः अविद्यायाः कार्यभूता । दृक्शक्तिरूपस्य पुरुषस्य दर्शनशक्तिरूपाया बुद्धेः अर्थात् अत्मानात्मनोः परस्परमत्यन्तविलक्षणयोरविद्यावशात् या एकात्मा इव (एकस्वरूपापत्तिरिव) न तु परमार्थत एकात्मता सा अस्मिता कथ्यते । (व्या.)

**अस्मिन्नस्य च तद्योगं शास्ति (ब्र. सू. 1-1-20)**

(आनन्दमयाधिकरणे अष्टमं सूत्रम्)

ब्रह्मविषयकानन्दयोगं प्राप्तुः जीवस्य शास्त्रं शास्ति-बोधयति । अस्मिन् अस्य इति शब्दौ, उपास्यौपासकपरौ, प्रकृतत्त्वात् । अस्मिन्निति विषयसप्तमी । तद्योग-मित्यत्र तच्छब्दार्थे आनन्दे (ब्रह्मानुभवरूपे), अस्मिन् इत्यस्य विषयतयान्वयात् ब्रह्मा-नुभवरूपानन्दस्य ह्यवच्छेदकं ब्रह्म । तद्योगम्-आनन्दयोगम् । 'रसो वै सः, रसंह्येवायं लब्ध्वा आनन्दीभवति' इति शास्ति-शास्त्र-विविच्य बोधयति । 'शासु अनुशिष्टौ' इति हि धातुः ।

रसशब्दाभिधेय आनन्दमयलाभात्, अयं जीवशब्दाभिलपनीयः आनन्दी भवतीत्युच्यमाने, यल्लाभात् यः आनन्दीभवति, सोऽपि स एवेत्यनुन्मत्तः को ब्रवीती-त्यर्थः । तत्र रसं लब्ध्वेति पदद्वयार्थम्; अस्मिन् इति प्रकृति प्रत्ययाभ्यां तद्योगमिति

समासान्तर्गतपदद्वयेन आनन्दीति प्रकृतिप्रत्ययार्थद्वयं च प्रतिपाद्य, तत्र तात्पर्यं श्रुतेः दर्शयितुम् 'इति वेदानुशसनम्' इत्यत्र श्रुत्या उच्यमानं कटाक्षयन्नाह सूत्रकारः शास्तीति ।

जीवस्यास्मिन्निहानन्दे ह्यानन्दावाप्तिरुच्यते ।
लब्ध्वानन्दीतिशास्त्रेण ब्रह्मानन्दमयस्ततः ॥ (ब्र. प. मा. 20)

**अस्यैव चोपपत्तेरूष्मा** — (ब्र. सू. 4-2-11) (आसृत्युपक्रमाधिकरणे पञ्चमं सूत्रम्)

अस्य-सूक्ष्मशरीरस्य क्वचित् विद्यमानत्वोपपत्तेश्च, न तदुपमर्देन अमृतत्ववचनम् । उपलभ्यते हि उत्क्रामतो विदुषः सूक्ष्मदेहगुणः ऊष्मा, अन्यत्रानुपलम्भात् न स्थूल-गुणः । अतो विद्वान् सूक्ष्मशरीरेण उत्क्रामति ।

सूक्ष्मस्यास्मिन् वर्तमानत्वोपपत्तेश्च तद्गुणः ।
ऊष्मोपलभ्यते चेति मुक्तः सूक्ष्मेण गच्छति ॥ (ब्र. प. मा. 499)

**अहः** — (स. ना. 91)

न हीनः अस्यास्तीति । अनाद्यामिद्यानिद्रावधौ स्वावबोधहेतुत्वाद्वा, अहरिवेति । (वि. स. भा.)

'अहरहीनम्' इति मौलनिरुक्तानुसारात्, न हीनोऽस्येति वा, अनाद्यविद्या-निद्रावधौस्वावबोधहेतुत्वात्, अहः – दिवस इवेति वा । (वि. स. निर्व.)

न सन्ति हीना यस्येति अहरस परिकीर्तितः ।
अनाद्यविद्यानिद्रायां स्वधीहेतुतयाह्यहः ॥ (वि. स. नि.)

**अहः** —– परमात्मनः रहस्यं नाम ।

'तस्योपनिषदहरिति ; हन्ति पाप्मानं जहाति च य एवं वेद' (बृ.उ. 7-5-2)

अहरित्यस्य हन्तेः जहातेश्च रूपसम्भवमभिप्रेत्य फलमाह–हन्तीत्यादिना ।

आदित्यमण्डलान्तर्वर्तिनः पुरुषस्य अहरित्युपनिषत् रहस्यनामेत्यर्थः । उक्तञ्च व्यासार्यैः 'सम्बन्धादेवमन्यत्रापीत्यत्र' 'उपनिषदौ – रहस्यनामनी इत्यर्थ' इति ।
(रं. भा.)

सम्पूर्णादित्यमण्डलदर्शनयोग्यः कालः । यथा 'अहो अहोभिर्महिमा हिमागमे' इत्यादौ ।

क्वचित् दिनरात्रिसमुदितः कालः । यथा मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते । यथा वा 'विप्रः शुध्येद्दशाहेन भूमिपः' इत्यादौ ।

अहोरात्रसाध्यः एकः सोमयागो वेदे अहःशब्देनोच्यते । तादृशानामहर्विशेषाणां गणः षडहः ॥ (न्या. को.)

अहम् — 1. अहंग्रहः (ईश्वरादीनाम्) ।

'हन्ताहमिमास्तिस्रो देवता, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि'
(छां. उ. 6-3-2)

'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः' । (गी. 2-12)

ईश्वरस्याहंग्रहः सर्वनियन्तृत्वगर्भः ॥ (ता. चं.)

[जीवस्यतु तत्तच्छरीरमात्रनियन्तृत्वगर्भः]

2. हिरण्यगर्भस्यनाम ।

'सोऽहमस्मीत्यग्रे व्याहरत् । ततोऽहन्नामाभवत् । तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथाऽन्यन्नाम प्रब्रूते यदस्य भवति' । (बृ.उ. 3-4-1)

अहमभिमानाश्रयव्यष्टिपुरुषाणां प्रथमजत्वात् हिरण्यगर्भस्य ।

उक्तं च मोक्षधर्मे भृगुभरद्वाजसंवादे—'तस्मात्पद्मात्समभवत् ब्रह्मा वेदमयो निधिः । अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत्' ॥ इति । तस्मादयमर्थः अहमस्मि अहङ्कारस्स्याम्, चतुर्मुखस्स्यामिति सङ्कल्पवाक्यम् अग्रे ब्रह्म सृष्टिपूर्वकाले व्याजहार । ततोऽहन्नामा चतुर्मुखोऽभवदिति ।

यस्माद्धेतोः भगवता प्रथमतश्चतुर्मुखे अहंशब्दः प्रयुक्तः, तस्माद्धेतोः एतर्ह्यपि–अस्मिन्नपि काले केनचित् पुंसा आमन्त्रितोऽयं जनः अहमित्येवाग्रे उक्त्वा अथ–पश्चात् अस्य यत् पित्रादिकृतं नाम भवति तद्वदतीत्यर्थः। (रं. भा.)

स्वोच्चारणकर्तृतावच्छेदकधर्मावच्छिन्नः। यथा अहं गच्छामीत्यादावस्मदर्थः॥ (न्या. को.)

अहमर्थस्यैवात्मत्वं बौद्ध-ब्रह्मविवर्तवादिभिन्नानां सर्वेषां सम्मतम्॥

**अहङ्कारः**—1. अव्यक्तपरिणामविशेषः॥ (भूतादिः)

'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' (गी.13-5)

यद्यहमित्येवात्मनः स्वरूपम्; कथं तर्हि अहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इति। उच्यते – स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात् तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनः स्वरूपम्। अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते। स त्वनात्मनि देहेऽहंभावकरणहेतुत्वेनाहङ्कार इत्युच्यते। अस्य तु अहङ्कारशब्दस्य अभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिः द्रष्टव्या। (श्री.भा. 1-172; 173)

2. गर्वः।

अयमेवत्वहङ्कार उत्कृष्टजनावमानहेतुगर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते। (श्री. भा. 1-173)

3. अहंबुद्धिः।

बाधकापेनाऽहंबुद्धिः साक्षात् आत्मगोचरैव। शरीरगोचरा तु अहंबुद्धिरविद्यैव। यथोक्तं भगवता पराशरेण—

'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन।
अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः'॥ इति

[ एवमेवास्वतन्त्रे आत्मनि स्वतन्त्रबुद्धिरपि ]

यदि ज्ञप्तिमात्रमेवात्मा, तदाऽनात्मन्यात्माभिमाने, शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात्; न ज्ञातृत्वप्रतिभासः। तस्मात् ज्ञाताऽहमर्थ एवात्मा (श्री.भा. 1-173)

अहम्भावः – अहमिति बुद्धिः । भावशब्दस्य बुद्धिवाचकत्वमभिप्रायपरतया । प्रयोगादवगम्यते । सर्वत्राहंशब्दार्थमेकरूपमङ्गीकृतस्याहङ्कारशब्दस्याव्यक्तपरिणामवाचित्वं शब्दानुशासनप्रक्रिययोपपादयति-अस्त्विति । च्विप्रत्ययस्य सर्वलोपः । कृञः करणे घञ् । क्षेत्रान्तर्भावोपदेशस्य निर्वाहः कृतः ।

'अहङ्कारं बलं दर्पम्' इति त्याज्यतयोपदेशस्य निर्वाहः क्रियते अयमेव त्विति । अयंशब्देन प्रस्तुताहम्भावो विवक्षितः; न तु अहम्भावकरणहेतुः, गर्वापरनामेति वचनात् । न हि महदङ्कारयोरन्यतरोऽहङ्कारो गर्वापरपर्यायः । अतोऽत्राहम्भाव एवायंशब्दविवक्षितः । प्रशस्तदेहेऽहम्बुद्धिरत्कृष्टजनावमानहेतुः ।

अहङ्कारः– अहंबुद्धिः (अहमर्थबुद्धिः) । मानसव्यापारवाचिनः करोतेः बुद्धिपरत्वं युज्यते । यथा, 'तदेकावयवं देवं चेतसा हि पुनर्बुधः । कुर्यात्' इति । मनसा करणं हि वेदनम् । अतोऽहम्बुद्धिरहङ्कारः । च्विप्रत्ययार्थगर्भत्वात् अनहमि अहम्बुद्धिगर्भौ इमौ अहम्भावाहङ्कारशब्दौ । अत्र भावे व्युत्पत्तिः; पूर्वत्र करणे व्युत्पत्तिः । 'गर्वोभिमानोऽहङ्कारः' इति नैघण्टुकाः । ननु कथं भावे (हेये?) व्युत्पन्नस्याहङ्कारशब्दस्योपादेयगोचरतया प्रयोगः 'अथातोऽहङ्कारादेश' इति । उच्यते । स त्वहङ्कारशब्दः साक्षादहमर्थबुद्धिवाची; न त्वनात्मन्यात्मबुद्धिपरच्विप्रत्ययार्थगर्भः । (श्रु. प्र.) [एवं अहंकारशब्दस्य तत्त्वविशेषे गर्वे अहंबुद्धौ च व्युत्पत्तिः प्रादर्शि ]

4. अहमित्यभिमान एवाहङ्कारस्य सामान्यलक्षणम् । सच त्रिविधः। वैकृतः सत्त्वप्रधानः इन्द्रियाणां हेतुः । भूतादिः तमःप्रधानः पञ्चतन्मात्राणां हेतुः । रजः प्रधानः तैजसः उभयहेतुः । (सां. यो. को.) सिद्धान्ते तु भूतादेः शब्दतन्मात्र मेव जायते ततः आकाशं ततः रसतन्मात्रं इत्यादिः क्रमः ॥

अहङ्कारदेवता — रुद्रः ।

'अहङ्कारोऽध्यात्ममहङ्कर्तव्यमधिभूतं रुद्रास्तत्र (अहङ्कारे) अधिदैवतम्' । (सु. उ. 5-8)

तत्र सविषयेऽहङ्कारे रुद्रोऽधिदैवतम् । महदभिमानी चतुर्मुखपुत्रो रुद्रो महत्कार्यस्याहङ्कारस्याधिदैवतमित्युपपन्नम् ॥ (श्रु. भा.)

**अहङ्कारादेशः** — अहंग्रहोपदेशः । (अहंबुद्धिविषयपरमात्मोपासनोपदेशः)

'अथातोऽहङ्कारादेशः' (छां. उ. 7-25-1) अहङ्कारः - अहंबुद्धिः—अहंग्रहेण भूम्नः उपासनप्रकारः उपदिश्यते इत्यर्थः । न तु जीवस्वरूपोपदेशः इति मन्तव्यम् । तथासति, 'अहमादेशः' इति निर्देशस्यैव युक्ततया कारपदवैयर्थ्यप्रसङ्गः । (रं. भा.)

यदहङ्कारशब्दवाच्यत्वमात्रेण प्रत्यगात्मैव स्यात् इत्युच्येत तर्हि हरिशब्दवाच्यत्वसाम्यात् सिंहो मण्डूकःस्यात् । अतः अनेकार्थाभिधायि शब्दैकत्वम् अर्थभेदाविरोधि, यथा आगमप्रामाण्ये उक्तम्—

'तथा च हरिशब्दस्य दृष्टा मण्डूकवाचिता ।
इति तच्छब्दवाच्यत्वात् सिंहो मण्डूक एव किम्' ॥ इति ।
(श्रु. प्र. 1-172)

तथा च सिद्धान्ते सर्वशब्दबुद्धीनां परमात्मपर्यन्तत्वस्यान्यत्र स्थापितत्वात् अहङ्कारशब्दस्य शुद्धजीवात्मस्वरूपवाचकत्वेऽपि परमात्मपर्यन्तत्वमक्षतम् । तथा च अहङ्कारोपदेशः न जीवैक्यपरः इति सिद्धम् ॥

**अहङ्कृतः** — अहमभिमानकृतः ।

'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । (गी. 18-17)

परमपुरुषकर्तृत्वानुसन्धानेन विना अहं करोमीति अहमभिमानकृतः । (गी. भा.)

अहंकृतः इत्यत्र कर्त्रर्थत्वेऽपि मनोवृत्तिविशेषस्याहमभिमानविषयत्वायोगात् तन्मूलत्वमात्रमिह विवक्षितमित्याह अहमभिमानकृत इति । अत्र अहंशब्देनाहमभिमानलक्षणा वा । यद्वा 'अहंकृतः' इति 'भुक्ता ब्राह्मणाः' इतिवद् कर्तरि क्तः ; अहमभिमानकृत इति फलितोक्तिः ॥ (ता. चं.)

**अहन्ता** — लक्ष्मीः ।

आत्मा स सर्वभूतानां अहंभूतो हरिस्स्मृतः ।
अहन्ता सर्वभूतानां अहमस्मि सनातनी ॥

लक्ष्मीनारायणाख्यातं अतो ब्रह्म सनातनम् ।
अहन्तया समाक्रान्तो ह्यहमर्थप्रसिद्ध्यति ॥
अहमर्थसमुत्था च साहन्ता परिकीर्तिता ।
अन्योन्याविनाभावात् अन्योन्येन समन्वयात् ।
तादात्म्यं विद्धि संबन्धं मम नाथस्य चोभयोः ॥ (ल. तं. 2-13,16,18)

श्रीविशिष्टमेव परंब्रह्म न तु निश्रीक इत्यर्थः. । लक्ष्मीनारायणयोरुभयोः आत्महविश्शेषित्वेपि आग्नावैष्णवादिष्विव विशिष्टस्यैव उद्देश्यत्वात् तस्य च एकत्वात् न शेषिद्वित्वप्रसङ्गः इतिभावः ॥ (टि.)

**अहम् ब्रह्मास्मीत्युपासनम्** —'सर्वात्मकब्रह्मात्मकोहम्' इत्याकारकं ध्यानम् ।

'तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति' ।
(बृ. उ. 3-4-10)

'ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावैदहं ब्रह्मास्मीति तस्मात् तत् सर्वमभवत्' इति हि पूर्वं श्रूयते आत्मानमेवावैत् । न त्वन्यदुपास्यम् । तस्मात् तत् सर्वमभवदित्यर्थः । अन्यवेदनस्योपायत्वनिषेधे तात्पर्यम्; न तु स्ववेदनस्य (ब्रह्मवेदनस्य) उपायत्वविधाने । यथा, 'सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति कारणान्तरनिषेधेन परमकारणत्वसिद्धिः, एवमुपास्यान्तरनिषेधेन ब्रह्मणः परमोपास्यत्वमिह विवक्षितम्' इति सर्वव्याख्यानाधिकरणे (व्यासार्यैः) विवृतम् ।

अत्रात्मेतरन्नावेदिति वक्तव्ये; 'आत्मानमेवावैदहं ब्रह्मास्मीती' त्युक्तिः, 'तदिदमप्येतर्हि य एवं वेदाहंब्रह्मास्मि' इत्यादिना वक्ष्यमाणब्रह्मवेदनप्रशंसाहेतुसिद्ध्यर्था । 'ब्रह्म वा इदमग्र आसीत्' इति तस्य ब्रह्मणो जगत्कारणत्वोक्तिश्च, 'कारणं तु ध्येयः' इति कारणस्यैव ध्येयतया सर्वकारणस्य ब्रह्मणः कारणान्तराभावादेव ध्येयान्तरं नास्तीति द्योतनार्थेति तात्पर्यं द्रष्टव्यम् । . . . . .

'तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' । एतर्ह्यपि एतस्मिन्नपि काले तदिदं ब्रह्म अहं अस्मि (सर्वात्मकब्रह्मात्मकोऽहं) इत्येवं यो यो वेद, स सर्वोऽपि इदं सर्वं भवति — एतत्सर्वात्मकब्रह्मपर्यन्ताविर्भाववान् भवतीत्यर्थः । ततश्च

ब्रह्मात्मकत्वोपासनस्य सर्वैकात्म्यसाक्षात्कारहेतुत्वं पूर्वकाल एव, नास्मिन् काल इति न मन्तव्यमिति भावः । (रं. भा.)

ब्रह्मणा अहं ब्रह्मास्मीति वेदितुं युक्तम्; तस्य ब्रह्मत्वात् । अस्माभिस्तु अस्ति ब्रह्मेत्येवोपास्यम्, न त्वहं ब्रह्मास्मीति; जीवपरयोर्भेदादिति न मन्तव्यम् . . . . .।

'अहं ब्रह्मास्मीति' ग्रहणं स्वमुक्त्युपयोगि इति दर्श्यते, य एवं वेदाहं ब्रह्मास्मीति । स्वाहमर्थे ब्रह्माभेदः मन्वाद्यभेदवत् अहंशब्दस्य विशिष्टपरतया संपाद्य इति (अत्रैव) अहंमनुरभवमित्यादिना सूचितम् । यादृशे अहंब्रह्मास्मीत्यनुसंधाने जीवपरयोः भेदोऽपि भावितो भवेत् तादृशमनुसंधानं कार्यमिति च, 'पृथगात्मानं प्रेरितारञ्च मत्वा' इति श्रुत्या दर्शितम् ।

तर्हि किमनेन प्रयासेन? ममात्मा ब्रह्म, अहमन्यः सोऽन्य इत्येव विशदं गृह्यतामिति चेत्—तथासति सर्वप्रकारब्रह्मपारतन्त्र्यं स्वस्मिन्ननुसंहितं न भवेत् । अतः स्वातन्त्र्यस्य लेशतोऽप्यभानाय अहंब्रह्मास्मीत्यनुसंधानम् । तदुक्तमाचार्यैरधिकरणसारावलौ—

'व्यक्तिर्जीवेशभेदे व्यधिकरणपदैर्भावने स्यात् तथापि ।
ब्रह्मायत्तस्वरूपप्रमितिसुदृढतासिद्धयेऽहंब्रह्मोक्तिः' ॥ इति (टी.)

विस्तरस्तु 'आत्मेति तूपगच्छन्ति' इत्यत्र द्रष्टव्यः ॥

## अहम् ब्रह्मास्मीति सामानाधिकरण्यविचारः ।

(जीवेश्वरवाचि पदयो एकार्थकत्व विचारः)

अन्तःकरणचिन्मात्रयोरैक्याभावात् परमते 'अहंब्रह्मास्मीति सामानाधिकरण्यं न घटते । अहंशब्दस्य अन्तःकरणोपहितज्ञप्तिवाचित्वात् तदुपपत्तिरिति चेन्न, अहंशब्दस्यान्तःकरणोपहितज्ञप्तिवाचित्वाभावात्, यथा अहमिच्छामि द्वेष्मीतीच्छादेरहमर्थविशेषणतया व्यवहारात् अहंशब्दस्य नान्तःकरणोपहितेच्छादिवाचित्वम्, एवमहं जानामीति प्रयोगात् तदुपहितज्ञप्तिवाचित्वमप्यहंशब्दस्यानुपपन्नम् । नहि ज्ञप्तिरेव ज्ञप्त्या विशेष्यते । ज्ञातृज्ञेयतदवच्छिन्नज्ञानातिरिक्तस्य कस्यचित् ज्ञानस्य शशविषाणायमानस्य लौकिकबुद्ध्यगोचरत्वात् न तद्विवक्षयाऽहंशब्दप्रयोगोपपत्तिः अतः अहंब्रह्मास्मीति सामानाधिकरण्यमयुक्तम् ।

अन्तःकरणद्वयैक्याभावात् अहमादिशब्दानां पूर्वोक्तन्यायेन तदुपहितज्ञप्ति-वाचित्वाभावाच्च अहंमनुरभवमित्यादिसामानाधिकरण्यञ्चानुपपन्नम् । प्राणाद्यचेतना-जीवयोरैक्याभावात्, 'प्राणोऽस्मि प्रज्ञात्मा' 'अहमेवेदं सर्वम्' 'मत्तः सर्वमहं सर्वम्' इत्यादि चायुक्तम् । 'अहं हरिः सर्वमिदं जनार्दनः इति जीवेश्वरवाचिनोः' अचिदीश्वर वाचिनोश्च शब्दयोः सामानाधिकरण्यमयुक्तम्; जीवेश्वरयोः पृथिव्यादिनां च चिन्मात्रे कल्पितत्वात् । न हि रज्जुकल्पितसर्पभूदलनाम्बुधारावाचिनां शब्दानां मिथः सामानाधिकरण्यम् ।

'अहं हरिःसर्व'मित्यादिशब्दानां अध्यस्तवाचिनामधिष्ठानभूतब्रह्मपरत्वादेकार्थ-वृत्तित्वमिति चेन्न; आकृतिवाचिनां व्यक्तिपर्यन्ततयेव अध्यस्तवाचिनां शब्दानामधिष्ठानववा चित्वेन व्युत्पत्त्यभावात् । न हि रजतशब्दस्य शुक्तित्वाश्रयद्रव्यवाचित्वेन व्युत्पत्तिः । तदभावश्च शुक्तिशकलादौ रजतादिशब्दप्रवृत्तिनिमित्तभूतरजतत्वादेरभावात् ।

ननु अध्यस्तवाचिनः शब्दाः अधिष्ठाने मुख्यवृत्ताः, इदं रजतमिति वृद्धव्यवहार-मूलव्युत्पत्तिसद्भावादिति चेत्-उच्यते । यदर्थविवक्षया शब्दप्रयोगोऽनन्यथासिद्धः तस्य तद्वाचित्वनिश्चयः ।

नन्वपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपर्यन्तत्वमिष्टम् । अध्यस्तञ्च अधिष्ठानस्यापृथग्विशेषणम्, तस्मिन् सति अवभासात् तेन विना तदनवभासाच्चेति चेत्-न, अन्यत्र सतो विशेषणस्य पुरोवस्थितं प्रति अपृथक्सिद्ध्यभावात् । अख्यातिपक्षे चाध्यस्तत्वाधिष्ठानत्वयोरेवाभावात् । मृषावादिपक्षे च मृद्विवर्तस्य घटादेः कनकं प्रतीव अविद्याख्यदोषविवर्तस्य रजतस्य पुरोवस्थितं प्रति अपृथग्विशेषणत्वायोगाच्चेति । अतो जीवेश्वरसामानाधिकरण्यमयुक्तम् । (श्रु. प्र. 1-2-70;71)

सिद्धान्तेतु अहं शब्दस्य परमात्मपर्यन्ततया मुख्यवृत्तेः मच्छरीरकं ब्रह्म इति बोधः । तथाच विशेषणविशेष्यभूतयोः जीवेश्वरयोः भेदः ; विशेष्यनिष्ठन्तु ऐक्यम् इति न काप्यनुपपत्तिः ॥

**अहमर्थः** — 1. अहंशब्दवाच्यः ज्ञातृत्वविशिष्टः आत्मा । (जीवपरोभयसाधारणः)
न ज्ञप्तिमात्रमात्मा अपि तु ज्ञातैवाहमर्थः । (श्री. भा. 1-156)

बाधकापेताऽहंबुद्धिः साक्षादात्मगोचरैव । शरीरगोचरत्वाहंबुद्धिः अविद्यैव । यथोक्तं भगवता पराशरेण –

'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ।
अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः' ॥ इति ॥

यदि ज्ञप्तिमात्रमेवात्मा, तदा अनात्मन्यात्माभिमाने, शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात्; न ज्ञातृत्वप्रतिभासः । तस्मात् ज्ञाताऽहमर्थ एवात्मा । तदुक्तम् –

'अतः प्रत्यक्षसिद्धत्वात् उक्तन्यायागमान्वयात् ।
अविद्याऽयोगतश्चात्मा ज्ञाताऽहमिति भासते' ॥ इति ।
[अहमर्थस्यानात्मत्वे स्थूलोऽहमिति भ्रान्तेरयोगः]

2. अहंशब्दवाच्यः अहन्त्वविशिष्टो वा । (त. टी. 157)

3. प्रत्यक्त्वाश्रय आत्मा ।

'प्रत्यक्त्वादुपलम्भतो मम सुखं भावीति मोक्षेच्छया
मुक्तब्रह्ममुमुक्षुवेदवचसा सुप्तोऽहमित्युक्तितः ।
मां नाज्ञासिषमित्यपि स्वपुराद्यज्ञानमात्राश्रयात्
स्वापप्राच्यनिजक्रियास्मरणतोऽप्यात्माहमर्थः स्थिरः ॥ (न्या. सि. 122)

प्रत्यक्त्वादित्यादि-स्वस्मै प्रकाशमानत्वरूपं प्रत्यक्त्वम्, परस्मै प्रकाशमानत्वरूपं पराक्त्वञ्च अहमिदम्बुद्धिभ्यां हि विभज्यते, तस्मात् अहम्बुद्धिविगमे प्रत्यक्त्वमेव न सेत्स्यतीति प्रत्यक्त्वमहमर्थस्यैव, इति तस्यैव आत्मत्वमित्यर्थः । उपलम्भत इति– ज्ञाता अहमिति अहन्त्वसामानाधिकरण्येनैव ज्ञातृत्वोपलम्भादिति भावः । मम सुखमिति 'निरस्तनिखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् भवेयम्' इति मोक्षेच्छादर्शनादिति भावः । मुक्तेत्यादि – 'अहमन्नम्, अहं मनुः' इत्यादीनि मुक्तवचांसि । 'अहं मनुः' इत्यस्य च मुक्तवचनत्वं ब्रह्मात्मभावापरोक्ष्यनिर्धूताविद्यानां वामदेवादीनामिति भाष्य एव आविष्कृतम् । 'हन्ताहमिमास्तिस्रो देवताः' इति ब्रह्मवचांसि । 'अहं वै त्वमसि भगवो देवते' 'अहमेकः प्रथममासम्' 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यादीनि वेदवचांसि । यद्वा मुक्तब्रह्ममुमुक्षुविषयं वेदवचः–मुक्तब्रह्ममुमुक्षुवेदवचः ।

ततश्च निरस्ताविद्येष्वपि मुक्तादिषु अहंशब्दप्रयोगात् । अहंशब्दार्थो नाविद्यकः ; किन्तु आत्मैवेत्यर्थः । सुप्तोऽहमिति — अहमर्थस्य अन्तःकरणत्वे सुषुप्तिदशायां तस्य नष्टत्वात् नष्टोऽहमित्येव प्रतीतिः स्यात्, सुप्तोऽहमिति प्रतीतिर्नस्यादिति भावः । ननु सुषुप्तावहमर्थस्य प्रकाशमानत्वे मां नाज्ञासिषमिति कथं प्रतीतिरित्याशङ्क्य देवत्वमनुष्यत्वादिवर्णाश्रमधर्माज्ञानविषयतया उपपत्तिरित्याह—मां नाज्ञासिषमिति । अज्ञानमात्राश्रयादितितदुल्लेखनादित्यर्थः । आश्रयादित्यनन्तरं युज्यते इति शेषः । निजक्रियेते — अहमर्थस्य सुषुप्तौ विगमे ह्यस्तनस्मृतिर्नस्यादित्यर्थः । (न्या.सि.टी.)

अहमर्थ एव आत्मा न तु जडरूपान्तःकरणम् । अहं जानामि अहं करोमि, अहं दुःखमनुभवामि इति ज्ञातृत्वकर्तृत्वभोक्तृत्वाद्यनुभवविरोधात्, जडरूपस्यान्तःकरणस्य ज्ञानाद्याश्रयत्वासम्भवात् । न चान्तःकरणावच्छिन्नचैतन्यमेवाहमर्थः इति, न तस्य ज्ञानाश्रयत्वासम्भवः इति वाच्यम् । विशिष्टस्य अहमर्थत्वकल्पनातः विशेष्यचैतन्यात्मन एव अहमर्थत्वकल्पने लाघवात् ॥ (वे. मं. दी. 197)

**अहमित्येकाकारेणात्मनः स्फुरणम्** — धर्मिस्वरूपभूतज्ञानस्य सदा प्रकाशः ।

तमोगुणाभिभवात् परागर्थानुभवाभावाच्च अहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽपि आप्रबोधात् अहमित्येकाकारेण आत्मनः स्फुरणात् सुषुप्तावपि नाहम्भाव विगमः । (श्री. भा. 1-166)

अहमिति न शब्दानुकारः अपित्वेतद्वाच्यार्थानुकारः । प्रत्यक्त्वाकारेण स्फुरणादित्यर्थः । एकशब्देन अहम्भावाविगमो विवक्षितः । यद्वा एकाकारेण— सर्वात्मसाधारणाकारेणेत्यर्थः । (श्रु. प्र.)

स्फुरणं हि स्फुरतो धर्मः । यथा प्रभाश्रयस्य दीपस्य धर्मिणः औज्वल्यं दीपाख्यधर्मिगतो धर्मः तद्वदित्यर्थः । धर्मिस्वरूपभूतज्ञानस्य स्फुरणं नित्यम् । . . . धर्मभूतज्ञानस्य स्फुरणं विषयसम्बन्धजन्यं तदानीमेव नत्वन्यदा । तत एव हि विषयप्रकाशनवेलायामित्युक्तम् । 'पुंस्त्वादिवत्त्वस्य' इत्यत्र च वक्ष्यते । स्वापादौ तु तस्य सर्वविषयसम्बन्धार्हता प्रतिबद्धा, वह्नेः दाहकत्वशक्तिवत् । अतो न तदा स्फुरणम् । (श्रु. प्र. 1-140)

एतेन धर्मिस्वरूपज्ञानरूपात्मनः स्फुरणं सार्वकालिकमिति स्थापितम् ॥

**अहमिदङ्कारौ** - अहमिदंप्रत्ययौ ।

'न खल्वहमिदङ्कारौ एकस्यैकत्र वस्तुनि' । (आ. सि. 4)

'अहं जानामि' इति प्रत्यग्वृत्तिरहमितिमतिरिदङ्कारगोचराच्छरीरान्निष्कृष्टमेव स्वविषयमुपस्थापयति घटादेरिव । पराग्वृत्तिः 'इदम्' इति शरीरविषयिणी च शेमुषी स्वविषयमहङ्कारगोचराद्विवेचयति-यथाऽयं घट इति । इतरथा स्वपरविभागानुपपत्तेः । न चैकस्मिन्नेव रूपभेदादेवं प्रतीतिः । न हि देवदत्तो दण्डिनमात्मानं दण्ड्यमिति प्रत्येति ॥ (आ. सि.)

**अहर्जरः** — वृद्धः ।

'यथा मासा अहर्जरम्' । (तै. शि. 9.)

अहोभिः जरा यस्य सः पुरुषः अहर्जरः । यस्य कालेन जरा भवति, न व्याध्यादिना, सोऽहर्जरः । वृद्ध इति यावत् ।

यद्वा अहानि जीर्यन्ति यत्रेति अहर्जरः संवत्सरः, सूर्यो वा इत्यर्थः ॥
(रं. भा.)

**अहस्संवर्तकः** -- (स. ना. 234)

अहरुपलक्षितकालपरिवृत्तिहेतुः । (वि. स. भा.)

अहः—तदुपलक्षितं कालम्, हेतुत्वात्संवर्तयति परिवर्तयतीति । (वि.स.निर्व.)

अहर्लक्षितकालस्य परिवृत्तेश्च साधनम् ।
अहस्संवर्तक इति प्राहुः वेदान्तपारगाः ॥ (वि. स. नि.)

**अहिकुण्डलन्यायः** — न्यायविशेषः ।

एकस्यैव द्रव्यस्य अवस्थाविशेषेण उभयविधव्यपदेशे अयं न्यायः अतिदिश्यते। 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इति सूत्रे दृष्टान्ततया आश्रितः अयं न्यायः । यथा अहेः कुण्डलभावऋजुभाववत् एकस्यैव ब्रह्मणः संस्थान विशेषा एव अचिद्वस्तूनि इति 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' इति तादात्म्य व्यपदेशः । 'हन्ताहमिमास्तिस्रो

देवताः' 'अनेन जीवेनात्मनानुप्रविश्य' इत्यादि भेदव्यपदेशश्चोपपद्यते, इति पूर्वपक्षिणामाशयः। कुण्डली अहिरिति भेदव्यपदेशः; तत्रैवाहिरित्यभेद व्यपदेशश्च इत्युक्तम्।

ब्रह्मणोऽपरिणामित्ववादिन्यः श्रुतयःबाधिता भवेयुरिति अनेन न्यायेन व्यपदेशद्वयं निर्वोढुं न शक्यते। अपितु अंशांशिभावेनैवोभयविधव्यपदेशं 'पूर्ववद्वा' इति सिद्धन्तसूत्रेण निरधारयत् सूत्रकारः॥

**अहिकुण्डलाधिकरणम् — (3-2-6)**

1. उभयव्यपदेशात्त्वहिकुण्डलवत्।
2. प्रकाशाश्रयवद्वा तेजस्त्वात्।
3. पूर्ववद्वा।
4. प्रतिषेधाच्च।

इति सूत्रचतुष्टयम् अहिंकुण्डलपदोपक्रमम् एवम् अभिधीयते।

अचिद्वस्तुनो ब्रह्मरूपत्वम् अहिकुण्डलवदवस्थाभेदेन अथवा प्रभाप्रभावतोरिव एकजातियोगेन इत्याशङ्क्य पक्षद्वयस्याप्यनुपपन्नत्वात् जीववदंशांशिभावेनैवेत्युक्तम्।

नानात्वैकत्वयुक्तेः परिणमनमचिन्त्वेन चेत् बाधितत्वं
निर्दोषत्वश्रुतेः स्यात् अथ तदुभययोरेकसामान्ययोगः।
नैतत् स्यान्नैव लोके क्वचिदपि कथितः खण्डशब्देन मुण्डः।
तस्मादंशत्वमंशित्वमपि हि जगतो ब्रह्मणश्चाऽऽत्मवत् स्यात्॥

(न्या. क. सं. 3-15)

**अहिनिर्ल्वयनी** — सर्पस्य निर्मोकः। (विसृष्टा त्वक्)

'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत, एवमेवेदं शरीरं शेते'।

(बृ. उ. 6-4-7)

यथा अहेः निर्ल्वयनी सर्पस्य निर्मोकः सर्पेण वल्मीके प्रत्यस्ता विसृष्टा सर्पासंसक्ता अत एव मृता निष्प्राणा अपि दूरे पश्यतां सर्पवदवभासमाना शयीत, एवमेव ब्रह्मविदः शरीरम् अहंबुद्ध्यगोचरतया परित्यक्तमपि, पश्यतां ब्रह्मविच्छरीरमिव भासमानं शेते इत्यर्थः। (रं. भा.)

अहिः निलीयते अस्यां सा अहिनिर्ल्वयनी । सर्पत्वक् इत्यर्थः । यथा सर्पः स्वत्वचं प्रागात्मतयोपगतमपि त्यागानन्तरं स्वसमीपे वर्तमानमपि न कदाचित् आत्मत्वेन जानाति, तथा देहं बोधात् प्राक् आत्मत्वेनाभिमतमपि, सति बोधे न कदाप्यात्मतया पश्यतीति भावः । (मी. को.)

निर्ल्यनीति वाचस्पत्यपाठः । निर्ल्वयनीति छान्दसम् ॥

**अहिंसा** — 1. परपीडावर्जनम् । (आत्मगुणेष्वन्यतमः)

'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य अहिंसन् सर्वाभूतानि अन्यत्र तीर्थेभ्यः' ॥
(छां. उ. 8-15-1)

अनात्मविषयेभ्यः इन्द्रियाणि निगृह्य ; शास्त्रीयहिंसाव्यतिरिक्तामहिंसामकुर्वाणः इत्यर्थः । न च, 'अशुद्धमिति चेन्न शब्दात्' इति सूत्रे क्रत्वर्थपशुहिंसाया हिंसात्वाभावस्योक्तत्वात् , अन्यत्र तीर्थेभ्य इति व्यर्थमिति वाच्यम् । 'न वा उ एतन्म्रियसें न रिष्यसि' इति मन्त्रलिङ्गात् तस्य हिंसात्वाभावेऽपि गृहस्थानामवर्जनीयतुलस्याहरणादिहिंसायाहिंसाधात्वर्थत्वसम्भवेन तत्पर्युदासार्थम् अन्यत्र तीर्थेभ्य इत्यस्याऽऽवश्यकत्वादिति द्रष्टव्यम् । (रं भा.)

2. परदुःखाहेतुत्वम् । (गी. भा.)

'अहिंसा समता तुष्टिः तपो दानं यशोऽयशः' (गी. 10-5)

परदुःखाहेतुत्वमित्यत्र दुःखशब्देनाहितं विवक्षितम् । चिकित्सादौ हितरूप दुःखकरणस्य हिंसात्वाभावात् । (ता. चं)

3. वाङ्मनः कायैः परपीडारहितत्त्वम् । (गी. भा.)

'अमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवम् । (गी. 13.7)

अनर्थैकफलपीडारूपो व्यापारो हिंसा ; स च वाङ्मनःकायैस्त्रिभिरपि शापादिद्वारा संभवतीति संभावितसमस्तप्रकारनिषेधस्य वचनात्सिद्धस्य असंकोचेन विवक्षितत्वात् वाङ्मनः कायैरित्युक्तम् । परपीडेति—प्रायिकत्वाभिप्रायम् , अशास्त्रीयस्वपीडाया हिंसात्वात् ॥ (ता. चं)

**अहीनम्** — एतत्संज्ञं कर्म ।

'द्वादशाहं वृद्धिकाम 'उपेयुः' द्वादशाहेन प्रजाकामं याजयेत्' इत्युपैति, यजति, चोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनं च भवति । (श्री. भा. 4-4-12) बहुयजमान सङ्कल्पात् सत्रम् , एकस्य संकल्पादहीनम् ; (श्रु.प्र.)

यथाचोदनं द्वादशाहमुपैष्यामः, द्वादशाहेन यक्ष्ये इत्येवं सङ्कल्पे भेदः। तदधीनं कर्म क्रमेण सत्रहीनसंज्ञम् । ऋत्विगभिन्नयजमानकत्वं सत्रे; अन्यत्रान्यथा । (टि.)

'अह्नः खः क्रतौ' (वा. 2722) इत्यनेन ख प्रत्यये ईनादेशे, अहीन इतिरूपम् ॥

**अहीनन्यायः** — मीमांसान्यायविशेषः ।

'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति वाक्यं साह्न (ज्योतिष्टोम) प्रकरणेऽधीतमपि तत्र सम्बन्धुम् अयोग्यत्वात् , तत उत्कृष्य अहीनप्रकरणे सम्बध्यते तद्वत् तैत्तिरीये केवल पुरुषविद्यायाः ब्रह्मविद्यात्वाभावात् ब्रह्मप्राप्तिरूपं फलम् अयोग्यत्वात् पुरुषविद्या-सम्बन्धमनवाप्य मूर्वानुवाकोक्तब्रह्मविद्ययाऽन्वितं भवति । (श्रु. प्र. 3-3-24)

तथा च 'फलवत्सन्निधौ अफलं तदङ्गं भवतीति' न्यायात् तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमितिगम्यते । एवञ्च विद्यया (उपासनेन) प्रसन्नः अकारवाच्यः श्रीमन्नारायण एव उपायः उपेयश्चेति सिद्धम् ॥



## शोधनिका

| पृ. सं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 10 | 3 | श्रत्या | श्रुत्या |
| 10 | 20 | कमाना | कामना |
| 28 | 3 | नरायण | नारायण |
| 35 | 11 | यत्मुनाचार्यैः | यामुनाचार्यैः |
| 42 | 5 | अग्निन्द्र | अग्नीन्द्र |
| 59 | 4 | मूमिलत्यभिप्रायः | मूलमित्यभिप्रायः |
| 59 | 7 | —करयण्यं | —करण्यं |
| 63 | 6 | 537 | 557 |
| 63 | 11 | निर्व. | नि. |
| 77 | 11 | सम्पादानम् | संपादनम् |
| 88 | 23 | इदममनु | इदमनु |
| 89 | 6 | ग्राग्नः | ग्राह्यः |
| 100 | 19 | वार्तिककौः | वार्तिककारैः |
| 101 | 12 | अश्लेविनाश | अश्लेषविनाश |
| 103 | 8 | वेदन्ति | वेदान्ति |
| 103 | 24 | -रित्युयते | रित्युच्यते |
| 108 | 5 | शूदादीनां | शूद्रादीनां |
| 109 | 2 | मनुष्यर्तृक | मनुष्यकर्तृक |
| 109 | 3 | -वात् | भावात् |
| 109 | 25 | नीपोद्यते | नापोद्यते |
| 111 | 25 | -मल्पस्थिर | -मल्पास्थिर |

| पृ. सं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 113 | 14 | अनवधिकातिय | अनवधिकातिशय |
| 127 | 14 | दृप्टाद्यपयोग | दृष्टाद्युपयोग |
| 128 | 23 | प्रसाणं | प्रमाणं |
| 130 | 7 | विग्रहारकत्वं | विग्रहद्वारकत्वं |
| 133 | 23 | रूम् | रूपम् |
| 133 | 23 | द्वैयोर्भावः | द्वयोर्भावः |
| 133 | 25 | प्रनिपादनात | प्रतिपादनात् |
| 135 | 5 | अद्वतम् | अद्वैतम् |
| 139 | 18 | तानिद्धकर | तानि हानिकर |
| 142 | 10 | स्तावेदकः | स्तावदेकः |
| 142 | 24 | द्विरदाश्रष्टौ | द्विरदाश्राष्टौ |
| 147 | 13 | श्रतेः | श्रुतेः |
| 151 | 7 | सर्वमिद | सर्वमिदं |
| 151 | 18 | सर्वमिद भाति | सर्वमिदं विभाति |
| 151 | 20 | सर्वमिद | सर्वमिदं |
| 152 | 19 | सशरीरणामेव | सशरीराणामेव |
| 156 | 18 | संस्कार्यत्वं | संस्कार्यत्वं |
| 158 | 20 | अक्षरग्नहण | अक्षरग्रहण |
| 159 | 11 | श्रवणात्षूर्वं | श्रवणात्पूर्वं |
| 161 | 18 | भनसः | मनसः |
| 163 | 10 | वौत्सयोः | वीप्सयोः |
| 166 | 2 | द्वयोद्वयोः | द्वयोर्द्वयोः |
| 214 | 3 | 1-3-31 | 1-13-3 |
| 253 | 13 | हौतृगणैः | होतृगणैः |

| पृ. सं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 282 | 2 | श्रयते | श्रूयते |
| 282 | 25 | श्रतिप्र | श्रुतिप्र |
| 282 | 26 | श्रत्या | श्रुत्या |
| 285 | 2 | इदमिति | इदमपि |
| 288 | 13 | कूर्पसदृशो | शूर्पसदृशो |
| 293 | 11 | नास्तीः | नास्ती |
| 293 | 12 | छागो व | छागो वा |
| 296 | 7 | वरीयस्व्वादिवत् | वरीयस्त्वादिवत् |
| 301 | 11 | वश्यम्भवात् | वश्यम्भावात् |
| 301 | 16 | -रन्यराजनस्ते | -रन्यराजानस्ते |
| 303 | 1 | व्यहार | व्यवहार |
| 304 | 10 | 3-1-23 | 3-1-24 |
| 307 | 18 | निरूरूप | निरूप |
| 327 | 13 | शूदशब्दो | शूद्रशब्दो |
| 328 | 8 | वषहृत | अपहृत |
| 333 | 21 | मैत्रे | मैत्रो |
| 333 | 24 | आमश्र | आश्रम |
| 333 | 25 | जप्येनापी | जप्येनापि |
| 333 | 25 | सांसोध्द्येत् | संसिद्धयेत् |
| 333 | 25 | तेवपि | तेष्वपि |
| 340 | 3 | सन्तरूपं | सन्ततिरूपं |
| 340 | 3 | भवतीस्यर्थः | भवतीत्यर्थः |
| 340 | 7 | व्यापकपम् | व्यापकपरम् |
| 340 | 15 | वर्णान | वर्णानां |

| पु. सं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 350 | 12 | सवशुद्धौ | सत्वशुद्धौ: |
| 350 | 21 | विषयवम् | विषयत्वम् |
| 350 | 22 | विषयवम् | विषयत्वम् |
| 350 | 23 | परमाम | परमात्म |
| 352 | 7 | चतुथ्यर्थः | चतुर्थ्याः |
| 362 | 6 | तिइ | इति |
| 369 | 3 | मन्तरेणपि | मन्तरेणापि |
| 369 | 23 | विवत्यन्त | विवात्यन्त |
| 370 | 4 | व्यववहारः | व्यवहारः |
| 371 | 18 | 2-4-32 | 2-14-32 |
| 375 | 8 | र्यामस्यमृतः | -यास्यमृतः |
| 396 | 23 | अर्जयन् | अर्चयन् |
| 410 | 23 | मप्यथिथं | मप्यर्थितं |
| 413 | 17 | अर्धमामा | अर्धमा |
| 413 | 23 | आस्य | अस्या |
| 423 | 2 | मदाराध | मदाराधन |
| 462 | 5 | नेतृत्वदिना | नेतृत्वादिना |
| 462 | 5 | निरूपाधिकाष्ठा | निरुपाधिकस्यकाष्ठा |
| 463 | 8 | भावायो | भावयो |
| 464 | 1 | शब्दशब्दयो | शब्दयो |
| 464 | 24 | मशय. | मशमः |
| 466 | 15 | उपपदिता | उपपादिता |
| 474 | 9 | ध्रव | ध्रुव |
| 477 | 18 | वारहु | बाहुर |

| पृ. सं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 478 | 2 | नणा | नृणां |
| 481 | 13 | अष्टाविंशक | अष्टाविंशकः |
| 487 | 19 | वाध | बाध |
| 490 | 5 | शरिरे | शरीरे |
| 505 | 2 | वेदानुशसनम् | वेदानुशासनम् |
| 505 | 13 | अनाद्यामिद्या | अनाद्यविद्या |
| 506 | 15 | अहन्नमा | अहन्नामा |
| 509 | 5 | यदहङ्कार | यद्यहङ्कार |
| 510 | 2 | अहमर्थं | अहमर्थः |
| 510 | 6 | निश्रीक | निश्रीकम् |
| 512 | 9 | अधिष्टानववाचित्वेन | अधिष्ठानवाचित्वेन |
| 512 | 16 | तस्मन् | तस्मिन् |



